Institut Français de Pondichéry
UMIFRE 21 CNRS-MAEE

Regards sur l'Asie du Sud / South Asian Perspectives – 4

# भाट्टतन्त्ररहस्यम्

# THE BHĀṬṬATANTRARAHASYA OF KHAṆḌADEVA

with the Sāraprakāśikā commentary by

**N. S. Ramanuja Tatacharya**

Associate Editor:
S. Lakshminarasimham

Professor **N. S. Ramanuja Tatacharya** is one of the senior authorities in the fields of Nyāya, Vyākaraṇa, Pūrvamīmāṃsā and Uttaramīmāṃsā. Since retiring as Vice-Chancellor of the Rashtriya Sanskrit Vidyapeetha of Tirupati, he has been associated with the French Institute of Pondicherry as Honorary Professor. His profound scholarship has earned him many awards, including the Certificate of Honour for Proficiency in Sanskrit conferred by the President of India and the Chevalier de la Légion d'Honneur awarded by the French government. He has been awarded the titles of *Tarkavācaspati* and *Śāstraratnākara* by the Head of the *Sri Raghavendra Swamy Matha* and the *Sri Vedanta Desika Sampradaya Sabha*, respectively. He is also the recipient of the Ramakrishna Dalmia Srivani Alankara Award of the Ramakrishna Dalmia Srivani Nyas, and the Vachaspati Puraskar Award of the K. K. Birla Foundation.

*Le Professeur **N.S. Ramanuja Tatacharya** est un éminent savant dans les domaines du Nyāya, du Vyākaraṇa, de la Pūrvamīmāṃsā et de l'Uttaramīmāṃsā. Depuis sa retraite comme Vice-Chancelier du Rashtriya Sanskrit Vidyapeetha de Tirupati, il est associé à l'Institut Français de Pondichéry en tant que professeur honoraire. Il a reçu de nombreuses distinctions pour sa profonde érudition, notamment le Certificate of Honour for Proficiency in Sanskrit décerné par le Président de l'Inde, le titre de Chevalier de la Légion d'Honneur décerné par le gouvernement français, ainsi que ceux de* Tarkavācaspati *et* Śāstraratnākara *décernés respectivement par les autorités du* Sri Raghavendra Swamy Matha *et de la* Sri Vedantadesika Sampradaya Sabha. *Il est également lauréat du prix* Ramakrishna Dalmia Srivani Alankara *du Ramakrishna Dalmia Srivani Nyas et du prix* Vachaspati Puraskar *de la Fondation Birla.*

*Regards sur l'Asie du Sud / South Asian Perspectives – 4*

श्रीमत्पूर्वोत्तरमीमांसापारावारपारीणश्रीमदाचार्यखण्डदेवविरचितम्

# भाट्टतन्त्ररहस्यम्

एन्. एस्. रामानुजताताचार्यकृतया

सारप्रकाशिकाख्यया व्याख्यया सहितम्

सहायसंपादकः

एस्. लक्ष्मीनरसिंहः

INSTITUT FRANÇAIS DE PONDICHÉRY

*L'Institut Français de Pondichéry* (IFP), UMIFRE 21 CNRS-MAEE, est un établissement à autonomie financière sous la double tutelle du Ministère français des Affaires Etrangères et Européennes (MAEE) et du Centre National de la Recherche Scientifique (CNRS). Il est partie intégrante du réseau des 27 centres de recherche de ce Ministère. Avec le Centre de Sciences Humaines (CSH) à New Delhi, il forme l'USR 3330 du CNRS "Savoirs et Mondes Indiens". Il remplit des missions de recherche, d'expertise et de formation en Sciences Humaines et Sociales et en Ecologie dans le Sud et le Sud-est asiatique. Il s'intéresse particulièrement aux savoirs et patrimoines culturels indiens (langue et littérature sanskrite, histoire des religions, études tamoules...), aux dynamiques sociales contemporaines, et aux écosystèmes naturels de l'Inde du Sud.

Institut Français de Pondichéry, 11, rue Saint Louis, B.P. 33, Pondichéry 605001, Inde, Tél : (91) (413) 2231609, Courriel : ifpcom@ifpindia.org
Site web : http ://www.ifpindia.org



*The French Institute of Pondicherry* (IFP), UMIFRE 21 CNRS-MAEE, is a financially autonomous institution under the joint authority of the French Ministry of Foreign and European Affairs (MAEE) and the French National Centre for Scientific Research (CNRS). It is a part of the network of 27 research centres under this Ministry. It also forms part of the research unit 3330 "Savoirs et Mondes Indiens" of the CNRS, along with the Centre de Sciences Humaines (CSH) in New Delhi. It fulfils its missions of research, expertise and training in Human and Social Sciences and Ecology in South and South-East Asia. It works particularly in the fields of Indian cultural knowledge and heritage (Sanskrit language and literature, history of religions, Tamil studies...), contemporary social dynamics and the natural ecosystems of South India.

French Institute of Pondicherry, 11, St. Louis Street, P.B. 33, Pondicherry 605001-India, Tel : (91) (413) 2231609, Email : ifpcom@ifpindia.org
Website : http ://www.ifpindia.org

*Regards sur l'Asie du Sud / South Asian Perspectives – 4*

THE

# BHĀṬṬATANTRARAHASYA

OF KHAṆḌADEVA

with the Sāraprakāśikā commentary
by N.S. Ramanuja Tatacharya

Associate Editor
S. Lakshminarasimham

INSTITUT FRANÇAIS DE PONDICHÉRY






Srimathe Rangaramanuja Mahadesikaya Namaha
Srimathe Srinivasa Ramanuja Mahadesikaya Namaha
Srimathe Vedantha Ramanuja Mahadesikaya Namaha
Srimathe Ranganatha Mahadesikaya Namaha

Srimathe Srinivasa Mahadesikaya Namaha
Srimathe Nigamantha Mahadesikaya Namaha
Srimathe Bhghawathe Bashyakaraya Mahadesikaya Namaha
Srimathe Ranganatha Divyamani Padukabyam Namaha

SRIRANGAM
SRIMAD ANDAVAN ASHRAMAM

H.Qrs. Melur Road, Srirangam, Tiruchirappalli - 620 006
Phone : 0431 - 432379


Camp चेन्नै

Date: 25-12-2014

विदितचरमैः तैः तद्विपश्चिदपश्चिमानां
मीमांसाशास्त्रजलधौ लोलकल्लोल—
—मालाविहाररूपनिस्तुलवस्तुप्रतिपादक—
—कास्तोकपुस्तकस्तोमैः चिक्रीडितमिति।
तथापि अखण्डितयशोमण्डलमण्डितेन
आखण्डलप्रभावेन खण्डदेवेन मीमांसा—
—गतपूर्वपक्षसिद्धान्तनिश्चयवीचीचयैः
भाट्टरहस्ये चिक्रीडितमित्यपि अद्भुत
शाब्दबोधाधिगमार्थम्। अपि च तेन
तात्त्विकविषयप्रतिपिपादयिषया
प्रेरितेन 'उक्तञ्च, वक्ष्यते च" इति
प्रतीकैः निर्दिष्टं निर्दिष्टम्।

(P.T.O)








SRIRANGAM
SRIMAD ANDAVAN ASHRAMAM

H.Qrs. Melur Road, Srirangam, Tiruchirappalli - 620 006
Phone : 0431 - 432379

Camp

Date

सदाचार्य सकाशात् अभ्यस्त समस्त
विद्याप्रभावैः निसर्ग प्रतिभान्वितैः
चतुः शास्त्र पारावार पारङ्गतैः
नावलपाक्कं, शठकोप-रामानुज तातयार्य
-वर्यैः तद्ग्रन्थ व्याख्यातृभिः तत्सर्वं
अन्विष्य माध्वीक-मृद्वीक-मृदु-
मधुर मञ्जुपद पुञ्जैः व्याख्यातं
समीचीनतया शैल्या। तत् सामञ्जस्यं
अञ्जसा अध्यापक-अध्येतॄणां सुवि-
-दितमेव स्यात्। केवलोदर पूरणार्थमेव
स्वधर्मं विस्मृत्य आङ्ग्ल भाषानिष्णातेषु
तदीय वेषभूषाहाव भाव निमग्नेषु
भारतीयेषु भारतीय सनातन धर्म
-निवह रिरक्षिषयोद्युक्ता फ्रेञ्च्-
इन्स्टिट्यूट्-नाम्नीयं संस्था इत्येतत्



Sri



Srimathe Rangaramanuja Mahadesikaya Namaha
Srimathe Srinivasa Ramanuja Mahadesikaya Namaha
Srimathe Vedantha Ramanuja Mahadesikaya Namaha
Srimathe Ranganatha Mahadesikaya Namaha

Srimathe Srinivasa Mahadesikaya Namaha
Srimathe Nigamantha Mahadesikaya Namaha
Srimathe Bhghawathe Bashyakaraya Mahadesikaya Namaha
Srimathe Ranganatha Divyamani Padukabyam Namaha

---

SRIRANGAM
SRIMAD ANDAVAN ASHRAMAM

H.Qrs. Melur Road, Srirangam, Tiruchirappalli - 620 006
Phone : 0431 - 432379

Camp

Date

अतीव मोदावहमेव। एवं विनिवेद्य
नारायणस्मृत्या सह विरम्यते।
नारायण! नारायण!! नारायण!!!

इत्थम्
श्रीरङ्ग रामानुजयतिः

# प्रस्तावना

शब्दजन्यो बोधः शाब्दबोध इत्युच्यते। आप्तवाक्यं शब्दः, अथवा अनाप्तानुक्तं वाक्यं शब्दः। प्रमाणेषु मध्ये शब्दस्य महत्त्वमस्ति। सर्वेऽपि लौकिकाः परीक्षकाश्च शब्देनैव व्यवहारं प्रवर्तयन्ति। अतो वाक्यस्वरूपं वाक्यप्रतिपाद्यार्थस्वरूपं वाक्यार्थबोधे प्रधानकारणस्य सहकारिकारणस्य च स्वरूपं चावश्यं ज्ञातव्यं भवति। तथा वाक्यं पदसमूहात्मकम्। पदं च नामाख्यातोपसर्गनिपातभेदेन चतुर्धा यास्केन विभक्तम्। तत्र सुबन्तं नाम। तिङन्तमाख्यातम्। सुबन्ते प्रकृतिः प्रत्ययश्चेति अवयवद्वयमस्ति। तिङन्ते धातुः तिङ् चेति अवयवद्वयमस्ति। सुप्प्रकृतौ अव्युत्पन्नप्रातिपदिकं कृदन्तं तद्धितान्तं समासः ङ्यन्तमाबन्तं च अन्तर्गतम्।

तत्र प्रकृतीनां प्रत्ययानां चार्थाः तेषां परस्परमन्वयश्च ज्ञातव्याः भवन्ति। एतत्सर्वमधिकृत्य षोडशसप्तदशशतकवास्तव्यैः न्यायव्याकरणमीमांसाशास्त्रवल्लभैः विद्वद्वरैः शाब्दबोधवर्णनपरग्रन्थेषु स्वस्वनिमित्तेषु निरूपणं कृतमस्ति। तत्र भर्तृहरिकृतं वाक्यपदीयमतिप्राचीनमपि मूलं भवति।

व्याकरणशास्त्रे भूषणसारलघुमञ्जूषाग्रन्थौ न्यायशास्त्रे मणिग्रन्थस्थशब्दखण्ड-शब्दशक्तिप्रकाशिका-न्यायकौस्तुभ-व्युत्पत्तिवाद-पदवाक्यरत्नाकर-विभक्त्यर्थनिर्णयाः, मीमांसाशास्त्रे भाट्टचिन्तामणि-भाट्टरहस्यग्रन्थौ च निर्देशार्हाः।

## भाट्टरहस्यग्रन्थपरिचयः

तत्र खण्डदेवविरचितं भाट्टरहस्यं मीमांसाशास्त्ररीत्या शाब्दबोधनिर्णयपरं पठनपाठनसंप्रदाये प्रसिद्धमस्ति।

अयं च महानुभावः चतुस्तन्त्रनिष्णातः व्याकरणसूत्रवार्तिक-भाष्याद्यविरोधेन स्वमतं स्थापयतीति विशेषः परिदृश्यते।

अयं ग्रन्थः भागद्वयात्मना विभक्तुं शक्यते। तत्र प्रथमे भागे "अथातो धर्मजिज्ञासा" इति सूत्रेण जैमिनिना निर्दिष्टस्य मीमांसाशास्त्रप्रमेयस्य धर्मस्य लक्षणं निष्कृष्य प्रतिपादितं प्रथमतः। ततो धर्मलक्षणे वेदबोधितेष्ट-साधनताकत्वरूपे घटकस्य इष्टसाधनत्वस्य परिष्कारः कृतः। ततो नैयायिकमतं बलवदनिष्टाननुबन्धित्वकृतिसाध्यत्वेष्टसाधनत्वानां लिङर्थत्वं विस्तरेणानूद्य खण्डितम्। ततः कृत्यपरपर्यायायाः आर्थीभावनायाः शाब्दबोधे मुख्यविशेष्यत्वं, तस्याः साध्यसाधनेतिकर्तव्यतारूपमंशत्रयं, तस्यां प्रवर्तनारूपायाः अंशत्रयविशिष्टायाः प्रकारत्वं च विस्तरेण न्यरूपि।

ततः प्रथमान्तार्थमुख्यविशेष्यकत्वं शाब्दबोधस्य वदतां नैयायिकानां मतं विस्तरेण खण्डितम्। ततः "लः कर्मणि च भावे चाकर्मकेभ्यः" (पा.सू 3.4.69) इति सूत्रे चकारेण "कर्तरि कृत्" (पा.सू 3.4.67) इति पूर्वसूत्रस्थकर्तृसमुच्चायकेन कर्त्राख्यात इव कर्माख्याते भावाख्याते च कृतिरूपायाः भावनायाः वाच्यत्वं सर्वेष्वाख्यातेषु भावनामुख्यविशेष्यकशाब्दबोधतात्पर्यकत्वं च विस्तरेण न्यरूपि। भावनावाचकाश्च शब्दाः तिङ्कृत् निपाताः शबादिविकरणं च। तेषु च लिङ्गानन्वयिपदमाख्यातम्। ततः आख्यातार्थभावनामुख्यविशेष्यक एव शाब्दबोधः इति स्वमतम् अतिगम्भीरया शैल्या निरूपितम्। नामार्थभिन्नः सुबर्थलिङ्गसंख्याव्यितिरिक्तः भावनायामेवान्वेति। प्रथमाविभक्तेः प्रातिपदिकार्थ एवार्थः। प्रातिपदिकं तात्पर्यग्राहकम्। प्रातिपदिकार्थस्य चाख्यातार्थकृतौ आधेयतयान्वयः। प्रातिपदिकार्थस्य सुबर्थत्वात् नामार्थभिन्नत्वम्। लिङ्गसंख्ययोश्च कर्तरि कर्मणि चान्वयः। तथा च सुबर्थलिङ्गसंख्याव्यतिरिक्तप्रातिपदिकार्थ-

व्यतिरिक्तप्रकारकशाब्दबोधं प्रति भावनिष्ठविशेष्यतासंबन्धेन लिङ्गानन्वयि-पदजन्योपस्थितिः कारणम् इति एक एव कार्यकारणभाव इति लाघवमिति निरूपयन्ति।

तत्प्रसङ्गात् मण्डनमिश्रप्राचीननैयायिकवैयाकरणानां मतदूषणपूर्वकं धात्वर्थो निरूपितः। व्यापारसामान्यमाख्यातार्थ इति पार्थसारथिमतं दूषयित्वा कृतेः आख्यातार्थत्वं समर्थ्य तत्र कर्मत्वकरणत्वान्यतरसंबन्धेन धात्वर्थान्वय इति निरूपितम्। एतावता निरूपणेन च भावनावादः समापितः। अयं वादः सावधानं पठनीयः। शैली च न सुगमा।

तदनन्तरं द्वितीये भागे संबुद्ध्यर्थः द्वितीयादिसप्तम्यन्तविभक्त्यर्थाश्च निरूपिताः। अस्य पाणिनीयव्याकरणे सूत्रभाष्यवार्तिककाशिकाभट्टोजीदीक्षित-पर्यन्तग्रन्थेषु सुदृढा व्युत्पत्तिरस्ति। तदनुरोधेन च स्वमतं भावनामुख्यविशेष्यकं बोधं च त्यजतीति च विशेषो दृश्यते। कर्तृकर्मत्वकरणत्वादीनामखण्डोपाधि-रूपत्वं विस्तरेण साधितम्।

अस्य ग्रन्थस्य ऐसवीये 1968 तमे संवत्सरे एव मया सरलं व्याख्यानं रचनीयमिति बुद्ध्या भावनावादपर्यन्तस्य तत् कृतं लिखितं च। तदनन्तरं तु वैयाकरणवागीशैः पदवाक्यप्रमाणज्ञैः भाट्टरहस्यव्याख्यानं कर्तुमारब्धमिति विज्ञाय अहं न उपरिलेखने प्रवृत्तः। तथापि मदीयशैल्याः तद्विलक्षणत्वात् आन्तं लेखनमपि छात्राणां विदुषां च स्यादुपकारकमिति मत्वा वर्षद्वयात् परिश्रम्य द्वितीयभागमपि समपूरयम्। एतद्दर्शनेन पण्डिताः छात्राश्च संतुष्येयुः इति विश्वसिमि।

अपि च यदाहं तिरूपतिविद्यापीठे आसं तदा दिल्लीविश्वविद्यालये प्रोफसर पदे स्थितः वाचस्पति उपाध्यायः सत्यपालसिंहनामकं शोधच्छात्रं मत्सकाशे भाट्टरहस्यपठनाय प्रेषितवान्। स च द्वित्रमासान् स्थित्वा भाट्टरहस्यद्वितीयभागं टेपरिकार्डकरणपूर्वकमधीतवान्। तं च भागं प्रकाशितवांश्च। परं तु पाठनशैल्याः लेखनशैल्याश्च भेदः भवत्येव।

## कृतज्ञताविवेदनम्

पाण्डिचेरीस्थ-फ्रेञ्च्-इन्स्टिट्यूट्-भारतीयभाषानुसन्धानशाखायां (Indology) प्राजेक्ट्-रूपेण शाब्दबोधमीमांसाख्यग्रन्थनिर्माणमङ्गीकृत्य भागचतुष्टयरूपेण तं ग्रन्थं नानाशास्त्रेभ्यः विषयसंकलनपूर्वकं व्यरचयम्। ततः तार्किकचक्रवर्ति-गदाधरभट्टाचार्यैः प्रणीतस्य व्युत्पत्तिवादस्य विद्वन्मनोरमाख्यां व्याख्यां भागद्वय-रूपेण व्यरचयम्। इदानीं पूर्वोत्तरमीमांसापारावारपारीण-श्रीमदाचार्यखण्डदेव-विरचितस्य भाट्टतन्त्ररहस्यस्य व्याख्यानिर्माणरूपस्य महतः कार्यस्य निष्पादने मूलकारणभूतेभ्यः सर्वविधव्यवस्थां कृतवद्भ्यः सहृदयेभ्यः सरलहृदयेभ्यः फ्रेञ्च् इन्स्टिट्यूट्-निदेशकवर्येभ्यः **Prof. Pierre GRARD** महोदयेभ्यः प्रथमं कृतज्ञताम् आविष्करोमि।

अस्य व्याख्यायाः मुद्रणाय द्रविणप्रादानादिरूपः भारः समग्रः श्रीमद्वेदमार्ग-प्रतिष्ठापनाचार्यैः परमहंसपरिव्राजकाचार्यैः सर्वतन्त्रस्वतन्त्रोभयवेदान्ताचार्यैः श्रीमुष्णम् श्रीमदाण्डवन् रङ्गरामानुजमहादेशिकैः परमोदारैः निर्व्यूढः इति तेषां चरणारविन्दयोः अनन्तान् प्रणामान् समर्प्य कृतकृत्याः धन्याश्च भवामः।

अस्य कार्यस्य निष्पादने मूलकारणभूतेभ्यः **Prof. François GRIMAL** महोदयेभ्यः कृतज्ञताम् आविष्करोमि।

अस्य महतः कार्यस्य अनेकवारं शोधनपूर्वकं गणकयन्त्रे मुद्रणे विषयसूच्यनुबन्धादिनिर्माणे च साहाय्यं कृतवद्भ्यः विद्वद्भ्यः डा. लक्ष्मीनरसिंहमहोदयेभ्यः कृतज्ञतानिवेदनपूर्वकं मङ्गलमाशासे।

एन्. एस्. रामानुजताताचार्यः

# भाट्टरहस्यव्याख्या – सारप्रकाशिका

# विषयानुक्रमणिका

पृष्ठसंख्या



## 1. धर्मलक्षणविचारः (3-17)



## 2. विधिवादः (19-109)

## 3. भावनावादः (111-194)

## 4. धात्वर्थनिरूपणम् (195-203)



## 5. आख्यातार्थनिरूपणम् (205-241)

## 6. प्रथमाविभक्त्यर्थविचारः (243-275)



## 7. द्वितीयाविभक्त्यर्थविचारः (277-378)

## 8. तृतीयाविभक्त्यर्थविचारः (379-419)

## 9. चतुर्थीविभक्त्यर्थविचारः (421-466)

## 10. पञ्चमीविभक्त्यर्थविचारः (467-521)

## 11. षष्ठीविभक्त्यर्थविचारः (523-584)

## 12. सप्तमीविभक्त्यर्थविचारः (585-640)

## मङ्गलाचरणम्

स्मृत्वा स्मृत्वा मुरारातिं तत्प्रसादावलम्बनात्।
रहस्यं भट्टतन्त्रस्य विशदीकर्तुमीश्महे ॥1॥

## कर्तव्यार्थप्रतिज्ञा

यज्ज्ञानाज्जैमिनीयोक्तिः स्फुटीभवति तत्त्वतः।
तद्रहस्यं खण्डदेवः प्रकाशयितुमुद्यतः ॥2॥

---

श्रीमते श्रीनिवासपरब्रह्मणे नमः।
श्रीमते रामानुजाय नमः।
श्रीमते देवनाथताताचार्यमहादेशिकाय नमः।

## भाट्टरहस्यव्याख्या - सारप्रकाशिका

श्रीपतिं श्रितजनेषु वत्सलं शेषशैलनिलयं दयानिधिम्।
आश्रितेष्टफलदं गुणोज्वलं प्रश्रितोऽहमगतिः समाश्रये॥

यस्तर्कतन्त्रादिमुखेषु शास्त्रेष्वशेषविद्वत्स्तुतपाण्डितीकः।
तं शीलवृत्तादिगुणाभिरामं श्रीदेवनाथं गुरुमानतोऽस्मि॥

यस्तर्कतन्त्रमुखशास्त्रविदां वरेण्यः आदर्शतामुपगतो गुणिनां सुधीड्यः।
तं कृष्णंतातयगुरुं मम तातपादम् अध्यापने सुनिपुणं प्रणमामि मूर्ध्ना॥

क्वेदं भाट्टारहस्यं गभीरनानाविचारसम्पूर्णम्।
मन्दप्रज्ञः क्वाहं तथापि यत्नं करोमि विवरीतुम्॥

अथ तत्रभवान् खण्डदेवभट्टाचार्यः भाट्टमतमनुसृत्य शाब्दबोधप्रक्रिया-ज्ञापनपरं भाट्टरहस्याभिधं ग्रन्थं चिकीर्षुः चिकीर्षितस्य ग्रन्थस्य निर्विघ्नसमाप्त्यर्थं मङ्गलमातनोति — **स्मृत्वा स्मृत्वेति।**

**तत्र तावत् द्वादशलक्षण्यां धर्माधर्मावेव जैमिनिनानुष्ठानोपयोगितया विचारितौ। यद्यपि धर्माधर्मावदृष्टविशेषात्मकौ, न क्रियारूपौ।** अत एव धर्मः क्षरति कीर्तनाद् **इत्यादौ, वैशेषिकतन्त्रे च क्रियाजन्यादृष्टे धर्माधर्मशब्दप्रयोगः, तथापि धर्मः स्वनुष्ठितः पुंसाम् इत्यादौ, तज्जनकविहितनिषिद्धक्रियायामपि धर्माधर्मशब्द-प्रयोगात्, ताविह प्राधान्येन विचार्येते।**

---

**अनुष्ठानोपयोगितयेति।** अध्ययनेन वसतीत्यादाविव फले तृतीया। अनुष्ठा-नोपयोगित्वाय विचारिताविात्यर्थः। विचारस्य फलं धर्मस्य ज्ञानद्वारा अनुष्ठानोप-योगित्वसिद्धिरिति भावः। यद्यपीति। तथा च धर्माधर्मयोरदृष्टविशेषात्मकत्वात् तयोश्चानुष्ठानयोग्यत्वाभावात् तयोर्विचारो निरर्थक इति भावः। **अत एवेति।** धर्माधर्मयोरदृष्टविशेषात्मकत्वादेवेत्यर्थः। **धर्मः क्षरति कीर्तनादिति।** धर्मस्य क्रियारूपत्वे तस्य क्षणिकत्वेन स्वत एव नाशात् कीर्तननाश्यत्वानुपपत्तिरिति भावः। **वैशेषिकतन्त्रे चेति।** वैशेषिकमते 'विहितकर्मजन्यो धर्मः' 'निषिद्धकर्म-जन्योऽधर्मः।' इत्यादिना धर्माधर्मयोः क्रियाजन्यादृष्टविशेषरूपत्वाङ्गीकारादिति भावः। समाधत्ते — **तथापीति।** 'धर्मः स्वनुष्ठितः पुंसाम्' इति वचने धर्मशब्दः न अदृष्टपरः अदृष्टस्य प्रवृत्तिविषयत्वरूपानुष्ठितत्वबाधात्। अपि तु क्रियापर एव वक्तव्यः। तथा च क्रिययोरपि धर्माधर्मशब्दप्रयोगात् तयोरपि धर्मत्वमधर्मत्वं चास्तीति ते अनुष्ठानोपयोगिज्ञानार्थं द्वादशलक्षण्यां विचार्येते इति भावः। धर्मा-धर्मयोः वेदप्रतिपाद्यत्वप्रकारनिर्णय एव भाट्टरहस्यग्रन्थस्य मुख्योद्देश्यमिति चार्थात्सिद्धम्।

# धर्मलक्षणविचारः

## धर्माधर्मलक्षणाक्षेपः

**अथ किन्नाम धर्मत्वमधर्मत्वं वा। न तावद् विहितक्रियात्वम्, निषिद्धक्रियात्वं वा तत्। विहितनिषिद्धद्रव्यादौ तदनापत्तेः, न हि फलार्थगुणानुष्ठातॄणाम्, यज्ञे रजताद्यनुष्ठातॄणाञ्च 'धार्मिकः, अधार्मिकः' इति व्यवहाराभावः। तथात्वे — इन्द्रियकामाद्यधिकरणादौ शास्त्रसङ्गत्यनापत्तेश्च। तस्य धर्मत्वाभावे तज्जन्यादृष्टस्य धर्मत्वाभावेन कीर्तननाश्यत्वानापत्तेश्च। नापि क्रियात्वरहितं तत्, विवाहार्थानृतवचनादावभ्यनुज्ञाविधिविषये धर्मत्वापत्तेश्च, षोडशिग्रहणेऽधर्मत्वापत्तेश्चेति चेत्।**

---

शङ्कते — **अथेति। तदिति।** धर्मत्वमधर्मत्वं वेत्यर्थः। **तदनापत्तेरिति।** धर्मत्वाधर्मत्वयोरनुपपत्तेरित्यर्थः। विहितद्रव्ये निषिद्धद्रव्ये च क्रियात्वाभावेन क्रियात्वघटितस्य धर्मत्वस्याधर्मत्वस्य चासंभवादिति भावः। **फलार्थगुणानुष्ठातॄणामिति।** 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यादिश्रुतिविहितो यः इन्द्रियादिरूपफलसाधनीभूतो गुणः दध्यादिः तदनुष्ठातॄणां तत्करणकहोमकर्तॄणां तत्करणकभावनावतामिति वा अर्थः। **रजताद्यनुष्ठातॄणामिति।** रजतदातॄणां तत्करणकदानभावनावतामिति वा अर्थः। तथा च दध्याद्यनुष्ठातरि धार्मिक इति व्यवहारः दध्यादेः धर्मत्वमन्तरेण न संभवति। धर्मं चरतीत्यर्थे धर्मशब्दात् ठकि धार्मिक इति शब्दनिष्पादनात्। तथा यज्ञे रजताद्यनुष्ठातरि अधार्मिक इति व्यवहारः रजतादेरधर्मत्वं विना न संभवतीति दध्यादेः रजतादेश्च धर्मत्वमधर्मत्वं चावश्यमभ्युपगन्तव्यम्। धर्मत्वाधर्मत्वयोः क्रियात्वघटितत्वे च तदनुपपन्नमिति भावः। ननूक्तस्थले धार्मिकोऽधार्मिक इति व्यवहारस्य प्रामाणिकत्वे सति हि तदनुरोधेन

द्रव्यस्यापि धर्मत्वमधर्मत्वं च स्वीकार्यम्। तस्य व्यवहारस्य प्रामाणिकत्वमेव च सविवादमित्यत्राह — **तथात्व इत्यादिना**। तथात्वे विहितनिषिद्धद्रव्यादौ धर्मत्वाधर्मत्वाभावे इत्यर्थः। शास्त्रसंगत्यनापत्तेश्चेति। धर्मप्रतिपादकवाक्यविचारो हि धर्ममीमांसाशास्त्रसंगत इति भावः।

**नापि क्रियात्वरहितं तदिति। तत्** धर्मत्वमधर्मत्वं च क्रियात्वरहितम्। तथा च विहितत्वं धर्मत्वं निषिद्धत्वमधर्मत्वमित्युक्ते न पूर्वोक्तदोष इत्याशयः। **विवाहार्थेति**। विवाहे अनृतवचनं अभ्यनुज्ञाख्यविधिविषयतया विहितं भवतीति विहितत्वरूपस्य धर्मलक्षणस्य विवाहार्थानृतवचने सद्भावात् धर्मलक्षणातिव्याप्तिस्तत्रेति भावः। **षोडशिग्रहणेऽतिव्याप्तेश्चेति**। नातिरात्रे षोडशिनं गृह्णाति इति निषेधविषयत्वस्य षोडशिग्रहणे सत्त्वात् निषिद्धत्वरूपाधर्मलक्षणस्य तत्रातिव्याप्तिरिति भावः। **वेदबोधितश्रेयस्साधनताकत्वं धर्मत्वमिति**। वेदबोधिता श्रेयस्साधनता यस्य तत्त्वं, यस्य इष्टफलसाधनता वेदेन बोधिता स धर्मः, यस्य अनिष्टफलसाधनता वेदेन बोधिता स अधर्म इति उक्तं भवति। लक्षणसमन्वयं करोति — **ज्योतिष्टोमेत्यादिना**। ज्योतिष्टोमेन स्वर्गकामो यजेत इति श्रुत्या ज्योतिष्टोमस्य स्वर्गरूपेष्टसाधनत्वं बोध्यते इति वेदबोधितश्रेयस्साधनताकत्वसत्त्वात् तस्य धर्मत्वम्। न कलञ्जं भक्षयेत् इति श्रुत्या कलञ्जभक्षणस्यानिष्टसाधनत्वं बोध्यते इति वेदबोधितानिष्टसाधनताकत्वसत्त्वात् तस्य अधर्मत्वम्। एवं धर्माधर्मलक्षणयोस्तत्र तत्र समन्वयो बोध्य इत्यर्थः।

## पूर्वोक्ताक्षेपनिरासमुखेन धर्माधर्मयोर्लक्षणकथनम्

**न। वेदबोधितश्रेयस्साधनताकत्वं धर्मत्वम्, तद्बोधिताऽनिष्टसाधनताकत्वम् अधर्मत्वम्, इत्येव तल्लक्षणोपपत्तेः। ज्योतिष्टोमकलञ्जभक्षणादीनां हीष्टानिष्ट-**

साधनता वेदवोधितेति, तत्र लक्षणसमन्वयः। अत्र वेदबोधितत्वं ब्रह्मस्वर्गनरकादावपि इत्युत्तरदलम्। अन्नविषभक्षणादेरिष्टानिष्टसाधनत्वेऽपि तस्य वेदबोधितत्वाभावादाद्यम्।

## श्येनयागस्य धर्मत्वाक्षेपसमाधाने

**श्येने चेष्टसाधनताया एव वेदबोधितत्वात् धर्मत्वमेव, अनिष्टजनकत्वं तु श्येनफलस्य वैरिमरणानुकूलशस्त्रघातादिरूपहिंसात्मकाभिचारस्यैव। तस्यैव च वेदबोधितानिष्टसाधनताकत्वादधर्मत्वम्, न तु श्येनस्येति व्यक्तञ्चतुर्थे।**

---

अथ दलप्रयोजनमाह — अत्रेत्यादिना। अत्र धर्माधर्मयोः लक्षणे इत्यर्थः। धर्मलक्षणे वेदबोधितत्वमात्रोक्तौ ब्रह्मणि स्वर्गे चातिव्याप्तिः, तयोरपि वेदप्रतिपाद्यत्वात्। अतः श्रेयस्साधनताकत्वं धर्मलक्षणे अन्तर्भावितम्। तयोः स्वयं श्रेयोरूपयोः श्रेयोन्तरसाधनताविरहात् नातिव्याप्तिः। अधर्मलक्षणे वेदबोधितत्वमात्रोक्तौ ब्रह्मनरकादावतिव्याप्तिः। अतः अनिष्टसाधनताकत्वदलम्। ब्रह्मणो नरकस्य वा अनिष्टसाधनताविरहात् नातिव्याप्तिः। वेदबोधितत्वं विहाय श्रेयस्साधनताकत्वं धर्मत्वमित्युक्तौ अन्नस्यापि तृप्तिरूपेष्टसाधनत्वात् तस्य धर्मत्वापत्तिः अतः वेदबोधितत्वोक्तिः। एवम् अधर्मलक्षणे वेदबोधितत्वानुपादाने विषभक्षणादेः मरणरूपानिष्टसाधनत्वादधर्मत्वापत्तिः। अतस्तदुपादानम्। वेदबोधितत्वे सति श्रेयस्साधनत्वं धर्मत्वमित्येतावदुक्तावपि विवाहार्थानृतवदनस्य अभ्यनुज्ञाविध्यात्मकवेदबोध्यत्वात् विवाहरूपेष्टसाधनत्वाच्च तत्र धर्मलक्षणातिव्याप्तिः। अतः वेदबोधिता या श्रेयस्साधनता तत्कत्वं धर्मत्वमित्युक्तम्। अभ्यनुज्ञाविधिना दोषाभावमात्रमाक्षिप्यते नेष्टसाधनत्वमिति रागप्राप्तेष्टसाधनताकस्याप्यनृतवदनस्य

वेदबोधितेष्टसाधनताकत्वाभावान्नातिव्याप्तिः। तथा वेदबोधितत्वे सति अनिष्ट-साधनताकत्वमधर्मत्वमित्येतावदुक्तौ यागस्यापि वेदबोधितत्वात् तात्कालिक-दुःखसाधनत्वाच्चाधर्मत्वापत्तिः। अतः वेदबोधिता या अनिष्टसाधनता तत्कत्व-मिति अधर्मलक्षणं बोध्यम्।

**उत्तरदलमिति**। धर्मलक्षणे इष्टसाधनताकत्वदलं अधर्मलक्षणे अनिष्टसाधनता-कत्वदलं चेत्यर्थः। **अन्नविषभक्षणादेरिष्टानिष्टसाधनत्वेऽपीति**। अन्नस्य तृप्तिरूपेष्ट-साधनत्वेऽपि, विषभक्षणादेः मरणरूपानिष्टसाधनत्वेऽपीत्यर्थः। **आद्यमिति**। वेद-बोधितत्वदलमित्यर्थः। ननु श्येनेनाभिचरन् यजेत इति श्रुत्या श्येनयागस्य शत्रुमरणानुकूलव्यापाररूपाभिचारात्मकफलोद्देशेन विधानात् वेदबोधिता या अभिचारात्मकेष्टफलसाधनता तत्कत्वात् श्येनस्यापि धर्मत्वापत्तिरित्याशङ्क्य इष्टापत्त्या समाधत्ते — **श्येने चेत्यादिना**। एवकारेणानिष्टसाधनतायाः व्यव-च्छेदः। ननु श्येनयागे कृते शत्रुमरणजननात् मरणरूपानिष्टसाधनत्वमेवास्तीति कथं श्येनयागस्य धर्मत्वमित्यत्राह — **अनिष्टजनकत्वं त्विति** ।

अयमाशयः — श्येनयागः अभिचारजनकः। अभिचारश्च वैरिमरणानुकूलः शस्त्रघातादिरूपो व्यापारः। अभिचार एव च मरणानुकूलव्यापारात्मकहिंसारूप-तया मरणजनकः। एवं च श्येनयागस्य परंपरया अभिचारद्वारा मरणजनकत्वेऽपि साक्षान्मरणजनकत्वाभावात् अधर्मलक्षणघटकानिष्टसाधनतायाश्च साक्षाज्जनक-तारूपत्वात् तस्याः साक्षात्परंपरासाधारण्येऽपि वा श्येननिष्टतादृशजनकतायाः वेदबोधितत्वाभावाच्च न श्येनस्य अधर्मत्वम्। श्येनयागजन्याभिचारस्यैव च मरणरूपानिष्टजनकतया अधर्मत्वम्। न हिंस्यात् सर्वा भूतानि इति श्रुत्या हिंसायाः अनिष्टसाधनत्वं बोध्यते। अभिचारश्च हिंसैव, मरणानुकूलव्यापार-रूपत्वात्। अतः अभिचारस्य न हिंस्यादिति श्रुतिबोधितानिष्टसाधनताकत्वाद-

धर्मत्वमिति। **तस्यैव चेति।** अभिचारस्यैवेत्यर्थः। **वेदबोधितेति।** न हिंस्यादिति श्रुतिबोधितेत्यर्थः। **चतुर्थ इति।** चतुर्थाध्यायप्रथमपादद्वितीयाधिकरण इत्यर्थः। तत्र हि फलस्यापीतरांशवद्विधेयत्वमिति पूर्वपक्षं कृत्वा आर्थिकविशेषणविधौ यदंशेऽप्राप्तिस्तस्यैव विधेयत्वम्। फलस्य तु रागप्राप्तत्वेन न विधेयत्वमिति सिद्धान्तं च कृत्वा तत्प्रयोजनं पूर्वपक्षे अभिचारस्य विधेयत्वान्न निषेधविषयत्वमित्यधर्मत्वानुपपत्तिः इत्युक्तम्।

## वैरिमरणसाधनस्य यागस्याधर्मत्वशंकानिरासौ धर्मत्वाधर्मत्वयोरुपाधिरूपत्ववर्णनञ्च

**यत्र तु 'वैरिमरणकामो यजेत' इत्येवं विधिः, तत्रापि विधिना इष्टसाधनताबोधनाद्यागादेर्धर्मत्वमेव, न च तत्र यागस्यैव मरणानुकूलव्यापारत्वेन हिंसात्वात्, 'न हिंस्यादि'ति निषेधविषयत्वम्, निषेधस्य रागप्राप्तहिंसोपजीवनेनाप्युपपत्तौ विहितेऽप्रवृत्तेः। न चैवं तादृशस्थले श्येनवत्परम्परयापि प्रत्यवायानुत्पत्तेरशिष्टानां तत्र निष्कम्पप्रवृत्त्यापत्तिः, 'परस्योत्सादनार्थं यत् तत्तामसमुदाहृतम्' इत्यादिवाक्यपर्यालोचनया अभिचारजनकश्येनवदभिचारस्यापि कर्मणस्तामसत्वेन निन्दितत्वात् तदुन्नीतनिषेधबलेन फलार्थं विहितस्यापि तस्यानिष्टजनकत्वेनाधर्मत्वस्यापि सत्त्वात्तदनापत्तेः। अत एव धर्मत्वाधर्मत्वयोरुपाधिरूपत्वात्साङ्कर्येऽप्यदोषः।**

---

ननु श्येनयागस्य वस्तुतः परंपरया मरणरूपानिष्टजनकत्वेऽपि तादृशानिष्टजनकतायाः श्येनेनाभिचरन् इति विधिबोधितत्वाभावात् वेदबोधितानिष्टसाधनताकत्वरूपाधर्मलक्षणाभावेन साक्षादनिष्टजनकताघटितलक्षणाभावेन वा अधर्मत्ववारणेऽपि यत्र वैरिमरणकामो यजेत इति विधिः तत्र यागे विधिनैव शत्रुमरण-

रूपानिष्टसाधनतायाः बोधितत्वात् वेदबोधितानिष्टसाधनताकत्वसत्त्वादधर्मत्वापत्तिरित्याशङ्क्य तत्र नञ्समभिव्याहारविरहात् कमियोगाच्च वैरिमरणस्य इष्टत्वद्योतनेन इष्टसाधनताकत्वरूपधर्मलक्षणाक्रान्ततया धर्मत्वमेवेति समाधत्ते — **यत्र तु** इत्यादिना। ननु तत्र विधिना इष्टसाधनताबोधनेऽपि यागस्य वैरिमरणजनकतया हिंसात्मकत्वेन न हिंस्यादिति निषेधेन तस्यानिष्टसाधनताकत्वसत्त्वादधर्मत्वं स्यादित्याशङ्कते — **न च तत्रेति**। समाधत्ते — **निषेधस्येति**। तथा च न हिंस्यादिति निषेधस्य रागप्राप्तहिंसाविषयकत्त्वेन विहितहिंसाविषयकत्वाभावात् विधिना च इष्टसाधनताया एव बोधितत्वेन धर्मत्वमेवेति भावः। **तादृशस्थले इति**। वैरिमरणकामो यजेत इत्यत्रेत्यर्थः। **प्रत्यवायानुत्पत्तेरिति**। विधिना इष्टसाधनताया एव बोधनादिति भावः। **उत्सादनार्थं** नाशनार्थम्। **तदुन्नीतेति**। निन्दानुमितेत्यर्थः। **तदनापत्तेरिति**। निष्कम्पप्रवृत्त्यप्रसङ्गादित्यर्थः। **अत एवेति**। अधर्मत्वादेवेत्यर्थः। **अदोष इति**। जात्योः सांकर्यमेव दोषाय, नोपाध्योरित्यर्थः। उपाधिश्च जात्यतिरिक्तो धर्मः।

## अर्थसंग्रहाद्युक्तार्थस्योपन्यासनिरासौ

**यतु धर्मलक्षणे बलवदनिष्टाननुबन्धित्वस्यापि प्रवेशाच्छ्येनादौ च तदभावान्न धर्मत्वमिति। तन्न। तत्प्रवेशे प्रयोजनाभावात्, अनिष्टगतद्वेषौत्कट्यरूपस्य बलवत्त्वस्य प्राचीनकर्माधीनतयोक्तविधाननुबन्धित्वस्य श्येनेऽपि कदाचित्सम्भवाच्च। इतरथा श्येने सामग्र्यभावेन प्रवृत्त्यनापत्तेः। किञ्च श्येनादौ धर्मत्वाभावे तामसधर्मत्वकथनानुपपत्तिः। अत उक्तलक्षणयोर्युक्तस्तत्रापि समन्वयः।**

**अभ्यनुज्ञाविधिना च दोषाभावमात्रस्यैवाक्षेपादिष्टसाधनतानाक्षेपेण रागप्राप्तेष्टसाधनताकस्याप्यनृतवदनस्य वेदबोधितेष्टसाधनताकत्वाभावात् न धर्मत्वापत्तिः।**

**षोडशिग्रहणे च निषेधेन नानिष्टसाधनत्वाक्षेपः, प्रमाणाभावाद् , गौरवाच्च। अपि त्वेतदभावेऽपीतराङ्गैः क्रतुमहोपकारसिद्धिमात्रस्यैव; तावन्मात्रेणैव पुरुषस्य निवृत्त्युपपत्तेः। अत एव प्रवृत्त्यर्थं विधिना फलाधिक्याक्षेपः। अतस्तत्रापि नाधर्मत्वापत्तिः।**

---

एतावता श्येनयागस्य धर्मत्वमभ्युपगम्य तामसत्वेनाधर्मत्वस्यापि सद्भावान्न तत्र शिष्टानां प्रवृत्तिरिति समाहितम्। अन्ये तु तस्य धर्मत्वस्यैवाभावात् न तत्र शिष्टानां प्रवृत्तिः। वेदबोधितेष्टसाधनताकत्वसत्त्वात् कुतो न धर्मत्वमिति चेन्न। धर्मलक्षणे बलवदनिष्टाजनकत्वमपि विशेषणं दीयते। तथा च बलवदनिष्टाजनकत्वे सति वेदबोधितेष्टसाधनताकत्वं धर्मलक्षणम्। श्येनस्य अभिचाररूपेष्टजनकत्वेऽपि तद्वारा कालान्तरे बलवन्नरकरूपानिष्टजनकत्वेन बलवदनिष्टाजनकत्वरूपविशेषणाभावेन तद्घटितधर्मलक्षणाभावान्न धर्मत्वमिति वदन्ति। तन्मतमनुवदति — **यत्त्विति**। **तदभावादिति**। बलवदनिष्टाननुबन्धित्वाभावादित्यर्थः। दूषयति — **तन्नेति**। **तत्प्रवेश इति**। बलवदनिष्टाननुबन्धित्वस्य प्रवेशे इत्यर्थः। प्रयोजनाभावमुपपादयति — **अनिष्टगतेत्यादि**। अयमाशयः — श्येनेऽतिव्याप्तिवारणाय हि बलवदनिष्टाननुबन्धित्वरूपं विशेषणं दीयते। सा चातिव्याप्तिः तादृशविशेषणे दत्तेऽपि तदवस्थैव। तथाहि बलवदनिष्टेत्यस्य उत्कटद्वेषविषयेत्यर्थः। तथा च बलवदनिष्टाननुबन्धित्वं नाम उत्कटद्वेषविषयाजनकत्वमित्यर्थः। कस्मिंश्चित् वस्तुनि उत्कटः द्वेषस्तदभावश्च प्राचीनकर्माधीनः। अतः यस्य पुरुषस्य श्येनजन्ये नरके प्राचीनकर्मवशात् उत्कटो द्वेषो न जातः तं प्रति उत्कटद्वेषविषयफलाजनकत्वं श्येनयागेऽप्यस्तीति धर्मलक्षणातिव्याप्तिस्तदवस्थेति। **इतरथेति**। कदाचित् श्येनयागस्य बलवदनिष्टाननुबन्धित्वानभ्युपगमे

इत्यर्थः। **सामग्र्यभावेनेति**। भवन्मते बलवदनिष्टाजनकत्वज्ञानस्यापि प्रवृत्तिं प्रति कारणत्वाङ्गीकारात् श्येनस्य सर्वदा बलवदनिष्टजनकत्वज्ञाने सति तदजनकत्व-ज्ञानघटितप्रवृत्तिसामग्र्यभावेन श्येने कस्यापि प्रवृत्तिर्न स्यादिति भावः।

**उक्तलक्षणयोरिति**। धर्माधर्मलक्षणयोरित्यर्थः। विहितत्वनिषिद्धत्वयोर्धर्माधर्म-लक्षणत्वे पूर्वोक्तां विवाहार्थानृतवदनषोडशिग्रहणादावतिव्याप्तिं निष्कृष्टलक्षण-रीत्या निराकरोति — **अभ्यनुज्ञाविधिना चेत्यादिना**। विवाहार्थमनृतं वदेत् इत्यभ्यनुज्ञाविधिः पुरुषप्रवृत्तिसिद्ध्यर्थं अनृतवदने दोषाभावमात्रं बोधयति, न तु अनृतवदनस्येष्टसाधनताम्। अतो विवाहार्थानृतवदनं रागप्राप्तेष्टसाधनताकं, इति न तत्र धर्मलक्षणातिव्याप्तिः। तथा नातिरात्रे षोडशिनं गृह्णाति इति निषेधः षोडशिग्रहणस्य नानिष्टसाधनतां बोधयति। अतिरात्रे षोडशिनं गृह्णाति इति विधिना इष्टसाधनताया बोधितत्वेन तद्विरोधात्। अपि तु षोडशिग्रहणाभावेऽपि इतराङ्गैः क्रतूपकारसिद्धिमेव बोधयति। तावतैव च पुरुषस्य ततो निवृत्तिसंभवात्। तथा च वेदबोधितानिष्टसाधनताकत्वरूपाधर्मलक्षणाभावान्न षोडशिग्रहणादावति-व्याप्तिरिति भावः। **आक्षेपादिति**। अनुमानादित्यर्थः। विवाहार्थानृतवचनं न पापजनकं अभ्यनुज्ञाख्यविधिविषयत्वादित्यनुमानप्रयोगो बोद्धव्यः। **इष्टसाधनत्वा-नाक्षेपेणेति**। इष्टसाधनत्वस्याननुमानेनेत्यर्थः। **रागप्राप्तेष्टसाधनताकस्येति**। इष्ट-साधनत्वमन्तरेण अनृतवदने रागासंभवात् रागमहिम्नैव तस्येष्टसाधनत्वं प्राप्तं ज्ञातमिति भावः।

**अनिष्टसाधनत्वाक्षेपः इति**। अनिष्टसाधनत्वानुमानमित्यर्थः। **प्रमाणाभावात् इति**। अतिरात्रे षोडशिनं गृह्णाति इति इष्टसाधनताबोधकश्रुतेर्बाधकस्य सत्त्वादिति भावः। **गौरवाच्चेति**। अनिष्टसाधनत्वाक्षेपवादिनापि षोडशिग्रहणं विनापि क्रतूप-कारसिद्धिरङ्गीकर्तव्या। यत् अनिष्टसाधनं (क्रतुवैगुण्यात्मकानिष्टसाधनं) तद्धि न

क्रतूपकारकम्। अतस्तेन विना इतराङ्गैः क्रतूपकारसिद्धिरिति वक्तव्यम्। तथा च निषेधेन षोडशिग्रहणाभावेऽपीतराङ्गैः क्रतूपकारसिद्ध्यनुमानादेव ततो निवृत्तिसिद्धेः नानिष्टसाधनत्वस्याक्षेपः गौरवादिति भावः। **सिद्धिमात्रस्यैवेति**। आक्षेप इति शेषः। षोडशिग्रहणं क्रतूपकारकत्वाभाववत् निवर्तनाविषयत्वात् इत्यनुमानमत्र विवक्षितम्।

ननु नातिरात्रे इति निषेधेन षोडशिग्रहणाभावेऽपीतराङ्गैः क्रतूपकारसिद्ध्याक्षेपे षोडशिग्रहणे कस्यापि प्रवृत्तिर्न स्यादिति अतिरात्रे षोडशिनं गृह्णातीति विधिवैयर्थ्यम् इत्याशङ्क्याह — **अत एवेति**। निषेधेन षोडशिग्रहणाभावेऽपि इतराङ्गैः क्रतूपकारसिद्ध्यनुमानादेवेत्यर्थः। **तत्रेति**। षोडशिग्रहण इत्यर्थः। **विधि-नेति**। अतिरात्रे षोडशिनं गृह्णाति इति विधिनेत्यर्थः। **फलाधिक्याक्षेप** इति। षोडशिग्रहणरहितक्रतुजन्यफलापेक्षया षोडशिग्रहणसहितक्रतुजन्यफले स्वर्गाद्यतिशयस्य अनुमानमित्यर्थः। तथा चाधिकफलकामस्य तत्र प्रवृत्तिः संभवतीति न विधिवैयर्थ्यमिति भावः। **तत्रापीति**। षोडशिग्रहणेऽपीत्यर्थः।

**वेदबोध्यत्वञ्च वेदातिरिक्तप्रमाणेन स्वातन्त्र्येणाबोध्यत्वे सति वेदबोध्यत्वम्। तेन तत्त्वसाक्षात्काररूपब्रह्मज्ञानस्य ब्रह्मविषयकसविलासाज्ञाननिवृत्तिरूपमोक्षजनकत्वस्य प्रमाणान्तरसिद्धस्योपनिषद्बोध्यत्वेऽपि न तस्य धर्मत्वापत्तिः।**

**यदापि प्रपञ्चस्य सत्यत्वेन नाज्ञानकार्यत्वम्। मोक्षश्चैकविंशतिदुःखध्वंसादिरूपस्तत्त्वज्ञानजन्य इति मतमपि प्रामाणिकम्, तदा मोक्षजनकत्वस्य प्रमाणान्तरागम्यत्वात् तत्र धर्मत्वपरिहारार्थं वेदबोधितत्वं विहाय, विधिबोधितत्वं देयम्, ज्ञानस्य प्रमाणवस्तुपरतन्त्रत्वेन प्रवर्तनाविषयत्वाभावान्न विधिबोध्यत्वम् ॥**

---

ननु वेदबोधितश्रेयस्साधनताकत्वस्य धर्मलक्षणत्वेऽपि ब्रह्मज्ञाने धर्मलक्षणस्यातिव्याप्तिः। 'तरति शोकमात्मवित्' 'विद्वान्नामरूपाद्विमुक्तः' इत्यादिश्रुत्या ब्रह्मज्ञानस्य अज्ञाननिवृत्तिरूपमोक्षात्मकश्रेयस्साधनतायाः बोधितत्वात् वेदबोधितश्रेयस्साधनताकत्वरूपधर्मलक्षणस्य ब्रह्मज्ञाने विद्यमानत्वादित्यत्राह — **वेदबोध्यत्वं चेति**। तत्त्वज्ञानस्य च अज्ञाननिवृत्तिसाधनत्वं न वेदैकबोध्यम्। तद्विषयकज्ञानसत्त्वे तद्विषयकाज्ञाननिवृत्तिः तदभावे तदभाव इति अन्वयव्यतिरेकसहचारज्ञानात्मकप्रमाणान्तरगम्यत्वस्यापि तत्र सत्त्वात्। अतो ब्रह्मज्ञाननिष्ठायाः अज्ञाननिवृत्त्यात्मकश्रेस्साधनतायाः वेदातिरिक्तप्रमाणाबोध्यत्वाभावान्न तत्र धर्मलक्षणातिव्याप्तिरिति भावः। यागादेः स्वर्गादिसाधनतायाः वेदातिरिक्तस्मृतिबोध्यत्वाद्धर्मलक्षणासंभव इत्यत्राह — स्वातन्त्र्येणेति। स्मृतेश्च श्रुतिमूलकतयैव श्रेयस्साधताबोधकत्वं न स्वातन्त्र्येणेति नोक्तदोष इति भावः। वेदबोध्यत्वदलं स्पष्टार्थम्। तदनुपादानेऽपि लक्षणे न कोऽपि दोषः। ब्रह्मज्ञानविषयकेत्यादि। ब्रह्मविषयकं यत् सविलासं सकार्यं अज्ञानं तन्निवृत्तिरूपो यः मोक्षः तज्जनकत्वस्येत्यर्थः। **प्रमाणान्तरसिद्धस्येति** अन्वयव्यतिरेकसहचारज्ञानगम्यस्येत्यर्थः। अनेनातिव्याप्तिवारणप्रकारः सूचितः।

**यदापीत्यादि**। तथा च प्रपञ्चात्मककार्येण सह अज्ञानमपि सत्यमेव। अतो नाज्ञानस्य तत्कार्यस्य च निवृत्तिर्मोक्षः। अपि तु एकविंशतिदुःखध्वंस एव मोक्षः। तस्यैव च ब्रह्मज्ञानं जनकम्। तादृशदुःखध्वंसरूपमोक्षजनकत्वं तत्वज्ञानस्य न वेदातिरिक्तप्रमाणबोध्यम्। अतश्च वेदातिरिक्तप्रमाणाबोध्यश्रेयस्साधनताकत्वात् तत्वज्ञाने धर्मलक्षणातिव्याप्तिरेतन्मते इति भावः। शरीरं षडिन्द्रियाणि षट् विषयाः षड् बुद्धयः सुखं दुःखं चेत्येकविंशतिर्दुःखानि। नाज्ञानकार्यत्वमिति। अज्ञानकार्यस्यैव च तत्त्वज्ञानान्निवृत्तिः न सत्यस्येति भावः। तत्र धर्मत्व-

**परिहारार्थमिति।** तत्त्वज्ञाने धर्मलक्षणातिव्याप्तिवारणार्थमिति भावः। **विधिबोधितत्वमिति।** विधिपदस्य लिङ्लोट्तव्यप्रत्ययपरत्वे विधिबोध्यत्वं नाम लिङादिवाच्यप्रवर्तनविषयत्वम्। विधिपदस्य प्रवर्तनपरत्वे च प्रवर्तनविषयत्वमेव विधिबोधितत्वम्। प्रवर्तनविषयत्वं च कृतिसाध्यस्यैव। तत्त्वज्ञानस्य च प्रमाणजन्यत्वात् वस्तुजन्यत्वाच्च कृत्यविषयतया प्रवर्तनविषयत्वं नास्तीति न धर्मत्वापत्तिरित्यर्थः। तथा च विधिबोधित्वे सति इषटसाधनत्वं धर्मस्य लक्षणमिति फलति।

यद्वा विधिबोध्यत्वं इष्टसाधनतायाः विशेषणम्। तस्याः विधिबोध्यत्वं च विध्यर्थप्रवर्तनाज्ञानजन्यानुमितिविषयत्वरूपम्। विध्यर्थभूतायां प्रवर्तनायां ज्ञातायां अयमत्र प्रवर्ततामित्याकारकेच्छाविषयप्रवृत्तिविषयत्वरूपहेतुज्ञानं मानसं जायते, तेन च यागादाविष्टसाधनत्वमनुमीयत इत्युपरिष्टान्निरूपयिष्यति। याग इष्टसाधनं अयमत्र प्रवर्ततामित्याकारकेच्छात्मकप्रवर्तनाविषयप्रवृत्तिविषयत्वात् इति चानुमानाकारः। तथा प्रकृते ज्ञानमिष्टसाधनं अयं ज्ञाने प्रवर्ततामित्याकारकेच्छाविषयप्रवृत्तिविषयत्वादित्यनुमानं वक्तव्यम्। तच्च न संभवति, ज्ञानस्य प्रवृत्तियोग्यताविरहेण अयमत्रप्रवर्ततामित्याकारकेच्छारूपप्रवर्तनाया असंभवात् तद्घटितहेतोरसिद्धेः। अतो ज्ञानगतेष्टसाधतायाः विध्यर्थप्रवर्तनाज्ञानजन्यानुमितिविषयत्वरूपं विधिबोध्यत्वं न संभवतीति विधिबोध्येष्टसाधनताकत्वाभावान्न तत्त्वज्ञानस्य धर्मत्वमित्याशयः। प्रवर्तनाविषयत्वाभावादित्यनेन हेत्वसिद्धिः सूचिता। **न विधिबोध्यत्वमिति।** न ज्ञानगतेष्टसाधनतायाः निरुक्तं विधिबोध्यत्वमित्यर्थः। इयं च व्याख्या — कश्च वा विधिः यद्बोध्यत्वं श्रेयस्साधनत्वस्येति वक्ष्यमाणग्रन्थानुगुणेति ध्येयम्।

**वस्तुतस्तु 'अयन्तु परमो धर्मो यद्योगेनात्मदर्शनम्' इत्यादौ ज्ञानेऽपि धर्मशब्दप्रयोगात्तस्य धर्मत्वेऽपि न क्षतिः। न च तत्रत्यदर्शनशब्दो ध्यानपरः, लक्षणायां प्रमाणाभावात्। ध्याने चित्तवृत्तिनिरोधरूपमुख्ययोगजन्यत्वासम्भवाच्च। उपासनादिवच्च ज्ञानस्य धर्मत्वेऽपि, ब्रह्मणो वेदबोधितश्रेयस्त्वावच्छिन्नसाधनत्वाभावेन धर्मत्वाभावाद्धर्ममीमांसातो ब्रह्ममीमांसाया भेदोपपत्तिः।**

---

एतावता तत्वज्ञानस्य धर्मत्वं नास्तीति कृत्वा तत्रातिव्याप्तिवारणाय विधिबोध्यत्वं धर्मलक्षणे प्रवेशितम्। अथ तस्य धर्मत्वमभ्युपगम्य तत्प्रवेशोऽनावश्यक इत्याह — **वस्तुतस्त्वित्यादिना। न क्षतिरिति।** नातिव्याप्तिरित्यर्थः। तस्यापि लक्ष्यत्वादिति भावः। **तत्रत्यदर्शनशब्द इति।** अयं तु परमो धर्म इति वचनस्थो दर्शनशब्द इत्यर्थः। **ध्यानपर इति।** इति वाच्यमिति शेषः।

तथा चात्मध्यानस्य तादृशवचनबलेन धर्मत्वावगमेऽपि आत्मसाक्षात्काररूपज्ञानस्य धर्मत्वं नावगम्यत इति भावः। **लक्षणायां प्रमाणाभावादिति।** साक्षात्कारवाचकस्य दर्शनशब्दस्य स्मरणविशेषरूपे ध्याने लक्षणायां प्रमाणाभावादित्यर्थः। **योगजन्यत्वासंभवाच्चेति।** अनुभवजन्यसंस्कारजन्यस्य स्मरणस्य चित्तवृत्तिनिरोधरूपयोगजन्यत्वासंभवादिति भावः।

ननु ज्ञानस्य धर्मत्वाङ्गीकारे ब्रह्मणोऽपि धर्मत्वापत्तिः श्रुत्या तस्य कार्यसामान्यकारणत्वावगमेन इष्टसाधनतायाः वेदबोधितत्वात्। न चेष्टापत्तिः, ब्रह्ममीमांसाया अपि धर्ममीमांसात्वापत्तेः इत्याशङ्क्याह — **उपासनादिवच्चेत्यादि। धर्मत्वाभावादिति।** ब्रह्मणः कार्यसामान्यं प्रति साधारणकारणत्वात् तत्तत्फलनिष्ठकार्यत्वव्याप्यधर्मावच्छिन्नकार्यतानिरूपितकारणत्वरूपस्य श्रेयोऽसाधारण-

कारणत्वस्यैव धर्मलक्षणे प्रवेशेन ब्रह्मणस्तादृशासाधारणकारणत्वविरहात् न धर्मत्वापत्तिरिति भावः।

**अस्तु वा ब्रह्मणि धर्मलक्षणस्यातिव्याप्तिपरिहारार्थं पुरुषकृतिव्याप्यत्वं वेद-बोधितश्रेयस्साधनताकत्वविशेषणम्, गुणस्यापि चाश्रयविशिष्टस्य कृतिव्याप्यत्वात् नाव्याप्तिः। ज्ञानस्यापि च स्वरूपेण कृतिव्याप्यत्वाभावेऽपि सम्यग्जरणादिवत्तदनु-कूलमनःप्रणिधानादेः कृतिव्याप्यत्वेन परम्परया तदाविष्टस्य कृतिव्याप्यत्वोप-पत्तेर्नाव्याप्तिः। अत एव 'आत्मा वा अरे द्रष्टव्य' इति विधिप्रत्ययोऽपि एत-दभिप्रायक इत्यप्येतन्मते सुवचम्। 'असाधारणी वा कारणता लक्षणे प्रवेशनीया', तत्तल्लक्षणमेव धर्माधर्मपदशक्यतावच्छेदकम्, तस्य च क्रियातज्जन्यादृष्टसाधा-रण्येनैकयैव शक्त्या धर्माधर्मशब्दौ क्रियातज्जन्यादृष्टपराविति संक्षेपः।**

**इति श्रीमदाचार्यखण्डदेवविरचिते भाट्टतन्त्ररहस्ये धर्मलक्षणविचारस्समाप्तः**

---

प्रकारान्तरेण ब्रह्मणि धर्मलक्षणातिव्याप्तिमुद्धरति — **अस्तु वेति।** तथा च पुरुषकृतिव्याप्यत्वे सति वेदबोधितश्रेयस्साधनताकत्वं धर्मस्य लक्षणम्। ब्रह्मणश्च सिद्धवस्तुनः कृतिव्याप्यत्वाभावान्नातिव्याप्तिरिति भावः। ननु दध्यादेर्गुणस्य धर्मत्वानुपपत्तिः। सिद्धस्य दध्यादेः कृतिसाध्यत्वाभावात्। न चेष्टापत्तिः, इन्द्रिय-रूपफलोद्देशेन विहितत्वेन दध्नः धर्मतायाः इन्द्रियकामाधिकरणसिद्धत्वादि-त्यत्राह — **गुणस्यापि चेति। आश्रयविशिष्टस्येति।** होमाश्रितस्य दध्नो हि इन्द्रियसाधनत्वम्। तत्र विशेषणस्य होमस्य कृतिसाध्यतया होमविशिष्टस्य दध्नः विशिष्टवेषेण कृतिसाध्यत्वमस्तीति न धर्मलक्षणाव्याप्तिरिति भावः। ननु धर्मलक्षणे कृतिव्याप्यत्वप्रवेशे आत्मज्ञानस्य प्रमाणवस्तुपरतन्त्रत्वेन पुरुषकृतिसाध्यत्वाभा-वाद्धर्मलक्षणाव्याप्तिरित्याशङ्क्य आत्मज्ञानस्य स्वरूपतः कृतिसाध्यत्वाभावेऽपि

कृतिसाध्यमनःप्रणिधानजन्यतया आत्मज्ञानस्य परंपरया कृतिसाध्यत्वमस्तीति नाव्याप्तिरिति समाधत्ते — **ज्ञानस्यापि चेति**। **तदाविष्टस्येति**। मनःप्रणिधान-विशिष्टस्येत्यर्थः। वैशिष्ट्यं जन्यतासंबन्धेन। परंपरयेत्यस्य कृतिव्याप्यत्वा-दित्यत्रान्वयः। **सम्यग्जरणादिवदिति**। यथा सम्यग्जरणस्य कृतिसाध्यत्वाभावेऽपि तदनुकूलव्यापारस्य आसनविशेषस्य कृतिसाध्यतया परंपरया जरणस्य कृति-व्याप्यतया विधेयत्वं तथेत्यर्थः। अनेन च दृष्टान्तेन तृतीयाध्यायद्वितीयपाद-नवमाधिकरणार्थोऽभिप्रेतः।

तत्र हि 'भक्षे हि मा विश' इत्यादिः कृत्स्नोऽप्यनुवाकः भक्षणप्रकाशन-रूपाल्लिङ्गात् भक्षानुवाकः इति समाख्यया च सोमभक्षाङ्गमिति पूर्वपक्षं कृत्वा बाहुभ्यां सध्यासमित्यन्तः ग्रहणप्रकाशनसामर्थ्यरूपाल्लिङ्गात् मन्त्रवर्णकल्पित-विधिविषयीभूतग्रहणाङ्गम्। 'नृचक्षसं त्वा देव सोम सुचक्षा अवख्येषं' इति भागः अवेक्षणाङ्गम्। 'मा मे वाङ्नाभिमतिगाः' इत्यन्तः वागतिक्रमणरूपवमन, नाभ्यतिक्रमणरूपविरेचनोभयाभावप्रतिपादकतया तन्मुखेन सम्यग्जरणप्रकाशक-तया सम्यग्जरणाङ्गम्। न च सम्यग्जरणस्य कृत्यसाध्यत्वान्न विधेयत्वसंभव इति वाच्यम्। सम्यग्जरणानुकूलव्यपारस्यासनविशेषस्यैवानुष्ठेयस्य विधेयत्वात्। वमनविरेकनिमित्तप्रायश्चित्ताम्नानाच्च सम्यग्जरणपर्यन्तमेव भक्षणं प्रतिपत्तिरिति तस्य भक्षोपयोगिता इति सिद्धान्तितम्।

आत्मज्ञानस्य परंपरया कृतिव्याप्यत्वे श्रुतिप्रमाणमाह — **अत एवेति**। आत्मज्ञानस्य परंपरया कृतिव्याप्यत्वादेवेत्यर्थः। **विधिप्रत्ययोऽपीति**। विध्यर्थक-तव्यप्रत्ययोऽपीत्यर्थः। एतदभिप्रायक इति। परंपरया कृतिव्याप्यत्वाभिप्रायक इत्यर्थः।

ब्रह्मण्यतिव्याप्तिवारणाय पुरुषकृतिव्याप्यत्वविशेषणदाने आत्मज्ञाने अव्याप्तिर्भवतीति तद्वारणाय परंपरया कृतिसाध्यत्वमादाय तत्र लक्षणसमन्वयः कर्तव्यः आसीत्। एतादृशश्रमापेक्षया ब्रह्मण्यतिव्याप्तिवारणाय श्रेयोनिरूपितासाधारणकारणताया धर्मलक्षणे प्रवेश एव समीचीन इत्याशयेनाह — **असाधारणी वा कारणता लक्षणे प्रवेशनीयेति**। श्रेयस्त्वावच्छिन्नकार्यतानिरूपितकारणत्वं धर्मलक्षणे प्रवेशनीयमित्यर्थः। **तस्य चेति** । शक्यतावच्छेदकस्येत्यर्थः

**इति सारप्रकाशिकायां धर्मलक्षणविचारस्समाप्तः ।**

# विधिवादः

## धर्मलक्षणघटकसाधनत्वोपपादनम्

ननु करणत्वबोधकशब्दाभावात् 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यादौ कथं यागगतश्रेयस्साधनत्वस्य वेदवोध्यत्वम्, कश्च वा विधिः? यद्बोध्यत्वं श्रेयस्साधनत्वस्येति चेत्—

## लिङर्थे तार्किकाणामभिप्रायः

अत्र तार्किकाः — लिङादिश्रवणोत्तरं प्रवृत्तिदर्शनात्प्रवृत्तिसामग्रीजननद्वारा लिङादिज्ञानस्य प्रवृत्तावुपयोग इति तावदविवादम्, तत्सामग्री च कृतिसाध्यत्वप्रकारकेच्छारूपा चिकीर्षा, तस्याश्च स्वरूपसत्याः कारणत्वात्तत्र लिङादिज्ञानस्यानुपयोगेपि चिकीर्षाकारणीभूतज्ञाने तदुपयोगः कल्प्यते। तच्च बलवदनिष्टाननुन्धित्वज्ञानम्, कृतिसाध्यत्वज्ञानम्, इष्टसाधनत्वज्ञानञ्च। अन्यतमाभावे इतरद्वयसत्त्वेऽपि मधुविषसम्पृक्तान्नभोजने, चन्द्रस्पर्शे, मण्डलीकरणादौ च प्रवृत्त्यदर्शनात्। अतो लिङादिज्ञानेन त्रितयज्ञानजननात्, बलवदनिष्टाननुबन्धित्वे कृतिसाध्यत्वे, इष्टसाधनत्वे, च शक्तिः। पुष्पवन्तशब्दवच्च व्युत्पत्तिवैचित्र्याद्युगपदर्थत्रयस्यापि बोधः।

---

अथ यागगतश्रेयस्साधनतायाः वेदबोध्यत्वप्रकारनिरूपणव्याजेन विध्यर्थं निरूपयितुमाकाङ्क्षामुत्थापयति — **ननु कारणत्वबोधकशब्दाभावादित्यादिना**। अत्र **तार्किका इति**। एतेषां मते विधिर्नाम लिङ्लोडादिः प्रत्ययः तद्बोध्यत्वं चेष्टसाधन-

तायाः तद्वाच्यत्वरूपमिति ध्येयम्। **तदुपयोग इति।** लिङादिज्ञानस्योपयोग इत्यर्थः। **तच्चेति।** चिकीर्षाकारणीभूतं ज्ञानमित्यर्थः। **बलवदनिष्टाननुबन्धित्वज्ञानमिति।** इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वज्ञानमित्यर्थः। **मधुविषेत्यादि।** मधुविषसंपृक्तान्नभोजने कृतिसाध्यत्वज्ञान, इष्टसाधनताज्ञानद्वयसत्त्वेऽपि बलवदनिष्टाननुबन्धित्वज्ञानाभावान्न प्रवृत्तिः, तस्य बलवदनिष्टमरणसाधनत्वात्। चन्द्रस्पर्शे बलवदनिष्टाननुबन्धित्वज्ञानेष्टसाधनताज्ञानद्वयसत्त्वेऽपि कृतिसाध्यताज्ञानाभावान्न प्रवृत्तिः। मण्डललेखनादौ बलवदनिष्टाननुबन्धित्वज्ञानकृतिसाध्यताज्ञानद्वयसद्भावेऽपि इष्टसाधनताज्ञानाभावान्न प्रवृत्तिः। तथा चोक्तस्थलेषु उक्तज्ञानत्रयमध्ये अन्यतमज्ञानाभावे इतरज्ञानद्वयसत्त्वेऽपि प्रवृत्तेरनुत्पत्त्या प्रवृत्तिं प्रति उक्तज्ञानत्रयमपि कारणमिति स्वीकरणीयम्। लिङ्श्रवणानन्तरमुक्तज्ञानत्रयजननात् लिङः बलवदनिष्टाननुबन्धित्वाद्यर्थत्रये शक्त्यभावे लिङ्श्रवणोत्तरं तद्विषयकज्ञानोत्पत्त्यसंभवात् अर्थत्रयेऽपि लिङादेः प्रत्येकं शक्तिः सिध्यतीति भावः। ननु प्रत्येकं शक्तिः मास्तु बलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वविशिष्टकृतिसाध्यत्वे एका शक्तिरस्तु इत्यत्राह — **तत्रापीत्यादि।** विनिगमनाविरहात् अनेकेषु विशिष्टेषु शक्तिकल्पनामपेक्ष्य अर्थत्रये प्रत्येकं शक्तिकल्पनमेव लघु इति भावः। अत्र च प्रत्येकं शक्तिरित्यस्य त्रिष्वप्यर्थेषु परस्परविशेष्यविशेषणभावानापन्नेषु एका शक्तिरित्यर्थः। न तु पृथक् पृथक् त्रयः शक्तयः इत्यर्थ इति भ्रमितव्यम्। पुष्पवच्छब्ददृष्टान्तविरोधात्। तथा च प्रत्येकमित्यस्य एकैकस्मिन्नित्यर्थः। सप्तम्यर्थेऽव्ययीभावः। ननु लिङादेः परस्परविशेष्यविशेषणभावानापन्नेषु त्रिष्वर्थेषु शक्तिस्वीकारे त्रयाणामर्थानां युगपच्छाब्दबोधो न स्यात् इत्यत्राह — **पुष्पवच्छब्दवदिति।** यथा "एकयोक्त्या पुष्पवन्तौ प्रभाकरनिशाकरौ" इति कोशात् पुष्पवच्छब्दः एकया शक्त्या युगपत्सूर्यचन्द्रात्मकार्थद्वयं बोधयति तथा लिङादि-

रपि एकया शक्त्या बलवदनिष्टाननुबन्धित्वाद्यर्थत्रयं युगपद्बोधयतीति भावः। अत्र बलवदनिष्टाननुबन्धित्वविषयककृतिसाध्यत्वविषयकेष्टसाधनत्वविषयकबोधं जनयतु लिङादिपदमित्याकारकभगवदिच्छा त्रिष्वर्थेषु लिङादिपदस्य शक्तिः न तु लिङादिपदं बलवदनिष्टाननुबन्धित्वविषयकं कृतिसाध्यत्वविषयकं इष्टसाधनत्वविषयकं च बोधं जनयतु इत्याकारकेच्छा शक्तिः। तथा सति नानार्थस्थल इव एकैकार्थपरित्यागेनापीतरार्थस्य बोधप्रसङ्गादित्यवधेयम्। अधिकं व्युत्पत्तिवादे द्रष्टव्यम्। वस्तुतस्तु — शक्तित्रयकल्पने गौरवात् इत्युपरितनग्रन्थस्वारस्यात् यत्तु कृतिसाध्यत्वबलवदनिष्टाननुबन्धित्वाभ्यां विशिष्टमेवेष्टसाधनत्वं लिङर्थ इति तन्न। कृतिसाध्यत्वादेर्विशेष्यविशेषणभावव्यत्यासेन गुरुतरशक्तिषट्कापत्तेः इति शब्दशक्तिप्रकाशिकाग्रन्थानुरोधात्। वस्तुतो विशिष्टशक्तौ विशेष्यविशेषणभावे विनिगमनाविरहात् पृथगेव बलवदनिष्टाननुबन्धित्वादेः वाच्यत्वम्। विशिष्टस्य वाच्यत्वे श्येने विध्यर्थबाधेन तद्विधायकश्रुतेरप्रमाण्यप्रसङ्ग इति शक्तिभेदस्य श्येने केवलेष्टसाधनताबोधस्य चोपगम आवश्यकः इति व्युत्पत्तिवादानुसाराच्च अर्थत्रयेऽपि शक्तित्रयमित्येव प्रतीयते। तथापि पुष्पवच्छब्ददृष्टान्तस्वारस्याद् अस्माभिः एकशक्तिपरतया ग्रन्थो योजितः। यद्वा पुष्पवच्छब्ददृष्टान्तः युगपद्बोधमात्रे। व्युत्पत्तिवैचित्र्यादित्यस्य च शक्तिवैचित्र्यादित्यर्थः। कासांचिच्छक्तीनां पृथग्भूतानामपि कदाचित् इतरशक्तिजन्योपस्थिति सहकारेण शाब्दबोधजनकत्वस्वाभाव्यात् अर्थत्रये विद्यमानाः तिस्रोऽपि शक्तयः युगपदर्थत्रयबोधं प्रयोजयन्तीति कथंचिद्ग्रन्थाशयो वर्णनीय इति सुधीभिर्विभावनीयम्।

## तार्किकमते लिङर्थानामन्वयोपपादनम्

अन्वयश्चास्य योग्यताबलाद्धात्वर्थे यागादावेव, 'न कलञ्जं भक्षयेदि'त्यादौ च नञर्थे अभावे। सोऽपि न त्रितयस्यापि, कलञ्जभक्षणस्य कृतिसाध्यत्वादिष्ट-

साधनत्वाच्च। अपि तु बलवदनिष्टाननुबन्धित्वस्यैव। अत एव तस्मिन् बलवदनिष्टाननुबन्धित्वाभावो बलवदनिष्टानुबन्धिवं निषेधेन बोध्यत् इति, कारणाभावात् तत्राप्रवृत्तिः। तस्य चाऽधर्मत्वं, यागादेश्च धर्मत्वम्।

श्येनादौ च कृतिसाध्यत्वेष्टसाधनत्वयोरेवाऽन्वयः, न तु बलवदनिष्टाननुबन्धित्वस्य, प्रमाणान्तरेण तत्फलस्याभिचारस्य नरकसाधनत्वावगमेन तस्य नरकप्रयोजकत्वरूपबलवदनिष्टानुबन्धित्वात् अतस्तत्रास्तिकानामप्रवृत्तिः — इत्याहुः।

---

**अन्वयश्चास्येति।** अर्थत्रयस्यान्वयश्चेत्यर्थः। तथा च नञ्-रहितस्थले लिङर्थस्य धात्वर्थेन्वयः इति भावः। नञ्स्थले तु लिङ्वाच्यस्य नञर्थेऽभावेऽन्वय इत्याह — **न कलञ्जं भक्षयेदित्यदाविति।** **अभावे इति।** लिङर्थस्यान्वय इति शेषः। **सोऽपीति।** अन्वयोऽपीत्यर्थः। तथा च न कलञ्जं भक्षयेदित्यत्र नञर्थेऽभावे बलवदनिष्टाननुबन्धित्वमात्रस्य प्रतियोगितासंबन्धेनान्वयः। इष्टसाधनत्वकृतिसाध्यत्वयोस्तु धात्वर्थे भक्षण एवान्वयः। तथा च कलञ्जभक्षणं बलवदनिष्टानुबन्धीति ज्ञानस्यैव सत्त्वेन तदननुबन्धित्वज्ञानरूपकारणविरहात् आस्तिकानां कलञ्जभक्षणे न प्रवृत्तिरिति भावः।

**तत्राप्रवृत्तिरिति।** कलञ्जभक्षणादावप्रवृत्तिरित्यर्थः। **तस्य चेति।** कलञ्जभक्षणादेरित्यर्थः। श्येनयागादावास्तिकानां प्रवृत्त्यभावमुपपादयति — **श्येनादौ चेत्यादिना।** एवं च अर्थत्रये लिङादेः शक्तिस्वीकारेऽपि यत्र धात्वर्थे यस्यार्थस्याबाधः तस्यैव लिङा बोधः यस्य च बाधः तस्य न लिङा प्रत्यायनम्। श्येनेन यजेत इत्यत्र यागे बलवदनिष्टाननुबन्धित्वज्ञानस्य विरहात् न आस्तिकानां प्रवृत्तिरिति भावः। इदमुपलक्षणम्। पाकं कुर्यात् इत्यत्र कृतिरूपे धात्वर्थे कृतिसाध्यत्वस्य बाधात् तद्वर्जं इष्टसाधनत्वबलवदनिष्टाननुबन्धित्वयोरेव लिङा

बोधः, जलं ताडयेत् इत्यत्र च इष्टसाधनत्वस्य धात्वर्थे ताडने बाधात् तद्वर्जं कृतिसाध्यत्वबलवदनिष्टाननुबन्धित्वयोरेव लिङा प्रत्यायनमित्यपि बोध्यम्।

तन्न। शक्तित्रयकल्पने गौरवात्। बलवदनिष्टानुबन्धित्वज्ञानाभावमात्रेणेष्ट-साधनताज्ञानादिनैव प्रवृत्तेरानुभविकत्वाच्च। अतो बलदनिष्टानुबन्धित्वज्ञानं प्रवृत्ति-प्रतिबन्धकम्, तदभावश्च स्वरूपसन्नेव कारणम्। अतश्च तत्रेच्छावदेव लिङादेरनु-पयोगान्न तस्य तद्वाच्यत्वम्।

किञ्चैवं नञ्समभिव्याहृतलिङर्थबलवदनिष्टाननुबन्धित्वप्रकारकशाब्दबोधे नञ्पदजन्योपस्थितिः कारणम्। नञ्समभिन्याहृतबलवदनिष्टाननुबन्धित्वातिरिक्त-लिङर्थप्रकारकशाबादबोधे धातुपदजन्योपस्थतिः कारणम्। नञसमभिव्याहृत-लिङर्थप्रकारकशाब्दबोधे धातुपदजन्योपस्थतिः कारणम्। लिङ्-समभिव्याहृत-नञर्थप्रकारकशाब्दबोधे प्रथमान्तपदजन्योपस्थितिः कारणम्। लिङ्-समभिव्या-हृतनञर्थप्रकारकशाब्दबोधे धातुजन्योपस्थितिः कारणम्। नञसमभिव्याहृताख्या-तार्थकृतिप्रकारशाब्दबोधे प्रथमान्तपदजन्योपस्थितिः कारणम्। नञ्समभिव्याहृता-ख्यातार्थकृतिप्रकारकशाब्दबोधे नञ्पदजन्योपस्थितिः कारणमिति सप्त कार्यकारण-भावाः।

---

उक्तं तार्किकमतं दूषयति — **तन्नेति**। अगत्या गौरवं सोढव्यमित्यत्राह — **बलवदनिष्टेति**। तथा च प्रवृत्तिं प्रति बलवदनिष्टजनकत्वज्ञानं प्रतिबन्धकमिति तदभावः कारणम्। एवं च बलवदनिष्टाजनकत्वज्ञानं न कारणमिति भावः।

अथात्र बलवदनिष्टानुबन्धित्वनिश्चयस्य प्रवृत्तिप्रतिबन्धकत्वे तदभावः, तादृशानुबन्धित्वव्याप्यवत्तानिश्चयाभाव, तादृशानुबन्धितावच्छेदकतया गृहीत-

धर्मवत्तानिश्चयाभावादीनां हेतुताकल्पनापत्त्या गौरवम्। तादृशाननुबन्धित्वज्ञान-रूपस्य हेतुत्वे तु निरुक्तनिश्चयानां समवधानकाले तादृशनिश्चयात्मकप्रतिबन्धक-सत्त्वेन तादृशाननुबन्धित्वज्ञानरूपस्य हेतोरभावादेव चिकीर्षाया अनुत्पत्त्या प्रवृत्त्यभावोपपादनसंभवात् तत्र तादृशनिश्चयाभावानां हेतुत्वं न कल्पनीयमिति लाघवम्। एवं बलवदनिष्टाननुबन्धित्वनिश्चयस्य हेतुत्वे संशयनिश्चयसाधारणा-प्रामाण्यज्ञानानास्कन्दिततादृशनिश्चयत्वं कारणतावच्छेदकम्। अनुबन्धित्व-ज्ञानस्य प्रतिबन्धकत्वे तु अप्रामाण्यनिश्चयानास्कन्दिततादृशज्ञानत्वं प्रतिबन्धक-तावच्छेदकम्। संशयनिश्चयसाधारणज्ञानप्रतिबन्धकतायां अप्रामाण्यनिश्चय-स्यैवोत्तेजकत्वात्। अननुबन्धित्वनिश्चयत्वापेक्षया अनुबन्धित्वज्ञानधर्मिकाप्रामा-ण्यनिश्चयत्वं गुरुभूतमिति कारणतावच्छेदकलाघवादपि अननुबन्धित्वज्ञानस्य हेतुत्वं युक्तमिति चेत् —

सत्यम्। लाघवं हि तदा साधकं यद्यनुभवविरोधो न स्यात्। आपामरं बलवद-निष्टानुबन्धित्वज्ञानरूपप्रतिबन्धकाभावसहितात् इष्टसाधनताज्ञानात् प्रवृत्तिः अनु-भवसिद्धेति तादृशानुभवविरोधी लाघवतर्कः न बलवदनिष्टाननुबन्धित्वज्ञानस्य प्रवृत्तिहेतुत्वं साधयितुं प्रभवतीत्याशयात्। अत एव प्रवृत्तेः संभवात् इत्यनभिधाय प्रवृत्तेरानुभविकत्त्वात् इत्युक्तमिति अवधेयम्।

**तदभावश्चेति।** बलवदनिष्टाननुबन्धित्वज्ञानाभाव इत्यर्थः। **स्वरूपसन्निति।** ज्ञानाविषयः सन्नित्यर्थः। **इच्छावदेवेति।** इच्छायामिवेत्यर्थः। तस्य बलवदनिष्टा-नुबन्धित्वज्ञानाभावस्य। **तद्वाच्यत्वं** — लिङादिवाच्यत्वम्। यथा हि स्वरूपसत्त्या एव चिकीर्षायाः प्रवृत्तिहेतुत्वात् न तत्र लिङादेरुपयोगः। ज्ञायमानस्य हेतुत्वे हि ज्ञानजनने लिङादेरुपयोगः, ज्ञानस्य च विषयस्य वाच्यतामन्तरेण लिङादिना जननासंभवात् ज्ञानविषयस्य लिङादिवाच्यत्वं संभवेदिति भावः।

**किञ्चैवं बलवदनिष्टाननुबन्धित्वरूपलिङर्थस्यैव नञ्समभिव्याहारसत्त्वे तत्रान्वयः। तद्भिन्नलिङर्थस्य तु सर्वत्र धात्वर्थ एव, नञोऽसत्त्वे धात्वर्थ इति गुरुभूतानेकसमभिव्याहारज्ञानकार्यकारणभावकल्पनापत्तिः।**

**एवं घटो नास्ति, न पचति चैत्र इत्यादौ लिङादिसमभिव्याहाराभावे नञर्थस्याभावस्याश्रये प्रथमान्तपदोपस्थाप्येऽन्वयः। लिङादिसमभिव्याहारसत्त्वे तु धात्वर्थ एवंति व्युत्पत्त्यनेकत्वम्।**

**तथा आख्यातार्थस्य कृत्यादेर्नञोऽसत्त्वे आश्रयतासम्बन्धेन प्रथमान्तपदोपस्थाप्ये, तत्सत्त्वे तदर्थे प्रतियोगिताकत्वसम्बन्धेनेति गुरुभूताः कार्यकारणभावाः। 'नातिरात्रे षोडशिनं गृह्णाति' इत्येदर्थमन्योऽपि।**

---

इष्टसाधनताज्ञानादिज्ञानत्रयस्य प्रवृत्तिहेतुत्वे, नैयायिकाभिमतप्रथमान्तार्थमुख्यविशेष्यकबोधाङ्गीकारे च सप्त कार्यकारणभावाः कल्पनीयाः भवेयुरित्याह — **किं चैवमित्यादिना।**

(1) न कलञ्जं भक्षयेदित्यादिनञ्समभिव्याहृतलिङ्घटितवाक्यप्रयोगे लिङर्थान्तर्गतकृतिसाध्यत्वेष्टसाधनत्वयोः धात्वर्थे भक्षणेऽन्वयः। लिङर्थान्तर्गतबलवदनिष्टाननुबन्धित्वस्य च नञुपस्थाप्येऽभावे प्रतियोगितासंबन्धेनान्वयः। अभावस्य चाश्रयतासंबन्धेन धात्वर्थभक्षणेऽन्वयः। भक्षणस्यानुकूलतासंबन्धेनाख्यतार्थकृतौ कृतेश्च प्रथमान्तार्थेऽन्वय इति बलवदनिष्टाननुबन्धित्वाभाववत् इष्टसाधनं कृतिसाध्यं च यत् कलञ्जकर्मकं भक्षणं तदनुकूलकृतिमानित्याकारकः शाब्दबोधो नैयायिकाभिमतः। अत्र नञर्थो विशेष्यः, लिङर्थबलवदनिष्टाननुबन्धित्वं प्रकारः। तथा च विशेष्यतासंबन्धेन बलवदनिष्टाननुबन्धित्वरूपलिङर्थप्रकारकशाब्दबोधे

विशेष्यतासंबन्धेन नञ्पदजन्योपस्थितिः कारणम्। विशेष्यतासंबन्धेन उक्तबोधः अभावे जायते। तत्र विशेष्यतासंबन्धेन नञ्पदजन्योपस्थितिर्वर्तते। नञर्थस्य शाब्दबोधे उपस्थितौ च विशेष्यत्वात् इति कार्यकारणयोः एकाधिकरणवृत्तित्वम्। एवमेकः कार्यकारणभावः।

(2) नञ्समभिव्यहृतलिङ्स्थल एव न कलञ्जं भक्षयेत् इत्यादौ बलवद-निष्टाननुबन्धित्वस्य नञर्थेऽन्वयेऽपि तदरिक्तयोः लिङर्थयोः कृतिसाध्यत्वेष्ट-साधनत्वयोः धात्वर्थ एवान्वयाङ्गीकारात् तादृशवाक्यजन्यबोधे कृतिसाध्यत्वेष्ट-साधनत्वे प्रति धात्वर्थ एव विशेष्यो भवतीति तदनुरोधेन विशेष्यतासंबन्धेन नञ्समभिव्याहृतलिङर्थबलवदनिष्टाननुबन्धित्वातिरिक्ततदृशलिङर्थकृतिसाध्यत्वे-ष्टसाधनत्वोभयप्रकारकशाब्दबोधं प्रति विशेष्यतासंबन्धेन धातुजन्योपस्थितिः कारणमित्यपरः कार्यकारणभावः।

(3) एवं नञ्रहितलिङ्घटितवाक्ये यजेत स्वर्गकाम इत्यादौ लिङर्थत्रयस्यापि धात्वर्थेऽन्वयाङ्गीकारेण बलवदनिष्टाजनकः कृतिसाध्यः इष्टसाधनं च याग इति शाब्दबोधाङ्गीकारात् तादृशशाब्दबोधे च धात्वर्थो विशेष्यः लिङर्थत्रयं च प्रकारो भवतीति तदनुरोधेन विशेष्यतासंबन्धेन लिङर्थत्रयप्रकारकबोधं प्रति विशेष्यतासंबन्धेन धातुजन्योपस्थितिः कारणमित्यपरः कार्यकारणभावः।

(4) तथा नञ्सहितलिङ्भिन्नाख्यातघटितवाक्यप्रयोगे चैत्रो ग्रामं न गच्छती-त्यादौ ग्रामकर्मकगमनानुकूलकृत्यभाववांश्चैत्र इति शाब्दबोधाङ्गीकारात् तादृश-शाब्दबोधे च प्रथमान्तार्थः विशेष्यः, नञर्थश्च प्रकारो भवतीति तदनुसारेण विशेष्यतासंबन्धेन लिङसमभिव्याहृतनञर्थप्रकारकशाब्दबोधं प्रति विशेष्यता-संबन्धेन प्रथमान्तपदजन्योपस्थितिः कारणमित्यन्यः कार्यकारणभावः।

(5) तथा नञ्सहितलिङ्घटितवाक्ये न कलञ्जं भक्षयेत् इत्यादौ लिङर्थ-बलवदनिष्ठाजनकत्वप्रतियोगिकनञर्थाभावस्य धात्वर्थेऽन्वयेन कलञ्जभक्षणं बल-वदनिष्टाजनकत्वाभाववत् इति शाब्दबोधाङ्गीकारात् तत्र च धात्वर्थो विशेष्यः नञर्थश्च प्रकारो भवतीति तदनुरोधेन विशेष्यतासंबन्धेन लिङ्गमभिव्यहृतनञर्थ-प्रकारकशाब्दबोधं प्रति विशेष्यतासंबन्धेन धातुजन्योपस्थितिः कारणमित्यपरः कार्यकारणभावः।

(6) एवं नञ्रहितलिङ्भिन्नाख्यातघटितवाक्यात् चैत्रः पचतीत्यादितः पाका-नुकूलकृतिमांश्चैत्र इति आख्यातार्थकृतिप्रकारकस्य प्रथमान्तार्थचैत्रादिविशेष्य-कस्य शाब्दबोधस्य अभ्युपगमात् तदनुसारेण विशेष्यतासंबन्धेन नञसमभिव्या-हृताख्यातार्थकृतिप्रकारकशाब्दबोधं प्रति विशेष्यतासंबन्धेन प्रथमान्तपदजन्योप-स्थितिः कारणमित्यपरः।

(7) तथा नञ्समभिव्याहृताख्यातघटितात् चैत्रो न पचतीत्यादिवाक्यात् पाकानुकूलकृत्यभाववांश्चैत्र इति बोधाभ्युपगमात् तत्राख्यातार्थकृतिं प्रति नञर्थ-स्याभावस्य विशेष्यतया भानात् तदनुरोधेन विशेष्यतासंबन्धेन नञ्समभि-व्याहृताख्यातार्थकृतिप्रकारकशाब्दबोधे विशेष्यतासंबन्धेन नञ्पदजन्योपस्थितिः कारणमित्यपरः कार्यकारणभावः इत्येवं सप्त शाब्दबोधोपस्थित्योः कार्यकारण-भावाः कल्पनीया भवन्तीति गौरवमिति प्रघट्टकार्थः।

एतावता शाब्दबोधोपस्थित्योः कार्यकारणभावानन्त्यमुक्तम्। अथ शाब्दबोध-समभिव्याहाररूपाकाङ्क्षाज्ञानयोः कार्यकारणभावानन्त्यमुच्यते — **किं चैवमि-त्यादिना। व्युत्पत्त्यानन्त्यमिति।** समभिव्याहाररूपाकाङ्क्षाज्ञानकार्यकारणभावा-नन्त्यमित्यर्थः। **नातिरात्रे षोडशिनं गृह्णातीत्येतदर्थमन्योऽपि इति।** तत्र धात्वर्थस्य नञर्थेऽन्वयं स्वीकृत्य षोडशिग्रहणाभावः इष्टसाधनमिति बोधाङ्गीकारात् तदनु-

सारेण विशेष्यतासंबन्धेन धात्वर्थप्रकारकशाब्दबोधं प्रति विशेष्यतासंबन्धेन नञ्पदजन्योपस्थितिः कारणमिति कार्यकारणभावः स्वीकरणीय इति भावः।

## मीमांसकमते लाघवप्रदर्शनम्

**अस्मन्मते तु वक्ष्यमाणरीत्या विध्यर्थस्य नञोऽसत्त्वे प्रयोज्यत्वसंसर्गेण आख्यातार्थकृतौ, तत्सत्त्वे स्वप्रयोज्याभावप्रतियोगित्वसंसर्गेण, नञर्थस्य सर्वत्र प्रतियोगितासंसर्गेण, प्रथमान्तार्थस्य चाधेयत्वसंसर्गेणाख्यातार्थे कृतौ, इति चत्वारो वक्ष्यमाणरीत्या एक एव वेति लाघवम्।**

**किं च न कलञ्जं भक्षयेदित्यत्र भक्षणे बलवदनिष्टानुबन्धित्वबोधे अपीष्टसाधनत्वस्यापि विधिना बोधितत्वात्तस्य च लोकावगततृप्तिमादाय निर्वाहे वैयर्थ्यापत्तेः, भवन्मते विश्वजिन्न्यायेन स्वर्गकल्पनापत्तिः। तदधिकस्यैव नरकस्य कल्पनान्न बलवदनिष्टानुबन्धित्वविरोधः। अत एव यत्र कृतिसाध्यत्वबोधे न कथञ्चिदपि वैयर्थ्यपरिहारः, तत्र लोकसिद्धानुबादकत्वमपि नानुपपन्नम्।**

---

स्वमते गौरवाभावमुपपादयति — **अस्मन्मतेत्विति**। अयमाशयः — नञ्-रहितलिङ्स्थले यजेत स्वर्गकाम इत्यादौ लिङर्थभूतायाः प्रवर्तनायाः प्रयोज्यतासंबन्धेन आख्यातत्वावच्छिन्नार्थे कृतौ अन्वयात् नञसमभिव्याहृतलिङर्थप्रवर्तनाप्रकारकशाब्दबोधे समानविशेष्यताप्रत्यासत्त्या आख्यातजन्योपस्थितिः कारणमित्येकः, नञ्सहितलिङ्स्थले न कलञ्जं भक्षयेदित्यादौ लिङर्थनिवर्तनायाः स्वप्रयोज्याभावप्रतियोगित्वसंबन्धेन आख्यातार्थकृतावन्वयात् विशेष्यतासंबन्धेन नञ्समभिव्याहृतलिङर्थप्रकारकशाब्दबोधं प्रति विशेष्यतासंबन्धेन आख्यातजन्योपस्थितिः कारणमित्यपरः, चैत्रो न पचतीत्यादौ नञर्थाभावस्य प्रतियोगि-

तासंबन्धेन आख्यातार्थकृतावन्वयात् प्रतियोगितासंबन्धेन नञर्थप्रकारकबोधं प्रति विशेष्यतासंबन्धेन आख्यातजन्योपस्थितिः कारणमित्यपरः, तथा चैत्रः पचतीत्यादौ प्रथमान्तार्थस्य चैत्रादेः आख्यातार्थकृतौ अन्वयात् प्रथमान्तार्थप्रकारकशाब्दबोधे समानविशेष्यताप्रत्यासत्त्या आख्यातजन्योपस्थितिः कारणमित्यपर इत्येवं चत्वारः एव कार्यकारणभावाः कल्पनीया भवन्तीति लाघवमिति। **विध्यर्थस्येति**। विधिप्रत्ययलिङाद्यर्थस्येत्यर्थः। **प्रयोज्यत्वसंबन्धेनेति**। लिङ्श्रवणेन प्रवर्तनां ज्ञात्वा इष्टसाधनत्वमनुमाय प्रवर्तत इति प्रवृत्तेः प्रवर्तनाप्रयोज्यत्वादिति भावः। **स्वप्रयोज्याभावप्रतियोगित्वसंबन्धेनेति**। निवर्तनां ज्ञात्वा अनिष्टसाधनत्वमनुमाय निवर्तत इति कृत्यभावरूपायाः निवृत्तेः निवर्तनाप्रयोज्यतया निवर्तनाप्रयोज्यतादृशाभावप्रतियोगित्वात् कृतेरिति भावः। **वक्ष्यमाणरीत्या एक एव वेति**। निपातोपसर्गप्रातिपदिकातिरिक्तशब्दगम्यो यः सुबुपात्तलिङ्गसंख्याव्यतिरिक्तोऽर्थः तन्निष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबोधं प्रति आख्यातादिजन्यभावनोपस्थितिः विशेष्यतासंबन्धेन कारणमित्येक एव कार्यकारणभाव इति महल्लाघवमिति भावः।

दूषणान्तरमाह — **किं चेति**। अयमाशयः। न कलञ्जं भक्षयेत् इत्यत्र लिङ्समभिव्याहृतनञा बलवदनिष्टाननुबन्धित्वाभावस्य बलवदनिष्टजनकत्वरूपस्य धात्वर्थे भक्षणे बोधेऽपि लिङर्थस्य इष्टसाधनत्वस्य साक्षात् धात्वर्थे भक्षणेऽन्वयः भवता स्वीकृतः। तत्र कीदृशमिष्टसाधनत्वं बोध्यते इति विमर्शनीयम्। न तावत् लोकप्रसिद्धं कलञ्जभक्षणे तृप्तिरूपेष्टसाधनत्वं बोध्यत इति वक्तुं शक्यते। अप्राप्ते शास्त्रमर्थवदिति न्यायेन भक्षणगतस्य तृप्तिसाधनत्वस्य लोकत एवावगतस्य शास्त्रेण बोधने शास्त्रवैयर्थ्यापत्तेः। अतः विश्वजिन्न्यायेन स्वर्गरूपेष्टसाधनत्वमेव शास्त्रावैयर्थ्याय बोधनीयं स्यात्। न चैकस्यैव कलञ्जभक्षणस्य स्वर्गसाधनत्वं

नरकरूपानिष्टसाधनत्वं च विरुद्धं कथं प्रत्याययितुं शक्यमिति वाच्यम्। स्वर्गसाधनत्वं स्वर्गाधिकनरकसाधनत्वं च बोध्यत इति उक्तौ विरोधाभावात्। तथा च भवन्मते कलञ्जभक्षणस्य स्वर्गसाधनत्वापत्तिर्दोषः इति। तस्य चेति। इषटसाधनत्वस्य चेत्यर्थः। **वैयर्थ्यापत्तेरिति।** न कलञ्जमिति शास्त्रवैयर्थ्या-पत्तेरित्यर्थः। अप्राप्ते शास्त्रमर्थवदिति न्यायादिति भावः। **विश्वजिन्न्यायेनेति।** काम्यप्रकरणे विश्वजिता यजेत इति विधिः श्रूयते। तत्र प्रवृत्त्यर्थं किंचित्फलं कल्पनीयम्, श्रुतौ फलाश्रवणात्। तत्र फलं स्वर्ग एव। तस्यैव सर्वाभिलषितत्वात् इति आशयेन "स स्वर्गः स्यात् सर्वान् प्रत्यविशिष्टत्वात्" इति जैमिनिना सूत्रं प्रणीतम्। तथा च यत्र विधौ फलविशेषो न श्रूयते तत्र स्वर्गः फलं कल्पनीयमिति विश्वजिन्न्यायः। **तदधिकस्यैवेति।** स्वर्गादधिकस्येत्यर्थः। ननु न कलञ्जं भक्षयेत् इत्यादिस्थले लिङा कृतिसाध्यत्वं बोधनीयम्। तन्न युक्तम्। भक्षणस्य क्रिया-रूपस्य कृतिसाध्यतायाः लोकत एव अवगतत्वेन शास्त्रवैयर्थ्यापत्तेः इष्टसाध-नत्वविषये यथा हि लोकानवगतं स्वर्गरूपेष्टसाधनत्वं बोध्यते इति वैयर्थ्यपरिहारः कृतः। न तथा अत्र परिहारमार्गो दृश्यते इति तत्राह — **अत एवेति। लोक-सिद्धानुवादकत्वमिति।** लोकसिद्धस्यैव कृतिसाध्यत्वस्य शास्त्रेण प्रत्यायनात् तदंशे शास्त्रमनुवादकमेवेति भावः।

**किञ्च यदि त्रितयमपि लिङर्थः, तदा श्येने बलवदनिष्टाननुबन्धित्वस्य कुतो न बोधः, बाधादिति चेत्। कोऽयं बाधो नाम, श्येनफलस्याभिचारस्य हिंसात्वेन न हिंस्यादिति निषेधविषयत्वमेव बाधकमिति चेत्, तस्य सामान्यशास्त्रत्वेन राग-प्राप्तहिंसोपजीवनेनापि चरितार्थतया यागीयपशुहिंसायामिव, श्येने बलवदनिष्टा-ननुबन्धित्वस्य विशिष्टविधिप्रमितत्वेन तन्निर्वाहार्थं श्येनेऽप्यप्रवृत्तेः। कथञ्चित् प्रवृत्तावप्यभिचारजन्यनरकस्याधिकत्वकल्पनेनोभयोपपत्तेश्च।**

ननु न कलञ्जं भक्षयेत् इत्यादौ कलञ्जभक्षणं बलवदनिष्टाननुबन्धित्वाभाववत् इत्येव बोधः। इष्टसाधनत्वकृतिसाध्यत्वयोश्च नैव भक्षणेऽन्वयबोधः। तदुक्तं विश्वनाथपञ्चाननेन — तत्र बाधात् इष्टसाधनत्वं कृतिसाध्यत्वं च न विध्यर्थः। किं तु बलवदनिष्टाननुबन्धित्वमात्रं तदभावश्च नञा बोध्यते इति। अपि च इष्टसाधनत्वस्य बोधोपगमेऽपि न निरुक्तदूषणमवकाशं लभते। तथा हि तत्रैव विश्वजिन्न्यायः प्रवर्तते यत्र वाक्यं प्रवर्तकम्, फलं च न श्रुतम्। तत्र हि इष्टसाधनताज्ञानं विना प्रवृत्तेः अनुपपत्तेः प्रवर्तकत्वनिर्वाहाय सर्वाभिलषितः स्वर्गः फलं कल्प्यते। न चेदं न कलञ्जमिति वाक्यं कलञ्जभक्षणे प्रवर्तकमिति कश्चिदभ्युपैति इत्यादिकं मनसिकृत्य दूषणान्तरमाह — **किं च यदीति। उभयोपपत्तेश्चेति।** श्येनेन यजेत इति विधिप्रमितबलवदनिष्टाननुबन्धित्वस्य न हिंस्यात् इति निषेधप्रमितानिष्टसाधनत्वस्य चोभयस्याप्युपपत्तेरिति भावः।

## बलवदनिष्टाननुबन्धित्वस्वरूपविचारः

**किञ्च बलवदनिष्टाननुबन्धित्वं न तावदिष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वम्, विधितस्तज्ज्ञानसत्त्वेऽपि स्वद्रव्यव्ययद्वेषवतोऽलसस्य च यागादौ प्रवृत्त्यदर्शनेन तज्ज्ञानस्य प्रवृत्तिं प्रत्यकारणत्वात्।**

**इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखजनकत्वस्य निषेधशास्त्रतः कलञ्जभक्षणादौ ज्ञानेऽपि रागिणः प्रवृत्तिदर्शनेन तज्ज्ञानस्य न प्रवृत्तिप्रतिबन्धकत्वमपि। अतोऽनिष्टे बलवत्त्वम् — उत्कटद्वेषविषयत्वम्, औत्कट्यञ्च जातिविशेषः फलैकोन्नेयः। तादृशद्वेषश्च प्राचीनकर्मानुरोधेन। अतश्च यागादिजन्येपि दुःखे यदा प्राचीन-कर्मवशादुत्कटो द्वेषः, तदा तस्य बलवदनिष्टानुबन्धित्वज्ञानस्य सत्त्वात् तत्रा-**

**प्रवृत्तिः, यदा तु शुभकर्मवशात् नोत्कटो द्वेषः, तदा तस्य बलवदनिष्टानुबन्धित्वज्ञानाभावसत्त्वात् प्रतिबन्धकाभावेन तत्र प्रवृत्तिः।**

**एवं कलञ्जभक्षणादौ श्येने च प्राचीनकर्मवशेनैव प्रवृत्त्यप्रवृत्ती कादाचित्के उपपादनीये। अतश्च यागादौ नैयत्येन बलवदनिष्टाननुबन्धित्वस्य विधिना बोधयितुमशक्यत्वात्कलञ्जभक्षणादौ च नैयत्येन तदभावस्य नञा बोधयितुम् अशक्यत्वाच्च न तत्र लिङादेश्शक्तिः।**

---

एवं कार्यकारणभावे गौरवात् बलवदनिष्टाननुबन्धित्वज्ञानस्य प्रवृत्तिहेतुत्वं निराकृत्य अथ बलवदनिष्टाननुबन्धित्वशब्दार्थशोधनपूर्वकं तज्ज्ञानस्य प्रवृत्तिहेतुत्वं निराकरोति — **किं चेत्यादिना**। अयमत्र प्रघट्टकभावः। किं नाम बलवदनिष्टाननुबन्धित्वम्। यदि यादृशं दुःखं विना इष्टं नोत्पद्यते तादृशदुःखादधिकं यद्दुःखं तदजनकत्वं तत्, तदा यस्य पुरुषस्य यजेत स्वर्गकामः इति विधिश्रवणेन यागः इष्टोत्पत्त्यविनाभूतदुःखाधिकदुःखाजनकः इति ज्ञानं वर्तते परं तु आलस्यं स्वकीयद्रव्यव्ययेच्छाया अभावश्च वर्तते तस्य पुरुषस्य यागे प्रवृत्त्यनुदयेन कारणसत्त्वेऽपि कार्यानुत्पत्त्या अन्वयव्यभिचारात् नोक्तज्ञानस्य प्रवृत्तिं प्रति कारणत्वम्। तथा बलवदनिष्टानुबन्धित्वज्ञानं प्रतिबन्धकं तदभावः कारणमिति पक्षोऽप्यसंगतः। न कलञ्जं भक्षयेत् इति निषेधशास्त्रात् कलञ्जभक्षणं इष्टोत्पत्त्यविनाभूतदुःखाधिकनरकरूपदुःखजनकमिति ज्ञानसद्भावेऽपि रागवशात् कलञ्जभक्षणे प्रवृत्त्युदयेन तज्ज्ञानस्य प्रतिबन्धकत्वासंभवात्, यत्सत्त्वे कार्यं नोत्पद्यते तस्यैव प्रतिबन्धकत्वात्। अतः उत्कटद्वेषविषयफलजनकत्वमेव बलवदनिष्टानुबन्धित्वम्। द्वेषे उत्कटत्वं च प्रवृत्तितदभावरूपफलानुमेयः जातिविशेषः। द्वेषश्च फले प्राक्तनकर्माधीनः। यस्य पुरुषस्य यदा प्राचीनपापकार्यवशात्

यागजन्ये तात्कालिके दुःखे द्वेषः तस्य पुंसः बलवद्द्वेषविषयदुःखजनको याग इति ज्ञानस्यैव तदा सत्त्वेन तदभावरूपकारणाभावात् स यागे न प्रवर्तते। तस्यैव च प्राचीनपुण्यवशात् यागजन्ये दुःखे यदा न बलवान् द्वेषः तदा तस्य बलवद्द्वेषविषयदुःखजनको याग इति ज्ञानाभावात् यागे प्रवृत्तिर्भवति। एवं च विहिते निषिद्धे वा कर्मणि बलवदनिष्टजनकत्वज्ञानं वा बलवदनिष्टाजनकत्वज्ञानं वा नियमतः कस्यापि न भवति, अपि तु प्राचीनकर्मवशात् कदाचिदेव भवतीति यत् येन शब्देन नियमतो बोध्यते तस्यैव तादृशशब्दार्थत्वमिति नियमतोऽबुध्यमानस्य बलवदनिष्टाजनकत्वस्य न लिङर्थत्वं संभवतीति।

**इष्टोत्पत्तिनान्तरीयकेति।** इष्टफलोत्पत्त्यविनाभूतेत्यर्थः। **विधितस्तज्ज्ञानसत्त्वेऽपि।** यजेत स्वर्गकाम इति विधिप्रयुक्तस्य इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वज्ञानस्य सद्भावेऽपीत्यर्थः। **अकारणत्वादिति।** अन्वयव्यभिचारादिति भावः। **उपपादनीयेति।** कलञ्जभक्षणजन्ये नरके यदा पापवशात् न द्वेषः तदा बलवद्द्वेषविषयजनकं कलञ्जभक्षणमिति ज्ञानस्याभावात् प्रवृत्तिर्भवति। यदा च द्वेषः तदा तादृशज्ञानस्यैव सत्त्वेन प्रतिबन्धकसद्भावान्न प्रवृत्तिरिति रीत्येति शेषः।

## तस्य विध्यर्थत्वानभ्युपगमेऽनिष्टापादनतन्निरासौ

**यत्तु बलवदनिष्टाननुबन्धित्वस्य विध्यर्थत्वाभावे 'तृप्तिकामः कलञ्जं भक्षयेदि'ति लौकिकवाक्यस्य प्रामाण्यापत्तिः, बलवदनिष्टाननुबन्धित्वातिरिक्तेष्टसाधनत्वादिरूपविध्यर्थस्य तत्राबाधात्। अस्मन्मते तु बलवदनिष्टानुबन्धित्वस्य तत्र श्रुतिबोधितत्वादप्रमाण्योपपत्तिः — इति।**

**तन्न। बलवदनिष्टाननुबन्धित्वातिरिक्तेष्टसाधनत्वादिविध्यर्थवादिनाम्मते तदापत्तावपि, प्रवर्तनाविध्यर्थवादिमते तदनापत्तेः। तथाहि — नञोऽसत्त्वे वक्ष्यमाणा**

प्रवर्तना प्रयोज्यत्वसंसर्गेणाख्यातार्थे कृतावन्वेतीति वक्ष्यते, तच्च प्रयोज्यत्वं स्वविषयकज्ञानजन्यानुमितिप्रयोज्यत्वमिति च, तद्यत्र प्रमाणान्तरेण यागादाविष्ट-साधनता न बुध्यते, तत्रेष्टसाधनत्वस्यैव प्रवर्त्तनाज्ञानादनुमितिः। यत्र तु तत् प्रमाणान्तरेणावगतम्, निषेधेन च तस्यानिष्टसाधनत्वमपि। यथा दीक्षितान्न-भोजनस्य 'न दीक्षितस्यान्नमश्नीयाद्' इति निषेधात्, तत्र 'हुतायां वपायां दीक्षितस्य अन्नमश्नीयादिति पुनर्विधिरनिष्टसाधनत्वाभावस्यैवाक्षेपकः, न त्विष्टसाधनत्वस्य, तस्य प्रमाणान्तरसिद्धत्वेन सिषाधयिषाभावेनानुमित्यनुत्पत्तेः। अनिष्टसाधनत्वा-भावज्ञानस्यापि स्वविषयविशेष्यकानिष्टसाधनत्वज्ञाने अप्रामाण्यनिश्चायकतया प्रवृत्तौ उपयोगः। प्रवृत्तौ ह्यप्रामाण्यज्ञानानास्कन्दितानिष्टसाधनताज्ञानमेव द्वेषबल-वत्तादशायां प्रतिबन्धकम्। अतश्च तेनाप्रामाण्यनिश्चये विशिष्टाभावसम्पादकतया तस्य प्रवृत्तावुयोगस्सुलभ एय। अतश्च निषेधविषयविषयकेन विधिनाभ्यनुज्ञाविधि-रूपेण स्वविषयेऽनिष्टसाधनत्वाभावस्यैवाक्षेपात्, तस्य च लौकिकवाक्ये प्रत्यक्ष-श्रुतिविरोधेन बाधितत्वादप्रामाण्योपपत्तिः, अतो न तावद् बलवदनिष्टाननुबन्धित्वं लिङर्थः।

---

यत्त्विति। तथा च तृप्तिकामः कलञ्जं भक्षयेत् इति लौकिकवाक्यस्य प्रामाण्यं प्रसज्येत यदि बलवदनिष्टाननुबन्धित्वं न विध्यर्थः स्यात्। कलञ्जभक्षणे तृप्तिरूपेष्टसाधनत्वकृतिसाध्यत्वयोः अबाधात्। बलवदनिष्टाननुबन्धित्वस्यापि विध्यर्थत्वे तु न कलञ्जं भक्षयेत् इति श्रुत्या कलञ्जभक्षणस्य बलवदनिष्टा-नुबन्धितायाः बोधितत्वेन बलवदनिष्टाननुबन्धित्वस्य बाधितत्वेन बाधिततदर्थ-बोधकतया तृप्तिकामः कलञ्जं भक्षयेत् इति वाक्यस्य अप्रामाण्यमुपपद्यते इति भावः। श्रुतिबोधितत्वादिति। न कलञ्जं भक्षयेत् इति श्रुतिबोधितत्वादित्यर्थः।

तन्नेत्यादि। अयमत्र प्रघट्टकाशयः — लिङर्थः प्रवर्तना सा च प्रयोज्यतासंवन्धेन आख्यातार्थप्रवृत्तावन्वेति। प्रवृत्तेः प्रवर्तनाप्रयोज्यत्वं च प्रवर्तनाज्ञानजन्यानुमितिप्रयोज्यत्वम्। प्रवर्तना चायमत्र प्रवर्तताम् इत्याकारकेच्छाविशेषः। तथा च यजेत इत्यादौ लिङ्श्रवणानन्तरं प्रवर्तनां ज्ञात्वा यागः इष्टसाधनमित्यनुमाय ततः प्रवर्तत इति सामान्यतः स्थितिः। यत्र पुनः धात्वर्थस्येष्टसाधनत्वं प्रमाणान्तरेणावगतम्। निषेधेन च तस्यानिष्टसाधनत्वमपि ज्ञायते। अथ च पुनर्विधिरभ्यनुज्ञारूपः श्रूयते तत्र विधिना निषेधप्रमितं यदनिष्टसाधनत्वं तदभाव एवानुमीयते। यथा दीक्षितान्नभोजनं तृप्तिरूपेष्टसाधनमिति लोकत एवावगतम्। न दीक्षितस्यान्नमश्नीयम् इति निषेधेन च दीक्षितान्नभोजनस्यानिष्टसाधनत्वमवगम्यते। पुनश्च हुतायां वपायां दीक्षितस्यान्नमश्नीयात् इति विधिः वपाहोमोत्तरकालिकं दीक्षितान्नभोजनं नानिष्टसाधनमित्येवानुमितिं जनयति। न तृप्तिरूपेष्टसाधनत्वानुमितिम्। तादृशेष्टसाधनत्वस्य लोकसिद्धत्वेन सिद्धिरूपप्रतिबन्धकसत्त्वेनानुमित्यनुपपत्तेः। सा च अनिष्टसाधनत्वाभावानुमितिः न दीक्षितस्य अन्नमश्नीयात् इति निषेधशास्त्रजनिते दीक्षितान्नभोजनमनिष्टसाधनमिति ज्ञानेऽप्रामाण्यनिश्चयं जनयति। तथा च अप्रामाण्यनिश्चयविशिष्टस्यैव अनिष्टसाधनताज्ञानस्य सत्त्वेन अप्रामाण्यनिश्चयाभावविशिष्टानिष्टसाधनताज्ञानस्यैव च प्रवृत्तिप्रतिबन्धकत्वात्तादृशप्रतिबन्धकाभावात् प्रवृत्तिर्भवति। वपाहोमोत्तराभ्यनुज्ञाविधिः तत्र अनिष्टसाधनत्वाभावानुमितिं जनयति। तस्याश्च निषेधजनितानिष्टसाधनताज्ञानरूपे प्रतिबन्धके अप्रामाण्यनिश्चयरूपोत्तेजकजननद्वारा प्रवृत्तौ उपयोग इति फलितम्। तथा च तृप्तिकामः कलञ्जं भक्षयेत् इति विधिश्च न कलञ्जमिति निषेधोत्तरकालिकतया अभ्यनुज्ञारूपो वक्तव्यः। तेन च कलञ्जभक्षणे अनिष्टसाधनत्वाभावानुमितिः भवति इति वक्तव्यम्। तथा तु वक्तुं न शक्यम्। तृप्तिकामः इति

वाक्यस्य लौकिकत्वेन तेन न कलञ्जमिति श्रुतिबोधितानिष्टसाधनत्वविरुद्धतद-भावाक्षेपासंभवात्। तथा चानिष्टसाधनत्वाभावानुमितिद्वारा प्रवर्तनाप्रयोज्यत्वस्य प्रवृत्तौ बाधात् बाधितार्थकत्वेन तृप्तिकामः इति वाक्यस्याप्रामाण्यनिर्वाहात् न तदर्थं बलवदनिष्टाननुबन्धित्वस्य विध्यर्थत्वं स्वीकरणीयमिति। **स्वविषयकज्ञान-जन्यानुमितिप्रयोज्यत्वमपीति।** वक्ष्यत इत्यनुषज्यते। इत्यपि वक्ष्यत इत्यर्थः।

**न बुध्यत इति।** प्रमाणान्तरेणेष्टसाधनताबुद्धौ तु सिद्धिरूपप्रतिबन्धक-सत्त्वान्नानुमितिः स्यादिति भावः। **यत्र तु तदिति।** यागादाविष्टसाधनत्वमित्यर्थः। **निषेधेन च तस्येति।** यागादेरित्यर्थः। **सिषाधयिषाभावे इति।** सिषाधयिषाविरह-विशिष्टसिद्धेरनुमितिप्रतिबन्धकत्वादिति भावः। **स्वविषयेति।** स्वं — दीक्षितान्न-भोजनमनिष्टसाधनत्वाभाववत् इत्याकारकं ज्ञानम्। तद्विषयः तद्विशेष्यभूतं दीक्षितान्नभोजनम्, तद्विशेष्यकं यत् अनिष्टसाधनताप्रकारकं ज्ञानं दीक्षितान्न-भोजनमनिष्टसाधनमित्याकारकं तस्मिन् ज्ञाने इत्यर्थः। न दीक्षितस्यान्नमश्नीयात् इति निषेधजनिते इति शेषः। **विशिष्टाभावसंपादकतयेति।** अप्रामाण्यनिश्चया-भावरूपविशेषणाभावप्रयुक्तस्य अप्रामाण्यनिश्चयाभावविशिष्टानिष्टसाधनत्वज्ञाना-भावस्य संपादकतयेत्यर्थः। **तस्येति।** अनिष्टसाधनत्वाभावज्ञानस्येत्यर्थः। **आक्षे-पात्** अनुमानोत्पादनात्। **तस्य चेति।** अनिष्टसाधनत्वाभावस्येत्यर्थः। **लौकिक-वाक्य इति।** तृप्तिकामः कलञ्जं भक्षयेत् इत्यादिवाक्य इत्यर्थः। **प्रत्यक्षश्रुति-विरोधेनेति।** न कलञ्जं भक्षयेत् इत्यादिश्रुतिविरोधेनेत्यर्थः।

## कृतिसाध्यत्वस्य लिङर्थत्वनिराकरणम्

**नापि कृतिसाध्यत्वम्, तस्य भवन्मते पाकानुकूलत्वस्य कृतौ भाने समान-संवित्संवेद्यतया पाकेऽपि कृतिसाध्यत्वस्य भानोपपत्तेरन्यलभ्यतया लिङादिवाच्य-**

त्वानुपपत्तेः। अस्मन्मतेऽपि प्रवर्तनाक्षेपादेवेष्टसाधनत्वादिवद्भानोपपत्तेरन्यलभ्यत्वम्। अतः परिशेषादिष्टसाधनत्वमेव लिङाद्यर्थ इति वक्तव्यम्।

---

बलवदनिष्टाननुबन्धित्वस्य विध्यर्थत्वं निराकृत्य कृतिसाध्यत्वस्य विध्यर्थत्वं निराकरोति — **नापि कृतिसाध्यत्वमिति। भवन्मत इत्यादि।** नैयायिकमते पचेत् इत्यादौ धात्वर्थपाकादेः अनुकूलतासंबन्धेन आख्यातार्थकृतावन्वयेन पाकानुकूला कृतिरित्याकारकः शाब्दबोधः संमतः। तत्र च तुल्यवित्तिवेद्यतया कृतिसाध्यत्वमपि पाके भासत इति न लिङर्थत्वं कृतिसाध्यत्वस्य, अन्यलभ्यत्वात् अनन्यलभ्यः शब्दार्थ इति न्यायादिति भावः। **समानसंवित्संवेद्यतयेति।** यस्मिन् ज्ञाने पाकजनकत्वं कृतौ भासते तस्मिन्नेव ज्ञाने कृतिजन्यत्वस्य पाके भानादित्यर्थः। **अन्यलभ्यतयेति।** कृतेराख्यातेन साध्यत्वस्य च संसर्गमर्यादारूपाकाङ्क्षया लाभेन कृतिसाध्यत्वस्य बोधनिर्वाहात् न लिङर्थत्वं इति भावः।

## इष्टसाधनत्वं लिङर्थ इति मतखण्डनम्

**इष्यते च कैश्चिदाधुनिकैरिदमेव। नञ्समभिव्याहारस्थले त्वनिष्टसाधनतायां लिङो लक्षणा, अतो लिङादेरिष्टसाधनत्वमेवार्थः इति।**

**तदपि न। तथात्वे इष्टसाधनत्वज्ञानादेव प्रवृत्तेः 'आचार्यप्रेरितोऽहं गामानयामि' इत्यादावाचार्यादेः प्रवर्तकत्वव्यवहारानुपपत्तेः। न च प्रवृत्तिजनकेष्टसाधनताबोधकलिङुच्चारयितृत्वात् तस्य प्रवर्तकत्वव्यवहारः। तथात्वे राजप्रेरितपदातेस्तादृलिङुच्चारयितृत्वेन प्रवर्तकत्वाभावव्यवहारानुपपत्तेः।**

---

अथेष्टसाधनत्वस्य लिङर्थत्वं निरसितुमनुवदति — अतः परिशेषादित्यादिना। **तथात्व इत्यादि।** यदि हि इष्टसाधनताज्ञानं प्रवृत्तिहेतुः स्यात् तदा इष्टसाधनताज्ञानप्रेरितोऽहं गामानयामीत्येव व्यवहारः स्यात्, न तु आचार्यप्रेरितोऽहं गामानयामीति। आचार्यप्रेरित इत्यस्य हि आचार्याधीनप्रवृत्तिमानित्यर्थः। न हि प्रवृत्तिराचार्याधीना अपि तु इष्टसाधनताज्ञानाधीना इति इष्टसाधनताज्ञानप्रेरित इत्येव व्यवहारः स्यात् इति भावः। ननु आचार्यस्य साक्षात् प्रवृत्तिजनकत्त्वाभावेऽपि प्रवृत्तिजनकं यत् इष्टसाधनताज्ञानं तज्जनकलिङुच्चरयितृत्वात् प्रवर्तकत्वं भवति। तथा च आचार्यप्रेरित इत्यस्य आचार्योच्चारितलिङ्गन्येष्टसाधनताज्ञानजन्यप्रवृत्तिमान् इत्यर्थः। तस्य चाबाधितत्वात् आचार्यप्रेरितोऽहं गामानयामीति व्यवहारः उपपद्यत इत्याशयेन शङ्कते — **न चेति। तस्येति।** आचार्यस्येत्यर्थः। उक्तशङ्कायां समाधत्ते — **तथात्व इति।** प्रवृत्तिजनकेष्टसाधनताज्ञानजनकलिङुच्चारयितृत्वेन आचार्यस्य प्रवर्तकत्वे इत्यर्थः। **राजप्रेरतेत्यादि।** राजा तावत् पदातिं कथयति त्वं चैत्रमुखेन गामानयेति। तच्छ्रुत्वा च पदातिः चैत्रं वदति त्वं गामानयेति। तत् श्रुत्वा गामानयन् चैत्रो वदति पदातिप्रेरितोऽहं न गामानयामि अपि तु राजप्रेरित इति। अत्र च पदातेः प्रवर्तकत्वाभावः प्रतीयते। स न स्यात्। वस्तुतः पदातेः लिङुच्चारयितृत्वेन प्रवर्तकत्वस्यैव सद्भावात् इति भावः।

**अथ अन्याप्रेरितत्वे सति तादृशलिङुच्चारयितृत्वं प्रवर्तकत्वम्, तथात्वे पितृप्रेरिते राज्ञि प्रवर्तकत्वानापत्तेः। अतश्च एतादृशव्यवहारबलात् प्रवृत्तिकारणीभूतज्ञानविषयीभूतेच्छाश्रयत्वेनैव राजादेः प्रवर्तकत्वं वाच्यम्। न चेच्छाया लिङादिवाच्यत्वाभावेऽपि ज्ञानं सम्भवति, विषयविशेषस्येष्टसाधनत्वेऽपि परेच्छाविषयत्वाभावेन व्यभिचारादिष्टसाधनत्वस्यानुमापकत्वानुपपत्तेः। अतः परिशेषाल्लिङादि-**

वाच्यैव सा, तथा च प्रवृत्तिविषये यागादाविष्टसाधनत्वादेरनुमानेनैव बोधोपपत्तेर्न पुनर्वाच्यत्वकल्पनावसरः। भवति हि 'अयमत्र प्रवर्ततामित्याकारकाप्तेच्छाविषयत्वमिष्टसाधनत्वव्याप्तम्, अतस्तेन तदनुमानम्'।

---

ननु अन्याप्रेरितत्वे सति प्रवृत्तिजनकेष्टसाधनताज्ञानजनकलिङुच्चारयितृत्वमेव प्रवर्तकत्वम्। राजप्रेरितस्यैव पदातेः तादृशलिङुच्चारयितृत्वेन अन्याप्रेरितत्वस्य पदातावभावेन प्रवर्तकत्वाभाव उपपद्यत इत्याशयेन शङ्कते — **अथेति**। समाधत्ते — **तथात्व इति**। अन्याप्रेरितत्वे सति तादृशलिङुच्चारयितृत्वस्य प्रवर्तकत्वे इत्यर्थः। **पितृप्रेरिते राज्ञीति**। पित्रा प्रेरितः राजा यदा चैत्रं प्रवर्तयति तदा चैत्रः राजप्रेरितोऽहं गामानयामि इति व्यवहरति। अनेन च राज्ञः प्रवर्तकत्वं लभ्यते। तन्न स्यात्। राज्ञः पितृप्रेरितत्वेन अन्याप्रेरितत्वाभावादिति भावः। **प्रवर्तकत्वानापत्तेरिति**। प्रवर्तकत्वानुपपत्तेरित्यर्थः। **अतश्चेति**। क्वचित्प्रवर्तकत्वव्यवहारबलात् क्वचित्प्रवर्तकत्वाभावव्यवहारबलाच्चेत्यर्थः। तथा च प्रवृत्तिकारणीभूतज्ञानविषयीभूतेच्छाश्रयत्वमेव प्रवर्तकत्वम्। प्रवर्तकपुरुषगतां गवानयनेच्छां गामानय इति तदुच्चारितवाक्यात् ज्ञात्वा गवानयने प्रवर्तते। अतः प्रवृत्तिं प्रति कारणं इच्छाज्ञानं तद्विषयीभूता या इच्छा तदाश्रयस्य प्रवर्तकत्वमिति भावः। ततश्च प्रवृत्तिकारणीभूतस्य प्रवर्तकेच्छाज्ञानस्य लिङ्श्रवणानन्तरं जायमानस्य इच्छायाः लिङ्वाच्यतां विना अनुपपत्त्या प्रवर्तकपुरुषगतेच्छैव लिङर्थः। अत एव विधिर्वक्तुरभिप्रायः इत्युदयनाचार्यैरप्युक्तमिति भावः। ननु गवानयनं आचार्येच्छाविषयः मदिष्टसाधनत्वात् इत्यनुमानेन प्रवर्तकेच्छायाः ज्ञातुं शक्यतया अन्यलभ्यत्वेन तस्याः न विध्यर्थत्वं संभवतीत्याशङ्क्याह — **विषयविशेषस्येति**। नाट्यदर्शनादिरूपः विषयविशेषः शिष्यस्य सुखरूपेष्टसाधनं भवति। परं तु आचार्यः अयं नाट्यं पश्यतु इति नेच्छति। तत्र आचार्येच्छाविषयत्वरूपसाध्या-

भाववति नाट्यदर्शने इष्टसाधनत्वरूपहेतुसत्त्वेन व्यभिचारात् इष्टसाधनत्वस्य न परेच्छानुमापकत्वं संभवतीति अनुमानरूपान्यलभ्यत्वाभावात् इच्छायाःलिङर्थ-त्वमावश्यकमिति भावः। ननु भवतु इच्छायाः लिङ्वाच्यत्वम्। भवतु च तदाश्रयतया आचार्यादेः प्रवर्तकत्वम्। तावता इष्टसाधनत्वं न लिङर्थ इति कथं सिध्यतीत्यत्राह — **तथा चेति**। लिङा ज्ञातया इच्छया इष्टसाधनत्वस्यानुमानात् अनुमानरूपान्यलभ्यस्य इष्टसाधनत्वस्य न विध्यर्थत्वमिति भावः। अनुमान-प्रकारमाह — **भवति हीति**। यत्र यत्र अयमत्र प्रवर्ततामित्याकारकाप्तेच्छाविषयत्वं तत्र सर्वत्र इष्टसाधनत्वं वर्तते। न हि आप्तः अनिष्टसाधने कर्मणि अयमत्र प्रवर्ततामिति इच्छति। तथा चायमत्र प्रवर्ततामित्याकारकेच्छाविषयत्वे इष्टसाधन-त्वव्याप्तिसद्भावात् व्याप्येन तेन इच्छाविषयत्वेन इष्टसाधनत्वमनुमीयते। यागः इष्टसाधनं अयं यागे प्रवर्ततामित्याकारकाप्तेच्छाविषयत्वात् इति चानुमानप्रयोगः।

## हेतुघटकदलानां प्रयोजनकथनम्

**अत्रासुखे सुखत्वभ्रमेण सुख एव वा सुखं मे जायतामितीच्छाविषयत्व-सत्त्वेऽपीष्टसाधनत्वाभावात्तत्र व्यभिचारवारणाय हेतावाकारकपर्यन्तानुधावनम्। प्रतारकतादृशेच्छाविषये व्यभिचारवारणाय आप्तेति। अत्र चेच्छाविषयत्वमिच्छा-विषयीभूतप्रवृत्तिविषयत्वं बोध्यम्। तेन प्रवृत्तौ, तदाश्रये पुरुषे वा इच्छाविषये इष्टसाधनत्वाभावेऽपि न व्यभिचारः। यागादावेव च हेतुसत्त्वादिष्टसाधनत्वानु-मानम्।**

---

इच्छाविषयत्वमात्रस्य हेतुत्वे यस्य असुखे सुखत्वभ्रमेण सुखं मे जायता-मितीच्छा सुख एव वा सुखं जायतामितीच्छा तादृशेच्छाविषयत्वस्य सुखदुःखयोः सत्त्वेन तयोश्च इष्टसाधनत्वरूपसाध्याभावात् व्यभिचारः स्यादिति तद्वारणाय

इच्छायां अयमत्र प्रवर्ततामित्याकारकेति विशेषणमुपात्तमित्याह — **अत्रासुख इत्यादि**। हेतौ आप्तपदप्रयोजनमाह — **प्रतारकेति**। यत्र वस्तुतः अनिष्टसाधन एव कर्मणि वञ्चकः कश्चित् अयमत्र प्रवर्ततामितीच्छया इदं कुरु इति वदति तत्र तादृशकर्मणि तादृशेच्छाविषयत्वरूपहेतुसत्त्वात् इष्टसाधनत्वरुपसाध्याभावाच्च व्यभिचारः स्यादिति तद्वारणाय आप्तेच्छाविषयत्वं हेतूकृतम्। वञ्चकः नाप्त इति तदीयेच्छाविषयस्य कर्मणः आप्तेच्छाविषयत्वं नास्तीति न व्यभिचार इति भावः। ननु अयमत्र प्रवर्ततामित्याकारकेच्छायां अयंपदार्थः पुरुषः अत्रपदार्थः क्रिया (यागादिः) प्रपूर्वकवृतधात्वर्थः प्रवृत्तिश्चेत्येतत्त्रितयं विषयः। तथा च तादृशेच्छा-विषयत्वस्य पुरुषे प्रवृत्तौ च सत्त्वात् तत्र च इष्टसाधनत्वरूपसाध्याभावाद्व्यभिचारः स्यादित्यत्राह — **अत्र चेच्छाविषयत्वमिति**। अयमत्र प्रवर्ततामित्याकारकेच्छा-विषयीभूता या प्रवृत्तिः तद्विषयत्वं हेतुः। पुरुषे प्रवृत्तौ च तादृशेच्छाविषयत्व-सत्त्वेऽपि इच्छाविषयीभूतप्रवृत्तिविषयत्वविरहान्न व्यभिचार इति भावः। यागादौ च तादृशेच्छाविषयीभूतप्रवृत्तिविषयत्वसद्भावात् तेन हेतुना इष्टसाधनत्वमनु-मीयते। तथा चेष्टसाधनत्वस्यानुमानेन लाभात् अन्यलभ्यतया न लिङर्थत्वं युज्यत इति भावः।

अत्राहुः व्युत्पत्तिवादविवरणकाराः — यदुक्तं राजादेः प्रवर्तकत्वव्यवहारानु-रोधेन प्रवृत्तिप्रयोजकज्ञानविषयेच्छाश्रयत्वं प्रवर्तकत्वमिति। तन्न संगच्छते। यदा चैत्रः पचेति नोच्चारयति मैत्रस्तु इङ्गितादिना तस्येच्छामनुमाय पाकं करोति तदा केन प्रेरितस्त्वं पाकं करोषीति इति पृष्टो मैत्रः नाहं चैत्रेण प्रेरितः किं तु तदभिप्रायं विदित्वा पचामीति ब्रूते । एवमेव चैत्रोऽपि न मयायं प्रेरितः किं तु स्वबुद्धिचातुर्येण मदभिप्रायं ज्ञात्वा पचतीति वदति। प्रवृत्तिप्रयोजकज्ञानविषयेच्छाश्रयत्वस्य

प्रवर्तकत्वरूपत्वे तस्य चैत्रे अक्षतत्वात् निरुक्तव्यवहारो नोपपद्येत। अतो न तादृशेच्छाश्रयत्वं प्रवर्तकत्वम्।

यच्चानुमानलभ्यत्वादिष्टसाधनत्वं न लिङर्थ इति तदपि न संगच्छते। अनन्यलभ्यः शब्दार्थः इत्यस्य हि प्रमाणान्तरगम्यस्य शब्दार्थता नास्तीत्यत्र न तात्पर्यम्। अनुमानादिप्रमाणगम्यस्य वह्न्यादेरपि वह्निपदार्थताविलोपप्रसंङ्गात्। अपि तु समभिव्याहृतेन पदेन पदसमभिव्याहारेण वा लब्धस्य न शब्दार्थता इत्यत्रैव। द्वितीयायाः कर्मत्वमर्थः। तच्च क्रियाजन्यफलवत्त्वम्। तत्र संपूर्णं न द्वितीयाशक्यम्। क्रियायाः धातुना लाभात्। जन्यत्वस्य विनापि पदार्थतां द्वितीयार्थधात्वर्थयोः संसर्गमर्यादया भानसंभवात् व्यापारमात्रस्य धात्वर्थत्वादनन्यलभ्यं फलमात्रं द्वितीयार्थ इति प्राचीना नैयायिका निरूपयन्ति। द्वितीयार्थः क्रियाजन्यफलाश्रयरूपं कर्म। धातोः फलव्यापारोभयवाचकत्वेन धातोरेव फलव्यापारोभयोर्लाभात् अनन्यलभ्याश्रयमात्रं द्वितीयार्थ इति प्राचीनवैयाकरणा मन्यन्ते। लिङः शक्यतावच्छेदकं निरूपयद्भिः नव्यमीमांसकैरपि प्रवृत्तिप्रयोजकव्यापारत्वरूपं प्रवर्तनात्वं न लिङः शक्यतावच्छेदकं, प्रवृत्तेराख्यातेन प्रयोजकत्वस्य च संसर्गमर्यादया भानसंभवात्। अपि तु अनन्यलभ्यं व्यापारत्वमिति प्रतिपादितम्। अतः ईदृशेष्वेव स्थलेषु अनन्यलब्यः शब्दार्थ इति न्यायः प्रवर्तते। स्पष्टश्चायमर्थः प्रथमाव्याख्याने रामरुद्रीये। तस्मादनुमानलभ्यत्वादिष्टसाधनत्वं न लिङर्थ इत्युक्तिर्न संगतेति।

अत्र ब्रूमः। इङ्गितादिना इच्छामनुमाय प्रवृत्तिस्थले नाहं चैत्रेण प्रेरितः किं तु तदभिप्रायं विदित्वा पचामीति व्यवहारं सिद्धं कृत्वा चैत्रस्य प्रवर्तकत्वाभावो भवद्भिरुक्तः। तत्रैव तु वयं विवदामहे। प्रवर्तको हि इदं कुरु इति शब्दमुच्चार्य चेष्टादिसंज्ञया वा प्रेरयति इति अनुभवसिद्धमिदम्। प्रवर्तमानोऽपि पुरुषः

उभयस्थलेऽपि तेन प्रेरितोऽहं करोमीत्येव ब्रूते. तेन प्रेरित इत्यस्य च तदिच्छाज्ञानवान् सन् इत्येवार्थः। इच्छाज्ञानं च क्वचिच्छव्दतः क्वचिच्चेष्टादिना इत्यन्यदेतत्। तावता प्रवर्तकत्वस्य न क्षतिः। यदापि नाहं चैत्रेण प्रेरितः पचामीति व्यवहरति तदा तस्य व्यवहारस्य चैत्रोच्चारितशब्दाधीनेच्छाज्ञानरहितः सन्नित्येव कथंचिदर्थो वर्णनीय इति सुधीभिर्विभावनीयमेतत्। आहुश्च वृद्धाः — "कस्मैचिजज्ञापयैतत्त्वमिति परकृतां वीक्ष्य चेष्टां तदन्यः तस्मै ब्रूते ततस्तद्गमकमिह वचो वेत्ति चेष्टाविदन्यः" इति। अतो न प्रथमदोषावकाशः।

यदप्यनन्यलभ्यः शब्दार्थः इति न्यायमधिकृत्योक्तं प्रमाणान्तरगम्यस्य शब्दार्थता नास्तीत्यत्र न तात्पर्यम्, अनुमानादिप्रमाणगम्यस्य वह्न्यादेरपि वह्न्यादिपदार्थताविलोपप्रसङ्गादित्यादि। तदपि न। समभिव्याहृतशब्दलभ्येनार्थेन लिङ्गविधया उपपादकविधया वा योऽर्थो लभ्यते सोऽपि न शब्दार्थः इत्येव तस्य न्यायस्यार्थः।अत एव आख्यातार्थकृत्या आक्षेपादेव कर्तुर्लाभात् कर्ता नाख्यातार्थ इति कर्त्रधिकरणे सिद्धान्तितम्। तदुक्तं पार्थसारथिमिश्रैः — अनन्यलभ्यो हि शब्दार्थो भवति। कर्ता चाख्याताभिहितभावनाविनाभावादेव लभ्यमानो नाभिधेयो भवितुमर्हति । इति।

अतः अनन्यलभ्यः शब्दार्थः इत्यस्य यथोक्त एवार्थः। ततश्च प्रवर्तकेच्छेष्टसाधनत्वयोर्मध्ये अव्यभिचरितेच्छया लिङर्थभूतया इष्टसाधनत्वानुमितिसंभवात् नेष्टसाधनत्वस्य लिङर्थत्वमिति यदुक्तं तदचाल्यमिति सिद्धम्।

## लिङादिपदशक्यतावच्छेदकविचारः

अत्र च यद्यपि वक्ष्यमाणरीत्या व्यापारत्वम्, इच्छात्वमेव वा लिङादिपदशक्यतावच्छेदकम्। तथापि तेन रूपेणोक्तविधेच्छाया एव लिङादिपदाद्बोधः,

तत्तद्धातुप्रत्ययादिसमभिव्याहारस्य नियामकत्वात्। भवति हि मृदस्ति पात्रं करिष्यामि इत्यादौ पात्रत्वेन सामान्यरूपेण मृण्मयपात्रविशेष्यको बोधः, समभिव्याहारात्, प्रवृत्तिसामर्थ्याच्च प्रवृत्याश्रयस्य पुरुषस्य बोधः, वचनेङ्गितादिना चाप्तत्वेऽवगते इच्छायामाप्तनिष्ठत्वस्य समानसंवित्संवेद्यतया यागादौ तादृशेच्छाविषयत्वस्य बोध इति न हेत्वसिद्धिः। तेनोक्तविधसामग्र्या हेतुज्ञाने जाते इष्टसाधनत्वाद्यनुमानं सुलभमेव। अतश्चान्यलभ्यत्वादिष्टसाधनत्वादेर्न लिङादिवाच्यत्वम्।

---

ननु प्रवृत्तिप्रयोजकव्यापारत्वरूपप्रवर्तनात्वान्तर्गतप्रवृत्तेः आख्यातेन प्रयोजकत्वस्य च संसर्गमर्यादया भानसंभवात् व्यापारत्वं तद्व्याप्यमिच्छात्वं वा लिङादिशक्यतावच्छेदतमिति वक्ष्यति। तथा च लिङ्श्रवणेन इच्छासामान्यस्य बोधेऽपि अयमत्र प्रवर्ततामित्याकारकेच्छाविशेषज्ञानासंभवात् तादृशेच्छाविषयत्वरूपहेतुज्ञानासंभवेन कथमिष्टसाधनत्वानुमानं घटत इत्याशङ्क्य समाधत्ते — **अत्र च यद्यपीति। उक्तविधेच्छाया एवेति।** अयमत्र प्रवर्ततामित्याकारकेच्छाया एवेत्यर्थः। **तत्तद्धातुप्रत्ययादिसमभिव्याहारस्येति।** यजादिधातुलिङ्लोडादिप्रत्यययोः समभिव्याहारस्येत्यर्थः। **नियामकत्वात्** — प्रयोजकत्वात्। पदशक्यतावच्छेदकेन सामान्यरूपेण पदान्तरसमभिव्याहारमहिम्ना विशेषस्य बोधो भवतीत्यत्र दृष्टान्तमाह — **भवति हीति। मृन्मयपात्रविशेष्यको बोध इति।** पात्रत्वरूपसामान्यधर्मप्रकारकमृन्मयपात्रविशेष्यकबोध इत्यर्थः। **समभिव्याहारादिति।** मृदस्तीत्यनेन सहोच्चारणादित्यर्थः। धातुप्रत्ययसमभिव्याहारात् धात्वर्थविषयकप्रवृत्तिविषयकत्वस्येच्छायां भानेऽपि अयमित्युल्लिखितपुरुषभानं कथम् तथा धात्वर्थयागादिविषयकप्रवृत्तिविषयकत्वस्येच्छायां ज्ञानेऽपि इच्छाविषयीभूतप्रवृत्तिविषयत्वस्य यागे कथं ज्ञानम्, तदज्ञाने हि हेतुज्ञानं न संभवतीत्यादिकमाशङ्क्याह —

**प्रवृत्तिसामर्थ्याच्चेति।** आख्यातार्थकृत्या आक्षेपात् कृत्याश्रयस्य पुरुषस्य प्रतीतिरिति भावः। आप्तत्वेऽवगत इति इच्छाश्रयस्येति शेषः। **समानसंवित्संवेद्यतयेति।** यागविषयकप्रवृत्तिविषयिणी इच्छा इति ज्ञान एव इच्छाविषयप्रवृत्तिविषयत्वं यागे भासत इति भावः। **तेनेति।** तथा चेत्यर्थः। **हेतुज्ञाने इति।** हेतौ इष्टसाधनत्वव्याप्तौ च स्मृतायामिति शेषः। उपसंहरति — **अतश्चेति।**

## इष्टसाधनत्वस्य विध्यर्थत्वेऽतिप्रसक्तयः

**किञ्च भवन्मते येन स्वत एव पाकादाविष्टसाधनत्वादि वुद्ध्वा प्रवृत्तम्, तस्य पाकवर्तमानतादशायां 'चैत्रः पचेदि'ति प्रयोगापत्तिः। इष्टसाधनत्वादिविशिष्टपाकजनककृतिमत्त्वस्य चैत्रेऽबाधितत्वात्। चैत्रः पचतीतिवत् वर्तमानत्वाबोधेऽपि क्षतिविरहात्। मन्मते तु तादृशप्रवृत्तेः प्रेरणाप्रयोज्यत्वाभावाद्विषयबाधेन अप्रामाण्योपपत्तिः तादृशप्रयोगस्येति वैषम्यम्।**

---

इष्टसाधनत्वस्य लिङर्थत्वे दूषणान्तरमाह — **किं च भवन्मत इति। स्वत एवेति।** स्वयमेवेत्यर्थः। एवकारेण इतरप्रेरणाव्यवच्छेदः। तथा च यः पुरुषः पाकः इष्टसाधनमिति स्वयमेव ज्ञात्वा पाके प्रवर्तते पाकश्च प्रचलति तदा पाकवर्तमानतादशायाम् अयं पचेदिति व्यवहारो न भवति। इष्टसाधनत्वस्य लिङर्थत्वे च तादृशदशायाम् अयं पचेदित्यपि व्यवहारः आपद्यते। अयं पचेदित्यस्य हि भवन्मते अयं इष्टसाधनीभूतपाकानुकूलकृतिमानित्यर्थः। स चार्थः पाकवर्तमानतादशायामप्यबाधित इति तादृशव्यवहारापत्तिः। ननु पाकस्य वर्तमानत्वेऽपि तदनुकूलकृतेरविद्यमानतया न तथा प्रयोगः इष्टसाधनपाकानुकूलवर्तमानकृतिमत्वस्यैव अयं पचेदिति वाक्यार्थत्वात् इत्यत्राह — **चैत्रः पचतीति-**



**वदिति।** यथा चैत्रः पचतीत्यत्र वर्तमानत्वार्थकलडाख्यातमहिम्ना कृतौ वर्तमानत्वं भासते तथा अयं पचेत् इत्यत्र वर्तमानत्वबोधकपदाभावात् कृतौ अयं पचेदिति व्यवहारः स्यादेव। वर्तमानत्वाविषयकस्य इष्टसाधनपाकानुकूलकृतिमानयमित्याकारकबोधस्यैव अयं पचेदित्यतो जननात् तस्य चाबाधितविषयकत्वादिति भावः।

**मन्मते त्विति।** तथा च प्रवर्तकेच्छारूपायाः प्रेरणायाः प्रयोज्यत्वसंबन्धेन कृतावन्वयात् प्रवर्तनाप्रयोज्या पाकविषयककृतिः इत्येव पचेत् इत्यतः अस्मन्मते बोधः। उक्तस्थले च प्रवृत्तेः प्रेरणाधीनत्वाभावात् विषयबाधात् अयं पचेदिति वाक्यस्य न प्रामाण्यं प्रसज्यत इति भावः।

अत्राहुः — धात्वर्थानुकूलकृतेः भविष्यत्ता स्वरूपसती लिङः साधुत्वे नियामिका। तस्याः भविष्यत्त्व एव लिङन्तप्रयोगदर्शनेन तथा शब्दशक्तिस्वभावावगमात्। यदाहुः हरिवल्लभभट्टाचार्याः — विध्यर्थप्रत्ययप्रकृत्यर्थस्य स्वाभाव्येन भविष्यत्तया प्रतीतिः इति। वस्तुतो भविष्यन्ती क्रिया तत्र प्रतीयत इति तदाशयः। न तु भविष्यत्त्वं शाब्दबोधे भासते इति। विधिलिङः कालाबोधकतया तथा बोधासंभवात्। वैयाकरणनये धात्वर्थस्यैव आख्यातार्थकालसंबन्धितया भानात् वैयाकरणैस्तैः विध्यर्थप्रत्ययप्रकृत्यर्थस्येत्यभिहितम्। तस्मान्न कृतेः वर्तमानतादशायां चैत्रः पचेदिति प्रयोगापत्तिरिति।

## प्रेरणावादिमतेऽतिप्रसक्तेरुद्भावनतद्वारणे

**ननु भवन्मतेऽपि यत्रान्यप्रेरणया चैत्रस्य प्रवृत्तिः तत्र पाकवर्तमानतादशायां 'चैत्रः पचेदि'ति प्रयोगस्य प्रामाण्यापत्तिः, पाकानुकूलायाश्चैत्रनिष्ठप्रवृत्तेः प्रेरणाप्रयोज्यत्वस्याबाधात्। वस्तुतस्तु स्वतस्सिद्धेष्टसाधानताज्ञानजन्यप्रवृत्तेरपि प्रेरणाप्रयोज्यत्वात्तत्रापि चैत्रः पचेदिति प्रयोगापत्तिरनिवार्यैव। न हि तव फलोपहित-**

**प्रयोज्यत्वविशिष्टा कृतिश्शाब्दबोधे भासते। बहुशश्शाब्दबोधेप्यालस्यादिना प्रवृत्त्यनुत्पत्तेरिति चेत्। न। प्रवृत्तित्वावच्छिन्नं प्रति न प्रेरणायाः प्रयोजकता, व्यभिचारात्; अपि तु प्रेरणोत्तरप्रवृत्तित्वावच्छिन्नं प्रति, इयं प्रवृत्तिः प्रेरणाप्रयोज्या, 'इयं न, किन्तु स्वत एव' इत्यादिसार्वलौकिकव्यवहारात्।**

---

**ननु भवन्मतेऽपीत्यादि।** अयमत्र शङ्काग्रन्थाशयः — पचेत् इत्यादिस्थले लिङर्थप्रेरणायाः आख्यातार्थकृतौ प्रयोज्यत्वसंबन्धेन अन्वयमुपगम्य प्रेरणा-प्रयोज्या कृतिरित्याकारकशाब्दबोधो भवतीति स्वीकारे यत्र मैत्रस्य प्रेरणया चैत्रः पाके प्रवर्तते तत्र पाकवर्तमानतादशायां चैत्रः पचेत् इति प्रयोगस्य प्रामाण्या-पत्तिः। चैत्रः पचेत् इति वाक्यस्य हि चैत्रनिष्ठा पाकानुकूला कृतिः प्रेरणाप्रयोज्या इत्यर्थः। स चाबाधित एव चैत्रनिष्ठपाककृतेः मैत्रवृत्तिप्रेरणप्रयोज्यत्वात्। ततश्च विषयाबाधात् तादृशवाक्यस्य प्रामाण्यं प्रसज्यते। एवं येन पुंसा स्वत एव पाकादाविष्टसाधनत्वं ज्ञात्वा प्रवृत्तं तस्य पाकवर्तमानतादशायां चैत्रः पचेदिति वाक्यस्य प्रामाण्यापत्तिः। न च तत्र चैत्रनिष्ठप्रवृत्तेः स्वतस्सिद्धेष्टसाधनताज्ञान-जन्यत्वेन प्रेरणाप्रयोज्यत्वाभावात् न तथा प्रयोगापत्तिरिति वाच्यम्। स्वतस्सि-द्धेष्टसाधनताज्ञानजन्याया अपि प्रवृत्तेः प्रेरणाप्रयोज्यतावच्छेदकप्रवृत्तित्वरूपधर्म-वत्तया प्रेरणाप्रयोज्यत्वस्वरूपयोग्यत्वात्। प्रेरणाप्रयोज्यत्वस्वरूपयोग्यत्वं हि प्रेरणाप्रयोज्यतावच्छेदकधर्मवत्त्वम्। प्रवृत्तित्वावच्छिन्नं प्रति प्रेरणायाः प्रयोजक-तया प्रवृत्तित्वं प्रेरणाप्रयोज्यतावच्छेदकम्। एवं च प्रेरणायाः प्रवृत्तौ स्वप्रयोज्यता-वच्छेदकधर्मवत्त्वसंबन्धेनान्वयः इति उक्तप्रयोगापत्तिः दुर्वारेति।

न च स्वरूपयोग्यत्वरूपप्रयोज्यत्वसंबन्धेनान्वयस्वीकारे उक्तदोषसंभवेऽपि फलोपहितत्वरूपप्रयोज्यत्वसंबन्धेन अन्वयस्वीकारे उक्तदोषो न संभवति।

फलोपहितत्वं हि स्वाव्यवहितोत्तरत्वसंबन्धेन कारणविशिष्टत्वरूपम्। तथा च स्वतः सिद्धेष्टसाधनताज्ञानजन्यायाः प्रवृत्तेः स्वाव्यवहितोत्तरत्वसंबन्धेन इष्टसाधनताज्ञानविशिष्टत्वेऽपि तेन संबन्धेन प्रेरणाविशिष्टत्वाभावादिति वाच्यम्। प्रवृत्तौ फलोपहितत्वरूपप्रयोज्यत्वसंबन्धेन प्रेरणायाः अन्वयासंभवात्। बहुशः प्रेरणे कृतेऽपि आलस्यादिना प्रवृत्त्यनुदयेन नियमतः फलोपहितत्वस्य प्रेरणाव्यवहितोत्तरत्वरूपस्य प्रवृत्तावसंभवात्। अतश्च स्वरूपयोग्यत्वरूपप्रयोज्यत्वसंबन्धेनैवान्वयस्य वक्तव्यतया स्वतस्सिद्धेष्टसाधनताज्ञानजन्यप्रवृत्तिस्थले पाकवर्तमानतादशायां चैत्रः पचेदिति प्रयोगापत्तिः दुर्वारेति।

**प्रेरणाप्रयोज्यत्वस्वरूपयोग्यतयेति।** प्रेरणाप्रयोज्यतावच्छेदकधर्मवत्तया इत्यर्थः। तृतीयार्थोऽभेदः प्रयोज्यत्वेऽन्वेति। प्रेरणाप्रयोज्यत्वस्वरूपयोग्यतारूपप्रेरणाप्रयोज्यत्वादित्यर्थः। **फलोपहितप्रयोज्यत्वविशिष्टेति।** स्वाव्यवहितोत्तरत्वसंबन्धेन प्रेरणाज्ञानविशिष्टत्वरूपप्रेरणाप्रयोज्यत्वविशिष्टा कृतिरित्यर्थः। **शाब्दबोधेऽपीति।** प्रेरणाविषयके शाब्दबोधेऽपीत्यर्थः। **प्रवृत्त्यनुत्पत्तेरिति।** ततश्च अव्यवहितोत्तरत्वं प्रवृत्तौ नास्तीति तेन संबन्धेन न प्रेरणायाः प्रवृत्तावन्वय इति भावः।

समाधत्ते — **प्रवृत्तित्वावच्छिन्नं प्रतीत्यादिना।** अयमाशयः — यदुक्तं प्रेरणायाः स्वप्रयोज्यतावच्छेदकधर्मवत्त्वरूपप्रयोज्यत्वस्वरूपयोग्यतासंबन्धेन प्रवृत्तावन्वय इति तदभ्युपगम्यते। परं तु प्रयोज्यतावच्छेदकधर्मः क इति विचारणीयम्। न तावत् प्रवृत्तित्वम्। प्रेरणां विनापि स्वतस्सिद्धेष्टसाधनताज्ञानात् प्रवृत्त्युत्पत्त्या व्यतिरेकव्यभिचारात् प्रवृत्तित्वावच्छिन्नं प्रति प्रेरणायाः प्रयोजकत्वासंभवेन प्रवृत्तित्वस्य प्रेरणाप्रयोज्यतावच्छेदकत्वानुपपत्तेः। अतः प्रेरणोत्तरप्रवृत्तित्वावच्छिन्नं प्रति प्रेरणायाः प्रयोजकत्वं वक्तव्यम्। एवं च प्रेरणाप्रयोज्यता-

वच्छेदकधर्मः प्रेरणोत्तरप्रवृत्तित्वं वा प्रेरणोत्तरप्रवृत्तिमात्रवृत्तिः प्रवृत्तित्वव्याप्यो धर्मविशेषो वा। तथा च प्रेरणायाः स्वप्रयोज्यतावच्छेदकतादृशधर्मविशेषवत्त्व-संबन्धेन प्रवृत्तावन्वय इति सिध्यति। स्वतस्सिद्धेष्टसाधनताज्ञानजन्यप्रवृत्तौ च प्रेरणोत्तरप्रवृत्तित्वरूपस्य वा प्रेरणोत्तरप्रवृत्तिमात्रवृत्तिधर्मविशेषरूपस्य वा प्रेरणा-प्रयोज्यतावच्छेदकधर्मस्याभावेन तादृशधर्मवत्त्वसंबन्धेन प्रेरणावत्त्वस्य बाधात् तत्र चैत्रः पचेदिति वाक्यस्य न प्रामाण्यमिति।

**व्यभिचारादिति।** व्यतिरेकव्यभिचारादित्यर्थः। **तत्प्रयोजकतावच्छेदकतया इति।** प्रवृत्तित्वव्याप्यधर्मविशेषावच्छिन्ननिरूपितप्रयोजकतावच्छेदकतयेत्यर्थः। सिद्ध इति शेषः। अत्र च प्रवृत्तित्वव्याप्यधर्मविशेषावच्छिन्ननिरूपितप्रयोजकता किंचिद्धर्मावच्छिन्ना प्रयोजकतात्वात् या या प्रयोजकता सा सा किंचिद्धर्मावच्छिन्ना यया दण्डनिष्ठा घटप्रयोजकता इत्यनुमानप्रयोगो विवक्षितः।

## अत्रैव प्रकारान्तरवर्णनम्

**यद्वा प्रेरणाप्रयोज्यतावच्छेदकतया प्रवृत्तित्वव्याप्यं धर्मान्तरमेवेत्यपि वक्तुं शक्यम्। अत एव तत्प्रयोजकतावच्छेदकतया प्रेरणात्वमखण्डो धर्मो लोकवेद-साधारण इत्यपि वक्ष्यते। तस्य च प्रवृत्तित्वव्याप्यधर्मस्य लिङादिसमभिव्याहार-स्थले लक्षणया आख्यातादु बोधः, सामान्यधर्मेणैव वा प्रेरणाप्रयोज्यव्यक्त्युपस्थितिः इत्याद्यन्यदेतत्। सर्वथा स्वतःसिद्धेष्टसाधनताज्ञानजन्यप्रवृत्तिं प्रति न प्रेरणायाः स्वरूपयोग्यतयापि प्रयोजकत्वमिति न तादृशप्रवृत्तिमति लिङादिमद्वाक्य-प्रयोगापत्तिः।**

---

वक्ष्यत इति। अथ वा लोकवेदसाधारणः पूर्वोक्तविधया प्रवृत्तिविशेषप्रयोजकतावच्छेदकतया सिद्धो व्यापारत्वरूपोऽखण्डधर्म एवानतिप्रसक्तो लिङादिपदशक्यतावच्छेदकः इति ग्रन्थेनेति शेषः। सामान्यधर्मेण वेति। प्रवृत्तित्वरूपेणेति शेषः। तादृशप्रवृत्तिमति स्वतस्सिद्धेष्टसाधनताज्ञानजन्यप्रवृत्तिमत्पुरुषे विषये। लिङादिमद्वाक्यप्रयोगापत्तिः — चैत्रः पचेदित्यादिवाक्यप्रयोगापत्तिः।

## प्रेरणाप्रयोज्यप्रवृत्तिवर्तमानतादशायां पचेदिति प्रयोगवारणम्

प्रेरणाप्रयोज्यप्रवृत्तिवर्तमानतादशायां तु प्रयोगापत्तिरेवं निवार्या। नास्माभिः प्रेरणाया विषयतासम्बन्धेनैव प्रवृत्तावन्वय इत्युच्यते। न वा प्रेरणाविषयीभूतप्रवृत्तिविषयत्वेन यागादौ, येन तादृशप्रयोगापत्तिश्शंक्येत। किन्त्वत एव साक्षात्सम्बन्धपरित्यागेन स्वज्ञानजन्यानुमितिप्रयोज्यत्वसंसर्गेणाख्यातार्थप्रवृत्तौ प्रेरणायाः प्रकारत्वम्। अस्ति हि प्रेरणाज्ञानजन्येष्टसाधनत्वाद्यनुमितेः प्रवृत्तिं प्रति जनकत्वात्प्रयोजकत्वम्। उपपादयिष्यते एतदुपरिष्टात्। तत्प्रेरणाज्ञानं स्वप्राक्कालीनस्वज्ञानोपधेयमेव स्वरूपेण तद्व्यक्तित्वेन संसर्गमध्ये निवेश्यते। प्रथमस्वपदम्तत्तत्प्रवृत्तिव्यक्तिपरम्, द्वितीयस्वपदं तत्तल्लिङादिव्यक्तिपरम्, तेन तत्तत्प्रवृत्तिप्रागभावकाले यल्लिङादिपदज्ञानं तेनोत्पादितं यत् प्रेरणाज्ञानं तज्जन्येष्टसाधनत्वानुमितिप्रयोज्यत्वस्वरूपयोग्यत्वं संसर्ग इति फलितार्थः। अतश्च प्रवृत्तिवर्तमानतादशायामनेन संसर्गेण प्रेरणावत्वस्य प्रवृत्तौ बाधान्न तादृशप्रयोगापत्तिरस्मन्मते। अन्यदीयप्रेरणाप्रयोज्यप्रवृत्तिप्राक्काले अन्यदीयलिङन्तप्रयोगस्तु राजप्रेरितप्रवृत्तिकाले पदात्यादीनामन्येषामाप्तादीनाञ्च लिङन्तप्रयोगदर्शनादिष्टापत्त्यैव नापादनीया। सम्भवति हि तत्र राजप्रेरणामादाय प्रयोगः, अन्यदीयप्रेरणामादाय च,

**तज्ज्ञानजन्यानुमितेरपि प्रवृत्तिस्वरूपयोग्यत्वात्। अतः सिद्धं न तार्किकरीत्या इष्टसाधनत्वादेर्लिङाद्यर्थत्वम्, अपि तु पूर्वोक्तरीत्या प्रवर्तकेच्छाया एव।**

---

नन्वेवमपि यत्रान्यप्रेरणया चैत्रस्य प्रवृत्तिः तत्र पाकवर्तमानतादशायां चैत्रः पचेदिति प्रयोगस्य प्रामाण्यापत्तिः न वारयितुं शक्यते। तत्रत्यप्रवृत्तेः प्रेरणाप्रयोज्यत्वादित्यत्राह — **प्रेरणाप्रयोज्येत्यादि। न वेत्यादि।** प्रेरणायाः स्वविषयीभूतप्रवृत्तिविषयत्वसंबन्धेन यागादौ वा नान्वय इत्यर्थः। **अत एवेति।** तादृशप्रयोगापत्तिभयादेवेत्यर्थः।

**स्वज्ञानजन्येत्यादि।** अयमत्र प्रघट्टकार्थः — लिङर्थप्रेरणायाः स्वविषयकज्ञानजन्यानुमितिप्रयोज्यत्वसंबन्धेन प्रवृत्तावन्वयः। स्वविषयकज्ञाने च प्रवृत्तिप्राक्कालीनतत्तल्लिङादिज्ञानजन्यत्वं विशेषणं देयम्। तथा च प्रवृत्तिप्राक्कालीनं यत् लिङादिपदज्ञानं तज्जन्यं यत् प्रेरणाविषयकज्ञानं तज्जन्या या अनुमितिः इष्टसाधनत्वानुमितिः तत्प्रयोज्यत्वसंबन्धेन प्रवृत्तावन्वय इति फलितम्। अन्यप्रेरणाजन्यप्रवृत्तिवर्तमानतादशायां चैत्रः पचेदिति प्रयोगस्तु इदानीं नापादयितुं शक्यः। यादृशलिङन्तशब्दः प्रयुज्यते तादृशलिङ्जन्यत्वेन प्रेरणाज्ञानस्य संबन्धघटकत्वात् तत्रत्यप्रवृत्तिजनकप्रेरणाज्ञानस्य आपाद्यमानप्रयोगविषयलिङ्व्यक्तिज्ञानजन्यत्वाभावात् इति।

नन्वेवमपि यत्र मैत्रः चैत्रं पाके प्रेरयति त्वं पचेः इति तत्र प्रवृत्तेः प्राक्काले मैत्रान्यस्यापि त्वं पचेः इति प्रयोगः स्यात् तत्तल्लिङ्ज्ञानस्य प्रवृत्तिप्राक्कालीनत्वसत्त्वात् तद्घटितसंबन्धस्य अबाधादित्याशङ्क्य इष्टापत्त्या समाधत्ते — **अन्यदीयेत्यादिना।** निगमयति — **अतः सिद्धमिति।**

## प्रेरणावादे पाणिनिसम्मतिप्रदर्शनम्, इतरेषां विध्यर्थानां विवरणं च

**विधिनिमन्त्रणामन्त्रणाधीष्टसम्प्रश्नप्रार्थनेषु लिङ्, लोट् च, छन्दसि 'लिङर्थे लेडि'त्यादिपाणिन्यनुशासनादयमेवार्थो विज्ञायते। विधिः-निकृष्टस्य प्रेरणम्। निमन्त्रणम्-अनिष्टजनकीभूताकरणप्रतियोगित्वानुमापकप्रवर्तकेच्छा। यथा श्राद्धादौ दौहित्रादेः प्रवर्तनम्। तत्र प्रमाणान्तरेणाऽभोजने प्रत्यवायावगमात्। अत एव विधिस्थल इवाग्रिमयोरपि च लाघवादिष्टसाधनत्वानुमापकत्वमेव। कृतिसाध्यत्वानुमापकत्वं सर्वत्रैव। मास्तु वा तत्। आमन्त्रणं कामचारानुज्ञा। तत्र प्रेरकस्य आग्रहाभावमात्रम्। अन्यत्र सर्वत्राऽऽग्रहोऽप्यधिको भासते। अधीष्टम्-सत्कारपूर्वकमुत्तमं प्रति प्रेरणम्। एतेषु चतुर्षु प्रवर्तनात्वस्यैकस्यानुगतत्वात् तेनैव रूपेण एकैव शक्तिः, अन्यांशस्य तु प्रमाणान्तरलभ्यत्वान्न शक्यत्वम्। संप्रश्नप्रार्थनयोस्त्वतिरिक्तैव शक्तिः। 'किन्त्वमधीयीथाः भवति मे प्रार्थना वेदमधीयीय' इत्यादौ, तत्र प्रवर्तनात्वाभावात्। अनुशासनिकी वा निरूढलक्षणा। 'हेतुहेतुमतोर्लिङ्' 'कामप्रवेदनेऽकच्चिति' इत्याद्यनुशासनेनेव हेतुत्वादौ, प्रचुरप्रयोगेण प्रवर्तनात्वस्यैव शक्यतावच्छेदकत्वात्।**

**प्रवर्तनात्वं च — प्रवृत्त्यनुकूलव्यापारत्वम्, अनुकूलत्वं च जनकत्वम्। तच्च लोके पुरुषाशयवृत्ति, वेदे च तदभावादिच्छाभिन्नस्य कस्यचित् प्रवर्तनात्वं बोध्यम्।**

---

प्रवर्तकेच्छायाः लिङर्थत्वे पाणिनिसंमतिं प्रदर्शयति — **विधिनिमन्त्रणेत्यादिना। अनिष्टजनकीभूतेत्यादि।** अनिष्टजनकीभूतं यत् अकरणं तत्प्रतियोगित्वस्य अनुमापिका प्रवर्तकेच्छा इत्यर्थः। तथा च निमन्त्रणस्थले चैत्र त्वं श्राद्धे भुञ्जीथाः इति प्रयोगे लिङर्थभूतायाः प्रवर्तकपुरुषगतेच्छायाः अयं श्राद्धभोजने प्रवर्तता-

मित्याकारिकायाः स्वज्ञानजन्या या अनिष्टजनकीभूताकरणप्रतियोगित्वानुमितिः तत्प्रयोज्यत्वसंबन्धेन प्रवृत्तावन्वयः इत्युक्तं भवति। अत्र च श्राद्धभोजनं अनिष्ट-जनकीभूताकरणप्रतियोगि अयमत्र प्रवर्ततामित्याकारकाप्तेच्छाविषयीभूतप्रवृत्ति-विषयत्वादित्यनुमानप्रयोगो विवक्षितः। अकरणं अननुष्ठानं प्रवृत्त्यभावः, तत्प्रति-योगित्वं तत्प्रतियोगिप्रवृत्तिविषयत्वम्। **अत एवेति**। यतः निमन्त्रणस्थले अकरणे प्रत्यवायस्य प्रमाणान्तरेणावगमात् अनिष्टजनकीभूताकरणप्रतियोगित्वानुमानम्। तत एवेत्यर्थः। **अग्रिमयोरपीति**। आमन्त्रणाधीष्टयोरपीत्यर्थः। **लाघवादिति**। अकरणे प्रत्यवायबोधकप्रमाणाभावादित्यपि पूरणीयम्। **मास्तु वा तदिति**। कृति-साध्यत्वानुमापकत्वमित्यर्थः। प्रकारान्तरेण कृतिसाध्यत्वबोधस्य पूर्वमुपपादि-तत्वादिति भावः।

**कामचारानुज्ञेति**। **एतेषु चतुर्षु इति**। विधिनिमन्त्रणामन्त्रणाधीष्टेषु चतुर्षु लिङर्थेषु इत्यर्थः। **प्रवर्तनात्वस्येति**। प्रवृत्तिहेतुव्यापारत्वरूपस्येत्यर्थः। **अन्यांश-स्येति**। अनिष्टजनकीभूताकरणप्रतियोगित्वकामचारसत्कारपूर्वकत्वादेः इत्यर्थः। **संप्रश्नेति**। इदं कार्यं न वेति विचार्य निर्धारणं संप्रश्नः। **आनुशासनिकीति**। यत्रानेकेषु अर्थेषु एकस्य प्रत्ययस्य विधानं तत्र प्रचुरप्रयोगादिमहिम्ना कुत्रचिदर्थे शक्तिः, अर्थान्तरे लक्षणा। सा च अनुशासनसंमतत्वात् आनुशासनिकीत्युच्यते। कामप्रवेदनेऽकच्चितीति पाणिनिसूत्रम्। तस्य च स्वाभिप्रायाविष्करणे गम्यमाने लिङ् स्यात् न तु कच्चिच्छब्दप्रयोगे इत्यर्थः।

कामो मे भुञ्जीत भवान् इत्युदाहरणम्। कच्चिज्जीवतीति प्रत्युदाहरणम्। हेतुत्वादाविति। आदिपदेन कामप्रवेदनपरिग्रहः।

## मण्डनमिश्रपार्थसारथ्योः मतम्

अत्रापीष्टसाधनत्वमेव प्रवर्तनात्वेन रूपेण वेदे लिङाद्यर्थ इति मण्डनमिश्राः। अर्थभावनाभिधानानुकूलाया लिङादिनिष्ठशक्तेरेवाभिधाख्यायाः प्रवर्तनात्वेन रूपेण लिङ्वाच्यत्वं परिकल्प्य तज्ज्ञानस्य प्रवृत्तिं प्रति कारणत्वमात्रं कल्प्यत इति तु पार्थसारथिः।

वस्तुतस्तु इष्टसाधनत्वकृतिसाध्यत्वयोर्विनिगमनाविरहः, तथात्वे वा लोकेऽपि तस्यैव तथात्वापत्तेस्तार्किकमतोक्तदूषणापत्तिः। शक्तिप्रवर्तनावादिमतेपि उक्तशक्तेः संख्याभिधानानुकूलशक्त्या लिङ्त्वादिनैव वा विनिगमनाविरहस्तदवस्थ एव।

अतः 'क्लृप्तैर्विनिगमनाविरहे कल्प्यमन्यत्सिद्ध्यती'ति न्यायेन अलौकिको धर्म एव लिङादिनिष्ठः प्रवर्तनात्वेन लिङादिवाच्यश्च कल्प्यते, तज्ज्ञानञ्च प्रवृत्तिं प्रति कारणमिति न्यायसुधाकृन्मतमेव कथञ्चिद्युक्तमिति व्यक्तं कौस्तुभे।

---

वेदे इच्छाविरहात् इच्छाभिन्नः कश्चिदर्थः प्रवर्तना इत्युक्तम्। स धर्मः क इति विशिष्य जिज्ञासायां मण्डनमिश्रमतमाह — **अत्रापीति**। वेदेपीऽत्यर्थः। यथा लोके इष्टसाधनत्वस्य प्रवृत्तिकारणीभूतज्ञाननिषयत्वेन प्रवृत्तिप्रयोजकतया प्रवृत्त्यनुकूलव्यापारत्वेन रूपेण इष्टसाधनत्वस्य लिङर्थता, तथा वेदेऽपि तस्यैव लिङर्थत्वमिति भावः।

पार्थसारथिमतमाह — **अर्थभावनेत्यादिना**। लिङ्अभिधावृत्त्या अर्थभावनां बोधयति। तथा च लिङ्निष्ठा या अर्थभावनाबोधनानुकूला शक्तिः तजज्ञानमेव प्रवृत्तिं प्रति कारणमिति तस्याः शक्तेः प्रवृत्तिकारणीभूतज्ञानविषयत्वेन प्रवृत्ति-प्रयोजकतया प्रवर्तनात्वात् सा शक्तिरेव लिङ्वाच्या। अतश्च वेदे प्रवर्तना नाम

अर्थभावनाभिधानानुकूला शक्तिः, सा च लिङ्निष्ठा। लोके तु अयमत्र प्रवर्ततामित्याकारकेच्छा प्रवर्तना, सा च पुरुषनिष्ठेति विवेकः पार्थसारथिमते।

मतद्वयेऽपि दोषकथनपूर्वकं स्वमतमाह — **वस्तुतस्त्वित्यादिना। विनिगमनाविरह इति।** कृतिसाध्यताज्ञानस्यापि प्रवृत्तिं प्रति कारणत्वेन प्रवृत्तिजनकज्ञानविषयत्वरूपप्रवर्तनात्वस्य कृतिसाध्यत्वेऽपि सत्त्वात् तस्यापि प्रवर्तनात्वेन रूपेण लिङ्वाच्यत्वापत्तिरित्यर्थः। **तथात्वे वेति।** इष्टसाधनत्वस्य लिङर्थत्वे वेत्यर्थः। **तस्यैव तथात्वापत्तेरिति।** इष्टसाधनत्वस्यैव लिङर्थत्वापत्तेरित्यर्थः। **तार्किकमतोक्तदूषणापत्तिरिति।** प्रवृत्तिविषये यागादाविष्टसाधनत्वादेः अनुमानेनैव बोधोपपत्तेर्न पुनर्वाच्यत्वकल्पनावसर इत्यादिदूषणापत्तिरित्यर्थः। एवं मण्डनमिश्रमते दोषमुक्त्वा पार्थसारथिमते तमाह — **शक्तिप्रवर्तनावादिमतेऽपि इति।** अर्थभावनानुकूला लिङ्निष्ठा शक्तिरेव प्रवर्तना इति वादिनः पार्थसारथेः मतेऽपीत्यर्थः। **उक्तशक्तेरिति।** अर्थभावनाभिधानानुकूलशक्तेरित्यर्थः। **विनिगमनाविरहस्तदवस्थ इति।** लिङि यथा अर्थभावनाभिधानानुकूला शक्तिरस्ति। तथा एकत्वादिसंख्याभिधानानुकूला शक्तिरप्यस्ति। तथा लिङ्गाख्यो धर्मोऽपि वर्तते। तथा च एतेषां त्रयाणामपि धर्माणां लिङ्निष्ठत्वाविशेषात् प्रवर्तनात्वं लिङ्वाच्यत्वं च स्यादिति भावः।

स्वमतमाह — **अत इत्यादिना। लिङादिवाच्यश्चेति।** चकारः लिङादिनिष्ठत्वं समुच्चिनोति।

## व्यापारस्य लिङ्वाच्यत्वनिरूपणम्

**वस्तुतस्तु लोके नेच्छायाः स्वरूपेण प्रवृत्तिं प्रति कारणत्वम्, तदभावेऽपि तद्भ्रमेण प्रवृत्त्युदयात्, स्वरूपेण कारणत्वे लिङुक्तिवैयर्थ्याच्च, नापि तज्ज्ञानस्य**

कारणत्वम्, इष्टसाधनत्वाद्यनुमापकतया प्रवृत्तिविशेषं प्रति प्रयोजकतयैवान्वयव्यतिरेकसिद्धौ कारणत्वकल्पने मानाभावात्। अतः प्रवृत्तिप्रयोजकत्वमेव प्रवर्तनात्वं वाच्यम्। तदपि च न लिङादेश्शक्यतावच्छेदकम्, गौरवादन्यलभ्यत्वाच्च। प्रवृत्तिर्हि आख्यातादेव लभ्यते। प्रयोजकत्वं तु संसर्गबलेनेति न तदपि शक्यतावच्छेदककोटिप्रविष्टम्, अपितु लोकवेदसाधारण्येन व्यापारत्वमेव शक्यतावच्छेदकम्। अस्ति हि लौकिके लिङादिशब्दोपस्थाप्ये पुरुषाशये प्रवृत्तिसाधनीभूतेष्टसाधनत्वाद्यनुमापकतया प्रवृत्तिप्रयोजकव्यापारत्वम्। वेदेऽपि शब्दश्रवणोत्तरकालमनुमायैव तत्कार्यदर्शनादिच्छायाश्चापौरुषेये वेदे बाधात्कार्यानुमेयमलौकिकं धर्मं लिङादिनिष्ठं लिङादिवाच्यं परिकल्प्य, तस्य तदनुमापकत्वकल्पनात्तत्रापि प्रवृत्तिप्रयोजकव्यापारत्वम्। अत उभयसाधारण्येन व्यापारत्वमेव शक्यतावच्छेदकम्।

---

ननु लोके पुरुषाशयस्य वेदे चालौकिकधर्मस्य लिङ्वाच्यत्वे अनेकशक्तिकल्पनापत्तिरित्याशङ्क्य उभयसाधारणव्यापारत्वरूपस्य शक्यतावच्छेदकस्यैक्यान्न शक्त्यनेकत्वमिति वक्तुं भूमिकामारचयति — **वस्तुतस्त्वित्यादिना**। **स्वरूपेणेति**। स्वरूपसत्तया अज्ञायमानतयेत्यर्थः। **तदभावेऽपि तद्भ्रमेणेति**। इच्छायाः अभावेऽपि इच्छाविषयकभ्रमेणेत्यर्थः। **प्रवृत्त्युदयादिति**। तथा च अयमत्र प्रवर्ततामित्याकारकेच्छायाः सत्तया प्रवृत्तिं प्रति कारणत्वे वस्तुतः प्रवर्तकस्य तादृशेच्छाविरहेऽपि तादृशेच्छा तस्य वर्तत इति भ्रान्त्यापि पाकादौ प्रवृत्तेर्दर्शनेन व्यतिरेकव्यभिचारात् न स्वरूपसत्त्याः इच्छायाः प्रवृत्तिं प्रति कारणत्वमिति भावः। दोषान्तरमाह — **लिङुक्तिवैयर्थ्याच्चेति**। **तज्ज्ञानस्येति**। भ्रमप्रमासाधारणस्येत्यर्थः। **प्रयोजकतयेति**। परंपरया कारणतयेत्यर्थः। ननु प्रवर्तकेच्छा-

विषयकज्ञानसत्त्वे प्रवृत्तिः तदभावे प्रवृत्त्यभाव इति अन्वयव्यतिरेकसहचारबलात् प्रवर्तकेच्छाज्ञानस्य प्रवृत्तिं प्रति कारणत्वमावश्यकमित्यत्राह —

**इष्टसाधनत्वाद्यनुमापकतयेति।** इष्टसाधनत्वानुमितिद्वारा इच्छाज्ञानस्य प्रवृत्तिजनकत्वमत्र प्रयोजकत्वम्। प्रेरणोत्तरप्रवृत्तिं प्रत्येव प्रेरणायाः प्रयोजकत्वं न प्रवृत्तिसामान्यं प्रतीति पूर्वोक्तं स्मारयितुं प्रवृत्तिविशेषं प्रतीत्यत्र विशेषपदम्। **मानाभावादिति।** न च विनिगमनाविरहात् कारणतयैवान्वयव्यतिरेकसिद्धौ प्रयोजकत्वकल्पने मानाभाव इत्येव किं न स्यादिति वाच्यम्। इष्टसाधनताज्ञानस्य प्रवृत्तिं प्रति कारणत्वस्य वक्तव्यतया तस्य ज्ञानस्य शाब्दत्वे अनन्यलभ्यः शब्दार्थ इति न्यायविरोधादनुमितिरूपत्वे सिद्धे तस्यामनुमितौ इच्छाज्ञानस्यैव लिङ्गज्ञानविधया कारणत्वात् इच्छाज्ञानमिष्टसाधनतानुमितिद्वारा प्रवृत्तिहेतुरिति सिध्यतीति इच्छाज्ञानस्य प्रवृत्तिं प्रति प्रयोजकत्वमेव न कारणत्वमिति तात्पर्यात्। **प्रवृत्तिप्रयोजकत्वमेवेति।** इष्टसाधनत्वानुमितिद्वारा प्रवृत्तिजनकज्ञानविषयव्यापारत्वमित्यर्थः। **तदपीति।** प्रवृत्तिप्रयोजकव्यापारत्वमपीत्यर्थः। **गौरवादिति।** व्यापारत्वापेक्षयेति शेषः। **अन्यलभ्यत्वाच्चेति।** व्यापरत्वातिरिक्तांशस्येत्यर्थः। अन्यलभ्यत्वमेवोपपादयति — **प्रवृत्तिर्हीति।** इष्टसाधनत्वाद्यनुमापकतयेति। इष्टसाधनत्वाद्यनुमितिजनकज्ञानविषयतयेत्यर्थः। आदिपदेन कृतिसाध्यत्वपरिग्रहः। **अनुमायैवेति।** इष्टसाधनत्वादिमिति शेषः। **तत्कार्यदर्शनादिति।** प्रवृत्त्याख्यकार्यदर्शनादित्यर्थः। **कार्यानुमेयमिति।** कार्येण प्रवृत्त्या अनुमेयमित्यर्थः। **तदनुमापकत्वकल्पनादिति।** इष्टसाधनत्वानुमितिजनकज्ञानविषयत्वकल्पनादित्यर्थः। **तत्रापीति।** अलौकिकधर्मेऽपीत्यर्थः। तथा च व्यापारत्वं लिङः शक्यतावच्छेदकम्, तच्च लोके पुरुषेच्छावृत्ति। वेदे च लिङ्निष्ठालौकिकधर्मवृत्तीति भावः।

**यद्यपि च तदन्यत्राप्यतिप्रसक्तम्, तथापि समभिव्याहारबलाद् विशेषलाभः। तथा हि — लिङ्पदाद् व्यापारत्वावच्छिन्नव्यापारमात्रोपस्थितावपि तस्याख्याता तोपात्तकृत्तौ निरुक्तसंसर्गेणान्वये बुद्धे पश्चात्तत्संसर्गस्य तत्त्वेन रूपेण बोधवेलायां तेन तेन प्रमाणेन विशेषलाभो नासुलभः। इष्यत एव हि 'भूतलं घटवदि'त्यादौ घटपदात् घटत्वावच्छिन्नघटमात्रप्रतीतावपि तस्य, योग्यसंसर्गेण भूतले घटान्वये बुद्धे तत्संसर्गस्य तत्त्वेन जिज्ञासायां प्रमाणान्तरेण संयोगत्वादिना संयोगादिरूपसंसर्गप्रतीतिवद् भूतलवृत्तिघटविशेषप्रतीतिः।**

---

ननु लिङ्वाच्यताशून्यपाकादिक्रियायामपि व्यापारत्वसत्त्वेन कथं व्यापारत्वेन सामान्यरूपेण लिङा पुरुषाशयालौकिकधर्मरूपयोर्विशेषयोर्बोध इत्याशङ्क्य समाधत्ते — **यद्यपि चेत्यादिना। तथा हीत्यादि।** अयमत्र प्रघट्टकार्थः। यथा घटवद्भूतलमित्यत्र घटपदादुपस्थितस्य घटत्वावच्छिन्नस्य योग्येन संबन्धेन भूतले अन्वये बुद्धे तादृशसंबन्धः क इति विशिष्य जिज्ञासायां प्रमाणान्तरेण संयोगत्वावच्छिन्नसंयोगरूपसंसर्गविशेषप्रतीतिः भूतलवृत्तिघटविशेषप्रतीतिश्च भवति तथा चैत्रः पचेदिति वाक्यात् व्यापारवती चैत्रनिष्ठा कृतिरिति सामान्यतो बोधो जायते। ततः लिङर्थव्यापारः कः व्यापारस्य कृतौ संबन्धश्च कः इति विशेषजिज्ञासायां मैत्रप्रेरितोऽहं पचामीति व्यवहारबलात् व्यापारः इच्छारूप इत्यवगम्यते। प्रवृत्तिप्रयोजकज्ञानविषयेच्छाश्रयत्वस्यैव प्रवर्तकत्वरूपतायाः प्राग् उक्तत्वात् सा चेच्छा पचेदिति समभिव्याहारेण पाककृतिसंबन्धात् पाकेऽयं प्रवर्ततामित्याकारिकेति ज्ञायते। तादृशेच्छाश्रये चैत्रादौ वचनेङ्गितादिना आप्तत्वे गृहीते पाकादौ पाकेऽयं प्रवर्ततामित्याकारकाप्तेच्छाविषयप्रवृत्तिविषयत्वरूपहेतुज्ञानं मानसं समुत्पद्यते। अथ तत्र हेतौ इष्टसाधनत्वनिरूपितव्याप्तिस्मरणात् पाके

इष्टसाधनत्वानुमितिर्जायते। तया च प्रवृत्तिर्जायते इति रीत्या संसर्गविशेषलाभः व्यापारविशेषलाभश्च इति।

अथ पङ्क्तिर्विव्रियते। **निरुक्तसंसर्गेणेति**। स्वविषयकज्ञानजन्यानुमितिप्रयोज्यत्वसंबन्धेनेत्यर्थः। तत्त्वेनानुपस्थितेनैवान्वय इत्यत्र तत्त्वेनेत्यस्य विशेषरूपेणेत्यर्थः। स्वविषयकज्ञानविशेषजन्यानुमितिप्रयोज्यत्वेनेति यावत्। तत्त्वेनेत्यस्य चानुपस्थितेनेत्यत्रान्वयः। न तु अन्वय इत्यत्र। तथा च विशेषरूपेण अनुपस्थितेन संबन्धत्वेन सामान्यरूपेण चोपस्थितेन उक्तसंबन्धेन व्यापारस्य कृतावन्वयः इत्यर्थः। अत एव शाब्दबोधश्च व्यापारवती यागादिकृतिः इति ग्रन्थः संगच्छते। तत्र हि शाब्दबोधे संबन्धत्वेन सामान्यरूपेणैव उक्तसंबन्धस्य भानमस्ति। तथा शाब्दबोधे विशिष्य संबन्धभाने संबन्धस्य तत्त्वेन जिज्ञासाया असंभवेन विशेषरूपेण संबन्धलाभप्रकारवर्णनं च व्यर्थं स्यादित्यवधेयम्।

## तद्विशेषलाभप्रकारोपन्यासः

**तदयमत्र क्रमः,प्रथमं लिङादिपदाद्व्यापारत्वेन सामान्यरूपेणैव व्यापारोपस्थितिः। पश्चादाख्यातोपस्थितकृत्तौ तस्य स्वविषयकज्ञानविशेषजन्यानुमितिप्रयोज्यत्वसंसर्गेण तत्त्वेनानुपस्थितेनैवान्वयः। शाब्दबोधश्च व्यापारवती यागादिकृतिरिति। न च लिङर्थविशेष्यक एव शाब्दबोध इति भ्रमितव्यम्, भावप्रधानमाख्यातमिति स्मृत्या लकारार्थप्रकारकशाब्दबोधत्वावच्छिन्नं प्रति अर्थभावनाविशेष्यतासम्बन्धेनाख्यातपदजन्योपस्थितिः कारणमिति कालादिसाधारण्येन एककार्यकारणभावकल्पनालाघवानुरोधेन चाख्यातार्थकृतेरेव मुख्यविशेष्यत्वात्।**

लिङर्थशाब्दभावनाविशेष्यकबोधं वदतां मतं निरस्यति — **न च लिङर्थैति।** **अर्थभावनाविशेष्यतासंबन्धेनेति।** कृतिनिष्ठविशेष्यतासंबन्धेनेत्यर्थः। **मुख्यविशेष्यत्वादिति।** तथा चोक्तकार्यकारणभावबलात् लकारार्थस्य सर्वस्य कृतौ प्रकारतया शाब्दबोधे भानात् लकारार्थभूतायाः शाब्दभावनायाः कृतावेवान्वयः इति भावः। **तस्यामेवान्वय इति।** आख्यातार्थकृतावेवान्वय इत्यर्थः। तथा च किं त्वमधीयीथाः इत्यत्र त्वत्कर्तृका अध्ययनानुकूला कृतिः संप्रश्नविषयीभूता इति शाब्दबोधः, वेदमधीयीय इत्यत्र च वेदाध्ययनकृतिः मत्प्रार्थनाविषयीभूतेति शाब्दबोधः इति भावः।

## अवशिष्टलिङर्थानां अन्वयप्रदर्शनम्

**सम्प्रश्नप्रार्थनयोरपि विषयतासम्बन्धेन तस्यामेवान्वयः, हेतुत्वादेरपि स्वरूपसम्बन्धेन तस्यामन्वयेऽपि तस्या उपलक्षणत्वादिनेतरक्रियायामन्वयः। लिङो वा हेतुमत्त्वरूपसंसर्गतात्पर्यग्राहकत्वम् तेनाख्यातार्थस्यैव 'आर्तिमाच्छेंदि'त्यादावितरक्रियान्वयो हेतुमत्त्वसंसर्गेणैवेति न कश्चिद्विरोधः।**

---

हेतुहेतुमतोर्लिङ् इति सूत्रेण हेतुत्वार्थेऽपि लिङो विधानात् तस्याख्यातार्थकृतौ तस्याः इतरक्रियायां चान्वयबोधप्रकारमाह — **हेतुत्वादेरपीति।** तथा च कृष्णं नमेच्चेत् सुखं यायात् इत्यत्र नमधातूत्तरलिङर्थस्य हेतुत्वस्य स्वरूपसंबन्धेन आख्यातार्थकृतावन्वयः। हेतुत्वविशिष्टायाः नमनानुकूलकृतेश्च सुखगमनकृतौ उपलक्ष्योपलक्षणभावसंबन्धेनान्वयः। अतश्च हेतुत्वविशिष्टकृष्णनमनकृत्युपलक्षिता सुखयानकृतिरित्यन्वयबोधः। यद्वा नमनकृतेः स्वनिष्ठहेतुतानिरूपकत्वसंबन्धेन सुखगमनकृतावन्वयः तादृशसंसर्गतात्पर्यग्राहको लिङ्। तथा च कृष्ण-

नमनकृतिहेतुका सुखगमनकृतिरिति शाब्दबोध इति भावः। हेतुमत्त्वेति। हेतुमत्त्वं हेतुतानिरूपकत्वं जन्यत्वमिति यावत्।

## कामप्रवेदनस्याप्यन्वयोपपादनम्

**एवं 'यदि शालीन् भुञ्जीत, तर्हि दध्युपसिञ्चे'दित्यादौ कामप्रवेदनेऽपि स्वविषयकेच्छानिमित्तकत्वं संसर्गः लिङ् तात्पर्यग्राहकः। आख्यातमेव वा इच्छालक्षकम्, यदि शालीन् भोक्तुमिच्छेद् इत्यत्र निमित्तत्वमेव संसर्ग इति न क्वापि व्युत्पत्त्यन्तरम्। अतश्च 'देवदत्तः पचेदि'त्यादौ लोके तावच्छाब्दबोधोत्तरं स्वसंसर्गस्य तत्त्वेन जिज्ञासायां 'चैत्रप्रेरितोऽहं पचामि' इत्यादिव्यवहारवशात् व्यापारस्येच्छारूपत्वेऽवगते, पाकविषयकृतिसम्बन्धात् 'पाकेऽयं प्रवर्ततामि'त्याकारकत्वे च तस्यास्सिद्धे, तदाश्रयस्य प्रयोजकवृद्धस्य प्रमाणान्तरेणाप्तत्वावगमे समानसंवित्संवेद्यतया 'पाकेऽयं प्रवर्ततामि'त्याद्याकारकाप्तनिष्ठेच्छाविषयकृतिविषयत्वरूपहेतुज्ञानं मानसं जायते, ततश्च तस्मिन् हेतौ क्रियान्तरदृष्टान्तेनेष्टसाधनत्वकृतिसाध्यत्वयोर्व्याप्तिस्मरणादुभयविषयिणी अनुमितिरुत्पद्यते।**

---

कामप्रवेदनार्थकलिङ्स्थलेऽपि कृतिमुख्यविशेष्यकशाब्दबोधमुपपादयति — **एवं यदि शालीनिति।** तथा चात्र भुञ्जीतेत्यत्र शालिभोजनकृतेः स्वविषयकेच्छानिमित्तकत्वसंबन्धेन दध्युपसेचनकृतावन्वयः। शालिभोजनकृतिविषयकेच्छाहेतुका दध्युपसेचनकृतिरिति शाब्दबोध इति भावः। **निमित्तत्वमेवेति।** स्वजन्यत्वमित्यर्थः **शाब्दबोधोत्तरमिति।** व्यापारप्रतियोगिकसंबन्धस्येत्यर्थः। **इच्छारूपत्वेऽवगत इति।** चैत्रप्रेरितोऽहं पचामीति व्यवहारबलाद्धि चैत्रस्य प्रेरकत्वं प्रतीयते। प्रवर्तकत्वं च प्रवृत्तिप्रयोजकज्ञानविषयेच्छाश्रयत्वमिति चैत्रनिष्ठप्रेरणरूपव्यापार-

स्येच्छात्मकत्वमवगम्यत इति भावः। तस्या इति। इच्छाया इत्यर्थः। तदाश्रयस्येति। इच्छाश्रयस्येत्यर्थः। प्रमाणान्तरेणेति। वचनेङ्गितादिनेत्यर्थः।

## नित्यकर्मविधौ लिङर्थविचारः

क्वचिच्चानिष्टसाधनीभूताकरणप्रतियोगित्वादेरपि, सामग्रीवशात्। तत्सामग्री च अयमत्र प्रवर्ततामित्याकारकस्वभङ्गनिमित्तकानिष्टकर्त्रिच्छाविषयत्वरूपहेतुपरामर्शादिरूपा। स्वपदमिच्छापरम्, इदञ्च तत्र तत्र कौस्तुभादौ स्पष्टम्। तस्याश्च प्रवृत्तिप्रयोजकत्वं स्पष्टमेवेति संसर्गस्य तत्त्वेन लाभः, इच्छाविशेषलाभश्चोभयं सुलभम्।

---

क्वचिच्चेति। निमन्त्रणस्थले इत्यर्थः। तथा च दौहित्रकर्तृकभोजनं अनिष्टसाधनीभूतस्वाकरणकं अयमत्र प्रवर्ततामित्याकारकस्वभङ्गनिमित्तकानिष्टजनकेच्छाविषयत्वादिति अनुमानप्रयोगो बोध्यः।

## वैदिकलिङ्स्थलेऽनुमितिप्रकारनिरूपणम्

## मीमांसकमतेन आप्तत्वनिर्वचनं च

वेदेऽपि लिङादिशब्दश्रवणोत्तरकालं व्यापारत्वरूपेण व्यापाररूपपदार्थोपस्थित्या निरुक्तसम्बन्धेन व्यापारवती यागादिकृतिरि'ति शाब्दबोधे जाते, सम्बन्धस्य तत्त्वेन जिज्ञासायां, वेदस्थलिङादिप्रेरितोऽहं यागादि करोमीत्यादिव्यवहाराद्‌ यागविषयकृतिसम्बन्धाच्च तस्य लिङादिनिष्ठत्वं यागेऽयं प्रवर्ततामित्याकारकत्वं चावगम्यते। अत एव वर्णात्मकलिङादेर्नित्यत्वात् तद्वृत्त्यलौकिकधर्मस्यापि नित्यत्वम्। न च भ्रमप्रमासाधारण्येन तज्ज्ञानस्यैवानुमितिजनकत्वाल्लोकवदेव

तत्सिद्धौ प्रमाणाभावः। वेदोत्थज्ञानस्य भ्रमत्वनुपपत्त्या तत्सिद्धेः। तस्मिन् यागविषयककृतिविषयिता च न ज्ञानादिविषयितासाधारणी, अतिरिक्ता वा, अपि तु पाकेऽयं प्रवर्ततामित्यादिलौकिकेच्छानिष्ठविषयितासाधारणी इच्छासामान्यनिष्ठ-विषयिताभिन्ना लिङाद्यर्थमात्रनिष्ठा, अनुगतप्रतीतेरेव तत्र प्रमाणत्वात्। अतश्च लिङादेर्निर्दोषत्वेनानाप्तभिन्नत्वेऽवधारिते समानसंवित्संवेद्यतयैव प्रतारणाद्यजन्य-हिताहितोपदेशजनकनिष्ठनिरुक्ताकारकव्यापारविषयीभूतकृतिविषयत्वरूपहेतुज्ञानं तथैव मानसं जायते। अत एव लोकवेदसाधारणं प्रतारणाद्यजन्यहिताहितोपदेश-कर्तृत्वे सति तद्भिन्नोपदेशाकर्तृत्वमाप्तत्वम्। अतश्च तेनेष्टसाधनत्वाद्यनुमितिर्लोक-वदेव नानुपपन्ना। न च भ्रमप्रमासाधारण्येन इष्टसाधनत्वाद्यनुमितेरेव प्रवृत्ति-प्रयोजकत्वान्न भवन्मते यागादावपीष्टसाधनत्वादिसिद्धिः, ज्ञानस्यास्मन्मते स्वतः प्रमाणत्वेन दोषाद्यभावे प्रमात्वस्यैव सिद्धेः। सल्लिङ्गकपरामर्शस्य भ्रान्तानु-मित्यजनकत्वाच्च। अतस्सिद्धं शक्यतावच्छेदकस्यातिप्रसक्तत्वेऽपि लोके वेदे वा विशेषलाभो निरुक्तसंसर्गलाभश्चेति।

## अखण्डस्य व्यापारत्वरूपधर्मस्य लिङ्पदशक्यतावच्छेदकत्वम्

अथवा लोकवेदसाधारणः पूर्वोक्तविधया प्रवृत्तिविशेषप्रयोजकतावच्छेदकतया सिद्धो व्यापारत्वरूपोऽखण्डधर्म एवानतिप्रसक्तो लिङादिपदशक्यतावच्छेदकः।

---

अथ वैदिकवाक्ये संसर्गविशेषलाभप्रकारं व्यापारविशेषस्यालौकिकधर्मस्य लिङ्निष्ठस्य बोधप्रकारं च वर्णयति — वेदेऽपीति। अयमत्र संग्रहः — यजेत इत्यादिलिङ्श्रवणोत्तरकालं व्यापारत्वेन रूपेण व्यपारप्रकारके संबन्धत्वेन रूपेण स्वविषयकज्ञानजन्यानुमितिप्रयोज्यत्वसंसर्गके कृतिविशेष्यके च व्यापारवती

7

यागादिकृतिरित्याकारके शाब्दबोधे जाते संबन्धः कः इति विशेषजिज्ञासायां वेदस्थलिङादिप्रेरितोऽहं यागादि करोमीति व्यवहारात् तस्य व्यापारस्य लिङादिनिष्ठत्वं यजेतेति समभिव्याहारलब्धयागकृतिसंबन्धात् यागेऽयं प्रवर्ततामित्याकारकत्वं च लभ्यते। ततः अपौरुषेयस्थलिङादेः निर्दोषत्वज्ञानेन अनाप्तभिन्नत्वे निश्चिते प्रतारणाद्यजन्यहिताहितोपदेशजनकत्वरूपमाप्तत्वं निश्चीयते। ततो मनसा प्रतारणद्यजन्यहिताहितोपदेशजनकलिङादिनिष्ठो यः यागेऽयं प्रवर्ततामित्याकारको व्यापारः तद्विषयप्रवृत्तिविषयत्वरूपहेतुज्ञनमुत्पद्यते। तत्र च हेतौ इष्टसाधनत्वनिरूपितव्याप्तिस्मरणेन इष्टसाधनत्वानुमितिर्भवति ततश्च प्रवृत्तिर्भवतीत्येवं क्रमेण संसर्गविशेषः व्यापारविशेषश्च बुध्यत इति।

उक्तसंबन्धेनेति। तृतीयार्थोऽभेदः व्यापारवतीत्यत्र मतुबर्थे संबन्धेऽन्वेति। तथा च संबन्धत्वेन रूपेणैव निरुक्तसंबन्धस्य बोधः, बोधाकारश्च उक्तसंबन्धाभिन्नव्यापारसंबन्धवती यागादिकृतिरितीत्यवधेयम्। **यागविषयककृतिसंबन्धाच्चेति**। यजेतेति समभिव्याहारलब्धयागविषयककृतिसंबन्धादित्यर्थः। यथासंख्यमत्रान्वयः। **अत एवेति**। वेदस्थलिङादिनिष्ठत्वव्यवहारादित्यर्थः। **न चेति**। तथा च यथा लोके नेच्छायाः स्वरूपेण प्रवृत्तिं प्रति प्रयोजकत्वम्, इच्छायाः अभावेऽपि इच्छाविषयकभ्रमेण प्रवृत्त्युत्पत्तेः, स्वरूपेण कारणत्वे लिङुक्तिवैयर्थ्याच्च। अपि तु भ्रमप्रमासाधारणेच्छाविषयकज्ञानस्यैव प्रवृत्तिप्रयोजकत्वम्, तथा वेदेऽपि इच्छास्थानीयालौकिकधर्मविषयकज्ञानस्यैव भ्रमप्रमासाधारणस्य इष्टसाधनत्वानुमितिद्वारा प्रवृत्तिजनकत्वं वक्तव्यमिति अलौकिकधर्मसत्ता न निश्चीयत इति शङ्कार्थः। समाधानमाह — **वेदोत्थज्ञानस्येति**। **भ्रमत्वानुपपत्त्येति**। भ्रमत्वप्रयोजकविप्रलिप्साद्यभावादिति भावः। **तस्मिन्नित्यादि**। यागेऽयं प्रवर्ततामित्याकारकेच्छायाः यागविषयककृतिविषयकत्वं वर्तते। इच्छानिष्ठा या यागविषयककृति-

निरूपिता विषयिता तदभिन्नेत्यर्थः। **अपि चेत्यादि।** इच्छासामान्यनिष्ठविषयितातो भिन्ना प्रवर्तताम् इत्याकारकप्रवृत्तिविषयकसकलेच्छासाधारणी लिङर्थनिष्ठा विषयितैवात्र विवक्षितेति भावः.

एवं विवक्षायाः प्रयोजनं चेदम् — **प्रतारणाद्यजन्येत्यादि।** प्रतारणाद्यजन्य-हिताहितोपदेशजनकरूपाप्तनिष्ठो यः कारकव्यापारः प्रवर्तनात्मकः इच्छारूपः अलौकिकधर्मरूपो वा व्यापारः तद्विषयीभूता या कृतिः तद्विषयत्वरूपो यो हेतुः तद्विषयकज्ञानमित्यर्थः। **अत एवेति।** शक्यतावच्छेदकस्य लोकवेदसाधारणत्वा-देव तद्घटकमाप्तत्वमपि लोकवेदसाधारणमिति भावः। **तेनेति।** पूर्वोक्तहेतुज्ञाने-नेत्यर्थः।

लिङादिशक्यतावच्छेदकस्य व्यापारत्वस्यातिप्रसक्तत्वेऽपि तेन रूपेण व्यापार-विशेषलाभमुपपाद्य अनतिप्रसक्तं शक्यतावच्छेदकमाह — **अथ वेति। पूर्वोक्त-विधयेति।** स्वतस्सिद्धेष्टसाधनताज्ञानजन्यप्रवृत्तौ प्रेरणायाः अप्रयोजकत्वात् प्रेरणा-प्रयोज्यतावच्छेदकतया प्रवृत्तित्वव्याप्यधर्मविशेषः सिध्यति इति विधयेत्यर्थः।

## तात्पर्यज्ञानदृष्टान्तेन विषयिताविशेषस्य लिङ्शक्यतावच्छेकत्वोपपादनम्

**अथवा 'अयमत्र प्रवर्तताम्'त्याकारकत्वरूपस्य लोकवेदसाधारणस्य विषयिता-विशेषस्य पूर्वमुक्तत्वात्स एव लिङादिशक्यतावच्छेदकः। एष्टव्यश्चायमेव प्रकारः शाब्दबोधत्वावच्छिन्नं प्रति, लक्षणादिजन्यशाब्दबोधत्वावच्छिन्नं प्रति वा लोक-वेदसाधारण्येन तात्पर्यज्ञानस्य भट्टमते कारणत्वनिर्वाहार्थम्। न 'ह्यस्मात् पदा-दयमर्थो बोद्धव्यः' इत्याकारकेच्छारूपं तात्पर्यं वेदे सम्भवति। अतस्तत्राति-रिक्तश्शब्दनिष्ठो धर्मविशेष एव तात्पर्यं भट्टमते वाच्यम्। न च तज्ज्ञानस्य कारणत्वं लोके क्लृप्तम्। अत्रैवातिरिक्तकार्यकारणभावकल्पने मानाभाव — एव। अतो**

**विषयिताविशेषस्यैवानुगतव्यवहारादुभयसाधारणत्वमङ्गीकृत्य कारणतावच्छेदकत्वं वाच्यम्, तद्वदिहापि विषयिताविशेषस्यैव प्रवृत्तिप्रयोजकतावच्छेदकत्वं लिङादिपदशक्यतावच्छेदकत्वं च।**

---

पक्षान्तरमाह — **अथवेति।** **इत्याकारकत्वरूपस्येति।** यागादिविषयककृतिनिरूपितविषयितारूपस्येत्यर्थः। **लोकवेदसाधारणस्येति।** पुरुषाभिप्रायालौकिकव्यापारोभयसाधरणस्य इत्यर्थः। **कारणतावच्छेदकत्वमिति।** विषयिताविशेषप्रकारेण तात्पर्यज्ञानस्य कारणत्वे तात्पर्यस्य विषयितासंबन्धेन कारणतावच्छेदकत्वम्। तात्पर्यनिष्ठविषयिताविशेषस्य कारणतावच्छेदकतावच्छेदकत्वम्। तथा च कारणतावच्छेदककोटिप्रविष्टस्यापि कारणतावच्छेदकत्वमित्यभिप्रायेण एवमुक्तमिति ध्येयम्। **प्रवृत्तिप्रयोजकतावच्छेदकत्वमिति।** प्रवृत्तिकारणतावच्छेदकतावच्छेदकत्वमित्यर्थः।

## इच्छासाधारणी विषयिता शब्दधर्म इति पक्षकथनम्

**यदि तु निरुक्तविषयिताविशेष्यस्य इच्छात्वव्याप्यत्वमेवेत्याग्रहः, तदा वैदिकलिङादिनिष्ठव्यापारस्यापीच्छारूपत्वे न काचित् क्षतिः, गुणे गुणानङ्गीकारस्य निर्युक्तिकत्वेन अश्रद्धेयत्वात्, श्रद्धेयत्वेऽपि वा शब्दस्य द्रव्यत्वोपपत्तेः, जीवातिरिक्तेश्वरे नित्येच्छाङ्गीकारवद्वैदिकशब्देऽपि नित्येच्छाङ्गीकारे बाधकाभावात्।**

**यदि त्विच्छात्वस्यात्मनिष्ठत्वव्याप्यत्वमेवेत्याग्रहः, तदा लिङादिवैदिकशब्दे श्रौतात्मशब्दप्रयोगाभावेनेश्वर इवात्मत्वाङ्गीकारे मानाभावादुपनिषदादिप्रमाणगम्यमीश्वरमप्यङ्गीकृत्य तदिच्छैव तत्तदाकारिका वेदे लिङाद्यर्थस्तात्पर्यरूपा च। वेदस्थलिङादिबोध्यत्वादिति सर्वथा नेष्टसाधनत्वादिकं विध्यर्थः।**

---

एतावता पुरुषाशयालौकिकधर्मोभयसाधारणत्वं विषयिताविशेषस्याभ्युपगम्य तस्य लिङादिशक्यतावच्छेदकत्वं स्थापितम्। अथ अयमत्र प्रवर्ततामित्याकारकत्वरूपस्य विषयिताविशेषस्य इच्छायामेव विद्यमानता न तु इच्छाभिन्ने इति यदि कश्चिद्ब्रूयात् तदा तस्य कथं शक्यतावच्छेदकत्वं न्यूनवृत्तित्वादिति शङ्कायां वैदिकलिङादिनिष्ठो व्यापारोऽपीच्छारूप एवातो न कोऽपि दोष इत्याह — **यदि त्वित्यादिना**। इच्छात्वव्याप्यत्वं इच्छात्वशून्यावृत्तित्वम्, इच्छायामेव विद्यमानत्वमिति यावत्। ननु वैदिकलिङः शब्दरूपत्वात् शब्दस्य च गुणत्वात् गुणे च गुणान्तराश्रयत्वानङ्गीकारात् कथं वैदिकलिङ्निष्ठो व्यापारः इच्छारूपो गुणो भवेदित्यत्राह — **गुणे गुणानङ्गीकारस्येति**। ननु कथमश्रद्धेयत्वम्, गुणानां च परार्थत्वादसंबन्धः समत्वात् स्यात् इति न्यायेन परस्पराश्रयाश्रयिभावानुपपत्तेः इत्यत्राह — **श्रद्धेयत्वेऽपि वेति**। ननु इच्छायाः आत्मनिष्ठत्वात् अनात्मनि वैदिकलिङि कथमिच्छारूपव्यापारः स्यादित्याशङ्क्य समाधत्ते — **यदि त्वित्यादिना**। **आत्मनिष्ठत्वव्यप्यत्वमेवेति**। आत्मनिष्ठत्वशून्यावृत्तित्वं, आत्मनिष्ठे एव विद्यमानत्वमिति यावत्। इच्छात्वं आत्मनिष्ठधर्म एव भवतीत्युक्त्या च इच्छा आत्मन्येवास्तीति पर्यवस्यति। **तात्पर्यरूपा चेति**। तथा च वैदिकलिङादिश्रवणानन्तरं लिङर्थभूता या अयमत्र प्रवर्ततामित्याकारिका ईश्वरेच्छा तद्विषयकज्ञानं भवति। तेन इष्टसाधनत्वानुमितिद्वारा प्रवृत्तिर्भवतीति भावः।

**वस्तुतस्तु इच्छात्वं जातिरेव लिङादिशक्यतावच्छेदिका, लाघवात्। विशेषलाभः पूर्ववत्। वेदे त्वलौकिकप्रेरणायां लक्षणा, अन्यत्सर्वं पूर्ववदित्यपि वक्तुं शक्यम्।**

---

नन्वेवं सति ईश्वरेच्छैव प्रेरणेत्युक्तं भवति। तस्याश्च ईश्वरनिष्ठत्वेन लिङ्-निष्ठत्वाभावात् कथं वेदस्थलिङादिप्रेरितोऽहं यजे इति व्यवहारस्योपपत्तिः इत्यत्राह — **वस्तुतस्त्विति। लाघवादिति।** अयमत्र प्रवर्ततामित्याकारकत्व-रूपविषयिताविशेषापेक्षयेति शेषः। **विशेषलाभ इति।** इच्छाविशेषलाभः संबन्ध-विशेषलाभश्चेत्यर्थः। **पूर्ववदिति।** इच्छावती कृतिरित्यन्वयबोधोत्तरं तत्त्वेन जिज्ञा-सायां यागविषयककृतिसंबन्धात् यागेऽयं प्रवर्ततामित्याकारकेच्छाविशेषलाभ इत्यादिकं ज्ञेयमित्यर्थः। **अन्यत्सर्वमिति।** अलौकिकप्रेरणापि स्वविषयकज्ञान-जन्यानुमितिप्रयोज्यत्वसंबन्धेन कृतावन्वेतीत्यादिकमित्यर्थः।

## निषेधवाक्येषु लिङर्थनिरूपणम्

**एवं 'चैत्रो न पचेत्, न कलञ्जं भक्षयेत्' इत्यादौ नञ्-समभिव्याहृत-लिङादिस्थलेऽपि न तावद्बलवदनिष्टाननुबन्धित्वं लिङर्थः, तदभावो नञा बोध्यत इति पक्षस्सुवचः, पूर्वमेव निरस्तत्वात्। नापि अनिष्टसाधनत्वे लिङो लक्षणा, नञ्पदं तात्पर्यग्राहकमिति नवीनतार्किकमतं युक्तम्। 'ज्योतिष्टोमेन न यजेत' इति लौकिकवाक्यस्य प्रामाण्यापत्तेः, श्रुत्या स्वर्गसाधनत्वावगमेऽपि तात्कालिकानिष्ट-साधनत्वस्य यागे बाधाभावात्। न हि नरकादिरूपकालान्तरभाव्यनिष्टजनकत्वमेव निषेधार्थ इत्यत्र प्रमाणमस्ति, 'अग्निं न स्पृशेद्' इत्यादि लौकिकवाक्ये व्यभिचारात्। 'नातिरात्रे षोडशिनं गृह्णाति' इत्यादावुभयथापि व्यभिचाराच्च।**

---

एतावता विधिस्थले तार्किकाद्यभिमतलिङर्थदूषणपूर्वकं स्वमतेन लिङर्थमुप-वर्ण्य निषेधस्थले लिङर्थं वक्तुं मतान्तरमुपन्यस्य दूषयति — **एवं चैत्र इत्यादिना। पूर्वमेव निरस्तत्वादिति।** सप्तकार्यकारणभावप्रदर्शनपूर्वकं निरस्तत्वादित्यर्थः। ननु

निषेधस्थले लिङोऽनिष्टसाधनत्वे लक्षणा, तस्य च धात्वर्थ एवान्वयः। तथा च न कार्यकारणभावभेदः। नञ्सहितस्थले लिङर्थस्य नञर्थेऽन्वयः इति स्वीकारे हि कार्यकारणभावे भेदः पूर्वमापादितः। उभयत्रापि लिङर्थस्य धात्वर्थ एवान्वय-स्वीकारे विशेष्यतासंन्धेन लिङर्थप्रकारकशाब्दबोधे विशेष्यतासंबन्धेन धातु-जन्योपस्थितिः कारणमिति एकस्यैव कार्यकारणभावस्य कल्पनादित्याशयानस्य तार्किकस्य मतं निरस्यति — **नापि अनिष्टसाधनत्वे लिङो लक्षणेति। बाधा-भावादिति।** तथा च नञ्समभिव्यहारस्थले लिङोऽनिष्टसाधनत्वे लक्षणाङ्गीकारे ज्योतिष्टोमेन न यजेत इति लौकिकवाक्यस्य प्रामाण्यं प्रसज्येत। तस्माद्वाक्याद्धि ज्योतिष्टोमयागः अनिष्टसाधनमिति बोधः भवत्संमतः। स च प्रमैव। ज्योतिष्टो-मयागस्य तादात्विकशरीरायासादिजन्यदुःखसाधनत्वेन विषयाबाधात्। न च ज्योतिष्टोमेन स्वर्गकामो यजेत इति श्रुत्या स्वर्गरूपेष्टसाधनत्वावगमात् तद्विरुद्ध-मनिष्टसाधनत्वं कथं ज्योतिष्टोमे उक्तलौकिकवाक्याद्बोधयितुं शक्यमिति वाच्यम्। स्वर्गसाधनस्यापि यागस्य तात्कालिकायासादिदुःखसाधनत्वाव्यभिचारेण तद्बोधने विरोधानवकाशात् इति भावः।

ननु नञ्समभिव्याहृतस्य लिङः कालान्तरभाविनरकादिरूपानिष्टसाधनत्वमेव लक्षणया अर्थः। तथा च ज्योतिष्टोमेन न यजेत इति लौकिकवाक्येन यागे नरक-साधनत्वमेव बोधनीयम्। तच्च श्रौतस्वर्गसाधनत्वविरुद्धमिति विषयबाधान्नोक्त-लौकिकवाक्यस्य प्रामाण्यप्रसङ्ग इति शङ्कामपनुदति — **न हीति। निषेधार्थ इति।** निषेधतात्पर्यविषय इत्यर्थः। नञ्समभिव्याहृतलिङ्लक्ष्यार्थ इति यावत्। **व्यभिचारादिति।** अग्निस्पर्शस्य तात्कालिकदाहादिरूपानिष्टजनकत्वेऽपि काला-न्तरभाव्यनिष्टजनकत्वाभावेन अग्निं न स्पृशेत् इति वाक्यस्य प्रामाण्यं न स्यादिति भावः। ननु श्रुतिप्रतिपन्नेष्टसाधनताकार्थवाचकधातूत्तरनञ्समभिव्याहृतलिङः

अनिष्टसाधनत्वे लक्षणा। अन्यत्र तु यथासंभवं तात्कालिकानिष्टसाधनत्वे वा कालान्तरभाव्यनिष्टसाधनत्वे वा लक्षणा अतो नोक्तदोष इत्यत्राह — **नातिरात्र इति। उभयथापि व्यभिचारादिति।** उभयविधानिष्टसाधनत्वस्यापि तत्राभावादित्यर्थः।

**यदि हि तात्कालिकानिष्टसाधनत्वं तत्र निषेधार्थः, तदा तस्य प्रमाणान्तरसिद्धानुवादकत्वेऽपि 'अतिरात्रे षोडशिनं गृह्णाति' इत्यनेनेष्टसाधनत्वस्य बोधात् क्रत्वङ्गतया नित्यवत् करणापत्तिः। अथ तत्र वैयर्थ्यभिया क्रतुगतवैगुण्यरूपानिष्टसाधनत्वमेव नानृतं वदेत् इतिवत्तदर्थः, तदैकस्यैव क्रतुसाद्गुण्यतद्वैगुण्यजनकत्वविरोधः। अथ विरोधपरिहारार्थं वैगुण्यापेक्षया साद्गुण्याधिक्यं कल्प्येत। तदा तात्कालिकानिष्टसाधनत्ववद् वैगुण्यस्यापि नान्तरीयकत्वापत्तेर्नित्यवत् करणापत्तिः।**

---

विहितत्वेन कालान्तरभाव्यनिष्टसाधनत्वं तत्र बाधितमिति स्पष्टमिति मनसिकृत्य तात्कालिकानिष्टसाधनत्वस्य तत्र बाधमुपपादयति — **यदि हीति।** कालान्तरभावीष्टसाधनत्वे सति तात्कालिकानिष्टसाधनं हि यागादि। तत्तुल्यमिदानीमतिरात्रं संजातमिति तद्वदेव नित्यमनुष्ठीयेत न विकल्पेनेति भावः। तात्कालिकानिष्टसाधनत्वस्य प्रत्यक्षसिद्धत्वेन तद्बोधकस्य नातिरात्र इति वाक्यस्य वैयर्थ्यं च स्यादिति ध्येयम्। क्रतोर्वैगुण्यं अङ्गवैकल्यम्। साद्गुण्यं च अङ्गपौष्कल्यम्। **साद्गुण्याधिक्यमिति।** क्रतोः षोडशिग्रहणरूपाङ्गराहित्येन यत् फलं भवति तदपेक्षया तादृशाङ्गवत्त्वफलमधिकमिति भावः। **नान्तरीयकत्वापत्तेरिति।** अवश्यंभावित्वापत्तेरित्यर्थः।

**अस्मन्मते तु वक्ष्यमाणरीत्या प्रवृत्त्यभावप्रयोजकप्रवृत्तिसामग्रीविघटनाय षोडशिग्रहणाभावेऽपि इतराङ्गैरेव क्रतुमहोपकारसिद्ध्यनुमितेरेव तत्र संसर्गघटकतयोक्तविधानुमित्या प्रवृत्त्यभावोपपत्तौ तत्रानिष्टसाधनत्वाननुमानात्।**

---

अस्मन्मते त्वित्यादि। **प्रवृत्त्यभावप्रयोजकेति** विघटनेऽन्विति। तथा च नातिरात्र इत्यादौ अयमितो निवर्ततामित्याकारकेच्छाविशेषरूपनिवर्तनाविषयकज्ञानात् षोडशिग्रहणमतिरात्रानुपकारकमिति अनुमितिर्जायते। तया च अतिरात्रे षोडशिनं गृह्णातीतिवाक्यावगतेष्टसाधनताज्ञाने प्रयोगविशेषावच्छेदेन अप्रामाण्यं ज्ञायते। ततश्चाप्रामाण्यज्ञानविशिष्टेष्टसाधनताज्ञानस्यैव सत्त्वेन अप्रामाण्यज्ञानाभावविशिष्टेष्टसाधनताज्ञानरूपस्य प्रवृत्तिकारणस्य अभावेन न प्रवृत्तिरित्येवं प्रवृत्तिसामग्रीविघटनमिति भावः। **संसर्गघटकतयेति।** स्वविषयकज्ञानजन्यानुमितिप्रयोज्याभावप्रतियोगित्वरूपो यः संसर्गः तद्घटकतयेत्यर्थः। **उक्तविधानुमित्येति।** इतराङ्गैरेव क्रतुमहोपकारसिद्ध्यनुमित्येत्यर्थः। अतिरात्रानुपकारकत्वानुमित्येत्यर्थः। **अनिष्टसाधनत्वाननुमानाद् इति।** तथा च न विधिप्रतिपन्नेष्टसाधनत्वविरोध इति भावः। अतश्च नञ्समभिव्याहारस्थले लिङः अयमितो निवर्ततामित्याकारकेच्छाविशेषोऽर्थः। तस्य च स्वविषयकज्ञानजन्यानुमितिप्रयोज्याभावप्रतियोगित्वसंबन्धेनाख्यातार्थकृतौ अन्वय इत्येवोपपत्तौ नानिष्टसाधनत्वे तार्किकोक्ता लक्षणा आवश्यिकीति सारम्।

**अत एव विध्युत्तरनिषेधे सर्वत्र विधिप्रमितेष्टसाधनत्वाभावस्यैव बोधनात्, द्वयोर्वैदिकत्वे प्रयोगभेदेन प्रामाण्योपपत्तावपि श्रौतविधिविरोधे लौकिकवाक्यस्याप्रामाण्यं नानुपपन्नम्।**

---

ननु विध्युत्तरनिषेधस्थले निषेधेन विधिप्रमितेष्टसाधनत्वाभावस्य अनुमानविधया बोधनं इति स्वीकारे ज्योतिष्टोमेन यजेत इति विध्युत्तरस्य ज्योतिष्टोमेन न यजेत इति लौकिकवाक्यस्यापि प्रामाण्यं स्यात्। नातिरात्रन्यायेन तत्रापि विधिप्रमितेष्टसाधनत्वाभावस्य निषेधेनानुमानसंभवात् इत्याशङ्क्य समाधत्ते — **अत एवेति**। अनिष्टसाधनत्वाननुमानादेवेत्यर्थः। **नानुपपन्नमिति**। नातिरात्रातिरात्रवाक्ययोर्द्वयोरपि श्रुतित्वेन समबलतया प्रयोगविशेषावच्छेदेन प्रामाण्यसंभवेऽपि लौकिकवाक्यस्य दुर्बलत्वान्न परिश्रमेण वा प्रामाण्यं संपादनीयमिति भावः।

## तार्किकाभिमतपूर्वोक्तनिषेधवाक्यार्थमनूद्य निराकरणम्

**एतेन इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वमेव शक्त्या, लक्षणया वा नञसमभिव्याहारे लिङाद्यर्थः। तदभावस्तादृशदुःखजनकत्वरूपो बलवदनिष्टानुबन्धित्वं नञर्थः। तस्य च धात्वर्थे अन्वयः। नातो लौकिकवाक्यस्य प्रामाण्यापत्तिः निर्मूलत्वादित्यपास्तम्, नातिरात्रे षोडशिनं गृह्णाति इत्यादावपि तदापत्तेः।**

---

**एतेनेत्यादि। तदभाव इति।** इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखाजनकत्वाभाव इत्यर्थः। **तादृशदुःखजनकत्वरूप इति।** इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखजनकत्वरूप इत्यर्थः। अभावाभावस्य प्रथमाभावप्रतियोगिस्वरूपत्वादिति भावः। **लौकिकवाक्यस्येति।** ज्योतिष्टोमेन न यजेतेति वाक्यस्येत्यर्थः। **निर्मूलत्वात् इति।** निष्प्रमाणकत्वादित्यर्थः। ज्योतिष्टोमेनेति वाक्याद्धि ज्योतिष्टोमयागः इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखजनकः इति शाब्दबोधो वक्तव्यः। स च न प्रमा। ज्योतिष्टोमस्य नरकादिसाधनत्वे प्रमाणाभावेन विषयबाधादिति भावः। **तदापत्तेरिति।** अप्रामाण्यापत्तेरित्यर्थः। षोडशिग्रहणस्य नरकादिजनकत्वे प्रमाणाभावात्

बाधितनरकसाधनत्वबोधकत्वेनाप्रामाण्यापत्तेरिति भावः। अथ वा तदापत्ते-रित्यस्य बलवदनिष्टानुबन्धित्वस्य नञर्थत्वापत्तेरित्यर्थः।

## पूर्वोक्तपक्षेषु न्यायमते दोषापादनम्, स्वमते तदभावोक्तिश्च

**किं च एतेषु सर्वेष्वपि पक्षेषु रागिणः कलञ्जभक्षणवर्तमानतावेलायाम्, चैत्रः कीदृशः इति प्रश्ने इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखजनककलञ्जभक्षणानुकूल-कृतिमानिति उत्तरवत् न कलञ्जं भक्षयेद् इति उत्तरवक्तुरसंबन्धप्रलापित्वानापत्तिः। श्येनवर्तमानतादशायां च श्येनेन न यजेत इत्युत्तरापत्तिः।**

---

किं चैतेषु पक्षेष्वित्पादि। 'न कलञ्जं भक्षयेत्' इत्यादि नञ् समभिव्याहृत-लिङादिस्यले बलवदनिष्टाननुबन्धित्वं लिङर्थः, तदभावो नञा बोध्यते इत्यादिना अनूद्य खण्डितेषु पक्षेषु रागिणः चैत्रस्य कलञ्जभक्षणदशायां चैत्रः कीदृशः इति प्रश्ने इष्टोत्पत्तिनान्तरीयकदुःखाधिकदुःखजनककलञ्जभक्षणानुकूलकृतितिमान् इति उत्तरं यथा उच्यते तथा 'न कलञ्जं भक्षयेत्' इत्यपि उत्तरं प्रामाणिकं स्यात्। अस्मात् वाक्यादपि उक्ताकारकस्यैव बोधस्य तन्मते जननात् तस्य चाबाधित-विषयकत्वात्। न चेष्टापत्तिः, तथा उत्तरवक्तुः असंबद्धप्रलापित्वं यत् सर्वसंमतम्, तदनुपपत्तिप्रसङ्गात्। अपि च श्येनयागवर्तमानतादशायां 'श्येनेन न यजेत इत्युत्तरापत्तिः'। इष्टोत्पत्तिनान्तरीपकदुःखाधिकदुःखजनकश्येनयागानुकूलकृति-मान् इति बोधस्य अबाधित विषयकत्वात्। इति भावः।

**अस्मन्मते तु वक्ष्यमाणरीत्या लिङर्थस्येच्छायाः स्वज्ञानविशेषजन्यानुमिति-संपादितप्रवृत्तिसामग्र्याभावकालीनाभावप्रतियोगित्वसंबन्धेनाख्यातार्थे कृतावन्व-यान्न तदापत्तिरिति वैषम्यम्।**

---

भवन्मते कथमुक्तापत्तिपरिहार इति शङ्कायामाह — **अस्मन्मते तु इति। वक्ष्यमाणरीत्येति।** स्वविषयकज्ञानविशेषजन्यानुमितिप्रयोज्याभावप्रतियोगित्व-संबन्धेन लिङर्थेच्छा आख्यातार्थकृतौ अन्वेतीति वक्ष्यते। नञ्पदं तात्पर्य-ग्राहकमिति च। तथा च स्वं = लिङर्थेच्छा = अयमितो निवर्तताम् इत्या-कारकेच्छा तद्विषयकं यत् ज्ञानं तज्जन्या अनुमितिः कलञ्जभक्षणमनिष्टसाधन-मित्यनुमितिः तत्प्रयोज्यो योऽभावः प्रवृत्त्यभावः तत्प्रतियोगित्वं प्रवृत्तावस्तीति। प्रकृते रागिणः कलञ्जभक्षणे प्रवृत्तिदशायां प्रवृत्त्यभावघटितोक्तसंसर्गबाधात् न कलञ्जं भक्षयेत् इति प्रयोगस्य नापत्तिरिति भावः।

**किञ्च 'चैत्रः कीदृशः' इति प्रश्नस्य नैवेदमुत्तरम्, प्रथमान्तमुख्यविशेष्य-कत्वाभावात्। कीदृशी कृतिरित्यस्यापि नोत्तरम्, लिङ्गधर्मितावच्छेदककप्रश्ने तद-नालिङ्गितोत्तरस्यासम्बद्धत्वात्। अत एव कीदृशी कृतिरिति प्रश्नस्यापि 'चैत्रः पचति, न पचती'त्यादि नैवोत्तरम्, लिङ्गानालिङ्गितत्वात्। अत एव कृतिमुख्यविशेष्यक-त्वमेव भट्टसम्मतम्। प्रथमान्तमुख्यविशेष्यकत्वे तादृशोत्तरस्यासम्बद्धत्वापत्तेः।**

---

परमते कीदृशः चैत्र इति प्रश्नस्य 'न कलञ्जं भक्षयेत्' इत्युत्तरापत्तिः। स्वमते तादृशापत्तिः न संभवतीत्याह — **किं चेत्यादिना।**

कृतिरूपभावनामुख्यविशेष्यकबोधवादिनामस्माकं मते कलञ्जभक्षणवेलायां चैत्रः कीदृश इति प्रश्नस्य 'न कलञ्जं भक्षयेत्' इत्युत्तरापत्तिर्न शक्या। शाब्दबोधस्य प्रथमान्तार्थमुख्यविशेष्यकत्वाभावेन प्रथमान्तार्थविशेष्यकप्रश्नस्य आख्यातार्थविशेष्यकबोधजनकवाक्यस्य उत्तरत्वाभावात्। नापि कीदृशी कृतिः इति प्रश्नस्य न कलञ्जं भक्षयेत् इत्युत्तरापत्तिः। प्रश्नस्य स्त्रीलिङ्गत्वेन उत्तरस्य स्त्रीलिङ्गत्वाभावात्। प्रश्नोत्तरयोः समानलिङ्गकत्वावश्यंभावात्। अत एव कीदृशी

कृतिः इति प्रश्नस्य चैत्रः पचति, न पचतीत्यादिः नोत्तरम्। लिङ्गानालिङ्गितत्वात् अत एव = लिङ्गालिङ्गितप्रश्नं प्रति लिङ्गानालिङ्गितशब्दस्योत्तरत्वासंभवादेव आख्यातार्थकृतिमुख्यविशेष्यकत्वं शाब्दबोधस्य भाट्टसंमतम्। शाब्दबोधस्य प्रथमान्तार्थमुख्यविशेष्यकत्वे तु पूर्वोक्तोत्तरस्य असंगतत्वानुपपत्तेः। यद्यपि चैत्रः कीदृश इति लिङ्गालिङ्गितप्रश्नस्य चैत्रः पचतीति लिङानालङ्गितमुत्तरं न प्रसजतीति नैयायिकोऽपि वक्तुं शक्नोति तथापि विशेष्यवाचकस्य चैत्रपदस्य लिङ्गालिङ्गितत्वात् आपत्तिः इति भावः। प्रथमान्तार्थमुख्यविशेष्यकत्वं यदि शाब्दबोधस्य स्यात् तदा पूर्वोक्तापत्तीनां प्रसक्त्या सर्वत्र नञ्सत्त्वे तदसत्त्वे च आख्यातार्थकृतिविशेष्यकत्वमेव बोधस्य युक्तमिति निगमयति — **अत एव इत्यादिना।**

**अतो नञ्समभिव्याहारस्थले, प्रवर्तनावन्निवर्तनापि निवृत्तिप्रयोजकतया अभ्युपेया, आचार्योपदेशादहं निवृत्तः, न स्वतः, न वाऽन्योपदेशादिति व्यवहारदर्शनात्। निवर्तनात्वञ्च प्राचां मते प्रवर्तनात्ववदेव निवृत्तिजनकव्यापारत्वादिरूपं भिन्नं बोध्यम्। तदवच्छिन्नं च लोके इच्छा, वेदे चाऽलौकिको धर्मः इत्यादि सर्वं पूर्ववत्। शक्ततावच्छेदकञ्च तस्या नञ्पदत्वम्। प्रवर्तनावाचकञ्च लिङादिपदं तात्पर्यग्राहकम्, इतरथा न पचति चैत्र इत्यादौ नञ्पदादत्यन्ताभावस्यैव बोधात्। लिङा वा निवर्तनोच्यते, नञ्पदं तु प्रवृत्त्यभावानुवादकं सत्तात्पर्यग्राहकमित्यादि प्राचीनमतं कौस्तुभ एव व्यक्तम्।**

---

अतो नञ्समभिव्याहारस्थले इति। न कलञ्जं भक्षयेत् इत्यादौ, निवर्तना लिङर्थः। नञसभिव्याहारस्थले यजेन इत्यादौ यथा प्रवर्तनायाः लिङर्थत्वं तद्वत्। तत्र प्रमाणम् — आचार्योपदेशात् अहं कलञ्जभक्षणात् निवृत्तः, न स्वतः, न वा

अन्योपदेशात् इति व्यवहारः। निवर्तनात्वं च प्राचां मते निवृत्तिजनकव्यापारत्वं, यथा प्रवृत्तिजनकव्यापारत्वं प्रवर्तनात्वं तद्वत्। निवर्तनात्वविशिष्टा निवर्तना च लोके अयमितो निवर्ततामित्याकारकेच्छा। वेदे चालौकिको धर्मः इत्यादि सर्वं प्रवर्तनायां यदुक्तं तद्वत्। शक्ततावच्छेदकं च नञ्पदत्वम्। नञ्समभिव्याहृतं लिङादि च तात्पर्यग्राहकम्। इतरथा प्रवर्तनाभावस्यैव बोधापनेः। यद्वा लिङा निवर्तना लक्षणया उच्यते। नञ्पदं तात्पर्यग्राहकम्, प्रवृत्त्यभावानुवादकं सत्।

## नञ्समभिव्याहृतलिङर्थविषयकशाब्दबोधस्यान्यथोपपादनम्

**वस्तुतस्त्वनेकशक्तिकल्पनापत्तेर्न प्रवर्तनानिवर्तनयोः पृथक्शक्तिः, प्रवृत्त्यभाव-निवृत्त्योर्वा भेदः, प्रामाणाभावाद् गौरवाच्च। अपितु आख्यातस्य कृतावेव, नञोऽभाव एव। लिङादेः प्रवर्तनानिवर्तनासाधारणव्यापारादावेव। शक्यताव-च्छेदकं च पूर्ववदतिप्रसक्तमनतिप्रसक्तं वा प्रवर्तनानिवर्तनासाधारणमेकमेव। यदि तु प्रवर्तनानिवर्तनासाधारण्येन नैका विषयितेत्याग्रहः, तदास्तु निवृत्तिविषयित्वा-वच्छिन्ने लिङादेर्लक्षणा, नञ्पदं तात्पर्यग्राहकमिति। तस्य च लिङर्थस्य स्व-विषयकज्ञानविशेषजन्यानुमितिप्रयोज्याभावप्रतियोगित्वसंसर्गेणाख्यातार्थे कृतावे-वान्वयः, नञ्पदञ्च संसर्गविशेषेपि (क) तात्पर्यग्राहकम्। अतो निरुक्तसंसर्गेण व्यापारवती कलञ्जभक्षणकरणिका कृतिरिति शाब्दबोधे वृत्ते संसर्गस्य तत्त्वेन भानं पूर्ववत्। अत्र हि निवारणाविषयकज्ञानात् कलञ्जभक्षणादयं निवर्ततामित्याकार-काप्तेच्छाविषयीभूताभावप्रतियोगिकृतिविषयत्वरूपहेतुज्ञानम्, तेन कलञ्जभक्षणेऽ-निष्टसाधनत्वानुमितिर्जायते।**

---

वस्तुतं इत्यादि। लिङः प्रवर्तनायां निवर्तनायां च न पृथक् शक्तिः, अनेक-शक्तिकल्पनापत्तेः। गौरवाच्च। किंतु आख्यातस्य कृतावेव शक्तिः। न तु निवृत्ता-

वपि शक्तिः। नञोऽभाव एवार्थः, न तु तात्पर्यग्राहकः। लिङ्लोडादेः प्रवर्तना-निवर्तनासाधारणव्यापारादावेव शक्तिः। यदि तु प्रवर्तनानिवर्तनासाधारणी एका विषायिता नास्तीत्याग्रहः तदा अस्तु निवृत्तिविषयकत्वावच्छिन्ने लिङादिलक्षणा। नञ्पदं तात्पर्यग्राहकमिति। सर्वमिदं पूर्वं प्रवर्तनास्वरूपनिरूपणावसरे स्पष्टीकृतम्।

तथा च न कलञ्जं भक्षयेत् इत्यत्र व्यापारो लिङर्थः। तस्य कृतौ स्वविषयक-ज्ञानविशेषजन्यानुमितिप्रयोज्याभावप्रतियोगित्वसंबन्धेनान्वयः। कलञ्जभक्षणस्य करणत्वसंबन्धेन कृतावन्वयः। तथा च निरुक्तसंबन्धेन व्यापारवती कलञ्जभक्षण-करणिका कृतिः इति शाब्दबोधे जाते संसर्गस्य तत्त्वेन ज्ञानं पूर्ववत् प्रवर्तनायामिव भवति। अत्र हि निवर्तनारूपव्यापारविषयकज्ञानात् 'कलञ्जभक्षणादयं निवर्तताम्' इत्याकारकाप्तेच्छाविषयीभूतो योऽभावः कृत्यभावः तत्प्रतियोगिनी या कृतिः तद्विषयत्वरूपहेतोः ज्ञानं भवति। तेन कलञ्जभक्षणेऽनिष्टसाधनत्वानुमितिः जायते, तया च कलञ्जभक्षणान्निवर्तते।

कलञ्जभक्षणम् अनिष्टसाधनम् कलञ्जभक्षणादयं निवर्ततामित्याकारकाप्तेच्छा विषयीभूताभावप्रतियोगिकृतिविषयत्वात् इत्यनुमानप्रयोगः।

## विहितनिषेधवाक्येषु शाब्दबोधे विशेषवर्णनम्

**एवं नातिरात्रे षोडशिनं गृह्णाती'त्यादौ विहितनिषेधे तादृशोक्तविधहेतुज्ञानात् षोडशिग्रहणेऽतिरात्रानुपकारकत्वानुमितिद्वारा तद्यतिरेकेणैवेतराङ्गैः क्रतूपकार-सिद्धेरप्यनुमानम्, उक्तानुमितेश्च प्रवृत्तिसामग्रीविघटकतया प्रवृत्त्यभावप्रयोज-कत्वम्। तथा हि — यत्रानिष्टसाधनत्वानुमितिः, तत्र प्राचीनकर्मवशाद्द्वेषगतबल-**

वत्त्वे सति बलवदनिष्टानुबन्धित्वज्ञानरूपप्रतिबन्धकसंपादनात् तदभावघटित-सामग्रीविघटनम्।

---

**एवं नातिरात्र** इति। 'अतिरात्रे षोडशिनं गृह्णाति' इति विहितस्य षोडशि-ग्रहणस्य 'नातिरात्रे षोडशिनं गृह्णाति' इति निषेधे पूर्वोक्तहेतुज्ञानात् षोडशिग्रहणं विना इतराङ्गैः क्रतूपकारसिद्धिः अनुमीयते। तादृशानुमितेश्च प्रवृत्त्यभावप्रयो-जकत्वम्।

तथा हि — यत्रानिष्टसाधनत्वानुमितिः 'न कलञ्जं भक्षयेत्' इत्यादौ तत्र प्रवृत्तिं प्रति बलबदनिष्टानुबन्धित्वज्ञानाभावरूपायाः सामग्र्याः विघटनात् प्रवृत्त्यभावः इति स्थितिः। तथा हि — कलञ्जभक्षणजन्ये नरके अनिष्टे बलबद्द्वेषविषये यस्य पुरुषय द्वेषोऽस्ति, तस्य पुरुषस्य कलञ्जभक्षणं द्वेषविषय (अनिष्ट) साधनम् इति ज्ञानमावश्यकमिति तादृशज्ञानस्य प्रवृत्ति प्रतिबन्धकतया तदभावरूपा सामग्री नास्तीति न प्रवर्तते। अनिष्टसाधनत्वज्ञानं तु अनुमितिरूपमिति पूर्वमुपपादितम्।

नातिराञे षोडशिनं गृह्णातीत्यत्र तु प्रवृत्त्यभाव इत्थम् उपपादनीयः — तद्वाक्यश्रवणानन्तरं पूर्वोक्तेन स्वविषयकज्ञानविशेषजन्यानुमितिप्रयोज्याभावप्रति-योगित्वरूपसंबन्धेन व्यापारवती कृतिः इति ज्ञाने जाते, तेन षोडशिग्रहणमति-रात्रानुपकारकमिति अनुमितिः जायते। तदनन्तरं षोडशिग्रहणव्यतिरिक्तैः अङ्गैः क्रतूपकारसिद्धेरनुमानम्। तेन षोडशिग्रहणात् निवृत्तिरिति क्रमोऽत्र विवक्षितः। अनेनान्तिमेनानुमानेन क्रतूपकारकत्वज्ञानरूपायाः प्रवृत्तिसामग्रयाः विघटनात् तत्र षोडशिग्रहणे प्रवृत्त्यभावः इति ज्ञेयम्।

(1) अतिरात्रे षोडशिग्रहणं नानुष्ठेयम् अनुपकारकत्वात्

(2) षोडशिग्रहणम् अतिरात्रानुपकारकम् अयमत्र न प्रवर्तताम् इत्याकारकाप्तेच्छाविषयीभूताभावप्रतियोगिकृतिविषयत्वात्।

(3) अतिरात्रं षोडशिग्रहणाधीनोपकाराभाववत् अङ्गान्तराधीनोपकारवत्त्वात्

इत्यनुमानान्यत्र विवक्षितानि । इदं सर्वं मनसिनिधाय मूलग्रन्थः पठनीयः।

## नञर्थान्वयनिष्कर्षः

यद्यपि चोभयत्रापि प्रतिबन्धकसंसर्गाभावस्यात्यन्ताभावादिरूपस्य नित्यतया नानुमितिनाश्यत्वम्, तथापि प्रतियोगिसत्त्वस्याभावसम्बन्धनाशकत्वादभावीयविशेषणतासम्बन्धरूपस्य कारणतावच्छेदकसम्बन्धस्य प्रतियोगिसत्त्वे नाशात्तस्याः प्रवृत्तिसामग्रीविघटकत्वं सुलभमेव। अतश्च लिङर्थस्य स्वविषयकज्ञानजन्यानुमितिजन्यस्वनिरूपितकारणतावच्छेदकीभूतसम्बन्धनाशकालीनाभावप्रतियोगित्वसंसर्गेणाख्यातार्थकृतावन्वय इति फलितोऽर्थः। प्रथमस्वपदं लिङर्थपरम्। द्वितीयस्वपदं प्रवृत्तिपरम्। अत्र च दैववशसम्पन्नप्रवृत्तिसामग्र्यत्यन्ताभावकालीनप्रवृत्त्यभावदशायां 'न कलञ्जं भक्षये'दिति प्रयोगापत्तिवारणायोक्तं सम्बन्धनाशकालीनेति। यत्र कलञ्जभक्षणमनिष्टसाधनमिति वाक्यादनिष्टसाधनत्वादिशाब्दबोधः, तत्र तज्जन्यसम्बन्धनाशकालीनाभावदशायामुक्तप्रयोगापत्तिवाराणायानुमितिजन्येति नाशविशेषणम्। अनिष्टान्वयव्यतिरेकानुविधायित्वादिहेत्वन्तरज्ञानजन्यानिष्टसाधनत्वानुमितिजन्यसम्बन्धनाशकालीनप्रवृत्त्यभावदशायां तादृशप्रयोगापत्तिवारणाय स्वविषयकेत्यादि। अत्र निरुक्तसम्बन्धेन निवारणाप्रयोज्याभाववर्तमानतादशायां तादृशप्रयोगापत्तिः; अतस्स्वविषयकज्ञानमपि स्वध्वंसासामानकालीनस्वज्ञानोपधेयमेव विशिष्य तत्तद्व्यक्तित्वेन प्रविष्टमिति ज्ञापनाय विशेषपदम्। अत्र प्रथमस्वपदं प्रवृत्तिकारणतावच्छेदकीभूततत्तत्सम्बन्धपरम्। द्वितीयस्वपदं च पूर्व-

**वल्लिङादितत्तद्व्यक्तिपरम्। तेन निरुक्तसंबन्धध्वंसासमानकालीनलिङादिज्ञानोपधेयहेतुज्ञानजन्यानुमितिजन्या इत्यादिः फलितोऽर्थः। एवञ्चानुमितित्वस्य विशिष्याप्रवेशेऽपि न क्षतिः। नञ्पदं तु स्वार्थस्याभावस्य प्रतियोगितासंसर्गेणाख्यातार्थकृतावन्वयानुवादकं सल्लिङाद्यर्थतात्पर्यग्राहकमिति सर्वमनाकुलम्।**

---

शङ्कते — **यद्यपीति।** उभयत्रापि = 'न कलञ्जं भक्षयेत्' इत्यत्र 'नातिरात्रे षोडशिनं गृह्णाति' इत्यत्र च प्रतिबन्धकाभावरूपसामग्रीविघटनं इति कथं वक्तुं शक्यते प्रतिबन्धकाभावस्य अत्यन्ताभावरूपस्य नित्यतया तन्नाशरूपविघटनासंभवात् इति शङ्का। समाधत्ते तथापीति। प्रतियोगिसत्त्वस्य तदत्यन्ताभावनाशकत्वाभावेऽपि तदभावसंबन्धनाशंकत्वसंभवात् अभावीयविशेषणतारूपस्य संबन्धस्य कारणतावच्छेदकीभूतसंबन्धरूपस्य प्रतियोगिसत्त्वे नाशात् तस्याः अनिष्टसाधनत्वाद्यनुमितेः प्रवृत्तिसामग्रीविघटकत्वं सुलभमिति भावः। पूर्वं बहुवारमुक्तमेव लिङर्थस्य नञ्समभिव्याहारस्थले कृतौ अन्वयप्रकारं परमनिष्कर्षपूर्वकं स्पष्टीकरोति — **अतश्चेत्यादिना।** लिङर्थस्य 'अयमत्र न प्रवर्तताम्' अयमतो निवर्तताम् इति वा इच्छाविशेषरूपस्य स्वविषयकज्ञानविशेषजन्यहेतुज्ञानजन्यानुमितिजन्यस्वनिरूपितकारणतावच्छेदकसंबन्धनाशकालीनाभावप्रतियोगित्वसंबन्धेन आख्यातार्थकृतावन्वय इति फलितम्। प्रथम स्वपदार्थः लिङर्थः उक्तेच्छाविशेषः। द्वितीयस्वपदार्थः प्रवृत्तिः। पूर्वोक्तेच्छाविशेषविषयकज्ञानजन्यहेतुज्ञानजन्या या अनिष्टसाधनत्वानुमितिः कलञ्जभक्षणमनिष्टसाधनमित्याकारा तज्जन्यः अनिष्टसाधनत्वज्ञानाभावीयस्वरूपसंबन्धनाशः स प्रवृत्तिनिरूपितकारणतावच्छेदकसंबन्धनाशरूपः। प्रवृत्तिं प्रति अनिष्टसाधनत्वज्ञानाभावस्य स्वरूपसंबन्धेन हेतुत्वात्। तादृशसंबन्धनाशाधीनः यः प्रवृत्त्यभावः तत्प्रतियोगित्वं

प्रवृत्तिरूपकृतावस्तीति समन्वयः। अत्र हेतुपदेन 'कलञ्जभक्षणादयं निवर्तताम्' इत्याकारकाप्तेच्छाविषयोभूताभावप्रतियोगि कृतिविषयत्वं विवक्षितम्।

अथ संबन्धघटकदलानां प्रयोजनान्याह — **अत्र चेत्यादिना**। यस्य पुरुषस्य दैव (अदृष्ट) वशात् संपन्नः यः कलञ्जभक्षणप्रवृत्तिसामग्र्यभावः तत्कालीन-प्रवृत्त्यभावदशायाम् अयं कलञ्जं न भक्षयेत् इति प्रयोगवारणाय संबन्धनाश-कालीनेति विशेषणम्। तत्र दैववशसंपन्नस्य प्रवृत्तिसामग्र्यभावस्य स्वविषय-केच्छादिनाशकालीनत्वाभावात् न तादृशप्रयोगापत्तिः। यत्र कलञ्जभक्षणमनिष्ट-साधनमिति वाक्यात् अनिष्टसाधनत्वविषयकशाब्दबोधः तज्जन्यः यः अनिष्टसाध-नत्वज्ञानाभावीयसंबन्धनाशः तत्कालीनप्रवृत्त्यभावदशायां न कलञ्जं भक्षयेत् इति प्रयोगापत्तिवारणाय अनुमितिजन्येति नाशविशेषणम्। उक्तस्थले तादृशनाशस्य शाब्दबोधजन्यत्वेन अनुमितिजन्यत्वाभावात् नोक्तप्रयोगापत्तिः। इदमनिष्ट-साधनम्, एतत्सत्त्वे अनिष्टम् एतदभावेऽनिष्टाभावः इत्याकारकं यत् अनिष्टा-न्वयव्यतिरेकानुविधायित्वं तस्मात् इत्येवंरूपअनिष्टान्वयव्यतिरेकानुविधायित्व-रूपहेत्वन्तरविषयकज्ञानजन्यानिष्टसाधनत्वानुमितिजन्यः यः अनिष्टसाधनत्व-ज्ञानाभावसंबन्धनाशः तत्कालीनप्रवृत्त्यभावदशायां न कलञ्जं भक्षयेत् इति प्रयोगापत्तिवारणाय स्वविषयकज्ञानजन्येति अनुमितिहेतुविशेषणम्। उक्तस्थले हेत्वन्तरविषयकज्ञानजन्यत्वात् अनुमितिहेतुज्ञानस्य लिङ्गर्थविषयकज्ञानजन्य-त्वाभावात् नोक्तापत्तिः।

स्वविषयकज्ञानविशेषेत्यत्र विशेषपदानुपादाने पूर्वोक्तसंबन्धेन निवारणा-प्रयोज्यप्रवृत्त्यभाववर्तमानतादशायाम्, लिङर्थेच्छाविषयकज्ञानजन्यानुमिति-जन्यप्रवृत्तिकारणतावच्छेदकसंबन्धनाशकालीनप्रवृत्त्यभाववर्तमानतादशायां न कलञ्जं भक्षयेत् इति प्रयोगापत्तिः। तद्वारणाय विशेषपदम्। तेन स्वध्वंसा-

समानकालीनं स्वज्ञानोपधेयमेव संबन्धमध्ये प्रविष्टमिति ज्ञाप्यते। अत्र प्रथमं स्वपदं स्वध्वंसासमानकालीनेत्यत्र स्वपदं प्रवृत्तिकारणतावच्छेदकीभूत तत्तत्संबन्धपरम्। द्वितीयं स्वपदं स्वज्ञानोपधेयेत्यत्र स्वपदम् लिङादितत्तद्व्यक्तिपरम्। प्रवृत्त्यभाववर्तमानतादशायां प्रयुज्यमानलिङ्ज्ञानस्य निरुक्तकारणतावच्छेदकसंबन्धध्वंससमानकालिकत्वात् तदसमानकालिकत्वं नस्तीति नोक्तप्रयोगापत्तिः। तथा च प्रवृत्तिकारणतावच्छेदकीभूततत्तत्संबन्धध्वंसासमानकालीनतत्तल्लिङव्यक्तिज्ञानजन्यानुमितिजन्यप्रवृत्तिकारणतावच्छेदकीभूतसंबन्धनाशकालीनाभावप्रतियोगित्वसंबन्धेन तत्तल्लिङर्थस्य आख्यातार्थकृतौ अन्वयः इति सिद्धम्। नञ्पदं तु स्वार्थस्याभावस्य प्रतियोगितासंबन्धेन आख्यातार्थकृतौ अन्वयानुवादकं सत् लिङाद्यर्थनिवर्तनातात्पर्यग्राहकम्। इति समुदायार्थः। अथ पङ्क्त्यर्थः — स्वविषयकेत्यत्र स्वशब्दस्य लिङर्थः अयमतो निवर्ततामित्याकारकेच्छाविशेषः अर्थः। स्वविषयकं ज्ञानम् उक्तेच्छाविषयकं ज्ञानम्। तज्जन्यं यत् हेतुज्ञानं तज्जन्या अनुमितिः कलञ्जभक्षणम् अनिष्टसाधनमित्याकारकानुमितिः तज्जन्यः यः प्रवृत्तिकारणतावच्छेदकीभूतसंबन्धनाशः तत्कालीनः यः प्रवृत्त्यभावः कृत्यभावः तत्प्रतियोगित्वसंबन्धेनेत्यर्थः। आख्यातार्थकृतौ लिङ्रूपाख्यातार्थकृतौ। लिङि लिङ्त्वम् आख्यातत्वमिति धर्मद्वयमस्ति। तथा लिङ्त्वावच्छिन्नवाच्या प्रवर्तना निवर्तना च आख्यातत्वावच्छिन्नवाच्या कृतिरिति न विस्मर्तव्यम्।

स्वध्वंसासमानकालीनस्वज्ञानोपधेयम् = प्रवृत्तिकारणतावच्छेदकसंबन्धनाशासमानकालीनं तत्तल्लिङ्व्यक्तिविषयकं यत् ज्ञानं तदव्यवहितोत्तरमुत्पद्यमानं यत् निवारणविषयकं ज्ञानं तज्जन्या या अनिष्टसाधनत्वानुमितिः तज्जन्यः यः प्रवृत्तिरूपितानिष्ठसाधनत्वज्ञानाभावनिष्ठकारणतावच्छेदकसंबन्धनाशः स्वरूपसंबन्धनाशः तत्कालीनः यः प्रवृत्त्यभावः तत्प्रतियोगित्वसंबन्धेन कृतावन्वयः

इत्यर्थः। लिङर्थपरम् इति। प्रकृते लिङर्थः निवारणा-अयमतो निवर्तता-मित्याकारकेच्छारूपः। अन्यत् घट्टार्थानुसारेण ज्ञातव्यम्।

**तत्सिद्धं प्रवर्तनाप्रेरणाविध्यपरपर्यायभूता भावना नञ्रहितवाक्ये लिङाद्यर्थः। तत्सहिते तु निवर्तना-निवारणा-निषेध-प्रतिषेधापरपर्याया, सैव च शब्दनिष्ठत्वाद्वेदे शाब्दीभावनेत्युच्यते। तत्तच्छक्ततावच्छेदकं तु लिङ्त्वं लोट्त्वञ्च, न तु तव्यत्वादिकमपि, तेषां 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्चे'ति स्मृत्या प्रैषाद्यर्थकत्वेन विध्यर्थकत्वास्मृतेः। प्रमाणान्तरप्रमितेऽर्थे पुरुषनिष्ठा पुरुषप्रवर्तना प्रैषः। अतिसर्गः-कामचारः। स्वाध्यायोऽध्येतव्यः इत्यादौ त्वप्राप्तार्थत्वात्प्रैषबाधेन विधौ लक्षणेति साम्प्रदायिकाः। लिङाद्यादेशत्वं वा शक्ततावच्छेदकम्, श्रूयमाणत्वात्।**

---

**तत् सिद्धमित्यादि**। एतावता प्रबन्धेन इदं निर्णीतम्, यत् प्रेरणा-प्रवर्तना-विध्यपर पर्यायभूता भावना नञ्रहिते वाक्ये 'यजेत स्वर्गकामः' इत्यादौ **'गायतम्'** इत्यादौ च लिङ्लोट् तव्यानामर्थः। नञ्सहिते तु 'न कलञ्जं भक्षयेत्' इत्यादिवाक्ये निवर्तना-निवारणा-निषेधप्रतिषेधापरपर्यायभूता भावना लिङाद्यर्थः। सैव च वेदे शब्दनिष्ठत्वात् शाब्दीभावनेत्युच्यते। तादृशभावनाशक्ततावच्छेदकं तु लिङ्त्वं लोट्त्वं च। न तु तव्यत्वादिकमपि। तेषां तव्यदादिप्रत्ययानां 'प्रैषातिसर्गप्राप्तकालेषु तव्याश्च' इति व्याकरणस्मृत्या प्रैषाद्यर्थकत्वेन विध्यर्थकत्वाभावात्। प्रमाणान्तर-प्रमितेऽर्थे पुरुषान्तरप्रवर्तना प्रैषः। अतिसर्गः = कामचारः। न च यदि तव्य-प्रत्ययस्य विध्यर्थकत्वं नास्ति। तदा 'स्वाध्यायोऽध्येतव्यः' इत्यत्र तव्यप्रत्ययेन अध्ययनं विधीयत इति वचनं कथं संगच्छते इति वाच्यम्। तत्र अध्ययनस्य अप्राप्तार्थत्वात् प्रैषबाधेन विधौ लक्षणायाः स्वीकारात् इति प्राञ्चः। ननु लिङः

लोटश्चाश्रूयमाणतया लिङ्लोटोः कथं शाब्दीभावनाशक्तत्वम्। कथंतरां लिङ्लोट्वयोः शक्तावच्छेदकत्वम् इत्यत आह — **लिङाद्यादेशत्वं वेति।** लिङाद्यादेशः त् त इत्यादयः। तेषां श्रूयमाणत्वात् तद्गतं लिङाद्यादेशत्वं शक्तावच्छेदकं भवितुमर्हतीति भावः।

## शाब्दीभावनाया अंशत्रयनिरूपणम्

**अस्याश्च शाब्दभावनाया अर्थभावनावदेवांशत्रयमिति व्यवहरन्ति। तत्र प्रवृत्तिनिवृत्त्योर्यथाक्रमं विधिनिषेधप्रयोज्यत्वात्पुरुषार्थानुबन्धित्वाच्च भाव्यत्वम्। लिङादिजन्यविधिनिषेधज्ञानञ्च भाव्यप्रयोजकत्वात्करणम्। अस्य च करणत्वेन व्यवहारमात्रम्, न तु तस्य शाब्दबोधे करणत्वेनान्वयः, अशाब्दत्वात्। एवं प्राशस्त्याप्राशस्त्यज्ञानं यथाक्रमं विधिनिषेधयोरितिकर्तव्यता, तदपि वस्तुत एव, न तु शाब्दबोधे अन्वयः, अशाब्दत्वादेव। ते च प्राशस्त्याप्राशस्त्ये तत्तद्विधिनिषेधसन्निधिपठितार्थवादैर्लक्षणया प्रतिपाद्येते।**

---

अथ शाब्दीभावनायाः अंशत्रयं निरूपयति — **अस्याश्चेत्यादिना। अस्याः** = प्रवर्तना — प्रेरणा- विध्यपरपर्यायभूतायाः। **अंशत्रयम्** = किं भावयेत्, केन भावयेत्, कथं भावयेत् इत्याकाङ्क्षाविषयभूतं साध्यकरणेतिकर्तव्यतारूपमंशत्रयम्। तत्र अंशत्रये। तदुपपादयति — **तत्रेत्यादिना।**

**तत्र** शाब्दीभावनायाम्। घटकत्वं त्रलर्थः। **प्रवृत्तिनिवृत्त्योरन्वेति।** प्रवर्तनारूपशाब्दभावनाघटकत्वं प्रवृत्तेः। प्रवृत्त्यनुकूलव्यापारस्य प्रवर्तनात्वात्। निवर्तनारूपशाब्दीभावनाघटकत्वं निवृत्तेः। निवृत्त्यनुकूलव्यापारस्य निवर्तनात्वात्। तथा च प्रवृत्तेः प्रवर्तनारूपभावनाप्रयोज्यत्वात् विधिस्थले भाव्यत्वम्। निवृत्तेः निवर्त-

नारूपभावनाप्रयोज्यत्वात् निषेधस्थले भाव्यत्वम् इति भावः। **पुरुषार्थानुबन्धित्वात्** इति। प्रयोजनसंवद्धत्वात्। प्रयोजनं स्वर्गनरकादिः। **लिङादिजन्येति**। लिङ्श्रवणजन्यं यत् विधिविषयकं निषेधविषयकं च ज्ञानम्, तत् करणम्। तस्य करणत्वेन व्यवहारमात्रम्। न तु शाब्दबोधे करणत्वेनान्वयः। उक्तज्ञानस्य शब्दजन्यत्वेऽपि शब्दार्थत्वाभावात्। न हि शाब्दमशाब्देनान्वेति इति न्यायात्। एवं प्राशस्त्यज्ञानं विधेः प्रेरणायाः इतिकर्तव्यता। **निषेधस्य** = निवर्तनायाः अप्राशस्त्यज्ञानम् इतिकर्तव्यता। इतिकर्तव्यतात्वमपि वस्तुत एव। न तु अप्राशस्त्यज्ञानस्य शाब्दबोधे भानम्। अशाब्दत्वादेव। प्राशस्त्यम् अप्राशस्त्यं च यथाक्रमं विधिनिषेधवाक्यसंनिहितार्थवादवाक्यैः लक्षणया प्रतिपाद्यते। इति मूलपङ्क्तीनामर्थः।

अत्रेदमालोचनीयम् आर्थीभावनायाः शाब्दीभावनायाश्च साध्याकाङ्क्षायां यथाक्रमं प्रवृत्तिनिवृत्तयोः साध्यत्वेनान्वयः शाब्दबोधे तयोः भानं च भवति। प्रवर्तनानिवर्तनयोः लिङर्थत्वात् तद्घटकप्रवृत्तिनिवृत्त्योरपि शब्दबोध्यत्वात्। करणयोः लिङादिजन्यविधिनिषेधज्ञानयोः न शाब्दबोधे भानम्। तयोः शब्द-जन्यत्वेऽपि शब्दार्थत्वाभावात्। एवं इतिकर्तव्यतयोः प्राशस्त्याप्राशस्त्य-ज्ञानयोरपि शब्दार्थत्वाभावेन न शाब्दबोधेऽन्वयः इति ग्रन्थकारस्य आशयः इति।

अत्राहुः — यथा शाब्दीभावनायाः साध्याकाङ्क्षायां सत्यां समानाभिधानश्रुत्या आर्थीभावनायाः साध्यत्वेनान्वयो भवति, एवं करणेतिकर्तव्यतयोः विधिनिषेध-ज्ञानप्राशस्त्याप्राशस्त्यज्ञानयोरपि शाब्दबोधे भानं संभवति। अत एवोक्तम् उद्भिदधिकरणवार्तिके 'सर्वत्रानुपस्थितविशेषणा' बुद्धिर्न भवति, न तु अनभिहित-विशेषणा इति। अस्यायमर्थः — उपस्थितिरेवापेक्ष्यते, नाभिधानमिति। यथा

ज्योतिष्टोमादिनामधेयम्, यथा वा लिङादिनियोज्यो मन्त्रः 'बर्हिर्देवसदनं दामि 'इत्यादिः विधिशब्दस्तावत् श्रवणेनोपस्थापितः। तस्य पुरुषप्रवृत्तिवाचकशक्तिरपि स्मरणेनोपस्थापिता। तदुभयनिष्ठज्ञातता तन्निष्ठवाचकशक्तिमत्तया ज्ञातो न लिङादिविधिशब्द उपस्थापित एव। अनेन च यत् शक्नुयात् तत् भावयेत् इति स्वाध्यायविधितात्पर्यात् शब्दातिरिक्तेनोपस्थापितमपि शाब्दबोधे भासत एव। एवम् अर्थवादानामुपस्थितिः श्रोत्रेण भवति। प्राशस्त्यस्य तु तैरेव लक्षणयोपस्थितिर्भवति। तदुभयनिष्ठज्ञाततायास्तु मनसा उपस्थितिर्भवति।

एवमर्थवादैः प्रशस्तत्वेन ज्ञात्वेति इतिकर्तव्यतान्वयोऽप्युपस्थित एव। अतः यथा अर्थभावनायाः शाब्दबोधे भानम्, एवं लिङादिज्ञान – प्राशस्त्यज्ञानयोरप्युपस्थितत्वात् प्रशस्तत्वेन ज्ञात्वेति इतिकर्तव्यतान्वयांशस्यपि शाब्दबोधे भानं संभवत्येव। अयं चार्थः गीताव्याख्यानगूढार्थदीपिकायां मधुसूदनसरस्वतीस्वामिचरणैः उपपादितः — इति। शम्भुभट्टेनापि अर्थवादाधिकरणप्रभावल्यामुपपादितः। इति।

## अर्थवादप्रतिपाद्यप्राशस्त्याप्राशस्त्यस्वरूपविचारः

**ननु किमिदं प्राशस्त्यन्, अप्राशस्त्यं वा, न तावद्गुणवत्त्वम्, दोषवत्त्वं वा, गुणदोषत्वयोरेव निर्वक्तुमशक्यत्वात्। न हि 'वायुर्वै क्षेपिष्ठा देवता' 'अपशवो वाऽन्ये गोऽश्वेभ्यः' इत्यादौ वायुक्षेपिष्ठत्वादिकं गुणः, अपशुत्वं गवाश्वगतप्राशस्त्याभाववत्त्वं वा दोषः। तज्ज्ञानस्य प्रवृत्तिनिवृत्तित्वावच्छिन्नं प्रति व्यभिचारित्वेनानुपयोगित्वात्, क्षेपिष्ठत्वादेः शक्त्यैवोपस्थितत्वेन लाक्षणिकत्वसिद्धान्तभङ्गापत्तेश्च। नापि स्वर्गनरकादिजनकत्वे, स्वर्गादिपदसमभिव्याहारादेव तत्सिद्धावर्थवादवैयर्थ्यापत्तेरिति चेत्, क्रियाजन्यदुःखापेक्षया-अधिकेष्टसाधनत्वं प्रशस्तत्वम्। तज्जन्यसुखा-**

पेक्षयाधिकानिष्टजनकत्वम् अप्रशस्तत्वम् इत्येवंविधयोः तयोरुपपत्तेः। न ह्यय-मर्थोऽन्यतस्सिद्धः, विधिनेष्टानिष्टसाधनत्वमात्रस्यैवाक्षेपात्।

---

अथ अर्थवादप्रतिपाद्यप्राशस्त्याप्राशस्त्ये परिष्कर्तुमारभते — **ननु किम् इदं प्राशस्त्यमिति**। किं नाम प्राशस्त्यम् + अप्राशस्त्यं च। न तावत् गुणवत्त्वं प्राशस्त्यम्, दोषवत्त्वम् अप्राशस्त्यमिति वक्तुं शक्यते। गुणत्वदोषत्वयोः निर्वक्तु-मशक्यत्वात्। न च 'वायुर्वै क्षेपिष्ठा देवता' इत्यादौ वायुगतं क्षिप्रगामित्वं गुणः अपशवो वा अन्ये गोअश्वेभ्यः' इत्यादौ अपशुत्वं, गवाश्वगतं यत् प्राशस्त्यं तदभावो वा दोषः इति वाच्यम्। तादृशगुणज्ञानाभावेऽपि प्रवृत्तेः, तादृश-दोषज्ञानाभावेऽपि निवृत्तेश्च जायमानतया व्यतिरेकव्यभिचारेण प्रवृत्तिं प्रति निवृत्तिं प्रति च कारणत्वाभावात्। अपि च अर्थवादेन क्षेपिष्ठत्वादेः शक्त्यैव उपस्थितत्वेन तस्य लाक्षणिकत्वमिति सिद्धान्तस्य भङ्गापत्तेः।

**नापीत्यादि**। स्वर्गसाधनत्वं गुणः, नरकसाधनत्वं दोषः इति वक्तुं न शक्यते स्वर्गनत्रादिसमभिव्याहारवशादेव तयोः ज्ञानसंभवेन अर्थवादवाक्यवैयर्थ्यापत्तेः इति भावः। समाधत्ते — **क्रियाजन्येत्यादिना**। यागादिरूपक्रियाजन्यतात्कालि-कश्रमादिरूपदुःखापेक्षया अधिकस्वर्गादिरूपेष्टसाधनत्वं प्रशस्तत्वम्। कलञ्जभक्ष-णादिक्रियाजन्यतात्कालिकतृप्त्यादिरूपसुखापेक्षया अधिकनरकादिरूपानिष्ठसा-धनत्वम् अप्रशस्तत्वमिति एवंरूपयोः तयोः गुणवत्त्वदोषवत्त्वयोः उपपत्तेः। अयं चार्थः अर्थवादवाक्यादन्यतः न ज्ञायत इति अर्थवादस्य सार्थक्यम्। यत्र तु विधिसमीपे अर्थवादवाक्यं नास्ति तत्र विधिनिषेधाभ्यामेव तयोः आक्षेपात् लाभ इति भावः।

## आर्थवादिकप्राशस्त्यज्ञानादेरावश्यकत्वनिरूपणम्

अत एव यत्र नार्थवादः पठितः, तत्र विधिना तदाक्षिप्यत एव। न चैवंविधतज्ज्ञानस्य प्रवृत्तिनिवृत्त्योरनुपयोगः,एवंविधज्ञानाभावेऽपि प्राचीनकर्मवशेनैव तात्कालिकसुख-दुःखयोरुत्कटराग-द्वेषसत्त्वे प्रवृत्तिनिवृत्त्योरुदयसत्त्वात्, एवंविधज्ञानसत्त्वेऽपि च प्राचीनकर्मवशेनैव प्रवृत्तिनिवृत्त्योरनुदयाच्चेति वाच्यम्। तथात्वेऽप्येवंविधज्ञानसत्त्वे क्रियाजन्यतात्कालिकदुःखापेक्षयाऽधिकेष्टे प्रायशो लोके वेदे वा सर्वेषां पुरुषाणामुत्कटरागदर्शनेन, तात्कालिकसुखापेक्षयाधिके दुःखे उत्कटद्वेषदर्शनेन च तज्ज्ञानस्य रुच्यरुच्यात्मकोत्कटरागद्वेषोपयोगित्वस्य सर्वसिद्धत्वात्। क्वचिदेव तु प्राचीनकर्मणः औत्कट्ये तत्सत्त्वेऽपि तदभावः, न तु सर्वत्र। अत उत्कटप्राचीनकर्माभावे उक्तविधप्राशस्त्याप्राशस्त्यज्ञानस्य उत्कटराग-द्वेषजनकत्वात् तद्वारा प्रवृत्तिनिवृत्त्योरुपयोगः। न चैवं यस्य स्वत एव रुच्यरुची, तं प्रति प्राशस्त्याप्राशस्त्यज्ञानस्यानुपयोगेन सर्वान् पुरुषान्प्रत्यनुपयोग इति वाच्यम्, सर्वपुरुषान्प्रत्यनुपयोगेऽपि पुरुषविशेषं प्रत्युपयोगेनैवार्थवादप्रामाण्योपपत्तेः। स्वतस्सिद्धस्मरणवतो मन्त्रजन्यस्मरणस्यानुपयोगेऽपि मन्त्राम्नानवशेन तज्जन्यस्मरणस्याभ्युदयकारित्वकल्पनवदर्थवादाम्नानबलेन तद्बोधितप्राशस्त्यस्याभ्युदयकारित्वकल्पनयोपपत्तेश्च। एवंविधप्राशस्त्यादेश्च लक्षणयैवार्थवादैः प्रतिपादनात् लाक्षणिकत्वसिद्धान्तस्यापि न भङ्गः। सा च वाक्यलक्षणायां बाधकाभावादर्थवादस्थपदसमुदाये, एकस्मिन्नेव वा पदे लक्षणा, इतरपदानि तात्पर्यग्राहकाणीत्यन्यदेतत्।

---

उक्तमर्थमुपपादयति — अत एवेत्यादिना। पूर्वोक्तेन हेतुनेत्यर्थः। यत्र कपिञ्जलानालभेत इत्यादौ अर्थवादवाक्यं न पठितम्। तत्र विधिना क्रियाजन्य-

दुःखापेक्षया अधिकेष्टसाधनत्वरूपं प्राशस्त्यमाक्षिप्यत इत्यर्थः। अत्र शङ्कते — **न चैवंविधेति।** पूर्वोक्तप्रकारेणेष्टानिष्टसाधनत्वज्ञानस्येत्यर्थः। तस्य यथाक्रमं प्रवृत्ति-निवृत्त्योः उपयोगो नास्ति। तथा हि — क्रियाजन्यतात्कालिकदुःखापेक्षया अधिकेष्टसाधनत्वविषयकज्ञानाभावेऽपि प्राचीनकर्मवशात् तात्कालिकदुःखे द्वेष-सत्त्वे निवृत्तेः। एवं तात्कालिकसुखापेक्षया अधिकानिष्टसाधनत्वज्ञानाभावेऽपि प्राचीनकर्मवशात् तात्कालिकसुखे उत्कटरागसत्त्वे प्रवृत्तेश्च दर्शनेन व्यतिरेक-व्यभिचारात् तयोः ज्ञानयोः प्रवृत्तिनिवृत्तिहेतुत्वं न संभवति। तथा पूर्वोक्तज्ञान-सत्त्वेऽपि प्राचीनकर्मवशेन प्रवृत्तिनिवृत्त्योः अनुदयात् अन्वयव्यभिचाराच्च न तयोः ज्ञानयोः प्रवृत्तिनिवृत्तिहेतुत्वं संभवतीति शङ्कितुराशयः।

तत्र समाधत्ते — **तथात्वेऽपीत्यादिना।** तथात्वेऽपि भवदुक्तरीत्यङ्गीकारेऽपि लोके वेदे च सर्वेषां पूर्वोक्तज्ञानसत्त्वेऽपि क्रियाजन्यतात्कालिकदुःखापेक्षया अधिके इष्टे प्रायशः पुरुषाणामुत्कटरागदर्शनेन तात्कालिकसुखापेक्षया अधिके दुःखे उत्कटद्वेषदर्शनेन च पूर्वोक्तज्ञानयोः क्रमशः रुचिरूपोत्कटरागं प्रति अरुचिरूपोत्कटद्वेषं प्रति च उपयोगित्वस्य सर्वैः अङ्गीकृतत्वात्। क्वचित् प्राचीन-कर्मणः उत्कटत्वे तादृशज्ञानयोः सत्त्वेऽपि प्रवृत्तिनिवृत्त्योः अनुदयः न सर्वत्रेति। ततश्चैतत् सिद्धम् — उत्कटप्राचीनकर्माभावे उक्तविधप्राशस्त्याप्राशस्त्यज्ञानयोः उत्कटरागद्वेषजनकत्वात् तद्द्वारा प्रवृत्तिनिवृत्त्योः उपयोगः इति।

एवं चैतत् सिद्धम् — विधिशेषात् अर्थवादवाक्यात् जायमानात् क्रियाजन्य-तात्कालिकदुःखापेक्षया अधिकेष्टसाधनत्वरूपप्राशस्त्यज्ञानात् कर्मणि उत्कटराग-रूपरुचिः जायते। तया च प्रवृत्तिः भवति।

निषेधशेषात् अर्थवादवाक्यात् जायमानात् क्रियाजन्यतात्कालिकसुखापेक्षया अधिकानिष्टसाधनत्वरूपाप्राशस्त्यज्ञानात् कर्मणि उत्कटद्वेषरूपा अरुचिः जायते। तया च निवृत्तिः भवतीति।

पुनः शङ्कते — **न चैवमिति। स्वत एवेति।** प्राचीनकर्मवशादिति शेषः। एवकारेण पूर्वोक्तज्ञानव्यवच्छेदः। तथा च पूर्वकथितप्राशस्त्याप्राशस्त्यज्ञानं विनापि स्वत एव रुच्यरुची ताभ्यां च प्रवृत्तिनिवृत्ती यस्य भवतः तं प्रति प्राशस्त्याप्राशस्त्यज्ञानस्यानुपयोगात् सर्वान् पुरुषान् प्रति उपयोगो नास्तीति कथमर्थवादप्रामाण्यमिति शङ्का। तत्र समाधानमाह — **तं प्रतीति।** तादृशपुरुषविशेषं प्रति अनुपयोगेऽपि तदन्यपुरुषविशेषं प्रति उपयोगसत्त्वेनैव अर्थवादप्रामाण्योपपत्तिरिति भावः। अर्थवादस्योपयोगं प्रकारान्तरेण समर्थयति — **स्वतस्सिद्धेति।** मन्त्राणां क्रियमाणार्थस्मरणजननद्वारा कर्मण्युपयोगः सिद्धान्तितः। तत्र स्वत एव यस्यार्थस्मरणमस्ति तं प्रति मन्त्राणामनुपयोग इति शङ्कायाः मन्त्रपठनसार्थक्याय मन्त्रजन्यार्थस्मरणपूर्वकं क्रियमाणस्य कर्मणः अभ्युदयकारित्वं कल्प्यते। तद्वत् **अर्थवादाम्नानबलेन** अर्थवादजन्यप्राशस्त्यज्ञानपूर्वकं क्रियमाणस्य कर्मणः अभ्युदयकारित्वमिति कल्पनस्य उपपत्तेः न वैयर्थ्यमर्थवादस्येति भावः।

ननु पूर्वोक्तं प्राशस्त्यं नार्थवादवाक्याल्लभ्यत इति शङ्कायामाह — **एवंविधप्राशस्त्येति।** क्रियाजन्यतात्कालिकदुःखापेक्षया अधिकेष्टसाधनत्वरूपप्राशस्त्यस्य लक्षणया अर्थवादवाक्येन प्रतिपादनात्। तत एव च अर्थवादो लाक्षणिक इति प्रवादोऽपीति भावः। तत्र पक्षद्वयमाह — **सा चेति।** लक्षणा चेत्यर्थः। अर्थवादस्थानां सर्वेषां पदानां वाक्यरूपाणां प्राशस्त्ये लक्षणेति वाक्यलक्षणापक्षः। एकस्मिन् पदे लक्षणा इतरपदानि तात्पर्यग्राहकाणीति पदलक्षणापक्षः इति पक्षद्वयम्।

अत्राहुः — अर्थवादवाक्यैः लक्षणया प्राशस्त्यं प्रतिपाद्यत इति मीमांसकानां मर्यादा। इयं च लक्षणा वाक्ये अनुभवानुरोधेन, एकस्मिन् पदे इति न युज्यते। इतरपदानां वैयर्थ्यापत्तेः। तेषां तात्पर्यग्राहकत्वकल्पने विनिगमनाविरहः। कारणानुरूपत्वात् कार्यस्य क्षिप्रदेवतासाध्यं कर्म क्षिप्रमेव फलं ददातीत्येवंविधया सर्वेषामेव पदानां स्तुत्युपपादकत्वप्रतीतेः। अतः पदसमुदायात्मकवाक्य एव लक्षणा। यद्यपि वाक्ये शक्त्यभावात् शक्यसंबन्धरूपा लक्षणा न संभवतीति शङ्क्येत, तथापि स्वार्थसंबन्धमात्रेणैव इह लक्षणास्वरूपमङ्गीक्रियते — इति।

## प्राशस्त्यादेरन्वयप्रकारः

**तच्च प्राशस्त्यमप्राशस्त्यं वा इतिकर्तव्यतात्वसम्बन्धेन शाब्दभावनायामन्वेतीति बहवः। स्वरूपसम्बन्धेन धात्वर्थादावेवान्वेतीति केचित्।**

**वस्तुतस्तु वक्ष्यमाणरीत्याऽन्यसुबन्तार्थवदेककार्यकारणभावकल्पनालाघवानुरोधेन प्राशस्त्यस्य स्वविषयकज्ञानजन्येष्टविषयकोत्कटरागजन्यत्वसम्बन्धेन प्रवृत्तौ, अप्राशस्त्यस्य स्वविषयकज्ञानजन्यानिष्टविषयकोत्कटद्वेषप्रयोज्याभावप्रतियोगित्वसम्बन्धेन प्रवृत्तावेवान्वयः। न चैवं प्रधानार्थवादेनैव क्रियाजन्यतात्कालिकदुःखापेक्षया स्वफले आधिक्यसिद्धौ अङ्गार्थवादवैयर्थ्यम्, प्रधानजन्यफलापेक्षया अङ्गजन्यफलस्य भेदाभावात्, क्रतूपकारे चाधिक्यासम्भवादिति वाच्यम्। तत्तदङ्गजन्यतात्कालिकदुःखकूटापेक्षया प्रधानफले आधिक्यबोधनार्थत्वात्। अतो विध्यर्थवादेषु प्रकृष्टफलकत्वरूपप्राशस्त्यलक्षणा, निषेधार्थवादेषु च प्रकृष्टदुःखजनकत्वरूपाप्राशस्त्यलक्षणेति मूलग्रन्थोन्नीतः पन्थाः।**

---

**तच्चेत्यादि।** अर्थवादबोध्यं प्राशस्त्यम् अप्राशस्त्यं वा इतिकर्तव्यतात्वसंबन्धेन शाब्दभावनायामन्वेति इति बहवः। स्वरूपसंबन्धेन धात्वर्थादावेवान्वेतीति

केचित्। स्वमतमाह — **वस्तुतस्त्विति**। सुबन्तार्थस्य सर्वस्यापि आख्यातार्थ-भावनारूपप्रवृत्तावन्वयः इति वक्ष्यति। तत्र चैककार्यकारणभावस्यैव कल्पनात् लाघवमिति युक्तिः बीजम्। एककार्यकारणभावश्च — सुबर्थलिङ्गसंख्याव्यतिरिक्त-प्रातिपदिकार्थव्यतिरिक्तप्रकारकशाब्दबोधं प्रति आख्यातार्थभावनानिष्ठविशेष्यता-संबन्धेन लिङ्गानन्वयिपदजन्योपस्थितिः कारणमिति। तद्वत् प्रकृते अर्थवादप्रति-पाद्यस्य प्राशस्त्यस्य स्वविषयकज्ञानजन्येष्टविषयकोत्कटरागजन्यत्वसंबन्धेन प्रवृत्तावन्वयः। स्वं प्राशस्त्यं तद्विषयकं ज्ञानम् इदं कर्म प्रशस्तमित्याकारकम्, तज्जन्यः यः कर्मणि उत्कटो रागः तज्जन्यत्वं कर्मानुकूलकृतिरूपप्रवृत्तावस्तीति समन्वयः। एवम् अप्राशस्त्यस्य स्वविषयकज्ञानजन्यानिष्टविषयकोत्कटद्वेषप्रयो-ज्याभावप्रतियोगित्वसंबन्धेन प्रवृत्तावेवान्वयः। स्वम् अप्राशस्त्यम्। तद्विषयकं ज्ञानम् इदं कर्म अप्रशस्तमित्याकारकज्ञानम् तज्जन्यः यः अनिष्टकलञ्जभक्षणादौ उत्कटो द्वेषः तत्प्रयोज्यः प्रवृत्त्यभावः तत्प्रतियोगित्वं प्रवृत्तावस्तीति समन्वयः। अप्राशस्त्यज्ञानात् कर्मणि उत्कटद्वेषः तेन प्रवृत्त्यभावः। प्राशस्त्यज्ञानात् कर्मणि उत्कटराग तेन तत्र प्रवृत्तिरिति ध्येयम्। यत्र प्रधानकर्मविधिसमीपे तदङ्ग-कर्मविधिसमीपे च पृथगर्थवादवाक्यमस्ति यथा — तत्र प्रधानकर्मार्थवादेनैव तत्कर्मजन्यतात्कालिकदुःखापेक्षया तत्फले आधिक्यसिद्धौ अङ्गार्थवादस्य वैयर्थ्यम्। प्रधानजन्यफलापेक्षया अङ्गजन्यफलस्य भेदाभावात् — अङ्गजन्य-क्रतूपकाररूपफले चाधिक्यासंभवादिति शङ्कते — **न चैवमिति**। तत्तदङ्गजन्य-तात्कालिकदुःखसमुदायापेक्षया प्रधानफले आधिक्यबोधनार्थः अङ्गार्थवाद इति समाधत्ते — **तत्तदङ्गजन्येत्यादिना**। **अतश्चेति**। पूर्वोक्तनिर्णयवशात् विध्यर्थ-वादवाक्येषु प्रकृष्टफलकत्वरूपप्राशस्त्ये लक्षणा। निषेधार्थवादेषु प्रकृष्टदुःख-जनकत्वरूपे अप्राशस्त्ये लक्षणेति मूलभूतेषु वार्तिकादिषु उन्नीतो मार्गः।

## स्वाभिमतप्राशस्त्याप्राशस्त्यस्वरूपकथनम्

वस्तुतस्तु — अभ्यनुज्ञाविध्यर्थवादेषु नातिरात्रे षोडशिनं गृह्णाति इत्यादि निषेधार्थवादेषु च नैवंविधप्राशस्त्याप्राशस्त्यलक्षणासम्भवः। न हि हुतायां वपायां दीक्षितस्यान्नमश्नीयादित्यत्र क्रियाजन्यानिष्टापेक्षेया तृप्त्याख्यस्य फलस्याधिक्यं बोधयितुं शक्यम्। निषेधप्रमितानिष्टस्याधिक्यावश्यम्भावात्। क्रियाजन्यतात्कालिकदुःखापेक्षयाधिक्यस्य लोकसिद्धत्वेन निषेधसत्त्वे तज्ज्ञानस्य प्रवृत्त्यनुपयोगित्वात्। षोडशिग्रहणजन्यसुखापेक्षया तज्जन्यदुःखस्याधिक्यं नैव सम्भावयितुं शक्तम्। अपि च श्येनार्थवादे श्येनजन्यतात्कालिकदुःखापेक्षया यद्यभिचाराधिक्यं बोध्यते, तदा तज्ज्ञानस्य नैव प्रवृत्त्युपयोगित्वम्। श्येनप्रयोज्यनरकादिदुःखापेक्षयाधिक्यं तु नैव बोधयितुं शक्यम्।'न हिंस्या'दिति निषेधार्थवादेन तस्याभिचारापेक्षया आधिक्यबोधनाच्च।

---

अथ स्वाभिमते प्राशस्त्याप्राशस्त्ययोः लक्षणे आह — **वस्तुतस्तु** इत्यादिना। न दीक्षितस्यान्नमश्नीयात् इति निषेधः। हुतायां वपायां दीक्षितस्यान्नमश्नीयात् इति अभ्यनुज्ञाविधिः। अत्र निषिध्यमाना या दीक्षितान्नस्य अशनक्रिया तज्जन्यानिष्टापेक्षया अशनजन्यतृप्त्याख्यस्य फलस्य आधिक्यं न हि बोधयितुं शक्यम्। अपि च तत्र अशनजन्यतृप्त्यपेक्षया निषेधावगतनरकरूपानिष्टस्यैवाधिक्यम्। अपि च अशनक्रियाजन्यतात्कालिकश्रमापेक्षया तृप्तेराधिक्यस्य लोकसिद्धत्वेन नाश्नीयादिति निषेधसत्त्वे उक्ततृप्त्याधिक्यज्ञानस्य प्रवृत्तिं प्रति अनुपयोगित्वाच्च। नातिरात्रे इत्यत्र षोडशिग्रहणजन्यसुखापेक्षया तज्जन्यदुःखस्य आधिक्यं च नैव संभावयितुं शक्यम्। तत्र सुखविशेषस्य अदर्शनात्।

अपि चेत्यादि। श्येनयागार्थवादवाक्ये श्येनयागजन्यतात्कालिकदुःखापेक्षया यदि अभिचारजन्यदुःखाधिक्यं बोध्यते। तदा तस्य नैव प्रवृत्त्युपयोगित्वम्। श्येनप्रयोज्यनरकादिदुःखापेक्षया आधिक्यं तु नैव बोधयितुं शक्यम्। श्येनयागे तदसंभवात्। तस्य श्येनयागस्य न हिंस्यात् इति निषेधार्थवादेन अभिचार-जन्यदुःखापेक्षया अधिकदुःखजनकत्वस्य बोधनाच्च।

**अतो विध्यर्थवादेषु विधेयतावच्छेदकसामानाधिकरण्येन बलवदनिष्टाननु-बन्धित्वरूपं प्राशस्त्यं लक्ष्यते। निषेधार्थवादेषु च निषेध्यतावच्छेदकसामानाधि-करण्येन बलवदनिष्टानुबन्धित्वरूपमप्राशस्त्यम्। अत्रानिष्टे बलवत्त्वमुत्कटद्वेष-विषयत्वम्, नत्वाधिक्यम्। स्वर्गन्यूनेपि तात्कालिकदुःखे प्राचीनकर्मवशेन कदा-चिदुत्कटद्वेषोदयात्। अत एव नैव तदा यागादौ प्रवर्तते। नरकन्यूनेऽपि च तात्कालिकसुखे प्राचीनकर्मवशेनोत्कटद्वेषोदयाच्च। अत एवाभिचारादौ प्रवर्तते। अत एव यागादौ कदाचित् प्राचीनशुभकर्मवशात् बलवदनिष्टाननुबन्धित्वम्, न तु सर्वदा। अत एव विधेयतावच्छेदकसामानाधिकरण्येनेत्यनेन तस्य कालिका-व्याप्यवृत्तित्वं विवक्षितम्।**

**एवं कलञ्जभक्षणादौ कदाचिदेव शुभकर्मवशादबलवदनिष्टानुबन्धित्वज्ञानम्। अतस्तत्रापि कालिकाव्याप्यवृत्तित्वसिद्ध्यर्थं निषेध्यतावच्छेदकेत्यादि। एतादृशा-व्याप्यवृत्तित्वज्ञापनार्थमेव कौस्तुभादौ योग्यतापदम्।**

---

अतः प्रकारान्तरेण प्राशस्त्याप्रशस्त्ये परिष्करोति — अत इत्यादिना। विध्यर्थवादेषु — वायव्यं श्वेतमालभेत भूतिकामः इति विधिः, वायुर्वैक्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति इत्यर्थवादः। एवमादिषु विधिशेषभूतेष्वर्थवादवाक्येषु विधेयतावच्छेदकं यत् यागत्वं, तत्सामानाधि-

करण्येन = यागत्वाधिकरणयागवृत्तितया प्रशस्तत्वं बलवदनिष्टाजनकत्वरूपं लक्षणया बोध्यते, यागः प्रशस्त इत्याकारकबोधो जायते। निषेधार्थवादेषु = बर्हिषि न देयम् इति निषेधशेषभूतेषु अर्थवादेषु 'सोऽरोदीत् यदरोदीत् तद्रुद्रस्य रुद्रत्वम्' इत्यादिषु निषेध्यतावच्छेदकं यत् यागे रजतदानत्वं तदधिकरणरजत-दानवृत्तितया बलवदनिष्टजनकत्वरूपम् अप्रशस्तत्वं बोध्यते। अत्रानिष्टे बलवत्त्व-मुत्कटद्वेषविषयत्वम्। न तु आधिक्यम्। यजेत स्वर्गकाम इति विहिते यागे जायमानं यत् तात्कालिकं दुःखं स्वर्गापेक्ष्यया न्यूनं, तत्र प्राचीनकर्मवशात् द्वेषस्य जननात्। तत्र आधिक्यविरहात्। अत एव तदा यागे न प्रवर्तते। बलवद्द्वेष-विषयाजनकत्वज्ञानाभावात्। एवं नरकापेक्षया न्यूनेऽपि तात्कालिकतृप्त्यादिसुखे उत्कटरागोदयात् प्रवर्तते। निषिद्धे कलञ्जभक्षणदौ उत्कटरागविषयसुखजनकत्व-ज्ञानसद्भावात्। अत एव = पूर्वोक्तरीत्या प्राशस्त्याप्राशस्त्ययोः परिष्करणादेव यागादौ कदाचित् शुभकर्मवशात् बलवदनिष्टाजनकत्वम्, न तु सर्वदा। एवं च निषेध्यतावच्छेदकसामानाधिकरण्येनेत्यनेन निषेध्ये वर्तमानस्य अप्राशस्त्यस्य कालिकाव्याप्यवृत्तित्वं विवक्षितं भवति। कदाचित् सत्त्वं कदाचित् असत्त्वं च कालिकाव्याप्यवृत्तित्वम्। **एवमिति**। उक्तरीत्या कलञ्जभक्षणादौ कदाचित् शुभ-कर्मवशात् बलवदनिष्टानुबन्धित्वज्ञानोत्पत्त्या तदभावरूपकारणाभावात् न प्रवृत्तिः। अतस्तत्रापि बलवदनिष्टानुबन्धित्वज्ञानेऽपि कालिकाव्याप्यवृत्तित्व-सिद्ध्यर्थं निषेध्यतावच्छेदकसामानाधिकरण्येनेत्युक्तम्। **योग्यत्वपदम्** इति। बलवदनिष्टानुबन्धित्वयोग्यमिति योग्यपदघटनं कौस्तुभे।

## प्राशस्त्याप्राशस्त्यज्ञानयोरुपयोगः

**एवंविधबलवदनिष्टाननुबन्धित्वज्ञानस्य च येन पुरुषेण यागे सर्वदैव बलवद-निष्टानुबन्धित्वं बुद्धम्, तं प्रति तद्वृत्तिज्ञानेऽप्रामाण्यज्ञानसंपादकतया उपयोगः।**

**येन च कलञ्जभक्षणे बलवदनिष्टाननुबन्धित्वं सर्वदैव बुद्धम्, तं प्रति तद्वृत्तिज्ञाने-ऽप्रामाण्यज्ञानसम्पादकतया एवंविधवलवदनिष्टानुबन्धित्वज्ञानस्य उपयोगः, अव-च्छेदकावच्छेदेन तद्वत्ताबुद्धिं प्रति सामानाधिकरण्येन तदभाववत्तानिश्चयस्य विरो-धित्वात्। अतश्चैतादृशप्राशस्त्यज्ञानस्य सामग्रीसम्पादनद्वारा प्रवृत्तावुपयोगः। तादृशाप्राशस्त्यज्ञानस्य च प्रवृत्तिसामग्रीविघटनद्वारा निवृत्तावुपयोगः।**

---

उक्तनिष्कर्षफलितं प्राशस्त्याप्राशस्त्यज्ञानयोरूपयोगं प्रदर्शयति — **एवं-विधेत्यादिना।** विधेयतावच्छेदकयागत्वसामानाधिकरण्येन बलवदनिष्टाननुबन्धि-त्वरूपप्राशस्त्यज्ञानस्य चेत्यर्थः। अस्य संपादकतया उपयोग इत्यनेनान्वयः। येन पुरुषेण यागे सर्वदैव बलवदनिष्टानुबन्धित्वं बुद्धम् = यस्य पुरुषस्य प्राचीनकर्मवशात् यागः बलवदनिष्टजनक इति ज्ञानं सर्वदा वर्तते, तं पुरुषं प्रति = तत्पुरुषवृत्तिपूर्वोक्तज्ञाने अप्रामाण्यज्ञानसंपादकतया = इदं ज्ञानमप्रमेत्याकार-काप्रामाण्यप्रकारकज्ञानसंपादकतया उपयोगः। अप्रमात्वज्ञानाभावविशिष्टस्य बलवदनिष्टजनकत्वज्ञानस्यैव प्रतिबन्धकतया अप्रमात्वज्ञाने सति तदभाव-विशिष्टस्य बलवदनिष्टजनकत्वज्ञानरूपप्रतिबन्धकस्य अनुत्पत्त्या तदभावसत्त्वात् प्रवृत्तेः उपपत्तिरिति भावः।

**येन चेति।** येन पुरुषेण सर्वदा कलञ्जभक्षणं बलवदनिष्टाजनकमिति ज्ञातं, तत्पुरुषवृत्तितादृशज्ञाने, निषेध्यतावच्छेदककलञ्जभक्षणत्वावच्छेदेन बलवदनिष्टा-जनकत्वज्ञाने इति यावत्, अप्रामाण्यज्ञानजनकतया कलञ्जभक्षणं बलवदनिष्टा-ननुबन्धीति ज्ञानमप्रमा इत्याकारकज्ञानजनकतया, कलञ्जभक्षणं बलवदनिष्टानु-बन्धि इत्याकारज्ञानस्य कलञ्जभक्षणान्निवृत्तौ उपयोगः। प्रवृत्तिप्रतिबन्धकस्य ज्ञानस्य विघटनात् प्रवृत्तिप्रतिबन्धकज्ञानाभावसंपादकतया प्रवृत्त्यभावरूप-

निवृत्तावुपयोग इति भावः। **अवच्छेदकावच्छेदेन** = सर्वदा कलञ्जभक्षणमनिष्टाजनकमिति ज्ञानं प्रति, कदाचित् कलञ्जभक्षणमनिष्टसाधनम् इत्याकारकज्ञानस्य प्रतिबन्धकत्वादिति भावः। अवच्छेदकावच्छेदेनेत्यस्य सर्वदेत्यर्थः। सामानाधिकरण्येनेत्यस्य कदाचिदित्यर्थः। पूर्वं कालिकव्याप्यवृत्तित्वं कालिकाव्याप्यवृत्तित्वं च विवक्षितमिति ग्रन्थकारैरुक्तत्वात्।

**अतश्चैतादृशप्राशस्त्यज्ञानस्येति**। विधेयतावच्छेदकसामानाधिकरण्येन बलवदनिष्टाननुबन्धित्वरूपप्राशस्त्यज्ञानस्येत्यर्थः। **सामग्रीसंपादनद्वारा** = अप्रामाण्यज्ञानाभावविशिष्टपूर्वोक्तानिष्टानुबन्धित्वज्ञानाभावरूपायाः प्रवृत्तिसामग्र्याः संपादनद्वारा प्रवृत्तावुपयोगः इत्यर्थः। **तादृशाप्राशस्त्यज्ञानस्येति**। निषेध्यतावच्छेदकसामानाधिकरण्येन बलवदनिष्टानुबन्धित्वरूपाप्राशस्त्यज्ञानस्य इत्यर्थः। **प्रवृत्तिसामग्रीविघटनद्वारेति**। अप्रामाण्यज्ञानाभावविशिष्टबलवदनिष्टाजनकत्वज्ञानरूपायाः प्रवृत्तिसामग्र्याः विघटनद्वारा प्रवृत्त्यभावरूपनिवृत्तावुपयोग इत्यर्थः। सर्वमिदं सावधानं पठित्वा बुद्धौ धार्यम्।

**सम्भवति चेदमभ्यनुज्ञाविध्यर्थवादे, वपाहोमोत्तरदीक्षितान्नभोजनस्य निषेधप्रयुक्तानिष्टाननुबन्धित्वज्ञापनात्। न च तस्य दोषाभावरूपस्य विधिनैवाक्षेपात् कृतमर्थवादेनेति वाच्यम्, तेन तदाक्षेपेऽपि सामानाधिकरण्येन बलवदनिष्टाननुबन्धित्वस्यार्थवादेन बोधनोपपत्तेः।**

---

**संभवति चेत्यादि**। **अभ्यनुज्ञाविध्यर्थवादे** = हुतायां वपायां दीक्षितस्यान्नमश्नीयात् इति वाक्यं न दीक्षितस्यान्नमश्नीयात् इति निषिद्धस्य दीक्षितान्नभोजनस्य वपाहोमोत्तरकाले अभ्यनुज्ञां विधत्ते। तत्संनिधौ पठितः यः अर्थवादः तेन निषेधप्रयुक्तं यदनिष्टसाधनत्वं तदभावः बोध्यते। अनिष्टासाधनत्वं भोजने दोषाभाव-

रूपम्। तच्च हुतायां वपायां दीक्षितस्यान्नमश्नीयात् इति विधिनैव बोधनात् अर्थवादो व्यर्थ इति नाशङ्कनीयम्। विधिना तल्लाभेऽपि दीक्षितान्नभोजनत्वसामानाधिकरण्येन बलवदनिष्टाजनकत्वस्यार्थवादेन बोधनसंभवात्। सामानाधिकरण्येनेति। कालिकाव्याप्यवृत्तितयेत्यर्थः।

**एवं षोडशिग्रहणनिषेधार्थवादेऽपि ग्रहणजन्ये तात्कालिके स्वल्पेऽपि दुःखे सामानाधिकरण्येनोत्कटद्वेषविषयत्वाख्यं बलवत्त्वं बोध्यत इति, न काचिदनुपपत्तिः।**

## स्तुतिनिन्दयोरर्थवादपदैः लक्षणाप्रकारः

**अत एवंविधे स्तुतिनिन्दे क्वचित् 'वायुर्वैक्षेपिष्ठे'त्यादावर्थवादपदैः स्वशक्यार्थज्ञानजन्यशाब्दबोधविषयीभूतवाक्यार्थसंबन्धादेव लक्ष्येते। स च वाक्यार्थः क्षेपिष्ठत्वादिगुणको वायुस्स्वदेवताककर्मजन्यं फलं शीघ्रं प्रयच्छतीत्येवंरूपः। अत्र हि 'स एव' इत्यत्रैवकारस्य वैयर्थ्यपरिहारार्थं गमयत्येवेत्येवं योजना। ततश्च तेनौदासीन्यस्यापि व्युदासाद्दाने शीघ्रत्वादिप्रतीतिः। शाब्दबोधश्च तात्पर्याविषयीभूत एव जन्यते, गङ्गापदेन प्रवाहोपस्थितिवत्। फलगतशैघ्र्यज्ञानस्य च प्रायशः फले रागौत्कट्यजनकत्वदर्शनात्तत्संबन्धसत्त्वेन स्तुतिलक्षणासिद्धिः। एवमन्यत्राप्यूह्यम्।**

---

एवमिति। पूर्वोक्तप्रकारेणेत्यर्थः। षोडशिग्रहणनिषेधसंनिधौ योऽर्थवादः तेन षोडशिग्रहणजन्ये तात्कालिके स्वल्पेऽपि दुःखे कादाचित्कमुत्कटद्वेषविषयत्वरूपं बलवत्त्वं बोध्यते। अतस्तदा न तत्र प्रवृत्तिः इत्यर्थः। षोडशिग्रहणं नाम षोडशिसंज्ञकपात्रे सोमरसग्रहणम्।

अथ अर्थवादप्रातेपाद्यस्तुतिनिन्दयोः लक्षणाप्रकारमाह — **अत एवंविधे इति।** प्राशास्त्याप्राशस्त्यरूपे स्तुतिनिन्दे वायुर्वै क्षेपिष्ठा देवता इत्याद्यर्थवादवाक्यस्थ-पदैः स्वशक्यार्थ विषयकज्ञानजन्यशाब्दबोधविषयीभूतो यो वाक्यार्थः तत्संबन्धात् बोध्येते। स च वाक्यार्थः क्षेपिष्ठत्वादिगुणको वायुः स्वदेवताकयागजन्यं भूतिरूपं फलं शीघ्रं प्रयच्छतीत्येवंरूपः। अत्र हि वाक्ये स एव इति एवकारस्य गमयतीत्य-नन्तरं योजना। तेन वायुदेवतायाः औदासीन्यस्यापि व्यवच्छेदात् दाने शीघ्रत्वा-दिप्रतीतिः। उक्तशाब्दबोधे वाक्यार्थः तात्पर्याविषय एव भासते। गङ्गापदेन प्रवाहोपस्थितिवत्। भूतिरूफलगतशैघ्र्यज्ञानस्य फले उक्तटरागजनकत्वदर्शनात् तादृशफलसंबन्धवशात् स्तुतौ लक्षणा भवति। अत्र एवकारस्य अत्यन्तायोग-व्यवच्छेदोऽर्थः। ततश्च उक्तटरागविषयीभूतफलसंबन्धसत्त्वेन स्तुतौ लक्षणे-त्यर्थः। अर्थवादस्थविधिना एकवाक्यताप्रकारश्च प्रशस्तं वायुदेवताकं कर्म भूति-रूपफलाय अनुतिष्ठेत् इति। **एवमन्यत्रापीति।** निषेधार्थवादेऽपि बोध्यमित्यर्थः।

तथा हि — बर्हिषि रजतं न देयम् इति निषेधस्य यत् अर्थवादवाक्यं सोऽरोदीत् यदरोदीत् तद्रुद्रस्य रुद्रत्वम् इत्यादिरूपं तत्स्थपदैः स्वशक्यार्थज्ञानजन्यशाब्द-बोधविषयीभूतवाक्यार्थसंबन्धात् निन्दा लक्ष्यते इति ऊहनीयमिति भावः। रजत-दानं निन्दितमिति ज्ञानात् रजतदानान्निवृत्तिरिति भावः।

## गौणार्थकार्थवादैः स्तुतिलक्षणाप्रकारः

**यत्र त्वयोग्यतानिश्चयसत्त्वे नैतादृशशाब्धबोधः। यथा — 'यजमानः प्रस्तरः' इत्यादौ अभेदान्वयस्य बाधितत्वात्, तत्र यजमानपदं यजमानकार्यकारित्व-समानजातीयकार्यकारित्वरूपगुणयोगेन प्रस्तरे गौणमङ्गीकृत्य 'यजमानः प्रस्तरः' इति वाक्यजन्यशाब्दबोधोत्तरं स्वकार्यकर्तृत्वरूपवाक्यार्थसम्बन्धात्तेन वाक्येन**

**बलवदनिष्टाननुबन्धित्वरूपस्तुतिलक्षणा। न च यजमानपदे गौणीमङ्गीकृत्यैव बलवदनिष्टाननुबन्धित्वलक्षणामङ्गीकृत्य तस्य प्रस्तरेऽन्वयः किं न स्यादिति वाच्यम्, यजमानपदस्य प्रस्तरवृत्तिनिरुक्तस्तुतिलक्षणायां शक्यसम्बन्धाभावात्। अस्मन्मते सुबन्तयोः परस्परसम्बन्धाभावेन प्रस्तरेऽन्वयानुपपत्तेश्च। न चैवं तात्पर्याविषयीभूतशाब्दबोधदशायां गौण्या वृत्त्या उक्तस्य स्वकार्यकारित्वविशिष्टस्याप्यभेदसम्बन्धेन प्रस्तरे अन्वयानापत्तिः, अध्याहृताऽस्त्याख्यातार्थ एवोभयोरन्वयेन परस्परान्वयस्य पार्ष्ठिकत्वात्। तस्मादध्याहृताख्यातपदेन वाक्येन शाब्दबोधे जनिते पश्चात्तल्लक्षितप्राशस्त्यस्य विधावन्वयः।**

---

एतावता शक्यार्थकपदघटितार्थवादैः स्तुतिलक्षणाप्रकार उक्तः। अथ गौणार्थकपदघटितार्थवादवाक्यैः स्तुतिलक्षणाप्रकारं निरूपयति — **यत्र तु इत्यादिना।** अयोग्यतानिश्चयः = यस्य पदार्थस्य पदार्थान्तरेण साकम् अन्वययोग्यत्वाभावनिश्चयात् शाब्दबोध एव न जायते तत्र पूर्वोक्तरीत्या स्वशक्यार्थज्ञानजन्यशाब्दबोधविषयीभूतवाक्यार्थसंबन्धात् स्तुतिर्लक्ष्यत इति वक्तुं न शक्यते इति शङ्का जायते। यथा यजमानः प्रस्तरः इत्यर्थवादः। प्रस्तरो नाम दर्भमुष्टिः। स्रुचां धारणं यजमानेन कार्यम्। तच्च प्रस्तरेण क्रियते। अत्र समानविभक्तिकत्वात् समानाधिकरणवाक्यत्वम्। तेन यजमानाभिन्नः प्रस्तरः इति बोधो वर्णनीयः। प्रस्तरयजमानयोः अभेदो बाधितः। ततः यजमानपदस्य यजमानकार्यकारी इति लक्षणया अर्थः। तदभिन्नत्वं प्रस्तरे वर्तते यजमानकार्यभूतस्रुग्धारणकर्तृत्वात्। यद्यपि यजमानकर्तृकधारणस्य प्रस्तरकर्तृकधारणस्य च भेदो वर्तते, तथापि यजमानकर्तृकधारणसजातीयधारणकर्तरि लक्षणायाः स्वीकरात् नानुपपत्तिः इयं च गौणी लक्षणा। यजमानकर्तृकधारणकर्तृत्वसजातीयधारणकर्तृत्वरूपगुणयोगेन

यजमानपदस्य प्रस्तरे प्रवृत्तेः। ततश्च यजमानः प्रस्तरः इति वाक्यजन्यः यः यजमानकार्यकारित्वसजातीयकार्यकारी प्रस्तर इति शाब्दबोधः यजमानकार्य-कर्तृत्वरूपो यो वाक्यार्थः तत्संबन्धात् तस्य वाक्यस्य बलवदनिष्टाजनकत्व-रूपस्तुतौ लक्षणा। यथा सिंहो माणवक इत्यत्र सिंहसादृश्यसंबन्धात् माणवकस्य स्तुतिः। तथा यजमानकार्यकारित्वरूपवाक्यार्थसंबन्धात् प्रस्तरस्य स्तुतिः। स्तुतिश्चात्र बलवदनिष्टाननुबन्धित्वरूपेति भावः।

तत्र शङ्कते — **न च यजमानपदे इति**। यजमानपदस्य प्रस्तरे यजमान-कार्यसदृशकार्यकारित्वगुणयोगनिमित्तिकां गौणीवृत्तिमङ्गीकृत्य तत्संबन्धात् बल-वदनिष्टाननुबन्धित्वरूपस्तुतौ लक्षणाकल्पनापेक्षया बलवदनिष्टाननुबन्धित्व एव लक्षणा अङ्गीक्रियताम्। किं गौणीलक्षणारूपवृत्तिद्वयाङ्गीकारेण। बलवदनिष्टा-ननुबन्धित्वस्य प्रस्तरेऽबाधात् इति शङ्कितुराशयः। समाधत्ते — यजमान-पदस्य प्रस्तरवृत्तौ बलवदनिष्टाननुबन्धित्वे लक्षणा वक्तव्या चेत् — शक्यार्थ संबन्धरूपस्य बीजस्याभावात्। गौणीपूर्वकलक्षणायां तु गौणार्थसंबन्धरूपा लक्षणा भवितुमर्हति, लक्षितलक्षणावत् इति समाधातुराशयः।

किं च अस्माकं भाट्टमीमांसकानां मते द्वयोः सुबन्तार्थयोः परस्परमन्वयो न संभवति। सर्वेषामपि सुबन्तार्थानाम् प्रथममाख्यातार्थभावनायामन्वयः तस्य बोधश्च। परस्परसंबन्धस्य सुबन्तार्थानां पार्ष्ठिकबोधविषयत्वम्।

तत्र शङ्कते — **न चैवमिति**। आदौ सर्वेषामपि पदार्थानां भावनान्वयबोधः वाक्यतात्पर्यवशादङ्गीक्रियते। तात्पर्याविषयभूतपार्ष्ठिकबोधदशायां तु मानसः परस्परान्वयबोधः स्वीक्रियते। परं तु तद्दशायां तिङन्तसमभिव्याहारविरहात् भावनान्वयपूर्वकः पाश्चात्त्यः परस्परान्वयबोधः कथं स्यादिति शङ्का। तत्र समाधानमाह — अध्याहृतेति। आख्यातसमभिव्याहाराभावस्थले यजमानः

प्रस्तरः इत्यादौ तिङन्तपदमध्याहृत्य तदर्थभावनायां द्वयोः सुबन्तपदार्थयोः अन्वयबोधः प्रथमं भवति। तदनन्तरमेव परस्परान्वयबोधो जायत इति समाधातुराशयः। **तस्मादिति।** ततश्च अध्याहृताख्यातपदेन = अध्याहृतम् तिङन्तपदं यस्मिन् तादृशेन, अध्याहृताख्यातपदघटितेनेति यावत् — वाक्येन यजमानकर्तृका प्रस्तरकर्तृका च अस्तित्वभावनेति बोधे जाते तदनन्तरं यजमानपदार्थः यजमानकार्यकर्त्रभिन्नः प्रस्तर इति बोधो जायत इति भावः। **विधावन्वय इति।** अर्थवादसन्निहितवाक्यस्थलिङर्थे विधावन्वयः।

**न चैवं पश्चादपि यजमानपदेनैव प्राशस्त्यवन्तं लक्षयित्वा तस्य पार्ष्ठिकान्वयलभ्यपरस्परसम्बन्धाङ्गीकारेणाध्याहृताख्यातार्थ एव उभयान्वयो भवतु, पूर्वमेव यजमानपदे गौणीगर्भां स्तुतिलक्षणामङ्गीकृत्य तदन्वयोपपत्तेः। एक एव वा शाब्दबोधोऽस्तु, कृतं विध्यन्वयेन, वाक्यैकवाक्यतयैव तदाकांक्षितपूरणोपपत्तेरिति वाच्यम्, वाक्ये लक्षणामङ्गीकृत्यैकवाक्यत्वे सम्भवति वाक्यभेदस्यान्याय्यत्वात्। न चास्मदुक्तरीत्याऽध्याहृताख्यातार्थान्वयेऽपि पश्य 'मृगो धावतीति'वदेकाख्यातार्थस्य विध्याख्यातार्थप्रकारतयाऽन्वयेनाप्येकवाक्यतोपपत्तिः। आख्यातार्थस्य मुख्यविशेष्यत्वव्युत्पत्तिभङ्गभयेन स्योनं ते इतिवदाख्यातद्वयसत्त्वे भिन्नवाक्यस्यैवापातात्। अन्यथा प्रयाजाद्यङ्गभावनाया अपि इतिकर्तव्यतात्वेन प्रधानभावनान्वयापत्तेः सर्वस्याप्येकवाक्यतापत्तिः। 'पश्य मृगो धावती'त्यादौ तु पश्येत्यस्य कर्मान्वयं विना शाब्दबोधाजनकत्वाद्युक्तो धावनभावनायाः कर्मत्वेन तस्यामन्वयः। न हि कर्मान्वयं विना शाब्दबोधापर्यवसानवदितरकारकान्वयं विना तदपर्यवसानम्, वाक्यमात्रस्य साकांक्षत्वापत्तेः। तस्माद्यजमानपदमात्रे प्राशस्त्यलक्षणामङ्गीकृत्य अध्याहृताख्यातार्थेऽन्वयाङ्गीकारे वाक्यभेदापत्तेर्वाक्ये लक्षणाङ्गीकरणम्।**

पुनः शङ्कते — **न चैवमिति। पश्चादपि** = पार्ष्टिकबोधदशायामपि, यजमानपदेन प्राशस्त्यवन्तं लक्षयित्वा प्राशस्त्यवत्कर्तृका प्रस्तरकर्तृका च अस्तित्वभावना इति प्राथमिकबोधानन्तरमेव परस्परान्वयबोधं प्रशस्ताभिन्नः प्रस्तर इत्याकारकं स्वीकृत्य निरुह्यताम्। अथ वा एवं शाब्दबोधो भवतु किं विध्यन्वयेन। अस्मिन् पक्षे वाक्यैकवाक्यत्वम्। यजमानः प्रस्तर इति वाक्यस्य अस्तिपदस्य च मेलनेन वाक्यैकवाक्यता भवति। बोधद्वयाङ्गीकारे तत्कृतः वाक्यभेदः अवर्जनीयः स्यात् इति शङ्कितुराशयः। तत्र समाधत्ते — वाक्ये लक्षणामिति। यजमानः प्रस्तर इति वाक्ये स्तुतिलक्षणामङ्गीकृत्य तस्या विध्यन्वयेनं एकवाक्यत्वे संभवति, उक्तरीत्या वाक्यभेदस्यान्याय्यत्वेन अस्वीकारादिति भावः।

पुनः शङ्कते — **न चास्मदुक्तरीत्योति**। अस्मदुक्तरीत्या यजमानः प्रस्तरः अस्तीति अस्त्यर्थे यजमानः प्रस्तर इति वाक्यार्थस्यान्वयेऽपि यजमानकार्यकारि प्रस्तरकर्तृकास्तित्वभावनारूपवाक्यार्थस्य सन्निहितविध्याख्यातार्थभावनायाम् अन्वयेन एकवाक्यता निर्वहति। यथा पश्य मृगो धावतीत्यत्र मृगकर्तृकधावनरूपवाक्यार्थस्य कर्मतपा दर्शनभावनायामन्वयेन एकवाक्यता तद्वत् इति शङ्का। तत्र समाधानमाह — **आख्यातार्थस्येति**। सर्वेषामपि वाक्यानामाख्यातार्थमुख्यविशेष्यकशाब्दबोधजनकत्वमिति व्युत्पत्त्या अनेकाख्यातस्थले भिन्नवाक्यत्वमवर्जनीयम् — यथा स्योनं ते सदनं करोमि, घृतस्य धारया सुशेवं कल्पयामि इत्यादौ। अतः अर्थवादवाक्ये स्तुतौ लक्षणामङ्गीकृत्य विधिना सह एकवाक्यत्वमेव युक्तमिति भावः। **अन्यथेति**। आख्यातद्वयसत्त्वेऽपि यदि एकवाक्यत्वमङ्गीक्रियते तदा प्रयाजाद्यङ्गबोधकवाक्यार्थभावनाया अपि इतिकर्तव्यतात्वेन प्रधानयागभावनायामन्वयेन अङ्गवाक्यप्रधानवाक्ययोः एकवाक्यत्वापत्तिः। पश्य मृगो

धावतीत्यत्र आख्यातद्वयसत्त्वेऽपि पश्येत्यस्य कर्मान्वयं विना निराकाङ्क्षशाब्दबोधाजनकत्वात् धावनभावनायाः दर्शनभावनायां कर्मत्वेनान्वयं स्वीकृत्य एकवाक्यत्वमङ्गीक्रियते।

**वाक्यमात्रस्येति।** वाक्यसामान्यस्येत्यर्थः। तण्डुलं पंचतीत्यादौ स्थाल्याद्यधिकरणादिकारकान्वयं विनापि शाब्दबोधपर्यवासानात् इति भावः। प्रकृतं विचारं निगमयति — **तस्मादिति।** यजमानः प्रस्तरः इत्यत्र यजमान पदमात्रे प्राशस्त्यलक्षणामङ्गीकृत्य अध्याहृतास्त्याख्यातार्थेऽन्वयाङ्गीकारे पूर्वकथितरीत्या वाक्यभेदप्रसङ्गात् पूर्वेक्तरीत्या यजमानः प्रस्तर इति वाक्यस्यैव बलवदनिष्टाननुबन्धित्वरूपस्तुतौ लक्षणा इति भावः।

## अर्थवादानां विधिभिः क्वचित् वाक्यैकवाक्यत्वपक्षस्वीकारः

**वस्तुतस्तु आख्यातद्वयसत्त्वे वाक्यभेदस्यादोषत्वेन वाक्यलक्षणायां प्रमाणाभावः। तेन 'यजमानः प्रस्तरः' इत्यादौ वाक्यैकवाक्यत्वेऽपि न काचित् क्षतिः। न चैवं जर्तिलयवाग्वा वा जुहुयादित्यादावपि प्राशस्त्यलक्षणया पयोहोमविध्येकवाक्यतानापत्तेर्भिन्नवाक्यतापत्तिः। तत्र वाशब्देनैकवाक्यत्वप्रतीतेः। 'एकं वृणीत' इत्यादावपि विधायकतया भिन्नवाक्यत्वस्य विकल्पापादकतयानुपपत्तेः, अगत्या वाक्ये प्राशस्त्यलक्षणयाप्येकवाक्यत्वाङ्गीकरणम्। न हि तत्र 'यजमानः प्रस्तरः' इतिवदेकस्मिन्पदे लक्षणामङ्गीकृत्य लक्षितप्राशस्त्यस्योत्तरपदार्थेऽन्वयः सम्भवति। अतस्तत्र वाक्य एव लक्षणा। तेन यत्रैकस्मिन्पदे प्राशस्त्यलक्षणामङ्गीकृत्य तस्येतरपदार्थान्वयमङ्गीकृत्य वाक्यार्थपर्यवसानम, तत्रार्थवादविध्योः वाक्यैकवाक्यता। यत्र तु न तथा, तत्र सर्वत्र वाक्य एव प्राशस्त्यलक्षणामङ्गीकृत्य पदार्थविधयोपस्थितस्य विध्याख्यातार्थे एवान्वयाद्विध्यर्थवादयोः पदैकवाक्यतैवेति**

युक्तमुत्पश्यामः। तत्सिद्धं लिङादिवाच्या शाब्दीभावना प्राशस्त्यज्ञानाद्यनुगृहीता इष्टसाधनत्वाद्याक्षेपमुखेन मुख्यविशेष्यभूतायामाख्यातार्थकृतावन्वेतीति।

इति श्रीमदाचार्यखण्डदेवविरचिते भाट्टतन्त्ररहस्ये विधिवादस्समाप्तः।

---

**वस्तुतस्तु इत्यादि**। आख्यातद्वयसत्त्वे वाक्यभेदो न दोषाय। तेन यजमानः प्रस्तर इत्यर्थवादवाक्यस्य विधिवाक्येन सह एकवाक्यत्वपक्ष एव युक्त इत्यर्थः।

**न चैवमिति**। अयमर्थः — तैत्तिरीयसंहितायां पञ्चमकाण्डे चतुर्थप्रश्ने श्रुतम् — यत् ग्राम्याणां पशूनां पयसा जुहुयात् ग्राम्यान् पशून् शुचार्पयेत्। यदारण्यानामारण्यान् जर्तिलयवाग्वा वा जुहुयात् गवीधुकयवाग्वा वा। न ग्राम्याणां पशूनां पयसा जुहुयात् ग्राम्यान् पशून् शुचार्पयेत्। अथो खल्वाहुः अनाहुतिर्वै जार्तिलाश्च गवीधुकाश्चेत्यजक्षीरेण जुहोति। आग्नेयी वा एषा यदजाहुत्यैव जुहोति न ग्राम्यान् पशून् हिनस्ति नारण्यान् इति। अत्र पयसा जुहुयात् इति विधिः। इतरः सर्वोऽपि तदेकवाक्यतया तद्धोमस्तुत्यर्थवादः। समुदाये लक्षणया पदैकंवाक्यतया अन्वयः। भवदुक्तरीत्या अवान्तरवाक्यार्थे जाते अनेकाख्यातसत्त्वे वाक्यभेदस्यादोषत्वात् पयोविध्येकवाक्यता न सिध्यति। तथा च भिन्नवाक्यत्वापत्तिः, वाशब्देन पयोजर्तिलगवीधुकहोमानां विकल्पापत्तिश्चेति शङ्का।

तत्र समाधानमाह — **अत्र वाशब्देनेति**। जार्तिलाः आरण्यतिलाः। गवीधुकाः आरण्यगोधूमाः। **प्राशस्त्यलक्षणयेति**। वाक्यसमुदाये इति शेषः। अयमाशयः — श्रुतिस्थो वाशब्दः न पयःप्रभृतीनां विकल्पविधायकः। तस्य व्रीहियवन्यायेनैव सिद्धेः। अपि तु विषमपि भुञ्जीत, न तु परान्नम् इतिवत् अन्यविधानतात्पर्यक एव। अतः सर्वोऽपि वाक्यसन्दर्भः स्तुतिलक्षणया पयो विध्येकतापन्नः स्तुत्यर्थः इति।

उक्तविचारपर्यवसितं सर्वं संगृह्यानुवदति। **तेन यत्रेत्यादिना।** यत्र यजमानः प्रस्तर इत्यादौ एकस्मिन् पदे यजमानपदे यजमानकार्यकारित्वे लक्षणामङ्गीकृत्य तस्य इतरपदार्थे प्रस्तरपदार्थेऽन्वयमङ्गीकृत्य वाक्यैकवाक्यत्वम्, तत्र अर्थवाद-विधिवाक्ययोः वाक्यैकवाक्यत्वम्। यत्र तु वायुर्वैक्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनेपधावंति इत्यादौ तत्र अर्थपादविधिवाक्ययोर्न वाक्यैकवाक्यता, अपितु पदसमुदायरूपे वाक्ये प्राशस्त्ये लक्षणामङ्गीकृत्य पदार्थविधया उपस्थितस्य प्राशस्त्यस्य वायव्यं श्वेतमालभेन इति विधिलिङ्रूपाख्यातार्थे शाब्दीभावनाया-मेवान्वयात् विध्यर्थवादवाक्ययोः पदैकवाक्यत्वमेवेत्यर्थः। **तत्सिद्धमिति।** लिङादि-वाच्या शाब्दीभावना प्राशस्त्यज्ञानानुगृहीता इष्टसाधनत्वानुमानद्वारा मुख्य-विशेष्यभूतायामार्थीभावनारूपायामाख्यातार्थकृतावन्वेति। लिङ्ज्ञानकरणक-प्राशस्त्यज्ञानेतिकर्तव्यताकशाब्दीभावनासाध्या भूतिसाध्यकवायव्ययागकरणक-कृतिरूपा आर्थीभावनेति बोधः इति भावः।

अत्रायं संपिण्डितो निष्कर्षः। यजेत स्वर्गकामः गामानयेत् इत्यादिषु वैदिकेषु लौकिकेषु च वाक्येषु लिङ्प्रत्यये आख्यातत्वं लिङ्त्वं चेति धर्मद्वयमस्ति। तत्राख्या-तत्वेन रूपेण लिङा आर्थी भावना उच्यते। आर्थी भावना नाम प्रयत्नापरपर्याया पुरुषप्रवृत्तिः। लिङ्त्वेन रूपेण लिङा शाब्दी भावना उच्यते। शाब्दी भावना नाम अयमत्र प्रवर्तताम् इत्याकारकेच्छाविशेषरूपः पुरुषप्रवृत्त्यनुकूलः प्रेरकपुरुषनिष्ठो व्यापारः, अयमितो निवर्तताम् इत्याकारकेच्छाविशेषरूपो निवृत्त्यनुकूलो निवर्तकपुरुषनिष्ठो वा व्यापारः। वेदे च पुरुषाभावात् लिङादिशब्दनिष्ठ एव प्रवृत्तिनिवृत्त्यनुकूलः कश्चित् धर्मः शाब्दी भावना। वेदे शब्दनिष्ठत्वादेवास्याः शाब्दी भावनेति व्यवहारः। लिङादिशक्यतावच्छेदकं तु पुरुषगतेच्छाविशेष

शब्दगतधर्मविशेषोभयसाधारणं व्यापारत्वमात्रम्। न तु प्रवृत्तिनिवृत्तिप्रयोजकव्यापारत्वम्। प्रवृत्तिनिवृत्तिप्रयोजकत्वस्य शक्यतावच्छेदककोटिप्रवेशे गौरवात्, अन्यलभ्यत्वाच्च।

तथा हि — नञ्समभिव्याहाराभावस्थले लिङर्थस्य अयमत्र प्रवर्तताम् इत्याकारकेच्छाविशेषरूपव्यापारस्य आख्यातत्वावच्छिन्नशक्यप्रवृत्तौ प्रयोज्यत्वसंबन्धेनान्वयः। प्रयोज्यत्वं चात्र स्वविषयकज्ञानजन्यानुमितिजन्यत्वरूपम्। लिङ्श्रवणानन्तरं अयमत्र प्रवर्तताम् इत्याकारकेच्छाविशेषरूपस्य प्रेरकपुरुषाशयस्य ज्ञानं भवति। तदनन्तरं तादृशेच्छाविषयत्वरूपहेतुज्ञानं भवति। ततो यागादाविष्टसाधनत्वानुमितिर्भवति। तया च प्रवृत्तिः भवति। अनुमानप्रयोगश्च यागः इष्टसाधनम् अयमत्र प्रवर्तताम् इत्याकारकेच्छाविषयत्वात् इति। एवं च स्वविषयकज्ञानजन्यानुमितिजन्यत्वसंबन्धेन शाब्दीभावनायाः प्रवृत्तावन्वयात् प्रयोज्यप्रयोजकभावस्य संसर्गमर्यादयैव भानसंभवात् न तस्य शक्यतावच्छेदककोटौ प्रवेशः। एवं प्रवृत्तेरपि आख्यातत्वांशेन लाभात् तस्या अपि न शक्यतावच्छेदकत्वम्। नञ्समभिव्याहारस्थले तु लिङः निवर्तनाशब्दवाच्ये अयमितो निवर्तताम् इत्याकारकेच्छाविशेषे धर्मविशेषे वा लक्षणा। नञ्पदं तात्पर्यग्राहकम्।

तादृशेच्छाविशेषस्य च स्वविषयकज्ञानविशेषजन्यानुमितिप्रयोज्याभावप्रतियोगित्वसंबन्धेन आख्यातार्थप्रवृत्तावन्वयः। तथा च नञ्समभिव्याहृतलिङ्श्रवणानन्तरं कलञ्जभक्षणादयं निवर्तताम् इत्याकारकेच्छाविशेषरूपनिवर्तनाज्ञानं भवति। तदनन्तरं च तादृशेच्छाविषयीभूताभावप्रतियोगिकृतिविषयत्वरूपहेतुज्ञानं भवति। ततः कलञ्जभक्षणे अनिष्टसाधनत्वानुमितिः। ततः प्रवृत्त्यभावरूपा निवृत्तिः इति क्रमः। अनुमानप्रयोगश्च कलञ्जभक्षणमनिष्टसाधनम् अयमितो निवर्तताम् इत्याकारकाप्तेच्छाविषयीभूताभावप्रतियोगिकृतिविषयत्वात् इति। एवं

च प्रवृत्त्यभावरूपायाः निवृत्तेः तत्प्रयोजकत्वस्य च संसर्गतयैव लाभसंभवात् न तयोः लिङ्क्यतावच्छेदककोटौ प्रवेशः। तत्र नञसमभिव्याहृतलिङ्स्थले आख्यातत्वावच्छिन्नवाच्यायाः कृतिप्रवृत्त्याद्यपरपर्यायायाः आर्थीभावनायाः अंशत्रयमस्ति साध्यं साधनम् इतिकर्तव्यता चेति। तत्र किं भावयेदिति साध्याकाङ्क्षायां स्वर्गकामपदोपस्थाप्यः स्वर्गः साध्यत्वेनान्वेति स्वर्गं भावयेदिति। केन भावयेदिति साधनाकाङ्क्षायां समानपदोपात्तो यागः साधनत्वेनान्वेति यागेन भावयेदिति। कथं भावयेत् इति इतिकर्तव्यताकाङ्क्षायां प्रयाजाद्यङ्गकलापः इतिकर्तव्यतात्वेनान्वेति प्रयाजादिभिरुपकृत्येति। एवं च स्वर्गसाध्यिका यागकरणिका प्रयाजादीतिकर्तव्यताका पुरुषप्रवृत्तिरिति बोधो जायते।

तथा लिङ्त्वावच्छिन्नवाच्यायाः प्रवर्तनाप्रेरणाविध्यपरपर्यायायाः अयमत्र प्रवर्ततामित्याकारकेच्छाविशेषरूपायाः शाब्दभावनाया अपि साध्यं साधनम् इतिकर्तव्यता चेति अंशत्रयं वर्तते। तत्र साध्याकाङ्क्षायां पूर्वोक्तांशत्रयविशिष्टा आर्थी भावना साध्यत्वेनान्वेति। करणाकाङ्क्षायां लिङ्ज्ञानं लिङ्वाच्यशाब्दभावनाज्ञानं वा करणत्वेन अन्वेति। करणत्वं चात्र शाब्दभावनाभाव्यप्रवृत्तिनिर्वर्तकत्वेन। न हि लिङ्ज्ञानं लिङ्वाच्यशाब्दभावनाज्ञानं वा विना प्रवृत्तिर्भवति। इतिकर्तव्यताकाङ्क्षायां संनिहितार्थवादबोध्यप्राशस्त्यज्ञानस्येतिकर्तव्यतात्वेनान्वयः। इदं कर्म प्रशस्तमिति ज्ञाने सति यागादौ रुचिर्भवति तत्सहकारेण च लिङ्ज्ञानेन प्रवृत्तिर्भवति। तथा च प्राशस्त्यज्ञानेतिकर्तव्यताका लिङ्ज्ञानकरणिका शाब्दीभावनेति बोधः। शाब्दभावनायाश्च स्वविषयकज्ञानजन्यानुमितिप्रयोज्यत्वसंबन्धेन आर्थभावनायामन्वयः। तथा च निरुक्तांशत्रयविशिष्टा आर्थभावना उक्तप्रयोज्यत्वसंबन्धेन निरुक्तांशत्रयविशिष्टशाब्दभावनाविशिष्टा इति अर्थभावनामुख्यविशेष्यको बोधः।

एवं नञ्समभिव्याहारस्थले न कलञ्जं भक्षयेत् इत्यादौ आख्यातार्थः प्रवृत्तिः, लिङर्थो निवर्तना। प्रवृत्तौ तृप्तेः साध्यत्वम्, कलञ्जभक्षणस्य करणत्वम्, मुखे हस्तेन अन्ननिक्षेपादेः इतिकर्तव्यतात्वम्। निवर्तनारूपशाब्दभावनायां तु प्रवृत्त्य-भावरूपायाः निवृत्तेर्भाव्यत्वम्। नञ्समभिव्याहृतलिङ्ज्ञानस्य वा निवर्तनारूप-शाब्दभावनाज्ञानस्य वा करणत्वम्। अर्थवादबोध्यस्य अप्रशस्तत्वज्ञानस्य इति-कर्तव्यतात्वम्। निवर्तननिवारणनिषेधापरपर्यायायाः शाब्दभावनायाश्च स्वविषय-कज्ञानजन्यानुमितिजन्याभावप्रतियोगित्वसंबन्धेन प्रवृत्तिरूपायाम् आर्थभावना-यामन्वयः। तथाचाप्राशस्त्यज्ञानेतिकर्तव्यताकनिवर्तनाज्ञानकरणकनिवृत्तिभाव्य-कशाब्दभावनया स्वविषयकज्ञानजन्यानिष्टसाधनत्वानुमितिप्रयोज्याभावप्रयोगि-त्वसंबन्धेन विशिष्टा तृप्तिसाध्यकलञ्जभक्षणकरणकप्रवृत्तिः इति अर्थभावनामुख्य-विशेष्यक एव बोधः। — इति।

अर्थवादबोध्यप्राशस्त्याप्राशस्त्ययोः आश्रयतासंबन्धेन विधेये यागे निषेध्ये कलञ्जभक्षणे चान्वयेन पदैकवाक्यतां स्वीकृत्य प्रशस्तयागकरणिका आर्थीभाव-नारूपा प्रवृत्तिः। अप्रशस्तकलञ्जभक्षणकरणिका आर्थीभावनारूपा निवृत्तिः इति च बोधः। यजमानः प्रस्तर इत्यादौ तु वाक्यैकवाक्यता विधिना सह इत्यादिकं स्मर्तव्यम्।

**इति सारप्रकाशिकायां विधिवादस्समाप्तः।**

# भावनावादः

## प्रथमान्तार्थमुख्यविशेष्यत्वनिरासमुखेन भावनावादः

## तार्किकाभिमतप्रथमान्तार्थमुख्यविशेष्यकबोधस्यानुवादः

नन्वाख्यातार्थस्य कृतेर्मुख्यविशेष्यत्वे मानाभावः। तथाहि — तिङुपात्तैकत्वादिसंख्या तावदन्याविशेषणीभूतप्रथमान्तपदोपस्थाप्ये चैत्रादावाश्रयतासम्बन्धेन अन्वेतीति तावदविवादम्। स च 'चैत्र ओदनं पचती'त्यत्र कर्त्राख्याते चैत्रः, 'ओदनः पच्यते चैत्रणे'त्यत्र कर्माख्याते चौदनः, तस्यैवान्याविशेषणत्वात्। इतरस्य कर्मत्वादिविशेषणत्वात्। अत्र च 'चैत्र इव गच्छति मैत्रः' इत्यादौ चैत्रे प्रथमान्तपदोपस्थाप्येऽपि न तिङुपात्तसंख्यान्वयः,तस्य इवशब्दार्थे सादृश्ये प्रतियोगिताकत्वसंसर्गेण विशेषणत्वात्, अपि तु मैत्रे एव। अत एव 'चन्द्र इव मुखं, चन्द्रश्च भासत' इत्यत्रोभयत्र संख्यान्वयः। उभयोरप्यन्याविशेषणीभूतपदोपस्थाप्यत्वात्। भावाख्याते धात्वर्थस्यान्याविशेषणत्वात्तत्र संख्यान्वयवारणार्थं प्रथमान्तेति। अतश्च तद्वदेवाख्यातोपात्तार्थभावनाया अपि तस्मिन्नेवाश्रयतासम्बन्धेनान्वयः, न तु तस्य मुख्यविशेष्यत्वम्। कालादिव्यतिरिक्ताख्यातार्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रत्युक्तविधप्रथमान्तपदजन्योपस्थितिः कारणमित्येककार्यकारणभावकल्पने लाघवादिति चेत्।

---

पूर्वं सर्वेषु वाक्येषु आख्यातार्थकृतिमुख्यविशेष्यको बोधो भवतीति निरूपितम्। अथ प्रथमान्तार्थमुख्यविशेष्यकबोधवादिनां नैयायिकानां मतमनुवदति दूषणार्थम् — नन्वाख्यातार्थस्य इत्यादिना। आख्यातार्थस्य कृतेर्मुख्यविशेष्यत्वे

प्रमाणाभावः। तथाहि — चैत्रः ओदनं पचतीत्यत्र कर्त्राख्यातस्थले तिङः एकत्वसंख्या वर्तमानकालः कृतिश्चार्थः। तत्र एकत्वसंख्यायाः अन्याविशेषणीभूते प्रथमान्तपदोपस्थाप्ये चैत्रे आश्रयत्वसंबन्धेनान्वयः। न तु ओदने। तस्य द्वितीयार्थकर्मत्वविशेषणत्वेन अन्याविशेषणत्वाभावात्। चैत्रेण ओदनः पच्यते इत्यत्र ओदने आख्यातार्थसंख्यान्वयः। न तु चैत्रे अन्वयः। तस्य तृतीयार्थकर्तृत्वे विशेषणत्वेन अन्याविशेषणत्वाभावात्। चैत्र इव गच्छति मैत्र इत्यत्र आख्यातार्थैकत्वसंख्यायाः मैत्र एवान्वयः, न तु चैत्रे। चैत्रस्य प्रथमान्तपदोपस्थाप्यत्वेऽपि इवार्थसादृश्यविशेषणत्वेन अन्याविशेषणत्वाभावात्। चन्द्र इव मुखं, चन्द्रश्च भासते इत्यत्र चन्द्रे मुखे च आख्यातार्थैकत्वसंख्यान्वयः। उभयोरपि अन्याविशेषणीभूतप्रथमान्तपदोपस्थाप्यत्वात्। 'चैत्रेण स्थीयते' इत्यादिभावाख्यातस्थले धात्वर्थस्य स्थितेः अन्याविशेषणत्वात् तत्र आख्यातार्थसंख्यान्वयवारणाय प्रथमान्तपदोपस्थाप्येत्युक्तम्। अतश्च तद्वदेव आख्यातार्थसंख्यायाः यथा प्रथमान्तपदोपस्थाप्येऽन्वयः तद्वत् आख्यातार्थकृतेरपि आश्रयतासंबन्धेन तस्मिन्नेवान्वयः। न तु कृत्यपरपर्यायाः भावनायाः मुख्यविशेष्यत्वम्। आख्यातार्थकालस्य तु कृतावन्वयः। विशेष्यतासंबन्धेन कालाद्यतिरिक्ताख्यातार्थप्रकारकशाब्दबोधं प्रति विशेष्यतासंबन्धेन प्रथमान्तपदजन्योपस्थितिः कारणमिति एककार्यकारणभावकल्पने लाघवात् इति समुदायार्थः। अन्याविशेषणीभूतेति विशेषणस्य प्रयोजनमाह — अत्र चेति। अत एवेति। उभयोरपीति वक्ष्यमाणहेतोरेवेत्यर्थः। प्रथमान्तेति विशेषणस्य प्रयोजनमाह — भावाख्यात इति। तद्वत् = संख्याया इव। तस्मिन्नेव = प्रथमान्तपदोपस्थाप्य एव। तस्याः भावनायाः। उक्तविधेति। अन्याविशेषणीभूतेत्यर्थः।

## तन्निरासमुखेन भावनामुख्यविशेष्यकत्वस्योपन्यासः

**उक्तप्रथमान्तार्थस्यैवाधेयतासम्बन्धेन कृतावन्वयस्य कालादिवत्सम्भवेन तादृश-कार्यकारणभावकल्पन एव नियामकाभावात्। न ह्याख्यातार्थभावनायाः प्रथमान्तार्थं प्रति प्रकारत्वेनैवान्वयबोध इत्यत्र नियामकं किञ्चिदस्ति, जैमिनि-पाणिन्याद्यनुभवविरुद्धानुभवस्य शपथनिर्णेयत्वात्। 'तद्भूतानां क्रियार्थेन समाम्नायः' (1.1.25) इति जैमिनिना क्रियामुख्यविशेष्यकानुभवस्योक्तत्वात्। न चैवं गौतमानुभवोप्यस्ति।**

---

**उक्तप्रथमान्तार्थस्येति।** अन्याविशेषणीभूतप्रथमान्तर्थस्य आख्यातार्थकृतौ आधेयतासंबन्धेन अन्वयः संभवति। यथा कालादेः आधेयतासंबन्धेन कृता-वन्वयः तद्वत्। चैत्र ओदनं पचतीति वाक्यात् चैत्रवृत्तिः वर्तमानकालवृत्तिश्च भावना (कृतिः) इति बोधः। **ततश्च नैयायिकोक्तकार्यकारणभावे मानाभावः। न हि** आख्यातार्थकृतेः प्रथमान्तार्थे प्रकारत्वेनान्वयबोध इत्यत्र प्रमाणं किंचिदस्ति। न चानुभवः प्रमाणमिति वाच्यम्। जैमिनिपाणिन्याद्यनुभवविरुद्धस्य अनुभवस्य शपथनिर्णेयत्वात्। तद्भूतानां क्रियार्थेन समाम्नायः इति (1.1.24) जैमिनिना क्रियामुख्यविशेष्यकानुभवस्य उक्तत्वात्। न चैवं न्यायदर्शनकर्तुः गौतमस्या-प्यनुभवः अस्ति। तद्भूतानाम् इति सूत्रस्यायमर्थः — तेषु पदार्थेषु विद्यमानानां पदानां क्रियार्थेन भावनान्वयार्थम् समाम्नायः उच्चारणम्। अर्थस्य = वाक्यार्थस्य तन्निमित्तत्वात् = पदार्थनिमित्तकत्वात्। पदैरभिहिताः पदार्थाः आकाङ्क्षादि-सहिताः वाक्यार्थं लक्षणया बोधयन्ति इत्यर्थः। क्रियार्थकपदबोध्यभावनया सहेत्यर्थः। अपि च वैशेषिकसूत्रे न्यायसूत्रे वा प्रथमान्तार्थमुख्यविशेष्यकबोधस्य कुत्राप्यसूचनात्। तदाह — **न चैवं गौतमानुभवोऽप्यस्ति इति।**

## तिङुपात्तसंख्याया नामार्थेऽनन्वयोपपादनम्

किञ्च संख्याया अपि तिङुपात्ताया नैव नामार्थे चैत्रादावन्वयः, तस्य प्रथमोक्तसंख्यावरोधात्। न च तस्यास्साधुत्वार्थत्वान्नावरोधकत्वम्। एकपदोपात्तत्वप्रत्यासत्त्या झटित्युपस्थितस्य तस्यान्वयेन विलम्बोपस्थितायास्तिङुपात्ताया एव साधुत्वार्थकत्वौचित्यात्। न चैवं 'चैत्रो मैत्रश्च गच्छतः' इत्यत्र द्वित्वान्वयानुभवानापत्तिः। द्वित्वान्वयानुभववत् सुपा प्रत्येकैकत्वान्वयानुभवस्याप्यपह्नोतुमशक्यतयावश्यमेकस्यानुभवस्याशाब्दत्वे वाच्ये, पदान्तरोपात्तद्वित्वस्यैव तदौचित्यात्।

---

किंचेत्यादि। तिङ्वाच्यायाः एकत्वादिसंख्याया अपि नामार्थे चैत्रादौ नान्वयः। तस्य चैत्रादेः प्रथमाविभक्त्यर्थसंख्यया उपरोधात्। संख्याविशेषाकाङ्क्षायाः शमनात्। न चेति। तस्याः प्रथमाविभक्तेः प्रयोगसाधुत्वफलकत्वात् नावरोधकत्वम् स्वार्थसंख्यान्वयद्वारा आकाङ्क्षाशामकत्वम् इति न च वाच्यम्। चैत्र इत्येकेन पदेन चैत्रस्य संख्यायाश्चोपात्ततया शीघ्रोपस्थितायाः प्रथमार्थसंख्यायाः अन्वयेन आख्यातात् विलम्बेनोपस्थितायाः अन्वयासंभवात् तिङुपात्ताया एव संख्यायाः साधुत्वार्थकत्वौचित्यात् तिङेकवचनं संख्यार्थकमपि नान्वयबोधार्थम्— अपि तु प्रयोगसाधुत्वार्थमिति भावः।

न चैवमिति। चैत्रो मैत्रश्च गच्छतः इत्यत्र चैत्रमैत्रोभयवृत्तिद्वित्वसंख्याया अनुभवेन अत्र द्वित्ववाचकसुपोऽभावात् तिङः एव द्वित्वार्थकत्वमिति शङ्का। द्वित्वान्वयानुभववदिति। तत्रोभयवृत्तिद्वित्वान्वयानुभववत् प्रत्येकैकत्वान्वयानुभवस्यापि जायमानतया एकस्यानुभवस्य अशाब्दत्वे वक्तव्ये पदान्तरोपात्तद्वित्वस्यैवाशाब्दत्वं वक्तव्यम्। द्वित्वबोधस्तु मानस इति समाधानम्।

## आख्यातलक्ष्ये कर्तरि संख्यान्वयोपपादनम्

वस्तुतस्तु तिङो लाघवानुरोधेन कृतौ शक्तावपि वक्ष्यमाणरीत्या कर्त्रादेर्निरूढ-लक्षणया भानस्यावश्यकत्वात्तत्र चैकपदोपात्तत्वप्रत्यासत्त्या संख्याया अन्वयेन, न कुत्रापि तस्याः प्रथमान्तेऽन्वयः। अतश्च 'एकपदोपात्तानाम् एकविशेष्यकत्व-मौत्सर्गिकमि'ति न्यायेन, एककार्यकारणभावकल्पनालाघवानुरोधेन च, यदि संख्याविशेष्ये भावनान्वयः इत्याग्रहः, तदा अस्त्याख्यातलक्ष्य एव कर्त्रादौ उभयान्वयः। न तु प्रथमान्तपदोपस्थाप्ये। यथा चैव सति भावनायास्तं प्रति मुख्यविशेष्यत्वम्, तथोऽग्रे निरूपयिष्यामः॥

---

संख्यायाः आख्यातलक्ष्ये कर्तर्यन्वयः, न तु प्रथमान्तपदोपस्थाप्ये इति निरूपयति — **वस्तुतस्तु** इत्यादिना। चैत्रः पचतीत्यादौ तिङः शक्यतावच्छे-दकैकत्वरूपलाघवानुरोधेन कृतौ शक्तिः। न तु कर्तरि। कृतीनां कर्तृपदशक्यता-वच्छेदकानां बहुत्वेन गौरवात् इति स्वीकारेऽपि कर्तरि निरूढलक्षणा स्वीक्रियते। पचतीत्युक्ते कीदृग्विध इति प्रश्नानुरोधात्। पाककर्ता इति बोधे सति हि कीदृग्विध इति प्रश्नः संभवति। ततश्च आख्यातोपात्तसंख्याया आख्यातोपात्तकर्तर्येवान्वयः। एकपदोपात्ततया झटित्युपस्थितेः। प्रत्यासत्तिः अविलम्बेन उपस्थितिः। अतो न कुत्रापि आख्यातार्थसंख्यायाः प्रथमान्तपदार्थेऽन्वयः। अतश्च एकपदोपात्ताना-मर्थानाम् एकमुख्यविशेष्यकत्वमिति सामान्यन्यायेन, आख्यातार्थकर्त्रतिरिक्तार्थ-निष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबोधं प्रति विशेष्यतासंबन्धेन कर्तुः उपस्थितिः कारणमिति एककार्यकारणभावेन च, यदि संख्याविशेष्ये कर्तरि आख्यातार्थभावनाया अन्वय इति आग्रहः तदा आख्यातलक्ष्ये एव कर्तरि संख्या-

भावनयोरुभयोरन्वयः, न तु प्रथमान्तपदार्थे। यथा च एवं सति भावनायाः तं प्रति प्रथमान्तपदार्थं प्रति विशेष्यत्वं, तथा अग्रे वक्ष्यामः इति समुदायार्थः।

## तार्किकमतेन कार्यकारणभावं निष्कृष्य तत्रानुपपत्तिप्रदर्शनम्

**किञ्च भवन्मते कालाद्यतिरिक्ताख्यातार्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन आख्यातपदज्ञानजन्यशाब्दबुद्धित्वावच्छिन्नं प्रति विशेष्यतासम्बन्धेन प्रथमान्तनामपदजन्यान्याविशेषणीभूतार्थविशेष्यकोपस्थितित्वेन कारणतेत्येवं कार्यकारणभावः पर्यवसन्नः। न चासौ सम्भवति। न पचति चैत्रः,पचत्येव चैत्रः, इत्यादावाख्यातार्थभावनायाश्चैत्र एवान्वयप्रसङ्गेन नञर्थेऽभावे, एवकारार्थान्ययोगव्यावृत्त्यैकदेशभेदे, अपिशब्दार्थभूते समुच्चये वा अन्वयानापत्तेः, तत्र चैत्रे संख्यान्वयेन, भावनाविशेष्ये संख्याऽन्वय इति नियमस्यापि व्यभिचारापत्तेश्च। अत एव निपातासमभिव्याहृतत्वं, नाख्यातेत्यस्य विशेषणम्। संख्यायाश्चैवेऽन्वयानापत्तेः। न चोक्तकार्यकारणभावे तेन विशेषणेऽपि, निपातसमभिव्याहृतस्थले संख्याभावनयोः पृथक्कार्यकारणभावमङ्गीकृत्य स्वस्वविशेष्येऽन्वयोपपत्तिः।**

---

अथ तार्किकसंमतकार्यकारणभावेऽनुपपत्तिं प्रदर्शयति — **किं च भवन्मत इत्यादिना।** चैत्रः पचतीत्यत्र आख्यातस्य वर्तमानकालः एकत्वसंख्या कृतिश्चार्थः। तत्र कालस्य कृतौ अन्वयः। एकत्वसंख्यायाः कृतेश्च प्रथमान्तपदोपस्थाप्ये चैत्रेऽन्वयः। तदनुसारेण कालातिरिक्ताख्यातार्थसंख्याकृतिनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन आख्यातपदज्ञानजन्यशाब्दबुद्धित्वावच्छिन्नं प्रति विशेष्यतासंबन्धेन प्रथमान्तपदज्ञानजन्या या अन्याविशेषणीभूतार्थ-

विशेष्यकोपस्थितिः सा कारणमिति कार्यकारणभावः पर्यवसन्नः। न चासौ संभवति। बहुषु स्थलेषु व्यभिचारेण अनुपपत्तिसद्भावात्।

तथा हि — न पचति चैत्रः इत्यत्र आख्यातार्थकृतेः नञर्थाभावेऽन्वयेन तस्य च चैत्रेऽन्वयेन पाकानुकूलकृत्यभाववांश्चैत्र इति बोधस्वीकारात् नञर्थेऽभावे विशेष्यतासंबन्धेन प्रथमान्तचैत्रपदजन्योपस्थितेरभावेन व्यतिरेकव्यभिचारात्।

एवं पचत्येव चैत्रः इत्यत्र धातोः पाकोऽर्थः। तस्य आख्यातार्थकृतौ अनुकूलतासंबन्धेनान्वयः। एवकारस्य भेदः आश्रयः अभावश्चार्थः। भेदे आख्यातार्थकृतेः प्रतियोगित्वसंबन्धेनान्वयः। भेदस्य स्वरूपसंबन्धेन आश्रये अन्वयः। कृत्यन्तरं विवक्षितम्। आश्रयस्य प्रतियोगितासंबन्धेन अभावेऽन्वयः। अभावस्य चैत्रेऽन्वयः। तथा च चैत्रः पाकानुकृतिप्रतियोगिकभेदाश्रय (कृति भिन्न) कृत्यभाववान् इति बोधः इष्टः। तथा चात्र आख्यातार्थकृतिनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबोधः एवकारार्थभेदे जायते। तत्र प्रथमान्तजन्योपस्थितिः विशेष्यतासंबन्धेन नास्ति, एवकारस्य प्रथमान्तत्वाभावात्। तथा चोक्तकार्यकारणभावः न संभवति।

यद्यपि अव्ययादाप्सुपः इति सूत्रेण एवकारोत्तरसुपो लोपेऽपि प्रत्ययलक्षणेन एवकारस्य प्रथमान्तत्वमस्तीति शङ्का स्यात्। तथापि भेदस्य एवकारार्थान्तर्गताश्रयविशेषणत्वेन अन्याविशेषणत्वं नास्तीति अन्याविशेषणीभूतप्रथमान्तैवकारजन्योपस्थितिर्नास्तीति आशयः।

एवं पचत्यपि चैत्र इत्यत्र अपिशब्दस्य समुच्चयः अर्थः। समुच्चये आख्यातार्थकृतेः अन्वयः। पाकानुकूलकृतिसमुच्चयवान् चैत्रः इति बोधः अभिमतः। अत्रापि आख्यातार्थकृतिनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबोधः

समुच्चये जायते। तत्र प्रथमान्तपदजन्योपस्थितिर्विशेष्यतासंबन्धेन नास्तीति व्यतिरेकव्यभिचारो बोध्यः। वस्तुतस्त्वेतादृशस्थले कार्यकारणभावान्तरं कल्प्यत इति नैयायिकाः। तथा सति अनेककार्यकारणभावकल्पनया गौरवमिति भावः।

**अन्वयानापत्तेः इति।** अन्वयानुपपत्तेरित्यर्थः। अनुपपत्तेरित्यस्य स्थाने अनापत्तेः इति व्यवहारः सर्वत्र खण्डदेवाचार्यस्य। उक्तोदाहरणेषु आख्यातार्थ-कृतिरूपभावनायाः विशेष्यः नञर्थः, एवार्थः, अप्यर्थश्च। आख्यातार्थसंख्या तु न तेषु अन्वेति। अपि तु चैत्रे अन्वय इति नियमस्यापि भङ्ग इत्याह — **तत्र चैत्रे संख्यान्वयेनेत्यादिना।** व्यभिचारापत्तेः = भङ्गापत्तेरित्यर्थः।

**अत एवेति।** संख्याया इति वक्ष्यमाणदोषादेवेत्यर्थः। न पचति चैत्रः पचत्येव चैत्रः, पचत्यपि चैत्रः इत्यादौ प्रदर्शितस्य व्यतिरेकव्यभिचारस्य वारणाय निपाता-समभिव्याहृतत्वम् आख्यातस्य विशेषणं दातव्यम्। ततश्च कालाद्यतिरिक्तो यो निपातासमभिव्याहृताख्यातः तदर्थनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्द-बोधं प्रति विशेष्यतासंबन्धेन प्रथमान्तनामपदजन्यान्याविशेषणीभूतार्थविशेष्य-कोपस्थितिः कारणमिति कल्पनान्न पूर्वोक्तव्यभिचारः इत्युक्तौ पूर्वोक्तानां व्यभि-चाराणां वारणेऽपि उक्तस्थलेषु चैत्रे आख्यातार्थसंख्यायाः अन्वयानुपपत्तिः। तत्रत्याख्यातस्य निपातसमभिव्याहृतत्वात् इति भावः।

**न चेति।** पूर्वोक्तकार्यकारणभावे निपातासमभिव्याहृतेति विशेषणे दत्तेऽपि, निपातसमभिव्याहृतस्थले न पचति चैत्र इत्यत्र संख्यायाः चैत्रे भावनायाः नञर्थे चान्वयेन तदनुगुणतया पृथक् कार्यकारणभावः कल्प्यते। यथा आख्यातार्थ-संख्यानिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबुद्धिं प्रति विशेष्यतासंबन्धेन प्रथमान्तपदजन्योपस्थितिः कारणम्। आख्यातार्थभावनानिष्ठप्रकारतानिरूपित-विशेष्यतासंबन्धेन शाब्दबुद्धिं प्रति विशेष्यतासंबन्धेन नञ्पदजन्योपस्थितिः

कारणमिति पृथक्कार्यकारणभावः कल्प्यत इति न वक्तुं शक्यते। अनेककार्यकारणभावकल्पनप्रयुक्तगौरवप्रसङ्गादिति भावः। भवन्मते कथं गौरवाभावः इत्यत्राह — **अस्मन्मतेत्विति**। अस्मन्मते तु आख्यातार्थभावनातिरिक्तानां पदार्थानां साक्षात् परंपरया च भावनायामेवान्वयस्वीकारात् एक एव कार्यकारणभावः। यथा — आख्यातार्थभावनातिरिक्तपदार्थनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबोधं प्रति भावनानिष्ठविशेष्यतासंबन्धेन लिङ्गानन्वयिपदजन्योपस्थितिः कारणमिति। यद्वा सुबर्थलिङ्गसंख्याव्यतिरिक्तप्रातिपदिकार्थव्यतिरिक्तप्रकारकशाब्दबोधं प्रति भावनानिष्ठविशेष्यतासंबन्धेन लिङ्गानन्वयिपदजन्योपस्थितिः कारणमिति एककार्यकारणभावः।

## स्वमते च तत्र लाघवकथनम्

**अनेककार्यकारणभावकल्पनापत्तेः। अस्मन्मते त्वेककार्यकारणभावेनैव वक्ष्यमाणरीत्या सर्वेषां भावनान्वयेन भावनाया एव मुख्यविशेष्यत्वात्तदनापत्तिः।**

**किञ्च सर्वनिपातसाधारण्येनापि नैकरूप्यम्। 'चैत्र एव पचति, घट एव दृश्यते' इत्यादौ निपातसमभिव्याहारेऽप्युभयोरपि संख्याभावनयोश्चैत्रेऽन्वयप्रतीतेः। न च क्रियासमभिव्याहृतस्थल एव संख्याभावनयोर्वैरूप्यम्, नान्यत्रेति नियमोऽपि सम्भवति। पचति न चैत्रः, चैत्रो न पचतीत्यादावुभयथाऽपि वैरूप्यात्। अतो भवन्मते कार्यकारणभावानन्त्याद्व्यभिचाराच्च न प्रथमान्तपदोपस्थाप्यस्य भावनाविशेष्यत्वम्।**

---

किं चेति। सर्वनिपातसाधारण्येनापि नैकरूप्यम् = नैकरूपो विशेष्यविशेषणभावः। चैत्र एव पचति इत्यत्र एवकाररूपनिपातसमभिव्याहारे चैत्रे एव आख्य-

तार्थकृतेः संख्यायाश्चान्वयप्रतीतेः। भवद्भिः तत्र चैत्रान्यः पाकानुकूलकृत्यभाववान् चैत्रः एकत्ववान् पाकानुकूलकृतिमाश्चेति बोधस्वीकारात्। घट एव दृश्यते इत्यत्र घटे आख्यातार्थसंख्यान्वयस्वीकाराच्च। तत्र घटान्यः दर्शनकर्मत्वाभाववान् घटः दर्शनकर्मत्ववान् एकश्चेति बोधस्वीकारात्। अस्मन्मते तु नामार्थभिन्नः सुबर्थ-लिङ्गसंख्यातिरिक्तः सर्वोऽपि भावनायामन्वेतीति लाघवम्।

न चेति। क्रियासमभिव्याहृतनिपातस्थल एव पचत्येव चैत्रः पचत्यपि चैत्र इत्यादावेव संख्याभावनयोः वैरुप्यं भिन्नविशेष्यकत्वम्, नान्यत्र चैत्र एव पचति इत्यादौ न वैरूप्यम् भिन्नविशेष्यकत्वमिति नियमोऽपि न च संभवति। पचति न चैत्रः, चैत्रो न पचतीत्यादौ उभयथापि वैरूप्यात्। पचति न चैत्र इत्यत्र चैत्रान्यः पचतीत्यर्थो बोध्यः। अत्र नञः चैत्रेणान्वयात् क्रियासमभिव्याहाराभावात्। तथापि संख्याभावनयोः एकत्र चैत्रान्यस्मिन् अन्वयात्। एवं चैत्रो न = पचति इत्यत्र चैत्रभिन्नः पचति इत्यर्थः। अत्रापि संख्याभावनयोरेकत्रैवान्वयः। एतदनुसारेणाप्यन्यादृशकार्यकारणभावकल्पनमावश्यकमिति गौरवमिति भावः।

## भावनामुख्यविशेष्यत्वे युक्तिविशेषः

अपि च ओदनं पचतीत्यत्र प्रथमान्तपदाभावे कारणाभावादेव भावनाप्रकारकबोधानुपपत्तेरितरसामग्रीवशाद् भावानायां मुख्यविशेष्यत्वे बाधकाभावः, न चानुभवानुरोधेन भावनाप्रकारकबोधत्वावच्छिन्नं प्रत्येवाख्यातपदज्ञानस्य कारणत्वं कल्पयित्वा तादृशबोधार्थं प्रथमान्तपदाध्याहार इति वाच्यम्; अनुभवस्य शपथनिर्णेयत्वेन तत्कार्यकारणभावकल्पने गौरवात्। न च तवापि 'पण्डितश्चैत्रः' इत्यादावाख्यातपदाभावे प्रथमान्तस्य मुख्यविशेष्यत्वापत्तिः। सुबर्थप्रकारकबोधत्वावच्छिन्नं प्रत्येव सुब्ज्ञानस्य कारणत्वात्, वक्ष्यमाणरीत्या प्रथमाया अपि संख्याति-

**रिक्तार्थसद्भावाच्च। अनतिरिक्तत्वेऽपि प्रथमान्तनामपदोपस्थाप्यप्रकारकबोधत्वावच्छिन्नं प्रति प्रथमान्तपदज्ञानस्य कारणत्वकल्पनेन तादृशस्थले आख्यातपदाध्याहारोपपत्तेः। न च विनिगमनाविरहः, स्मृत्यनुमतत्वेन तस्यादोषत्वात् 'अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्ति' इत्यनुशासनज्ञानाभावे निरुक्तबोधस्येष्टत्वाच्च।**

---

अथ भावनामुख्यविशेष्यत्वे युक्त्यन्तरमाह — अपि चेत्यादिना। प्रथमान्तपदाभावे ओदनं पचति इत्यत्र प्रथमान्तपदजन्योपास्थितिरूपकारणाभावात् आख्यातर्थभावनाप्रकारकप्रथमान्तपदार्थविशेष्यकबोधस्यासंभवात् आख्यातार्थभावनायाः मुख्यविशेष्यत्वं स्वीकरणीयम्। बाधकाभावात्।

न च सर्वत्र प्रथमान्तार्थमुख्यविशेष्यकाख्यातार्थप्रकारकशाब्दबोध एव जायते इत्यनुभवात् तदनुसारेण भावनाप्रकारकशाब्दबोधत्वावच्छिन्नं प्रत्येव आख्यातपदज्ञानस्य कारणत्वं कल्पयित्वा तादृशबोधनिर्वाहाय प्रथमान्तपदाध्याहारः कर्तव्य इति वाच्यम्। तथैवानुभव इत्यस्य शपथनिर्णेयत्वेन तादृशकार्यकारणभावकल्पने गौरवात्।

**न च तथापीति**। आख्यातपदरहिते पण्डितः चैत्रः इत्यादौ भावनामुख्यविशेष्यकबोधस्यासंभवात् प्रथमान्तार्थस्य मुख्यविशेष्यत्वापत्तिः इति शङ्का। तत्र समाधत्ते — **सुबर्थेति**। सुप्ज्ञानं सुबर्थप्रकारकबोधं प्रत्येव कारणम्। अतः सुबर्थस्य किं विशेष्यमिति जिज्ञासायां तत्र विशेष्यसमर्पकस्य आख्यातस्य अध्याहरणीयत्वात्। अपि च प्रथमाया अपि संख्यातिरिक्तं प्रातिपदिकार्थलिङ्गादिकमर्थः इति वक्ष्यते। तेषां च प्रातिपदिकार्थे नान्वय इति वक्ष्यते। अतः प्रथमान्तप्रातिपदिकार्थविशेष्यकबोध एव नास्ति। किं च प्रथमायाः संख्याति-

रिक्तार्थाभावेऽपि प्रथमान्तपदार्थप्रकारकशाब्दबोधं प्रत्येव प्रथमान्तपदज्ञानस्य कारणत्वकल्पनेन तन्निर्वाहाय विशेष्यसमर्पकाख्यातपदाध्याहरस्योपपत्तेः।

न च प्रथमान्तार्थविशेष्यकबोधो वा आख्यातार्थविशेष्यकबोधो वा भवतीत्यत्र विनिगमनाविरह इति वाच्यम्। भावप्रधानमाख्यातम् इति स्मृत्यनुमतत्वरूप-विनिगमकसद्भावेन तादृशदोषाभावात्। तस्यादोषत्वात् इत्यस्य विनिगमनविरह-रूपदोषाभावात् इत्यर्थः। यद्वा स्मृतिशब्देन अस्तिर्भवन्तीपरः प्रथमपुरुषेऽप्रयुज्य-मानोऽप्यस्ति इत्यनुशासनं विवक्षितम्। तादृशानुशासनज्ञानं यस्य नास्ति, तस्य प्रथमान्तार्थविशेष्यकबोधो भवतीति इष्टमेवेति भावः।

**किञ्च भावनाप्रकारकबोधत्वावच्छिन्नं प्रत्याख्यातपदज्ञानत्वेन कारणत्वे 'चैत्रेण सुप्यते, गगनेन स्थीयते' इत्यादिभावाख्यातस्थले प्रथमान्तपदाध्याहारापत्तिः। अथ तत्राख्यातार्थविशेष्यकबोधमेवाङ्गीकृत्य कारणतावच्छेदके भावभिन्नत्वं निवेश्यते, तदा तदपि गौरवम्। अस्मन्मते तु सर्वत्र आख्यातार्थविशेष्यकत्वाद्भावाख्यात-स्थले च कर्तुरनभिधानेन प्रथमान्तस्याप्रसक्तिः।**

---

**किं चेत्यादि।** आख्यातार्थकृतिरूपभावनाप्रकारकशाब्दबोधं प्रति आख्यातपद-ज्ञानं कारणमिति स्वीकृत्य आख्यातार्थभावनायाः प्रथमान्तपदार्थेऽन्वय इति यदि उच्यते, तदा चैत्रेण सुप्यते, गगनेन स्थीयते इत्यादिभावाख्यातस्थले आख्या-तार्थभावनान्वयाय प्रथमान्तपदाध्याहारापत्तिः। यदि तत्र चैत्रकर्तृका स्वाप-भावना, गगनकर्तृका स्थितिभावना इत्येवम् आख्यातार्थविशेष्यकं बोधमङ्गीकृत्य भावनाप्रकारकान्वयबोधं प्रति भावाख्यातभिन्नाख्यातपदज्ञानं कारणमित्युच्यते, तदा तत्स्थलानुरोधेन कार्यकारणभावान्तरकल्पनाप्रयुक्तं गौरवमापततीति भावः। **कार्यतावच्छेदके** इति पाठे — नैयायिकैः आख्यातार्थभावनाप्रकारकशाब्दबोधं

प्रति प्रथमान्तपदज्ञानं कारणमित्यङ्गीक्रियते — चैत्रः पचतीत्यादिकर्त्राख्यात-स्थले पाकानुकूलकृतिमाश्चैत्र इति बोधानुभवात्। चैत्रेण स्थीयत इत्यादौ तु भावरूप आख्यातार्थ विशेष्यकः चैत्रकर्तृकस्थित्यभिन्ना स्थितिः इत्याकारकः बोधोऽङ्गीक्रियते। एतादृशे बोधे प्रथमान्तपदज्ञानस्य कारणत्वं नास्ति। धात्वर्थ-रूपभावभिन्नाख्यातार्थप्रकारकबोधं प्रत्येव प्रथमान्तपदज्ञानस्य कारणत्वात् इति व्याख्यातव्यम्।

**अस्मन्मते चेति।** मीमांसकमते सर्वत्र शाब्दबोधस्य आख्यातार्थविशेष्यकत्वात् भावख्यातस्थलेऽपि स्थित्यनुकूला भावना इत्येव बोधः। आख्यातेन कर्ता नाभिधीयते। अतः प्रथमायाः न प्रसक्तिः। कर्तरि अभिहिते सत्येव प्रथमायाः अनुशासनात् इति भावः।

**किञ्च यदि अन्याविशेषणीभूतप्रथमान्तार्थे भावनासंख्ययोरन्वयः, तदा चैत्र एव पचति, 'घट एव दृश्यते' इत्यादौ कुत्र भावनासंख्ययोरन्वयः, कथं वा शाब्दबोधः। न तावच्चैत्रादौ, तस्यैवकारार्थभूतान्ययोगव्यावृत्त्येकदेशे भेदे प्रतियोगिताकत्व-संसर्गेण विशेषणत्वात्, नाप्येवकारार्थभूतायां व्यावृत्तौ प्रतियोगिताकत्वसंसर्गेण भावनायाः, आश्रयतासंसर्गेण च एवकारार्थभूते अन्यस्मिन् संख्याया अन्वयः, तयोः प्रथमान्तपदोपस्थाप्यत्वाभावात्। न चाव्ययोपरि सुपो लोपेन 'दधि तिष्ठति' इतिवत् प्रथमान्तत्वाविरोधः। तथात्वेऽपि 'चैत्रः एव पचती'त्येकवचनप्रयोगाच्च।**

---

नैयायिकमतानुसारेण प्रथमान्तार्थमुख्यविशेष्यकबोधाङ्गीकारे दोषान्तरमाह — **किंचेत्यादिना।** यदि अन्याविशेषणीभूते प्रथमान्तपदार्थे आख्यातार्थभावना-संख्ययोः अन्वयः। चैत्रः पचतीत्यादौ पाकानुकूलकृतिमान् एकश्च चैत्र इति शाब्दबोध इति स्वीक्रियते — तदा चैत्र एव पचति, घट एव दृश्यते इत्यादौ कुत्र

भावनायाः संख्यायाश्चान्वयः, कथं वा शाब्दबोधः। न तावत् प्रथमान्तार्थे चैत्रादौ। तस्य एवकारार्थैकदेशभेदे प्रतियोगिताकत्वसंबन्धेन विशेषणतया अन्या-विशेषणत्वाभावात्। तथा हि — चैत्र एव पचतीत्यत्र एवकारस्य अन्ययोगव्या-वृत्तिरर्थः। तदेकदेशभेदे स्वनिष्ठप्रतियोगिताकत्वसंबन्धेन चैत्रस्य अन्वयः चैत्र-प्रतियोगिकभेदवान् पाकानुकूलकृतिसंबन्धाभाववान् इति बोधः। व्यावृत्तिः अभावः। तस्य अन्यस्मिन्नन्वयः इति। घट एव दृश्यते इत्यत्र घटप्रतियोगिक-भेदवान् दर्शननिरूपितकर्मत्वसंबन्धाभाववान् इति बोधः भवदिष्टः। तत्रोभयत्र प्रथमान्तपदोपस्थाप्ययोः चैत्रघटयोः एवकारार्थैकदशभेदे विशेषणत्वेन आख्या-तार्थभावनासंख्ययोरन्वयो न संभवति। अन्याविशेषणत्वाभावात्।

नापि एवकारार्थभूतायां व्यावृत्तौ (अभावे) प्रतियोगितासंबन्धेन भावनायाः, एवकारार्थभूते अन्यस्मिन् संख्यायाः आश्रयत्वसंबन्धेनान्वयः इति वक्तुं शक्यते। तथा हि सति चैत्रान्यः पाकानुकूलकृत्यभाववान् एकश्चेति बोधः इति वक्तुं न शक्यते। तथा घट एव दृश्यते इत्यत्र घटान्यः दर्शनकर्मत्वाभाववान् एकश्चेति बोधः इति वक्तुं न शक्यते। एवकारार्थयोः चैत्रान्यघटान्ययोः व्यावृत्तेश्च प्रथमान्तपदोपस्थप्यत्वाभावात्। एवकारस्य अव्ययस्य प्रथमान्तत्वाभावात्।

न च एवशब्दस्य अव्ययत्वेन तदुपरिस्थितसुपः "अव्ययादाप्सुपः" इति सूत्रेण लोपेऽपि "प्रत्ययलोपे प्रत्ययलक्षणम्" इति सूत्रेण प्रत्ययान्तत्वात् प्रथमान्तत्वात् प्रथमान्तत्वमस्तीति वाच्यम्। तथात्वेऽपि चैत्र एवेति एकवचनायोगश्च। चैत्रभिन्नानामनेकत्वादिति घट्टार्थः।

अत एव पचतिपदस्य व्युत्पत्तिवैचित्र्येण वारद्वयमन्वयमङ्गीकृत्य पाकानुकूल-कृतिमच्चैत्रभिन्नः पाकानुकूलकृत्यभावाश्रय इत्येवमेवकारार्थैकदेशविशेष्यकशाब्द-

बोधः — इत्यपास्तम्, तद्बहुत्वेनैकवचनस्य तत्रान्वयानुपपत्तेः। चैत्रस्यान्य-विशेषणतया तत्राप्यन्वयानुपपत्तेश्च।

---

अत एवेति। तद्बहुत्वेनेत्यादिवक्ष्यमाणदोषेणेत्यर्थः। चैत्र एव पचति इत्यत्र एवकारस्य भेदवान् अभावश्च अर्थः। पचति इत्यत्र आख्यातार्थः कृतिः एकत्वं च। चैत्रस्य भेदे प्रतियोगितासंबन्धेनान्वयः। आख्यातार्थकृतेः आश्रयतासंबन्धेन चैत्रे, प्रतियोगितासंबन्धेन अभावे च अन्वयः। अभावस्य चैत्रे चान्वयः। तथा च पाकानुकृतिमच्चैत्रप्रतियोगिकभेदवान् = पाकानुकूलकृतिमच्चैत्रभिन्नः पाकानुकूल-कृत्यभावाश्रय इति बोधः इति एवकारार्थैकदेशः यः भेदवान् तद्विशेष्यकः शाब्दबोधः। अत्र आख्यातार्थकृतेः चैत्रविशेषणतया अभावविशेष्यतया च द्विवारं भानम् इति भावः।

एतद्दूषयति — **तद्बहुत्वेनेति**। अयं भावः — चैत्रभिन्ने किल आख्यातैक-वचनार्थैकत्वान्वयः भवदिष्टः। चैत्रभिन्नानां बहुत्वेन पचन्तीति बहुवचनेन भाव्यम्। पचतीति एकवचनप्रयोगः कथं प्रामाणिकः स्यात् इति। तत्र = एवकारार्थे अन्यस्मिन्। ननु आख्यातार्थैकत्वस्य एवकारार्थेऽन्यस्मिन् नान्वयः अपि तु चैत्रपदार्थेऽन्वय इत्याशङ्क्य चैत्रस्य एवकारार्थान्यपदार्थविशेषणतया अन्याविशेषणीभूतप्रथमान्तपदार्थत्वाभावात् तत्राप्यन्वयानुपपत्तिरिति समा-धत्ते — **चैत्रस्येति**।

न च चैत्रपदस्य विशेष्यतया, विशेषणतया च वारद्वयमर्थबोधकत्वम्। ततश्च पाकानुकूलकृतिमांश्चैत्रः पाकानुकूलकृत्यभाववांश्चैत्रान्य इति शाब्दबोधः। इतरा-विशेषणत्वञ्च विशेष्यत्वाभावविशिष्टं यद्विशेषणत्वं तदभाव इति वाच्यम्। तथात्वेऽपि 'चैत्रो मैत्रश्च गच्छतः', इति 'चैत्रो मैत्रादयश्च गच्छन्ती'तिवत् द्विवचन-

**बहुवचनयोरपि आपत्तेः। न च 'चैत्रो गच्छति न मैत्रः' इतिवदेकवचनोपपत्तिः। तथात्वे तत्र गच्छतिपदानुषङ्गेण भिन्नवाक्यवदिहापि मुख्यविशेष्यभेदेन भिन्नवाक्यत्वापत्तेः। अस्मन्मते तु चैत्रवृत्तिश्चैत्रान्यावृत्तिश्चैकर्तृका भावनेति बोधः। भेदे च चैत्रप्रतियोगिकत्वं पार्ष्ठिकम्। एवकारस्यैव वा तत्र लक्षणेति न विरोधः।**

---

**न चेति।** चैत्र एव पचति इत्यत्र चैत्रपदस्य आख्यातार्थकृतिविशेष्यतया एवकारार्थान्तर्गतभेदविशेषणतया च द्विवारमर्थबोधकत्वमङ्गीकृत्य पाकानुकूलकृतिमानेकश्च चेत्रः पाकानुकूलत्यभाववांश्चैत्रान्यः इति शाब्दबोधः। न च प्रथमान्तपदार्थस्य चैत्रस्य एवकारार्थभेदविशेषणत्वात् इतराविशेषणत्वाभावात् कथं तत्र आख्यातार्थकृतिसंख्ययोरन्वयः। इतराविशेषणीभूतप्रथमान्तार्थ एव तदन्वयः इति व्युत्पत्तेः इति वाच्यम्। इतराविशेषणत्वमित्यस्य विशेष्यत्वाभावविशिष्टं यत् विशेषणत्वं तदभाव इत्यर्थात् प्रकृते चैत्रस्य आख्यातार्थं प्रति विशेष्यत्वात् विशेष्यत्वाभावविशिष्टं विशेषणत्वं नास्तीति तादृशविशिष्टाभावरूपस्य इतराविशेषणत्वस्य सत्त्वेन तत्राख्यातार्थान्वयसंभवात् इति शङ्का। तत्र समाधत्ते — **तथात्वेऽपीत्यादिना।** चैत्रो मैत्रश्च गच्छतः इतिवत् चैत्र एव गच्छतः, चैत्र एव गच्छन्ति इति धातोरुत्तरं द्विवचनबहुवचनयोरप्यापत्तेः। चैत्रपदार्थचैत्रएवार्थचैत्रान्ययोः द्वित्वं बहुत्वं च विवक्षित्वा अन्वयबोधसंभवात् इति भावः।

**न चेति।** चैत्रः गच्छति,चैत्रान्यः न गच्छति इत्यत्र यथा एकवचनं, चैत्रचैत्रान्ययोरनेकत्वेऽपि भवति तथा चैत्र एव गच्छतीत्यत्रापि एकवचनोपपत्तिरिति शङ्का। तथात्वे चैत्रो गच्छति, मैत्रो न गच्छति इत्येवं गच्छतिपदानुषङ्गेन मुख्यविशेष्यभेदात् यथा भिन्नवाक्यत्वं तथा चैत्र एव गच्छति इत्यत्रापि चैत्रतदन्यरूपविशेष्यभेदेन वाक्यार्थभेदात् भिन्नवाक्यत्वापत्तेरिति भावः।

स्वमते चैत्र एव पचतीत्यत्र बोधमाह — अस्मन्मते तु इति। चैत्रस्य आधेयतासंबन्धेन आख्यातार्थभावनायामन्वयः। एवकारार्थस्य अन्यावृत्तित्वस्य च तत्रैवान्वयः। आख्यातलक्ष्ये कर्तरि एकत्वसंख्यान्वयः। कर्तुश्च भावनाया-मन्वय इति चैत्रवृत्तिः चैत्रान्यावृत्तिश्च एककर्तृका भावनेति एकविशेष्यकबोधाङ्गी-कारात् एकवाक्यत्वं निर्वहतीति भावः।

## भावनामुख्यविशेष्यकत्वस्यानुभविकता

**वस्तुतस्तु पचति चैत्रे, मैत्रे चाऽपचति 'कीदृशौ चैत्रमैत्रावि'ति प्रश्ने चैत्र एव पचतीत्युत्तरापत्तिः, अत एव कीदृशश्चैत्र इति प्रश्ने पचतीत्युत्तरापत्तेर्न प्रथमान्तविशेष्यको बोध इत्युक्तम्। कीदृशी कृतिरिति प्रश्नोत्तरन्तु न, लिङ्गा-नास्कन्दितत्वादित्यप्युक्तम्। अतोऽनुभवसिद्धमेव भावनामुख्यविशेष्यकत्वम्।**

---

**वस्तुतस्तु** इत्यादि। चैत्रः पचति, मैत्रश्च न पचति, तद्दशायां कीदृशौ चैत्रमैत्रो इति प्रश्ने चैत्र एव पचतीत्युत्तरापत्तिः। चैत्रः पाकानुकूलकृतिमान् चैत्रान्यः (मैत्रः) पाकानुकूलकृत्यभाववान् इति वाक्यार्थस्याबाधात्। न चोक्तवाक्यात् मैत्रत्वेन मैत्रस्य बोधाभावात् चैत्रान्यत्वेनैव तद्बोधात् कथं चैत्र एव पचतीति वाक्यस्य उत्तरत्वापत्तिरिति वाच्यम्। तथापि कीदृशौ चैत्रतदन्यौ इति प्रश्नस्य चैत्रः एव पचतीति वाक्यस्य उत्तरत्वापत्तेः इति भावः।

**अत एवेति।** प्रथमान्तार्थमुख्यविशेष्यकबोधस्यायुक्तत्वादेव कीदृशः चैत्रः इति प्रश्ने चैत्रः पचतीत्युत्तरं न भवति। प्रथमान्तार्थमुख्यविशेष्यकबोधस्वीकारे तु कीदृशः चैत्र इति वाक्यस्य चैत्रः पचतीति वाक्यस्य च चैत्रविशेष्यक-बोधजनकत्वेन प्रश्नोत्तरभावप्रसङ्गः इति भावः। मन्मते तु कीदृशः चैत्र इति

प्रश्नवाक्यस्य चैत्रविशेष्यकबोधजनकत्वात् चैत्रः पचतीति वाक्यस्य चैत्रकर्तृका पाककृतिः इति कृतिविशेष्यकबोधजनकत्वाच्च समानविशेष्यकबोधजनकत्वाभावान्न प्रश्नोत्तरभावापत्तिः।

न चैवमपि भवन्मते (मीमांसकमते) कीदृशी कृतिः इति प्रश्नस्य चैत्रः पचतीति उत्तरं स्यात् इति वाच्यम्। प्रश्नस्य स्त्रीलिङ्गान्वितत्वात् उत्तरस्य लिङ्गानन्वितत्वाच्च लिङ्गालिङ्गितप्रश्नं प्रति लिङ्गानन्वितवाक्यस्य उत्तरत्वासंभवात्।

उपसंहरति — अत इति। उक्तैर्हेतुभिः प्रथमान्तार्थमुख्यविशेष्यकत्वं शाब्दबोधस्य न संभवतीति भावनामुख्यविशेष्यकत्वमेव युक्तमिति भावः।

## प्रथमाप्रयोजकविचारः

किञ्च सत्यपि संख्याभावनोभयसाधारण्येनोक्तविधप्रथमान्तपदजन्योपस्थितेः कारणत्वे भवन्मते प्रथमातृतीयादिप्रयोजकं किम्? न तावत् कर्त्राद्यभिधानानभिधाने तत्प्रयोजके, तस्य त्वया अनङ्गीकारात्। नापि संख्याभिधानानभिधाने, संख्यायास्सर्वत्राख्याताभिधेयत्वेन सर्वत्र प्रथमापत्तेर्द्वितीयादिविभक्त्यभावप्रसङ्गात्। अथ तिङुपात्तसंख्यान्वयित्वमेव प्रथमाप्रयोजकम्। तदन्वयश्च यगादिसमभिव्याहारसत्त्वे कृतिविषयत्वाख्यफलाश्रये कर्मणि, शबादिसमभिव्याहारे कृत्याश्रयाख्ये कर्तरि, यादृशसमभिव्याहारे आख्यातस्य कर्तृवाचित्वं वैयाकरणमते, मीमांसकमते वा कर्तृलक्षकत्वम्, तादृशसमभिव्याहारे तिङुपात्तसंख्यायाः कृत्याश्ररूपकर्तृगामित्वम्। यादृशसमभिव्याहारे च तयोर्मते कर्मपरत्वं, तादृशसमभिव्याहारे तिङुपात्तसंख्यायाः कृतिविषयरूपकर्मगामित्वम्। अतस्तादृशसंख्याभिधानमेव संख्याविशेष्यवाचिनामपदोत्तरप्रथमाप्रयोजकम्। तादृशसंख्यानभिधानं तु तद-

**विशेष्यवाचिनामपदोत्तरकर्तृकर्माद्यभिधायकतृतीयाद्वितीयादिविभक्तिप्रयोजकम्। अत एव भावाख्यातस्थले कर्तृकर्मगतसंख्यानभिधाना'च्चैत्रेण सुप्यत इति तृतीया, चैत्रेण पच्यते ओदनः' इत्यत्र कर्माख्याते कर्मवाचिपद एव प्रथमा, चैत्रः पचतीत्यत्र कर्त्राख्याते कर्तृवाचिपदे एवेति व्यवस्थालाभ इति चेत्,**

---

अथ तार्किकमतानुसारेण प्रथमान्तार्थमुख्यविशेष्यकबोधस्वीकारे प्रथमा-विभक्तिप्रयोजकं किमिति वक्तुं न शक्यत इति निरूपयति — **किंचेत्यादिना।** आख्यातार्थसंख्याभावनयोः द्वयोरपि अन्याविशेषणीभूतप्रथमान्तपदार्थेऽन्वयेन तदनुसारं आख्यातार्थसंख्याभावनोभयनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबोधं प्रति विशेष्यतासंबंन्धेन प्रथमान्तपदजन्योस्थितिः कारणम् इति भवतां मतम्। तदभ्युपगम्य पृच्छामः भवन्मते प्रथमातृतीयादिविभक्तेः प्रयोजकं किम् इति। आख्यातेन कर्तृकर्मादेः अभिधानं प्रथमायाः प्रयोजकम्, अनभिधानं तृतीयादेः प्रयोजकम् इति भवता वक्तुं न शक्यते। भवन्मते आख्यातस्य कृति-कर्मत्वादिवाचकत्वेन कर्तृकर्मादिवाचकत्वस्यानङ्गीकारात् तद्वाचकत्वतदवाच-कत्वयोः द्वितीयातृतीयादिप्रयोजकत्वासंभवात्।

**नापीति।** नापि कर्तृकर्मादिगतसंख्याभिधायकत्वमाख्यातस्य प्रातिपदिकात् प्रथमाविभक्तेः प्रयोजकम्, तदनभिधायकत्वमाख्यातस्य प्रातिपदिकात् द्वितीयादि-प्रयोजकमिति वक्तुं शक्यते। सर्वत्राख्यातस्य कर्तृकर्मादिगतसंख्याभिधायकत्वेन सर्वत्र प्रातिपदिकात् प्रथमाविभक्तिप्रसङ्गेन द्वितीयादिविभक्त्यभावप्रसङ्गात् इति भावः।

अत्र नैयायिकः शङ्कते — **अथेत्यादिना चेत् इत्यन्तेन।** अयमत्राशयः — तिङ्वाच्या या संख्या तदन्वयित्वं प्रथमाप्रयोजकम्। यथा शबादिसमभिव्याहारस्थले

चैत्रः पचतीत्यत्र तिङ्वाच्या एकत्वसंख्या कर्तरि — कृत्याश्रये चैत्रेऽन्वेतीति चैत्रपदोत्तरं प्रथमा। यगादिसमभिव्याहृतस्थले चैत्रेण पच्यते ओदनः इत्यत्र आख्यातवाच्या एकत्वसंख्या कर्मणि ओदनेऽन्वेतीति तद्वाचकौदनपदोत्तरं प्रथमा। तत्रैव चैत्र ओदनं पचतीत्यत्र आख्यातार्थैकत्वसंख्या कर्मणि ओदने नान्वेतीति तद्वाचकपदोत्तरं न प्रथमा। चैत्रेण ओदनः पच्यते इत्यत्र आख्यातार्थसंख्यायाः चैत्रान्वयाभावात् तद्वाचकपदोत्तरं न प्रथमा, अपि तु तृतीया। **यादृशसमभिव्याहारे** इत्यादि। चैत्रः पचतीति पदसमभिव्याहारे आख्यातस्य तिङः वैयाकरणमते कर्तृवाचकत्वम्, मीमांसकमते कर्तृलक्षकत्वं, तादृशसमभिव्याहारे तिङ्वाच्या एकत्वादिसंख्या कृत्याश्रयरूपकर्तर्यन्वेति। यादृशसमभिव्याहारे चैत्रेण ओदनः पच्यते इत्यादौ तयोर्मते वैयाकरणमीमांसकयोर्मते आख्यातस्य कर्मपरत्वं तादृशसमभिव्याहारे तिङुपात्तसंख्यायाः कृतिविषयरूपकर्मान्वयित्वम्।

ततश्च तादृशसंख्याभिधानमेव कर्तृकर्मगतसंख्यायाः आख्यातेनाभिधानमेव तद्वाचकपदोत्तरं प्रथमायाः प्रयोजकम्। तद्गतसख्यायाः अनभिधानं तद्वाचकपदोत्तरं द्वितीयायाः तृतीयायाश्च प्रयोजकम् इति भावः।

**तादृशसंख्याभिधानमेव** = कर्तृकर्मगतसंख्यायाः आख्यातेनाभिधानमेव संख्याविशेष्यकर्तृकर्मवाचकपदोत्तरं प्रथमाविभक्तेः प्रयोजकमित्यर्थः।

**तादृशसंख्यानभिधानं तु इति**। कर्तृकर्मगतसंख्यायाः आख्यातेनानभिधानं तु तदविशेष्यवाचिप्रातिपदिकोत्तरं अर्थात् शंख्यायाः अविशेष्यकर्तृकर्मवाचकं यत् नामपदं तदुत्तरं कर्तृवाचकतृतीयायाः कर्मवाचकद्वितीयायाश्च प्रयोजकमित्यर्थः। एवं च तादृशस्थले कर्ता कर्म च सुबर्थः, न तिङर्थः इति फलति। अत एवेति।

आख्यातेन कर्तृकर्मगतसंख्याभिधाने कर्तृकर्मवाचकपदोत्तरं प्रथमा, तदनभिधाने तदुत्तरं तृतीया द्वितीया चेति निर्णयादेवेत्यर्थः।

चैत्रेण सुप्यते इत्यत्र आख्यातेन कर्तृचैत्रगतसंख्यानभिधानात् चैत्रपदोत्तरं कर्तरि तृतीया। चैत्रकर्तृकः स्वाप इति बोधः। चैत्रेण पच्यते ओदन इत्यत्र आख्यातेन चैत्रगतसंख्याया अनभिधानात् चैत्रपदोत्तरं कर्तरि तृतीया। कर्मभूत-ओदनगतसंख्यायाः अभिधानात् ओदनपदोत्तरं प्रथमा। चैत्रः पचतीत्यत्र कर्तृचैत्रगतसंख्याभिधानात् चैत्रपदोत्तरं प्रथमा इतीदृशव्यवस्थानां लाभः इति नैयायिकमतसारम्।

**तथात्वे चैत्रेण पाचकस्य पुत्रः, ओदनं पक्वस्य विक्लित्तिरित्यादिप्रयोगापत्तेः। कृत्प्रत्ययेन कर्तृकर्मगतसंख्याया अनुक्तत्वात्। चैत्रस्य पाचकस्य पुत्रः, ओदनस्य विक्लित्तिरिति प्रयोगानापत्तेः।**

**'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम्' इत्यादावपि प्रथमानापत्तेश्च। न च तत्र कृत्प्रत्ययेन, निपातेन च कर्त्राद्यभिधानादेव प्रथमासिद्धिः। संख्याकर्त्रा-द्यन्यतरानभिधाने च तृतीयादिरिति सूत्रार्थ इति वाच्यम्। तथात्वेऽपि 'चैत्र इव गच्छति मैत्रः' इत्यादौ चैत्रे प्रथमानापत्तेः। गच्छतीति तिङा चैत्रगतसंख्यायाः, चैत्रगतकर्तृत्वस्य चानुक्तत्वात्।**

---

तन्मतं खण्डयति — **तथात्वे** इत्यादिना। तिङ्कृत्तद्धितसमासैः कर्तृगत-संख्यायाः अनुक्तौ कर्तृवाचकपदोत्तरं तृतीया, तैः कर्मगतसंख्यायाः अनभिधाने कर्मवाचकपदोत्तरं द्वितीया इति भवतां मतम्। तथा च सति 'चैत्रेण पाचकस्य पुत्रः' इति प्रयोगापत्तिः। पचधातूत्तरण्वुल्-प्रत्ययेन कर्तुरुक्तावपि कर्तृगत-

संख्यायाः अनभिधानात् कर्तृवाचकचैत्रपदोत्तरं तृतीयायाः संभवात् तथा ओदनं पक्वस्य विक्लित्तिः इति प्रयोगापत्तिः। पचधातूत्तरक्तप्रत्ययेन कर्मणः अभिधानेऽपि कर्मगतसंख्यायाः अनभिधानेन कर्मवाचकौदनपदोत्तरं द्वितीयायाः संभवात्। किं च चैत्रस्य पाचकस्य इति प्रयोगस्यानुपपत्तिः, चैत्रगतसंख्यायाः ण्वुल्प्रत्यये-नानभिधानात् चैत्रपदोत्तरं तृतीयाया एव प्रसक्त्या षष्ठ्यनुपपत्तेः।

एवं ओदनस्य विक्लित्तिः इति प्रयोगस्यानुपपत्तिः। कृत्प्रत्ययेन ति इत्यनेन कर्मभूत — ओदनगतसंख्यायाः अनभिधानेन द्वितीयाया एव कर्मवाचक-कौदनपदोत्तरं प्रसक्तेः। एवं दोषान्तरमाह — **विषवृक्षोऽपीति**। 'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम्' इत्यव्ययेनं कर्मभूत वृक्षगतसंख्याया अनभिधानेन द्वितीयाया एव प्रसक्त्या प्रथमायाः असाधुत्वादिति भावः।

शङ्कते — **न च तत्रेति**। पूर्वोक्तोदाहरणेषु 'चैत्रेण पाचकस्य पुत्रः' इत्यत्र कृत्प्रत्येन ण्वुला कर्तृसंख्यायाः अनभिधानेऽपि कर्तुः अभिधानादेव कर्तरि तृतीयायाः अप्रसक्तिः। 'ओदनं पक्वस्य' इत्यत्र क्तप्रत्ययेन कर्मणः अभिधानादेव कर्मणि द्वितीयायाः अप्रसक्तिः ओदनस्य विक्लित्तिः इत्यत्र भावार्थकक्तिप्रत्ययेन कर्मणः अनभिधानात् द्वितीयाः उपपत्तिः। 'विषवृक्षोऽपि' इत्यत्र तुमुनन्तेन असांप्रतम् इत्यनेन वा अव्ययेन कर्मणः अभिधानादेव प्रथमायाः उपपत्तिः। संख्यायाः कर्त्रादेर्वा अन्यतरस्य तिङादिभिरनभिधाने तृतीयादिः। अभिधाने प्रथमेति 'अनभिहिते' इति सूत्रस्यार्थः इति शङ्कितुर्भावः। तत्र समाधत्ते — **तथात्वेऽपीत्यादिना**। उक्तरीत्या अर्थवर्णनेऽपि 'चैत्र इव गच्छति मैत्रः' इत्यत्र तिङा मैत्रगतैकत्वसंख्यायाः तद्गतकर्तृत्वस्य चाभिधानेऽपि चैत्रगतसंख्यायाः चैत्रगतकर्तृत्वस्य चानभिधानेन चैत्रेण इति तृतीयाया एव प्रसक्तेः इति समाधातुराशयः।

यत्तु — कृत्यनभिधाने तृतीया, फलानभिधाने द्वितीया, अभिधाने तु सर्वत्र प्रथमेति मतम्। तदपि न। भावाख्याते भावनाभिधानेन प्रथमापत्तेः। कर्माख्यातेऽपि क्रियत इति विवरणानुरोधेन कृतिवाचित्वस्य आवश्यकत्वात् प्रथमापत्तेश्च।

अस्मन्मते तु सत्यपि तिङो भावनावाचित्वे वक्ष्यमाणरीत्या कर्त्रादेरपि लक्षणयाऽभिधानात् कृत्प्रत्ययेन, साम्प्रतमिति निपातेन च शक्त्यैव कर्त्राद्यभिधानात् सर्वत्र प्रथमोपपत्तिः। साम्प्रतमिति निपातेन योग्य इत्यर्थकेन कर्माभिधानात्। चैत्र इवेत्यादावपि इवशब्देन गमनकर्तृत्वरूपसादृश्याभिधानात् कर्त्रभिधानम्। चन्द्र इव मुखमित्यादावपि अस्तीति क्रियापदाध्याहारस्यावश्यकत्वादाह्लादकत्वावच्छिन्नसत्ताश्रयत्वरूपकर्त्रभिधानम्।

---

मतान्तरमनुवदति — **यत्तु इत्यादिना**। तिङादिभिः कृत्यनभिधाने कर्तृवाचकपदोत्तरं तृतीया। फलानभिधाने द्वितीया। तयोरभिधाने तु सर्वत्र प्रथमा। 'चैत्रेण पाचकस्य पुत्रः' इत्यत्र कृत्याश्रयरूप कर्तृवाचकेन ण्वुला आश्रयविशेषणतया कृत्यभिधानात् तदनभिधानाभावात् न चैत्रपदोत्तरं तृतीयायाः साधुता। 'ओदनं पक्वस्य विक्लित्तिः' इत्यत्र पचधातूत्तरक्तप्रत्ययेन फलाश्रयरूपकर्मवाचिना फलस्याप्यभिधानात् फलानभिधानं नास्तीति ओदनपदोत्तरं न द्वितीयायाः प्रसक्तिः। चैत्रस्य पाचकस्य पुत्रः इत्यत्र कर्तृवाचिना ण्वुल्प्रत्ययेन आश्रयविशेषणतया कृत्यभिधानात् तदनभिधानं नास्तीति न चैत्रपदोत्तरं तृतीयायाः प्रसक्तिः। ओदनस्य विक्लित्तिः इत्यत्रापि क्तिप्रत्ययेन विक्लेदरूपफलाभिधानात् तदनभिधानप्रयुक्तद्वितीयायाः न प्रसक्तिः इति यत्तुकारणामाशयः। अत्र 'अभिधाने तु सर्वत्र प्रथमा' इति यदुक्तं तत् कथं संगच्छते। पूर्वोक्तोदाहरणेषु कर्तृवाचक-

प्रत्ययैः विशेषणतया कृत्यभिधानात् चैत्रः पाचकस्य पुत्र इत्यादिप्रयोगापत्तेः इति शङ्का जायते।

**(समाधानमालोचनीयम्... इदं तु तिङ्मात्रविषयम्। कृदादिविषये तु प्रकारान्तरमन्वेष्टव्यमिति केचित्) तदपि नेत्यादि।** चैत्रेण स्थीयते इत्यादौ भावाख्यातेन कृत्यभिधानेन चैत्रकर्तृका स्थितिभावना = स्थित्यनुकूला कृतिः इति बोधस्येष्टत्वेन तत्र आख्यातेन चैत्रगतकृत्यनभिधानविरहात् कथं चैत्रपदोत्तरं तृतीया स्यात्। अपि तु प्रथमैव स्यात्। एवं कर्माख्याते — चैत्रेण पच्यते तण्डुल इत्यादौ पाकः क्रियते इति विवरणानुसारेण पाकः धात्वर्थः कृतिः आख्यातार्थ इत्यवगमात् आख्यातेन कृत्यनभिधानं नास्तीति चैत्रेणेति तृतीयायाः अनुपपत्तिः प्रथमायाः आपत्तिश्च इति भावः।

भवतु तार्किकमते दोषाः। भवन्मते तेषां दोषाणां कः परिहार इति शङ्कायामाह — **अस्मन्मते तु** इत्यादिना। तिङादिभिः कर्त्राद्यनभिधाने तृतीयादिः। तदभिधाने तु प्रथमा इत्यस्माकं मतम्। तिङो भावनावाचित्वेऽपि लक्षणया कर्त्रादिबोधकत्वमपि स्वीक्रियतेऽस्माभिः। ततश्च कृत्प्रत्ययेन सांप्रतमिति निपातेन शक्त्यैव कर्त्राद्यभिधानात् अनभिधानप्रयुक्ततृतीयादेरप्रसक्त्या चैत्रेण पाचकस्य पुत्रः ओदनं पक्वस्य विक्लित्तिः इत्यादिप्रयोगस्य नापत्तिः। चैत्रस्य पाचकस्य पुत्रः, ओदनस्य विक्लित्तिः, विषवृक्षोऽपि छेत्तुमसांप्रतमित्यादिप्रयोगाणामुपपत्तिः। योग्य इत्यर्थकेन साप्रतमिति निपातेन कर्माभिधानात् इति भावः। अभिधानं नाम शक्त्या लक्षणया वा बोधनम्। शक्त्या लक्षणया वा अबोधनम् अनभिधानमित्याशयः।

एवं चैत्र इव मैत्रः गच्छतीत्यत्रापि इवशब्देन गमनकर्तृत्वसजातीयगमनकर्तृत्वरूपसादृश्याभिधानात् चैत्रपदोत्तरं कर्तृत्वानभिधानप्रयुक्ततृतीयायाः न

प्रसङ्गः। चन्द्र इव मुखम् इत्यत्रापि अस्तीति क्रियाध्याहारस्य आवश्यकत्वात् आह्लादजनकत्वावच्छिन्नसत्ताश्रयत्वरूपं कर्तृत्वमिवशब्देनाभिहितमिति न तृतीया-प्रसक्तिः।

**अत एव क्त्वाप्रत्ययेनापि समानकर्तृकत्वाभिधानात् 'चैत्रः पक्त्वा चैत्रो भुङ्क्ते' इत्यत्राद्यचैत्रपदेऽपि प्रथमोपपत्तिः। न चैवं चैत्रेण पक्त्वा चैत्रेण भुज्यत इत्यत्र आद्यचैत्रपदे तृतीयानापत्तिः, क्त्वाप्रत्ययेन कर्तुरुपादानादिति वाच्यम्। तत्र 'आत्मानमात्मना वेत्सि, अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' इत्यादिवत् करणत्वस्य तृतीयार्थत्वात्।**

---

**अत एवेति।** अभिधानादेवेत्यर्थः। चैत्रः पक्त्वा चैत्रो भुङ्क्ते इत्यत्र क्त्वाप्रत्ययेन समानकर्तृकत्वाभिधानात् कर्तृत्वानभिधानं नास्तीति न चैत्रपदोत्तरं तृतीयेति भावः। अभिहिते प्रथमायाः साधुत्वात्। **न चैवमिति।** कर्तृत्वानभिधाने तृतीये-त्यङ्गीकारे चैत्रेण पक्त्वा चैत्रेण भुज्यते इत्यत्र चैत्रपदोत्तरं तृतीयायाः अनुपपत्तिः क्त्वाप्रत्ययेन तद्वृत्तिकर्तृत्वाभिधानादिति शङ्का। तत्र प्रथमचैत्रपदोत्तरं न कर्तरि तृतीया, येन उक्तशङ्का स्यात्। अपि तु करणे तृतीया, करणं तु न क्त्वाप्रत्यये-नाभिहितमिति भावः। तत्र उदाहरणमाह 'आत्मानमात्मना वेत्सि' इति अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरणणीति च। अत्रोभयत्र कर्तुरेव करणत्वं वैवक्षिकम्। आद्ये चैत्रकरणकपाकोत्तरकालीना चैत्रकर्तृकभोजनभावना इति बोधः। द्वितीये आत्मकरणकमात्मकर्तृकं च वेदनमिति बोधः।

**अत एव 'यद्वृत्ति कारकत्वं स्वान्वयिक्रियाप्रतिपादकेन पदेन वृत्त्या प्रतिपाद्यते, तत्त्वं प्रथमाप्रयोजकीभूताभिहितत्वमि'त्युक्तं भाट्टदीपिकायाम्। अस्ति चेदं चैत्रः**

पचति, ओदनः पच्यत इत्यादौ, चैत्रादिवृत्तिकर्तृत्वकर्मत्वादेर्निरुक्तक्रियापदेन अभिधानात्। पाचकेन गम्यते इत्यादौ च कृदुपात्तस्य पुरुषस्य गमनक्रिययैव अन्वयः, न तु पाकक्रियया। प्रथमं तस्या एव तस्मिन्नन्वयात्। अन्वयश्चात्र प्राथमिकशाब्दबोधविषयीभूत एव विवक्षितः। तेन औदुम्बरो यूपो भवति, स्वर्गकामो यजेत इत्यादौ यूपस्वर्गादीनां प्रथमया कर्मत्वादिलक्षणायामपि प्राथमिकयूपकर्तृकभवनाश्रयत्वादिशाब्दबोधे कर्तृत्वस्य उक्तत्वात् प्रथमोपपत्तिः। न च तत्र प्रमाणाभावः। तथात्वे धर्मिज्ञानाभावेन वैयर्थ्यप्रतिसन्धानाभावात्तात्पर्यज्ञानाभावेन लक्षणानुपपत्तेः।

---

अत एवेत्यादि। पूर्वोक्तोदाहरणानां समर्थनायैवेत्यर्थः। एतच्छब्दोत्तरं सार्वविभिक्तिकस्तसिन्। यद्वृत्ति कारकत्वं कर्तृत्वकर्मत्वकरणत्वादि स्वप्रतियोगिकान्वयानुयोगिक्रियाप्रतिपादकेन पदेन वृत्त्या शक्त्या लक्षणया वा प्रतिपाद्यते तत्त्वं प्रथमाविभक्तिप्रयोजकमभिहितत्वमित्यर्थः। अस्ति चेदम् = उक्तविधमभिहितत्वम् चैत्रः पचति, ओदनः पच्यते इत्यादौ। चैत्रः पचति इत्यत्र चैत्रवृत्तेः पाककर्तृत्वस्य स्वान्वयिप्रतिपादकेन पचतीति क्रियापदेनाभिधानात्। तत्र हि कर्तृत्वं लक्षणया तिङा प्रतिपाद्यते। तत्र आधेयतासंबन्धेन चैत्रस्यान्वयः। कर्तृत्वस्य निरूपकतासंबन्धेन आख्यातार्थभावनायामन्वयः। चैत्रवृत्तिकर्तृत्वनिरूपिका पाकानुकूला भावना कृतिः इति बोधः। तथा च चैत्रवृत्तिकर्तृत्वस्य स्वान्वयिक्रियाप्रतिपादकेन पचतिपदेन प्रतिपादनात् चैत्रपदोत्तरं प्रथमा भवति।

एवं चैत्रेण ओदनः पच्यत इत्यत्र ओदनवृत्तिकर्मत्वरूपकारकस्य ओदनान्वयिक्रियाप्रतिपादकेन पच्यते इति पदेनाभिधानात् कर्मवाचक-ओदनपदोत्तरं प्रथमा भवति। पाचकेन गम्यते ग्राम इत्यत्र पाचकवृत्तिकर्तृत्वं स्वान्वयिक्रियाप्रतिपादकेन

गम्यते इत्यनेन नाभिधीयते, तेन कर्मत्वस्यैवाभिधानात्। अतश्चैत्रपदोत्तरं न प्रथमा। अपि तु अनभिहितकर्तृत्वबोधकतृतीयैव भवतीत्यर्थः। न च पाचकेन गम्यते इत्यत्र पचतीति पाचक इति व्युत्पत्त्या अकप्रत्ययः कर्तृवाचकः। तत्र धात्वर्थपाकान्वयात् चैत्रान्वयित्वं क्रियावाचकधात्वर्थेऽस्तीति चैत्रवृत्तिकर्तृत्वान्वयिपाकक्रियाप्रतिपादकेन पाचकपदेन प्रतिपादनात् पाचकपदोत्तरं कुतो न प्रथमेति वाच्यम्। स्वान्वयिपदेन स्वप्रतियोगिकान्वयानुयोगीत्यर्थस्य विवक्षितत्वात्। पाचकेन गम्यते इत्यत्र अकप्रत्ययवाच्ये कर्तरि क्रियायाः अन्वयः, न तु कर्तुः क्रियायामिति कर्तृपुरुषनिष्ठकर्तृत्वस्थ पुरुषप्रतियोगिकान्वयानुयोगिवाचकत्वं नास्तीति स्वप्रतियोगिकान्वयानुयोगिक्रियावाचकपदप्रतिपाद्यत्वं कर्तृत्वे नास्तीति न पाचकपदोत्तरं प्रथमेति भावः। सर्वमिदं मनसिकृत्य मूलपङ्क्तिः पठ्यताम्। कृदुपात्तस्य पाचकपदस्थाकप्रत्ययवाच्यस्य पुरुषस्य। एवकारव्यवच्छेद्यमाह — न तु पाकक्रिययेति। तस्याः = पाकक्रियायाः। तस्मिन् कृत्प्रत्यार्थे कर्तरि पुरुषे।

**अन्वयश्चात्रेति**। 'औदुम्बरो यूपो भवति' इत्यत्र औदुम्बराभिन्नयूपकर्तृकभवनाश्रयत्वम् इति प्राथमिको बोधः। 'औदुम्बरत्वेन यूपं भावयेत्' औदुम्बरत्वकरणकयूपकर्मकभावना' इति अनन्तरं बोधः। तत्र प्राथमिकबोधमादाय अभिधानमाश्रित्य यूपनिष्ठस्य भवनाश्रयत्वरूपकर्तृत्वस्य क्रियापदेन अभिधानात् यूपपदोत्तरं प्रथमायाः उपपत्तिः। एवं 'स्वर्गकामो यजेत' इत्यत्र स्वर्गकामकर्तृकयागकरणकभावनेति प्राथमिको बोधः। काम्यमानस्वर्गसाध्यकयागकरणकभावनेति पाश्चात्त्यो बोधः। तत्रापि प्राथमिकबोधेन स्वर्गकामनिष्ठकर्तृत्वस्य क्रियापदेन प्रतिपादनात् स्वर्गकामपदोत्तरं प्रथमेति भावः। **शङ्कते न च तत्र प्रमाणाभाव इति**। समाधत्ते — **तथात्व इति**।

अत एव यत्रान्वयानुपपत्त्यैव लक्षणा, तत्र लक्षणाजन्यशाब्दबोधस्यैव प्राथमिकत्वात्, तत्र च कर्तृत्वानुक्तौ प्रथमान्तपदस्यायोग्यत्वमेव। यथा-अग्निना चैत्रः पाके यतत इत्यर्थे अग्निश्चैत्रः पाके यतत इति। अत्र हि प्रथमायाः — करणत्वलक्षणया शाब्दबोधः। अत्र हि अन्वयानुपपत्त्यैव करणत्वलक्षणा। अतः तत्र लक्षणातः पूर्वं शाब्दबोधाभावादयमेव बोधः प्राथमिको वाच्यः। न च तदानीं भासमानं करणत्वं स्वान्वयिक्रियाप्रतिपादकेन यतत इति पदेनोक्तम्। यत्तु यतत इत्यनेनोक्तं कर्तृत्वम् न तदग्निवृत्तीति प्रथमाप्रयोजकरूपाभावात् तद्वाक्यं तस्मिन्नर्थेऽसाधु। उक्तविधं तद्वृत्ति कर्तृत्वं न कर्माख्यातेनाभिहितमिति, युक्तैव तत्र तृतीया।

---

बोधद्वयस्वीकारे युक्तिमाह — **अत एवेत्यादिना**। यत्रान्वयानुपपत्त्यैव लक्षणा तत्र लक्षणाजन्यशाब्दबोध एव प्राथमिकः। तत्र च कर्तृत्वोक्तौ प्रथमा, अनुक्तौ तु प्रथमाया असाधुत्वमेव योग्यताविरहात्। यथा — अग्निना चैत्रः पाके यतते इति तात्पर्येण कश्चित् अग्निश्चैत्रः पाके यतते इति प्रयुङ्क्ते। अत्र प्रथमायाः करणत्वे लक्षणयैव अग्निकरणकचैत्रकर्तृकपाकभावना इति प्राथमिको बोधः। अन्यथा योग्यताविरहात् प्रथमं शाब्दबोधस्यैव — अग्निकर्तृकपाकभावना इत्याकारकस्य असंभवात् अग्निवृत्तिकर्तृत्वमादाय प्रथमायाः समर्थनासंभवात्। अतस्तत्र प्राथमिको बोधः लाक्षणिक एव। तत्र च भासमानं अग्निनिष्ठं करणत्वरूपं कारकत्वं न स्वान्वयिक्रियाप्रतिपादकेन यतत इति पदेनाभिधीयते इति प्रथमाप्रयोजकाभावात् प्रथमायाः अनुपपत्तिः स्यात्। अतो लाक्षणिकपदघटितवाक्यस्थले प्राथमिकबोधमादायैव प्रथमा समर्थनीयेति भावः। औदुम्बरो यूपो भवतीत्यादौ तु शक्तिमूलकबोध एव प्राथमिकः। तत्रन्वयायोग्यताया अभावात्। तस्मिन् बोधे तु यूपनिष्ठकर्तृत्वस्य क्रियापदेनोक्तस्यैव भानात् यूपपदोत्तरं प्रथमाया उपपत्तिरिति भावः।

ननु अग्निवृत्तित्वविवक्षया अग्निः पाके यतते इति प्रयोगोऽस्तु इति शङ्कायामाह — यत्तु यतत इत्यनेनोक्तं कर्तृत्वमिति।

उक्तविधमिति। पाचकेन गम्यते इत्यत्र तु चैत्रवृत्तिकर्तृत्वरूपं कारकत्वं स्वान्वयिक्रियाप्रतिपादकेन गम्यते इति कर्माख्यातेनानभिहितमिति कर्तृत्वानभिधानात् पाचकपदोत्तरं तृतीयायाः उपपत्तिरिति भावः।

**एवं 'चैत्रेण भुक्त्वा गम्यते' इत्यत्र चैत्रस्य भुजिक्रियायामनन्वयात् गमनक्रियायामन्वयाङ्गीकारेण तृतीयोपपत्तिः। एवञ्च 'पक्त्वौदनो भुज्यते' इत्यादौ पचिधातोः कर्माकांक्षायां द्वितीयान्तौदनपदाध्याहारेण वाक्यपूरणम्। न हि प्रधानक्रियायामुक्तस्य कारकस्य गुणभूतक्रियायामप्युक्तिरिति नियमे प्रमाणमस्ति, येनाध्याहारं विनापि वाक्यं पूर्येत। तथात्वे 'ओदनं भुक्त्वा शास्त्रं पठ्यते' ['श्रुत्वाप्यर्थं नानुमतस्तेन सोऽर्थः कुबुद्धिने']त्यादौ द्वितीयाप्रयोगो नोपपद्येत। अतस्सकर्मकधातूत्तरक्त्वाप्रत्ययस्थले द्वितीयान्तौदनपदाध्याहारेऽपि शाब्दबोधोपपत्तेः 'चैत्रेण भुक्त्वा गम्यते' इति प्रयोगे बाधकाभावः। यदि त्वस्मिन्पक्षे चैत्रो भुक्त्वा चैत्रेण गम्यत इति प्रयोगापत्तिरिति विभाव्यते, तदा माऽस्तु क्त्वाप्रत्ययस्य समानकर्तृकत्वपूर्वकालत्वयोश्शक्तिः। किन्तु भावकृत्त्वात् भाव एव, तस्यैवोत्तरक्रियायां समानकर्तृकत्वपूर्वकालत्वसंसर्गेणान्वयः — इति।**

---

ननु चैत्रेण भुक्त्वा गम्यते इति प्रयोगः कथमुपपद्यते। चैत्रवृत्तिभोजनकर्तृत्वस्य 'समानकर्तृकयोः पूर्वकाले' इति सूत्रविहितक्त्वाप्रत्ययेन अभिधानात् चैत्रपदोत्तरं प्रथमाया एव साधुत्वात् इत्याशङ्क्य तत्र चैत्रस्य न भोजनक्रियायामन्वयः अपि तु गमनक्रियायामेवान्वयः। चैत्रपदार्थान्वयिक्रियाप्रतिपादकेन गम्यते इति पदेन च चैत्रवृत्तिकर्तृत्वं न प्रतिपाद्यते, अपितु ग्रामवृत्ति

कर्मत्वमेव प्रतिपाद्यते। अतश्चैत्रपदोत्तरं कर्तृत्वे तृतीयायाः नानुपपत्तिः इति समाधत्ते एवं **चैत्रेण भुक्त्वा गम्यत इत्यत्रेति।**

ननु 'पक्वौदनो भुज्यते इत्यत्र पचिधातोः कर्माकाङ्क्षायां ओदनपदार्थस्य अन्वयो न युज्यते, तन्निष्ठकर्मत्वस्य भुज्यते इत्यत्र तिङा अभिहितत्वेन पाकनिरूपित-कर्मत्वाभिधानासंभवात् इत्याशङ्क्य तत्र ओदनमिति द्वितीयान्तं पूरयित्वा शाब्दबोधो वर्णनीयः इत्याह — **एवं चेत्यादिना।** ओदनकर्मकपाकोत्तरकालीना ओदनकर्मकभोजनभावना इति बोधः।

ननु अध्याहारोऽनावश्यकः। प्रधानक्रियायामुक्तस्य कारकस्य गुणभूतक्रिया-यामपि उक्तिनियमादेव ओदनस्य पाककर्मत्वलाभादित्याशङ्क्य तादृशनियमे प्रमाणाभाव इति समाधत्ते — **न हीत्यादिना।** न केवलं तादृशनियमे प्रमाणभावः, तत्र बाधकमप्यस्तीत्याह — **तथात्वे** इति। तादृशनियमस्वीकारे 'ओदनं भुक्त्वा शास्त्रं पठ्यते' 'श्रुत्वाप्यर्थं नानुमतस्तेन सोऽर्थः कुबुद्धिना' इत्यत्र ओदनम् अर्थम् इति द्वितीयान्तकर्मवाचकपदप्रयोगो नोपपद्यते। अभिहिते प्रथमाया एव साधुत्वात् इति भावः।

अतः **सकर्मकेत्यादि।** सकर्मको यो धातुः तदुत्तरं क्त्वाप्रत्ययस्थले 'पक्त्वा ओदनो भुज्यते' इत्यादौ पक्त्वा इत्यतः प्राक् ओदनमिति द्वितीयान्तपदस्य अध्याहारेऽपि गम्यते इत्यतः प्राक् कर्तृविशेषवाचिपदस्य चैत्रेण इत्यस्य अध्याहारं विनापि चैत्रकर्तृकभोजनोत्तरकालीनगमनकर्मेति बोधस्योपपत्तेः चैत्रेण भुक्त्वा गम्यते इति प्रयोगे किमपि बाधकं नास्ति।

यदि तु अस्मिन् पक्षे चैत्रो भुक्त्वा चैत्रेण गम्यते इति प्रयोगापत्तिः। 'समानकर्तृकयोः पूर्वकाले' इति सूत्रेण कर्तुरपि क्त्वाप्रत्ययार्थतया तत्र

चैत्रस्यान्वयेन चैत्रकर्तृकभोजनोत्तरकालीनचैत्रकर्तृकगमनकर्मेति बोधे बाधकाभावात् इत्यालोच्यते, तदा मास्तु क्त्वाप्रत्ययस्य समानकर्तृकत्वपूर्वकालिकत्वयोः शक्तिः। क्त्वाप्रत्ययस्य भावार्थककृत्प्रत्ययत्वात् भावे एव शक्तिः। भावः धात्वर्थः। तस्य स्वसमानकर्तृकत्वस्ववृत्तिपूर्वकालिकत्वनिरूपकत्वोभयसंबन्धेन उत्तरक्रियायामन्वयः। चैत्रण पक्त्वा भुज्यते इति वाक्यात् चैत्रकर्तृको यः पाकः तत्समानकर्तृकत्वतद्वृत्तिपूर्वकालिकत्वनिरूपकत्वोभयसंबन्धेन तद्विशिष्टं यत् भोजनं गमनं तत्कर्म ओदनः इति बोध इति भावः। पूर्वः कालो यस्य सः पूर्वकालः तस्य भावः पूर्वकालत्वम्। पूर्वकालवृत्तित्वमिति तदर्थः।

## संबोधनप्रथमाप्रयोजकनिरूपणम्

**इदं च असंम्बुद्धिविषये, सम्बोधनप्रथमायाः स्वतन्त्रविधिविधेयत्वात्। अत एव तद्वृत्तिकर्तृत्वानभिधानेऽपि चैत्र मैत्रः पचतीति प्रयोगः।**

**एवं च चैत्रः पक्त्वा चैत्रो भुङ्क्ते' इत्यप्रयोग एव। प्रधानक्रियायामुक्तस्य कर्तृकारकस्यैव गुणभूतक्रियायामप्युक्तिरिति नियमाङ्गीकारेण वा तस्य साधुत्वम्। प्रधानक्रियावाचिनः कर्त्राख्यातत्वे क्त्वाप्रत्ययस्यापि समानकर्तृकत्वादौ लक्षणेति वा ध्येयम्। अत एव 'चैत्रेण पक्त्वा चैत्रो भुङ्क्ते' इत्यप्यप्रयोगः। अत एव मयैव पक्त्वा मयैव भुज्यते इत्यत्रापि कर्तर्येव तृतीया। 'पक्त्वौदनो भुज्यते' इत्यादौ कर्मकारकाध्याहार एव। ओदनं भुक्त्वा शास्त्रं पठ्यत इत्यादयः प्रयोगाश्च सुखोपपादाः।**

**एवं पचनी स्थाली, दानीयो ब्राह्मणः, कुठारः करणमित्यादौ अधिकरणत्वादेः कृदुक्तत्वात्प्रथमोपपत्तिः।**

ननु यद्वृत्तिकर्तृत्वं स्वान्वयिक्रियाप्रतिपादकेन पदेन वृत्त्या प्रतिपाद्यते तत्त्वं प्रथमाप्रयोजकीभूताभिहितत्वं, तत्त्वाभावः अनभिहितत्वमिति स्वीकारे 'चैत्र मैत्रः पचति' इत्यत्र मैत्रवृत्तिकर्तृत्वस्य क्रियापदेन अभिधानेऽपि चैत्रवृत्तिकर्तृत्वस्य अनभिधानात् चैत्रपदोत्तरं तृतीया स्यात् इत्याशङ्क्य संबोधनप्रथमायाः अनभिहिताधिकारीयत्वाभावात् 'संबोधने च' इति सूत्रेण पृथक् संबोधनार्थे प्रथमायाः विधानात् 'यद्वृत्तिकारकत्वमित्यादिव्युत्पत्तिस्तत्र न प्रवर्तते इति समाधत्ते — **इदं च असंबुद्धिविषये इति।** इदं च = पूर्वोक्तं प्रथमाप्रयोजकमभिहितत्वमित्यर्थः। **स्वतन्त्रविधिविधेयत्वात्** इति। अनभिहितकारकाधिकारानन्तर्गततया विधेयत्वात् इत्यर्थः। **एवं चेति।** क्त्वाप्रत्ययस्य समानकर्तृकत्वपूर्वकालत्वयोः शक्त्यभावे चेत्यर्थः। **अप्रयोग इति।** चैत्रवृत्तिकर्तृत्वस्य स्वान्वयिक्रियाप्रतिपादकेन क्त्वाप्रत्ययेनानभिधानादित्यर्थः। तथा अभिधाने हि प्रथमा चैत्रपदोत्तरं स्यात्। **प्रधानक्रियायामिति** पक्षान्तरम्। प्रधानक्रियायामुक्तस्य कर्तृकारकस्य गुणभूतक्रियायामप्युक्तिः इति नियमाङ्गीकारेण 'चैत्रः पक्त्वा चैत्रो भुङ्क्ते' इति प्रयोगः समर्थनीयः। अत्र प्रधानक्रिया भोजनक्रिया। अप्रधानक्रिया पाकक्रिया। तादृशनियमाङ्गीकारे प्रकारान्तरेण पूर्वोक्तं चैत्रः पक्त्वा चैत्रो भुङ्क्ते इति प्रयोगं समर्थयति — **प्रधानक्रियावाचिनः इति।** पूर्वं क्त्वाप्रत्ययस्य समानकर्तृकत्वपूर्वाकालत्वयोः न शक्तिः इत्युक्तम्। इदानीं क्वचित् प्रयोगे तथोरर्थयोः क्त्वाप्रत्ययस्य लक्षणेत्युच्यते। अभिधानं नाम शक्त्या लक्षणया वा बोधनम्। एवं च चैत्रः पक्त्वा चैत्रो भुङ्क्ते इत्यत्र क्त्वाप्रत्ययेन चैत्रवृत्तिपाककर्तृत्वस्याभिधानात् चैत्रपदोत्तरं प्रथमायाः साधुत्वमिति भावः। समानकर्तृकत्वादौ इत्यादिपदेन पूर्वकालत्वं ग्राह्यम्। **इत्यप्यप्रयोग** इति। चैत्रवृत्तिकर्तृत्वस्य क्त्वाप्रत्ययेनाभिधानादिति भावः।

**अत एवेति।** प्रधानक्रियावाचिनः कर्त्राख्यातत्वे क्त्वाप्रत्ययस्य समानकर्तृकत्वादौ लक्षणेत्युक्तत्वादेव चैत्रेण पक्त्वा चैत्रो भुङ्क्ते इति प्रयोगोऽसाधुः। अत्र प्रधानभोजनक्रियावाचकस्य भुङ्क्ते इत्यस्य कर्त्राख्यातत्वात् क्त्वाप्रत्ययस्य समानकर्तृकत्वे लक्षणाङ्गीकारात् कर्तृत्वस्य तेनाभिधानात् चैत्रपदोत्तरं प्रथमाया एव साधुत्वात् तृतीयान्तचैत्रपदघटितस्य प्रयोगस्य असाधुत्वात् तथा अप्रयोगः प्रयोगाभाव इति भावः। **अत एवेति।** पूर्वोक्तहेतुनैवेत्यर्थः। मयैव भुक्त्वा मयैव भुज्यते इत्यत्र प्रधानभोजनक्रियावाचकस्य भुज्यते इत्यस्य कर्माख्यातत्वेन कर्त्राख्यातत्वाभावात् क्त्वाप्रत्ययस्य समानकर्तृकत्वे लक्षणाविरहात् क्त्वाप्रत्ययेन कर्तुरनभिधानेन मयैवेति कर्तरि तृतीयायाः साधुत्वात् इति भावः। पक्त्वा ओदनो भुज्यते इत्यत्र पक्त्वा इत्यतः पूर्वम् ओदनम् इति द्वितीयान्तपदमध्याहर्तव्यम्। 'ओदनं भुक्त्वा शास्त्रं पठ्यते' इत्यादयः प्रयोगाः सुखोपपादना इति। प्रधानक्रियायामुक्तस्य कर्तृकारकस्यैव गुणभूतक्रियायामुक्तिः इति स्वीकारेण अत्र तु पठ्यते इत्यनेन प्रधानक्रियावाचकेन पदेन कर्मकारकस्यैव उक्ततया गुणभूतभोजनक्रियावाचकेन भुक्त्वापदेनापि कर्मकारकस्योक्तत्वं न संभवतीति कर्मणः अनभिहिततया ओदनं इति कर्मणि द्वितीया साधुः इत्याशयः। सावधानं पठित्वा मनसि धर्तव्यम् जिज्ञासुभिः। पचनी = पाकाधिकरणम्। दानीयः = दानसंप्रदानम् करणम् = करणकारकम्। अत्र ल्युडादिभिः अधिकरणादिकारकस्योक्तत्वात् प्रथमाविभक्तिः।

**न चैवमपि यत्र तिङन्तोपरि पचतितरां, पचतिकल्पम्, पचतःकल्पम्, पचन्तिकल्पमित्यादावतिशयार्थकः, ईषदसमाप्त्यर्थको वा प्रत्ययः कृतः, तस्य तद्धितत्वेन प्रातिपदिकसंज्ञया प्रातिपदिकार्थमात्रविवक्षायां प्रथमान्तत्वात्तत्र प्रथमाप्रयोजकरूपाभावः। तद्वृत्तिकर्तृत्वस्य तिङाऽनुक्तत्वात्। ईषत्वाद्याश्रयस्य भेद-**

**सम्बन्धेन पाकभावनायामेवान्वयादिति वाच्यम्। तादृशस्थले धातोरेव ईषद-समाप्त्यादौ लक्षणाङ्गीकारात्। कल्पबादिप्रत्ययस्य लक्षणातात्पर्यग्राहकत्वाङ्गीकारेण तदर्थान्वयस्यैवाऽनङ्गीकारे तत्रत्यप्रथमायास्साधुत्वमात्रार्थत्वात्। अत एव शाब्द-बोधजनकप्रथमाया एवेदं प्रयोजकम्, न तु साधुत्वार्थायाः। तस्यास्तु प्रथमातिक्रमे कारणाभाव एव।**

---

**न चैवमपीत्यादि।** अतिशयेन पचति, पचतितराम्, ईषदूनं पचति पचति-कल्पम्, ईषदूनं पचतः पचतःकल्पम्, ईषदूनं पचन्ति पचन्तिकल्पम् इत्यादौ तिङन्तोत्तरं तरप्प्रत्ययः कल्पप्प्रत्ययश्च संयोजितः अतिशयार्थे तरप्प्रत्ययः, ईषदसमाप्त्यर्थे कल्पप्प्रत्ययश्च कृतः, तत्र तस्य प्रत्ययस्य तद्धितत्वेन तदन्तस्य 'कृत्तद्धितसमासाश्च' इति सूत्रेण प्रातिपदिकसंज्ञायां तत्र प्रातिपदिकार्थमात्र-विवक्षायां तस्य प्रथमाविभक्त्यन्तत्वम्।

अत्रेदं बोध्यम् — अयमनयोः अतिशयेन पचतीत्यर्थे 'द्विवचनविभज्योपपदे तरबीयसुनौ' (पा.सू 5.3.57) इति सूत्रेण तिङन्तात् पचतिशब्दात् तरप्प्रत्यये पकारस्य इत्संज्ञायां लोपे च पचतितर इति स्थिते ततः 'किमेत्तिङव्यय-घादाम्वद्रव्यप्रकर्षे' (पा.सू 5.4.11) इति आम्प्रत्यये सवर्णदीर्घे च पचतितरामिति शब्दः निष्पद्यते। अतिशयिता पाकक्रियेति तदर्थः। अस्य तद्धितान्तत्वात् प्रातिपदिकसंज्ञायां ततः परस्य सोः 'अव्ययादाप्सुपः' इति लुकि पचतितरामिति भवति। अत्र तद्धितान्त-घटकतिङा तद्धितार्थवृत्तिकर्तृत्वस्य अनुक्तत्वात् कथं चैत्रपदोत्तरं प्रथमा स्यात्।

ननु तद्धितार्थस्य अतिशयस्य ईषत्त्वस्य च भावनायामन्वयात् तद्बोधकपदेन तद्वृत्तिकर्तृत्वमभिहितमेवेति शङ्कायामाह — **ईषत्त्वाद्याश्रयस्येति।** ईषत्त्वादेर्न भावनायामन्वयः। अपि तु धात्वर्थे पाकादौ। तस्य भावनायाम्। **ईषत्त्वाद्याश्रयस्य** = ईषत्त्वाद्याश्रयस्य धात्वर्थपाकादेः ।

समाधत्ते — **तादृशस्थले इति**। कल्पवाद्यन्तस्थले। धातोरेव ईषदसमात्यादौ लक्षणाङ्गीकारात्। अन्यथा कल्पबादिप्रत्ययस्य लक्षणातात्पर्यग्राहकत्वाङ्गीकारात् केवलपचतिपदादपि तदर्थबोधापत्तिरिति भावः। तदर्थान्वयस्यैव कल्पवादेः प्रत्येकमर्थाभावेन तदर्थस्यान्यत्रान्वयस्यैव अनङ्गीकारेण प्रथमायाः साधुत्वमात्रार्थकत्वात्। **अत एव** = अस्याः प्रथमायाः प्रथमाप्रयोजकरूपानाक्रान्तत्वादेव शाब्दबोधप्रयोजकरूपानाक्रान्तत्वादेवेति यावत्। तथा चात्र यद्वृत्तिकारकत्वमित्यादिनियमो न प्रवर्तत इति सिद्धम्।

ननु यद्वृत्ति कारकत्वमित्यादिना प्रोक्तस्य प्रथमाप्रयोजकरूपस्य संबुद्धावभावात् तत्र प्रथमायाः अनुपपत्तिः। संबोध्यमानवृत्तिकर्तृत्वस्य तिङा अनभिधानात् चैत्र! मैत्रः पचतीत्यादौ संबोध्यचैत्रवृत्तिकर्तृत्वस्य अनभिधानात् मैत्रवृत्तिकर्तृत्वस्यैव तेनाभिधानादिति शङ्कायामाह — **इदं चासंबुद्धिविषय** इति। **स्वतन्त्रविधीति**। संबोधनप्रथमायाः 'संबोधने च' इति पृथक्सूत्रेण विधानात् इति भावः। तद्वृत्तिकर्तृत्वानभिधानेऽपि संबोध्यमानपुरुषवृत्तिकर्तृत्वानभिधानेऽपि चैत्र! मैत्रः पचतीति प्रयोग उपपद्यत इति भावः।

## अभिधानानभिधानयोः केषांचिन्मतेन प्रयोजकविचारः

केचित्तु कृदादिभिरनभिहितत्वमेव तृतीयादिविभक्तिप्रयोजकम्। प्रथमायां तु कर्तृत्वाभिधानम्, कर्तृत्वाद्यविवक्षा च प्रयोजिका। अतश्च पचतिकल्पमित्यादौ

विभक्त्यर्थाविवक्षायां प्रातिपदिकार्थमात्रविवक्षायां प्रथमोत्पत्तावपि वाधकाभावः। अत एवाविवक्षाविरहविशिष्टानभिधानं तृतीयादिप्रयोजकम्, तदभावः प्रथमा-प्रयोजकम् इत्येवानुगमः। न चैवमपि प्रकारतया करणत्वाद्यविवक्षायां भवन्मते करणत्वादिसंसर्गेण काष्ठादीनां भावनान्वयापत्तेः चैत्रः काष्ठानि स्थाली ओदनः पचतीति प्रयोगापत्तिः। परमते हि तेषां धात्वर्थेऽन्वयात्तत्र चाऽभेदसम्बन्धेनैव नामार्थान्वयान्न तथाप्रयोगापत्तिः। तेषामपि 'दधि पश्यती'त्यादिवत् काष्ठकरणत्व-लक्षणया प्रयोगापत्तिरनिवार्यैव। भवन्मते तु सर्वस्याख्यातार्थ एवान्वयात् तत्र च नामार्थस्यापि चैत्रादेर्भेदसंसर्गेणान्वयाङ्गीकारात् काष्ठादीनामप्यन्वयोपपत्तिरिति वाच्यम्। एतादृशप्रयोगापत्तिभयादेव मयाऽपि स्वबोधककृदाद्यभिहितकारकवाचि-नामभिन्ननामार्थस्य तद्गतलिङ्गसंख्यादेर्वा क्रियासम्बन्धे सुबुपात्तलिङ्गसंख्या-व्यतिरिक्तद्वितीयादिविभक्त्युपस्थितार्थद्वारकत्वं तन्त्रमिति नियमस्य कल्पनात्। स्वपदं स्वान्वयिक्रियापरम्। अत्र नामार्थस्यापि चैत्रादेः पचतीत्यादौ साक्षादेव क्रियायामन्वयात् भिन्नेत्यन्तम्। पाचकमानयेत्यादौ कृदाद्यभिहितकारकवाचिनो-ऽपि पाचकपदस्य आनयनानुकूलकृतावन्वये द्वितीयोपस्थापितकर्मत्वद्वारत्वस्या-वश्यकत्वात् स्वबोधकेत्युक्तम्। पाचकः पक्वमित्यादावपि लक्षणया भावनाबोधस्य वक्ष्यमाणत्वात्, तत्र काष्ठादीनामन्वये तत्र करणत्वादिबोधकतृतीयादि आवश्यकम्। अत एवैतन्नियमानुरोधेनैव कौस्तुभादौ प्रातिपदिकार्थस्य सुबुपात्तलिङ्गसंख्ययोश्च साक्षाद्भावनान्वयो नाङ्गीकृतः। अतः पचतिकल्पमित्यादौ प्रातिपादिकार्थमात्र-विवक्षायां प्रथमा इत्याहुः।

---

केचित्तु इत्यादि। तृतीयादिविभक्तीनां कृदादिभिः कर्तृत्वाद्यनभिधानमेव प्रयोजकम्। प्रथमायां तु कर्तृत्वाद्यविवक्षा कर्तृत्वाद्यभिधानं च प्रयोजकम्।

एतन्मते प्रथमायाः विशिष्य कश्चिदर्थो न स्वीक्रियते। किं तु कल्पबादिप्रत्ययस्य ईषदसमाप्तिरूपार्थवाचकत्वं स्वीक्रियते। अत्र पूर्वमतात् विशेषमाह — **कर्तृत्वाद्यविवक्षा चेति**। एवं च शाब्दबोधजनकप्रथमायाःतिङादिभिः कर्तृत्वाद्यभिधानं प्रयोजकम्। साधुत्वमात्रार्थकप्रथमायास्तु कर्मत्वाद्यविवक्षा प्रयोजिकेति विशेषः। अतश्च कर्तृत्वाद्यविवक्षाया अपि प्रथमाविभक्तौ निमित्तत्वाश्रयणात् पचतिकल्पमित्यादौ प्रथमाविभक्त्यर्थाविवक्षायामपि प्रातिपदिकार्थमात्रविवक्षायां प्रथमाविभक्त्युत्पत्तौ न बाधकम्। **अत एवेति**। कल्पवादिप्रत्ययान्तादपि प्रथमोत्पत्तेरूपपादितत्वादेवेत्यर्थः। अविवक्षाविरहविशिष्टं यत् अनभिधानं तदभावः तृतीयादिविभक्तिप्रयोजकः। तदभावः तादृशविशिष्टानभिधानस्य अभावः प्रथमायाः प्रयोजक इत्यर्थः।

**अयं भावः** — चैत्रेण पच्यते इत्यादौ चैत्रनिष्ठं कर्तृत्वं न तिङा अभिधीयते इति कर्तृत्वस्यानभिधानरूपं विशेष्यमस्ति। परं तु तत्रत्याख्यातेन कर्मत्वस्यैवाभिधानात् कर्तृत्वानभिधानसत्त्वेऽपि तृतीयया कर्तृत्वस्य विवक्षितत्वात् आख्यातेन कर्तृत्वानभिधानं तत्र विवक्षितमिति कृत्वा अविवक्षाविरहविशिष्टमनभिधानमस्तीति तृतीयायाः साधुता। चैत्रः पचतीत्यादिस्थले तु आख्यातेन कर्तृत्वस्य विवक्षितत्वात् अविवक्षाविरहरूपविशेषणसत्त्वेऽपि अनभिधानरूपं निशेष्यं नास्ति इति तदभावप्रयुक्तस्य विशिष्टानभिधानाभावरूपस्य प्रयोजकस्य सद्भावात् चैत्रपदोत्तरं प्रथमायाः उपपत्तिरिति भावः।

**न चैवमित्यादि**। करणत्वकर्मत्वादिकारकाणां प्रकारतया भानाविवक्षायां काष्ठादिकारकाणां करणत्वादिसंसर्गेण आख्यातार्थभावनायामन्वयापत्तिः। मीमांसकानां भवतां मते सर्वेषां भावनायामन्वय इति स्वीकारात् स्वनिष्ठकरणत्वादिनिरूपकत्वसंबन्धेनान्वयसंभवात् संसर्गभेदेऽपि सर्वेषां प्रातिपदिकार्थ-

मात्रविवक्षायां प्रथमायाः संभवात् तथा च काष्ठानि स्थाली ओदनः पचतीति प्रयोगापत्तिः। परमते नैयायिकमते तु नापत्तिः। नामार्थस्य भेदसंबन्धेन धात्वर्थेऽन्वयाब्युत्पन्नत्वस्वीकारान्न तथा प्रयोगापत्तिः।

वस्तुतस्तु तेषामपि मते लुप्तविभक्तिस्थले दधि पश्यतीत्यादौ दधिपदस्य दधिकर्मके लक्षणास्वीकारेण तस्य धात्वर्थेऽभेदेनान्वयवत् काष्ठानि स्थाली ओदनः पचति इति प्रयोगः काष्ठादिपदानां कांष्टकरणकाद्यर्थे लक्षणया तस्य धात्वर्थेऽभेदान्वयसंभवात् आपद्यते इति नचेत्यादि वाच्यमित्यन्तस्यार्थः।

तत्र समाधत्ते — **एतादृशप्रयोगापत्तिभयादेवेति**। काष्ठानि स्थाली ओदनः पचतीति प्रयोगापत्तिभयादेव मया मीमांसाकेनापि स्वबोधककृदाद्यभिहित-कारकवाचिनामभिन्ननामार्थस्य = स्वस्य कारकस्य बोधकाः ये कृत्तद्धितादयः तैरभिहितं यत् कारकं कर्तृकर्मादिकारकं तद्वाचकं यत् नाम प्रातिपदिकं तद्भिन्नं यत् नाम तदर्थस्य तद्गतलिङ्गसंख्यादेर्वा क्रियायामन्वये सुबुपात्त लिङ्गसंख्यातिरिक्तः यः द्वितीयाद्युपस्थापितोऽर्थः तद्वारकत्वं प्रयोजकमिति नियमः कल्प्यते। उदा-हरणं यथा — काष्ठैः स्थाल्यामोदनं पचति इति। अत्र क्रमशः करणत्व — अधिकरणंत्व — कर्मत्वानि तृतीयादि विभक्त्यर्थाः। तद्वारा काष्ठस्थाल्योदनानां आख्यातार्थभावनायामन्वयः। अर्थात् स्वनिष्ठकरणत्वनिरूपकत्वसंबन्धेन काष्ठानां, स्वनिष्ठाधिकरणत्वनिरूपकत्वसंबन्धेन स्थाल्याः स्वनिष्ठकर्मत्वनिरूपकत्वसंबन्धेन ओदनस्य च आख्यातार्थभावनायामन्वयः। अतः साक्षात् भेदसंबन्धेन नामार्थानां भावनायाम् अन्वयाभावात् न प्रथमायाः आपत्तिः। मूले क्रियासंबन्धे इत्यत्र क्रियापदं यदि धात्वर्थानुकूलभावनापरम्। तदा स्वनिष्ठकर्मत्वनिरूपकधात्वर्थानु-कूलत्वसंबन्धेन अन्वय इति रीत्या बोध्यम्। तत्र भिन्नान्तविशेषणस्य प्रयोजन-

माह — **अत्र नामार्थस्येति।** चैत्रः पचतीत्यादौ नामार्थस्य चैत्रादेः साक्षादेव क्रियायामन्वयात् भिन्नान्तं विशेषणम्। तत्र चैत्रपदस्य अभिहितकारकवाचित्वान्न दोषः। स्वबोधकेत्यस्य प्रयोजनमाह — **पाचकमानयेत्यादाविति।**

## उक्तमतखण्डनम्

**तन्न। एवमपि ईषदसमाप्तेः कल्पप्रत्ययवाच्याया भावनया सह भेदसम्बन्धविवक्षया षष्ठयापत्तेर्दुवारत्वात्। ईषदसमाप्तेरपि तादृशनामार्थतया निरुक्तक्रियासम्बन्धे द्वितीयादिविभक्त्यर्थद्वारकत्वाभावाद् व्यभिचारापत्तेश्च। अतोऽन्यत्र व्याकरणस्य वृत्तिबोधकत्वेऽपि प्रकृते तात्पर्यग्राहकतामात्रपरतेति युक्तमुत्पश्यामः।**

## पचतिकल्पमित्यादेर्मतान्तरेणान्वयोपपादनम्, तन्निराकरणं च

**केचित्तु — पचतिकल्पमित्यादौ तिष्ठतीत्यध्याहारात् पाकभावनावृत्तिरीषदसमाप्तिस्तिष्ठतीत्यर्थः। अस्मिन्श्च पक्षे पचतीति तिङर्थोऽपि कल्पप्रत्ययार्थेन भेदसम्बन्धेन अन्वेति, एकपदोपात्तत्वात्। अतश्च कल्पप्रत्ययस्य वाचकत्वेऽपि तस्य तिष्ठतीत्यत्रैव अन्वयात् प्रथमोपपत्तिरित्याहुः। तन्न। बहुत्वविवक्षायां पचन्तिकल्पाः इत्यस्यापि आपत्तेः। एवञ्चास्मन्मते सर्वत्र प्रथमाप्रयोजकरूपलाभस्सुलभः न तु भवन्मत इति सिद्धम्।**

---

केचित्तुमतं खण्डयति — **एवमपीत्यादिना।** पचतिकल्पम् इत्यादौ प्रथमाविभक्त्यर्थाविवक्षायामपि तद्धितार्थस्य ईषदसमाप्तेः भावनायां स्वाश्रयानुकूलत्वरूपभेदसंबन्धविवक्षायां षष्ठीविभक्त्यापत्तेः दुर्वारत्वात्। अपि च तद्धितार्थैषदसमाप्तेरपि तादृशनामार्थतया = स्वबोधककृदाद्यभिहितकारकवाचिनामभिन्न-

नामार्थतया पचधात्वर्थक्रियासंबन्धे अथवा तदनुकूलभावनान्वये द्वितीयादिविभक्त्यर्थद्वारकत्वस्य आवश्यकतया तत्र तदभावेन व्यतिरेकव्यभिचाराच्चेत्यर्थः।

**अतोऽन्यत्रेति**। कर्मणि द्वितीयेत्यादौ। पचतिकल्पमित्यादौ क्रियापदान्तराध्याहारेण बोधं वदतां मतमाह — **केचित्तु इति**। भेदसंबन्धेन आश्रयत्वसंबन्धेन। पचतिकल्पम् इत्यत्र धात्वर्थपाकस्य तिप्रत्ययार्थभावनायामनुकूलत्वसंबन्धेनान्वयः। भावनायाः आधेयत्वसंबन्धेन स्थाधात्वर्थस्थितावन्वयः। तथा च पाकभावनावृत्तिः ईषदसमाप्तिः तिष्ठतीत्यर्थः। अन्यत् स्पष्टम्।

## कर्तृलक्षणावादः

### आख्यातस्य कर्तृलक्षकत्वे प्रमाणकथनम्

**नन्विदमाख्यातस्य कृतिवाचिनः कर्तृलक्षकत्वे सिद्ध्येयत्, तत्रैव तु प्रमाणाभाव इति चेत्, पचतीत्युक्ते कीदृग्विध इति प्रश्नस्यैव तत्र प्रमाणत्वात्। न हि धर्मिज्ञानं विना धर्मविशेषप्रश्नो युज्यते। न च धर्मिज्ञानं त्वन्मते सम्भवति, पचतिपदार्थपाकप्रकारकानुकूलतासंसर्गकाख्यातार्थविशेष्यकाखण्डवाक्यार्थबोधस्यैव जननात्। प्रथमान्तपदजन्योपस्थितिरूपकारणाभावेन कृतिप्रकारकाश्रयविशेष्यकबोधस्य जनयितुमशक्यत्वात्। यद्यपि भवन्मते कृतिप्रकारकबोधं प्रति आख्यातपदज्ञानत्वेनापि कारणताऽस्ति, तथापि तत्कार्यतावच्छेदकं यदि कृतिप्रकारकबोधत्वम्, तदा आश्रयज्ञानाभावाद्धर्मिज्ञानाभावस्सुलभ एव। यदि तु कृतिप्रकारकाश्रयविशेष्यकबोधत्वम्, तदापि तत्र प्रथमान्तपदजन्योपस्थितेरपि दण्डचक्रादिवत् समुच्चित्य कारणत्वात् तदभावेनाभावः सुलभः। अतोऽवश्यं प्रश्नोपपादकधर्मिज्ञानार्थम्, प्रथमान्तपदाध्याहारार्थं चाश्रयज्ञानं वाच्यम्।**

ननु पूर्वोक्तं सर्वं कृतिवाचकस्याख्यातस्य कर्तरि लक्षणायां सिध्येत् तत्रैव प्रमाणं नास्तीति शङ्कते — **नन्विदमिति**। समाधत्ते — पचतीत्युक्ते इत्यादिना। पचतीति केनचित् उक्ते। अन्यः कीदृग्विधः इति पृच्छति। कीदृग्विध इत्यस्य किंधर्मवान् इत्यर्थः। अयं च प्रश्नः पचतीति शब्दात् धर्मिणः ज्ञाने सत्येव किंधर्मवान् इति धर्मविशेषविषयकप्रश्नः भवितुमर्हति। अतः कर्तरि लक्षणा आख्यातस्य आश्रयणीया। तदा पचतीति श्रवणानन्तरं पाककर्ता इति धर्मिणः कर्तुः बोधे जाते स किंधर्मवान् इत्यर्थकः कीदृग्विध इति प्रश्नः संगच्छते। नैयायिकमते तु आख्यातस्य कृत्यर्थकत्वात् पचतीत्यतः पाकानुकूला कृतिः इति बोधस्यैव स्वीकारात् कीदृशी इति प्रश्नो भवेत् न तु कीदृग्विध इतीति धर्मिज्ञानार्थं कर्तरि लक्षणा स्वीकार्येति भावः। तदाह — **न च धर्मिज्ञानं त्वन्मते संभवतीति। आख्यातार्थविशेष्यकेति**। आख्यातार्थकृतिविशेष्यकेत्यर्थः। **प्रथमान्तेति**। आख्यातार्थकृतिप्रकारकबोधं प्रति प्रथमान्तपदजन्योपास्थितेः कारणत्वेन प्रथमान्तपदाभावे आख्यातार्थकृतिप्रकारकतदाश्रयविशेष्यकबोधस्य जनयितुमशक्यत्वात् इति भावः। कृतिविशेष्यकबोधः अङ्गीकृतश्च भट्टाचार्यैः प्रथमान्तपदाभावे। **यद्यपीत्यादि**। भवन्मते = नैयायिकमते। भवन्मते नैयायिकमते चैत्रः पचतीत्यादौ आख्यातार्थकृतिप्रकारकबोधस्य जायमानतया कृतिप्रकारकवोधं प्रति आख्यातपदज्ञानत्वेनापि कारणत्वमस्ति तथापि तन्मते आख्यातपदज्ञानकार्यतावच्छेदकं यदि कृतिप्रकारबोधत्वं तदा कृत्याश्रयज्ञानाभावात् धर्मविशेषप्रश्नः कीदृग्विध इत्याकारकोऽनुपपन्न एव। यदि कृतिप्रकारकाश्रयविशेष्यकबोधत्वं, तदापि आश्रयभानं प्रति हेतुभूतप्रथमान्तपदजन्योपास्थितेरपि दण्डचक्रादिवत् समुच्चित्य तादृशबोधं प्रति हेतुतया पचतीत्यत्र प्रथमान्तपदाभावेन आश्रयविशेष्यकबोधाभावः सुलभ इति धार्मिज्ञानाभावात् कीदृग्विध इति प्रश्नानुपपत्तिः। ततश्च

तादृशप्रश्नोपपादकधर्मिज्ञानार्थं प्रथमान्तपदाध्याहारार्थं च आश्रयज्ञानमावश्यकम्। सामान्यतः आश्रयज्ञाने सत्येव तद्विशेषसमर्पकप्रथमान्तपदाध्याहारः शक्यः। अतः प्रथमान्तपदाध्याहारार्थम् आश्रयज्ञानमावश्यकमिति भावः।

**तच्च शाब्दम्, मानसम्, स्मरणं वेति विप्रतिपत्तिः। तत्र 'लः कर्मणि च भावे चाकर्मकेभ्यः' (पा.सू 3.4.69) इत्यनुशासनाच्छाब्दमेव। अत्र चकारात् 'कर्तरि कृत्' (पा.सू 3.4.67) इति सूत्रीयस्य कर्तरीत्यस्यानुकर्षणात् कर्तर्यपि लकार-लाभः। इदं हि न लकारस्य कर्त्रादौ शक्तिरित्येवम्परम्। पदार्थे वृत्तौ च तात्पर्यकल्पने गौरवात्। लाघवेन कृतौ शाक्तावावधारितायां तदनुशासनस्य निरूढलक्षणयैव व्याख्येयत्वाच्च। कर्तुर्मानसत्वे तत्र संख्यान्वयानुपपत्तेः। पचतीत्येतावन्मात्रश्रवणे कर्तरि एकत्वसंशयापत्तेश्च। पचतीति पाचक इत्येवं कृदर्थ-विवरणाच्च। अत आश्रयज्ञानस्य शाब्दत्वमुक्तम्।**

---

**तच्चेत्यादि। तच्च** = आश्रयज्ञानं च शाब्दं मानसं स्मरणं वेति संदेहः। तत्र तस्मिन् संदेहे सति 'लः कर्मणि च भावे चार्मकेभ्यः' (पा.सू 3.4.69) इति व्याकरणसूत्रात् शाब्दं लकारबोध्यम्। तस्मिन् सूत्रे चकारेण 'कर्तरि कृत्' इति सूत्रात् कर्तरि इत्यनुकृष्यते। तेन लकाराः कर्मणि कर्तरि च भवन्तीति सूत्रार्थः। इदं सूत्रं न लकारस्य कर्त्रादौ शक्तिः इत्यर्थतात्पर्यकम्। तस्य सूत्रस्य कर्त्रादिपदार्थे तत्र शक्तिरूपवृत्तौ च तात्पर्यमिति कल्पने गौरवात्। लाघवन्यायेन लकारस्य कृतौ शक्तिरिति निश्चिते सति तस्य सूत्रस्य कर्तरि निरूढलक्षणा इत्यत्रैव तात्पर्यमिति व्याख्यानं कार्यम्। ततश्च कर्तृविषयकज्ञानं शाब्दम्।

कर्तृविषयकज्ञानस्य मानसत्वे मानसज्ञानविषये कर्तरि आख्यातार्थसंख्यान्व-यानुपपत्तेः। न हि शाब्दमशाब्देनान्वेतीति न्यायात्। न च मास्तु संख्यान्वय इति

वाच्यम्। तथा सति पचतीत्येतावन्मात्रश्रवणे कर्ता एकोऽनेको वेति संशयापत्तेः। अतः कर्तुः शाब्दबोधविषयत्वमावश्यकम्। अपि च पचतीति पाचकः इत्येव कर्त्रर्थककृदन्तपदेन पचतिपदस्य विवरणात् विवरणविवरणीययोः समानार्थकत्वनियमाच्च तिङः कर्त्रर्थकत्वं वाच्यम्। अतः कृत्याश्रयज्ञानं शाब्दम् इति भावः।

## कर्तुश्शाब्दत्वे लाघवप्रदर्शनम्

**युक्तं चैतत् आख्यातोपात्तसंख्याप्रकारकशाब्दबोधं प्रति आख्यातपदस्य प्रथमान्तपदापेक्षयोपस्थितत्वेनाख्यातपदजन्योपस्थितित्वेन कारणत्वकल्पने लाघवम्। अतो लाघवादनुशासनात् धर्मिज्ञानानुरोधात् आख्यातस्य कर्त्रादौ लक्षणा।**

---

अपि च कर्तुः शाब्दज्ञानविषयत्वे लाघवं चास्तीत्याह — **युक्तं चैतदित्यादिना।** पचति चैत्रः इत्यत्र कर्तुः तिप्रत्ययार्थत्वे संख्यायाः कर्तुश्च एकशब्दवाच्यत्वेन संख्योपस्थित्या सह झटिति कर्तुरूपस्थितिः भवति। अन्यथा कर्तुः प्रथमान्तपदेन उपास्थितिरिति स्वीकारे विलम्बो भवेत्। अतः उपस्थितिकृतलाघवमनुसृत्य आख्यातोपात्तसंख्याप्रकरकशाब्दबोधं प्रति आख्यातपदजन्योपस्थितिः कारणमिति कल्पने लाघवमिति भावः। प्रथमान्तपदापेक्षयोपस्थितत्वेनेति। प्रथमान्तपदापेक्षया शीघ्रमुपस्थितत्वेनेत्यर्थः।

आख्यातस्य कर्तरि लक्षणेति एतावता उपपादितमर्थं क्रोडीकृत्य निगमयति — **अत इति।** लाघवात् = उपस्थितिशैघ्य्यरूपलाघवयुक्त्या अनुशासनात् 'लः कर्मणि च भावे चाकर्मकेभ्यः' (पा.सू. 3.4.69) इति पाणिनीयशब्दानुशासनात् (व्याकरणात्) धर्मिज्ञानानुरोधात् पचतीति श्रवणानन्तरं कीदृग्विध इति

प्रश्नोपपादकधर्मिज्ञानार्थं च आख्यातस्य कर्त्रादौ लक्षणेत्यर्थः। आदिपदेन कर्मणः ग्रहणम्।

## कर्तुः संसर्गविधया भानवादिमतनिराकरणम्

**एतेन एकत्वादेरस्मन्मते कर्त्रादिघटितसामानाधिकरण्यसम्बन्धेनैव भावनान्वयात् कर्त्रादेः सांसर्गिकविषयतयैव बोध इत्यपास्तम्। पाककर्ता एको नवेत्यस्य संशयस्य पचतीत्यतो व्युदासानुपपत्तेः, अनुशासनवैयर्थ्यापत्तेश्च लक्षणेति न कश्चिद्विरोधः। धर्मितावच्छेदकविशिष्टधर्मिज्ञानाभावात्पाककर्ता क इति संशयानापत्तेश्च। न च क्वचिदपि शक्तिमात्रजन्यशाब्दबोधाभावे तस्यैव पदस्यार्थान्तरलक्षकत्वासम्भव इत्यत्र प्रमाणमस्ति। मुख्यार्थासम्भवस्येवार्थान्तरबोधानुपपत्तेरेव लाघवतर्कसहकृतायाः लक्षणातात्पर्यग्राहकत्वात्। तत्रापि शबादिविकरणस्थले कर्तरि, यगादिविकरणस्थले च कर्मणीत्येवं व्यवस्थया लक्षणा। लक्ष्यतावच्छेदकं चाश्रयत्वं कर्तृत्वकर्मत्वादि, अखण्डोपाधिर्वा।**

---

अथ कर्तुः न प्रकारतया विशेष्यतया वा शाब्दबोधे भानम्। किं तु संसर्गतया भानमिति मतम् अनूद्य निराकरोति — **एतेनेत्यादिना**। पचतीत्यादौ आख्यातार्थः एकत्वादिसंख्या कृतिरूपा भावना च। तत्र एकत्वादिसंख्यायाः सामानाधिकरण्यसंबन्धेनान्वयः। सामानाधिकरण्यं स्वाश्रयंकर्तृकर्मवृत्तित्वरूपम्। तथा च कर्त्रादेः सामानाधिकरण्यरूपसंबन्धघटकतयैव भानात् आख्यातस्य कर्त्रादौ लक्षणा नास्तीति अपास्तम्। पाककर्ता एको न येति संशयनिरासकबोधजनकत्वं पचतीत्यस्य निर्विवादम्। स च संशयः पाककर्ता एकः इति बोधेनैव निवर्तयितुं शक्यः। संशयसमानविशेष्यकनिश्चयस्यैव संशयनिवर्तकत्वात्। अतः तदनुसारेण

कर्त्रादेः संसर्गताभिन्नविशेष्यतयैव भानमावश्यकमिति कर्तरि लक्षणा स्वीकार्येति भावः। अपि च कर्तुः कर्मणो वा संसर्गघटकतया भाने 'लःकर्मणि च' (पा.सू 3.4.69) इति तयोः शाब्दत्वबोधकानुशासनवैयर्थ्यं चेत्याह — **अनुशासन-वैयर्थ्याच्चेति**। अनुशासनस्य शक्तिलक्षणान्यतरवृत्तिग्राहकत्वादिति भावः। अपि च कर्तुः संसर्गघटकतया भाने दोषान्तरमाह — **धर्मितावच्छेदकेति**। पचतीत्यस्य श्रवणानन्तरं पाककर्ता कः इति संशयः, पाककर्ता चैत्रः इत्युत्तरं च भवति। संशयोत्तरयोः समानधर्मितावच्छेदककत्वस्यानुभवात्। तदर्थमपि कर्तरि लक्षणा आस्थेयेति भावः।

ननु लक्षणास्थले लक्षकपदात् शक्त्या बोधः आवश्यकः। यथा गङ्गायां मत्स्यः इत्यत्र। गङ्गायां घोषः इत्यत्र तीरलक्षकत्वं भवति। तथा च किंचिदर्थविषयकशक्ति-मात्रजन्यशाब्दबोधजनकत्वं यस्य पदस्य तस्यैव अर्थान्तरलक्षकत्वमिति नियमः।

एतदुक्तं भवति — यादृशस्य शक्यस्यार्थस्य संबन्धं पुरस्कृत्य किंचित्पदस्य लक्षणा भवति, तादृशस्य शक्यस्यार्थस्य तस्मात् कुत्रचित् बोध आवश्यकः इति नियमः। यथा गङ्गापदशक्यस्यार्थस्य प्रवाहस्य संबन्धं पुरस्कृत्य तीरे लक्षणा भवति गङ्गायां घोषः इत्यत्र। तस्य शक्यार्थस्य गङ्गायां मत्स्य इत्यत्र बोधः भवति। प्रकृते आख्यातस्य कर्तरि, पचतीत्यत्र पाककर्ता एको न वेतिसंशयानु-सारेण कृतिरूपशक्यार्थसंबन्धं पुरस्कृत्य हि लक्षणा वक्तव्या। कृतिरूपशक्यार्थस्य पचतीत्यत्र बोध एव नास्तीति तत्संबन्धं पुरस्कृत्य कर्तरि लक्षणा कथं स्यात् इति शङ्कितुराशयः। समाधातुः अयमाशयः — यथा मुख्यार्थासंभवः लक्षणायाः बीजम्, यथा गङ्गायां घोष इत्यत्र; तथा लाघवसहकृता अर्थान्तरबोधानुपपत्तिरपि लक्षणायाः निमित्तम्। यथा प्रकृते पचतीत्यत्र पाकानुकूला कृतिः इति

शक्यार्थकृतिविषयकबोधाङ्गीकारे अर्थान्तरबोधानुपपत्तिः पाककर्ता एको न वेति कर्तृरूपार्थान्तरविषयकसंशयात्मकबोधानुपपत्तिः आख्यातस्य कर्तरि लक्षणायां बीजम्। लाघवतर्कः कृतौ शक्तिस्वीकारे कृतित्वजातेः एकस्याः शक्यतावच्छेदकत्वेन लाघवम् इत्येवंरूपः। एवं च एतादृशतर्कवशात् कृतौ आख्यातस्य शक्तिः। तत्सहकृता पाकर्ता एको न वेति संशयानुपपत्तिः कर्तरि लक्षणायां बीजम्। तथा च शक्तिमात्रजन्यबोधाभावेऽपि कर्तरि आख्यातस्य लक्षणायां न कोऽपि दोष इति। **क्लेशेन ग्राह्यः सूक्ष्मोऽयं विषयः।**

**तत्रापीति।** लक्षणायामपि आख्यातस्य सर्वत्र कर्तरि, कर्मणि वा लक्षणेति न मन्तव्यम्। अपि तु शबादिविकरणस्थले पचतीत्यादौ कर्तरि लक्षणा, यगादिविकरणस्थले पच्यते इत्यादौ कर्मणि लक्षणेत्येवं व्यवस्थया लक्षणा। लक्ष्यतावच्छेदकं च आश्रयत्वं (कृतिनिरूपितं) पचतीत्यादौ, फलनिरूपितं पच्यते इत्यादौ। अथ वा कर्तृत्वं कर्मत्वं चाखण्डोपाधिः।

## कर्तृत्वादेरखण्डोपाधित्वप्रसाधनम्

**कर्तृत्वादिकं हि कृत्याश्रयत्वादिसमनियतोऽखण्डधर्मोऽनुगतव्यवहारसाक्षिकः, न तु कृत्याश्रयत्वादिकमेव। तथात्वे चैत्रेण पाकः क्रियत इत्यत्र चैत्रेण पाक इत्येतावतैव चैत्रनिष्ठकृतिसाध्यः पाक इत्यर्थबोधोपपत्तेः पुनः क्रियत इति कृतिवाचकपदप्रयोगवैयर्थ्यापत्तेः। अतः कर्तृत्वादिकमखण्डमेव तृतीयाद्यर्थः। तस्य चाश्रयत्वादिवदेव कृत्यादिनिरूपितत्वादिधर्मकल्पनाच्चैत्रनिष्ठकर्तृत्वनिरूपककृतिसाध्यः पाक इत्यर्थबोधोपपत्तिः। इदञ्च परमतेनोक्तम्, स्वमते उक्तकृतिसाध्यत्वं पाकवृत्तित्येवं शाब्दबोधस्य वक्ष्यमाणत्वात्। सर्वथा कर्तृत्वादिकमखण्डोपाधिः। इष्टञ्चैतत्प्राचां दम्पत्योर्व्यासज्यवृत्तिकर्तृत्वसिद्ध्यर्थम्, अग्निषोमयोर्व्यासज्यवृत्ति-**

**देवतात्वसिद्ध्यर्थञ्च। अन्यथा कृत्याश्रयत्वरूपकर्तृत्वस्य, त्यज्यमानद्रव्योद्देश्यत्व-रूपस्य च देवतात्वस्य आश्रयभेदेन भिन्नतया व्यासज्यवृत्तित्वसिद्धान्तानुपपत्तेः। अतः कर्तृत्वम् , कर्मत्वञ्च लक्ष्यतावच्छेदकीकृत्य कर्तृकर्मणोराख्यातस्य लक्षणा।**

---

कर्तृत्वकर्मत्वादेः अखण्डोपाधित्वं इत्येतत् समर्थयति **कर्तृत्वादिकं हीत्यादिना।** यत्र यत्र कृत्याश्रयत्वमस्ति, तत्र सर्वत्र वर्तमानः, यत्र कृत्याश्रयत्वं नास्ति तत्रावर्तमानश्च अखण्डो धर्मः कर्तृत्वम्। तत्र प्रमाणम् अयं कर्ता अयं कर्ता इत्यनुगतः व्यवहारः। जात्यतिरिक्तः अनुगतो धर्मः अखण्डोपाधिः इति कथ्यते। न तु कृत्याश्रयत्वादिकम् इति। कर्तृत्वं न कृत्याश्रयत्वरूपं, न वा कृतिरूपम् इत्यर्थः। **तथात्वे इति।** कर्तृत्वस्य कृत्याश्रयत्वरूपत्वे चैत्रेण पाकः क्रियते इत्यत्र क्रियते इत्यस्य वैयर्थ्यापत्तेः। क्रियते इत्यस्य हि कृतिसाध्यः इत्यर्थः। स चार्थः चैत्रेणेत्यनेनैव लभ्यते। तृतीयायाः हि कृतिसाध्यत्वमर्थः। तदेकदेशकृतौ आधेयत्वसंबन्धेन चैत्रपदार्थान्वयेन चैत्रवृत्तिकृतिसाध्यत्वस्य तृतीयान्तार्थस्य पाकेऽन्वयेन च चैत्रवृत्तिकृतिसाध्यः इति बोधस्य संभवात्। कर्तृत्वस्य अखण्डोपाधिरूपत्वे तु चैत्रनिष्ठकर्तृत्वनिरूपकः पाकः इति चैत्रेण पाकः इत्यनेन लभ्यते। पाकस्य कृतिसाध्यत्वं तु न लभ्यत इति तल्लाभाय क्रियते इत्यस्य सार्थक्यमिति भावः।

**तस्य चेति।** अखण्डोपाधिरूपस्य कर्तृत्वस्य कृतिनिरूपितत्वमिति धर्मः कल्प्यते। ततश्च चैत्रेण पाकः क्रियते इत्यत्र चैत्रपदोत्तरतृतीयायाः कर्तृत्वमर्थः। तत्र आधेयतासंबन्धेन चैत्रस्यान्वयः। कर्तृत्वस्य निरूपकतासंबन्धेन कृधात्वर्थकृतावन्वयः। कर्माख्यातस्य ते इत्यस्य साध्यत्वमर्थः। तत्र निरूपितत्वसंबन्धेन धात्वर्थकृतेरन्वयः। साध्यत्वस्य प्रथमान्तपदार्थे पाकेऽन्वयः। तथा च चैत्रवृत्ति-

कर्तृत्वनिरूपककृतिनिरूपितसाध्यतावान् पाकः इति शाब्दबोधः। इदं च नैयायिकमतेन उक्तम्। तैः प्रथमान्तार्थमुख्यशेष्यकबोधस्वीकारात्। स्वमते मीमांसकमते तु चैत्रवृत्तिकर्तृत्वनिरूपककृतिसाध्यत्वं पाकवृत्ति इति चैत्रेण पाकः क्रियते इति वाक्यात् बोधः। मीमासकैः आख्यातार्थमुख्यविशेष्यकबोधस्वीकारात् इति भावः। सर्वथेति। बोधे विशेष्यं यत् किमपि भवतु। कर्तुत्वकर्मत्वादिकं तु अखण्डोपाधिरूपमेवेत्यर्थः।

**इष्टं चैतदिति**। प्राचां प्राचीनमीमांसकानाम्, एतत् कर्तृत्वादेः अखण्डोपाधिरूपत्वमिष्टम्, दम्पत्योः व्यासज्यवृत्तिकर्तृत्वसिद्ध्यर्थं अग्नीषोमयोः व्यासज्यवृत्तिदेवतात्वसिध्यर्थं च। अन्यथा कर्तृत्वादेः अखण्डोपाधित्वाभावे, कृत्याश्रयत्वरूपस्य कर्तृत्वस्य आश्रयभेदेन भिन्नतया, त्यज्यमानद्रव्योद्देश्यत्वरूपदेवतात्वस्य च आश्रयभेदेन भिन्नतया तयोः व्यासज्यवृत्तित्वसिद्धान्तानुपपत्तेः इत्यर्थः। व्यासज्यवृत्तित्वं नाम अनेकपर्याप्तत्वम्। ततश्च कर्त्राख्यातस्थले आख्यातस्य कर्तरि लक्षणा। कर्तृत्वं लक्ष्यतावच्छेदकम्। कर्माख्यातस्थले कर्मणि आख्यातस्य लक्षणा। कर्मत्वं लक्ष्यतावच्छेदकम्।

## यजेतेत्यादौ दम्पत्योः सहाधिकारे कर्तृत्वलक्षणा

**इदञ्चौत्सर्गिकीं रीतिमनुसृत्योक्तम्। यत्र षष्ठोक्तन्यायेनाश्रयानेकत्वग्राहकं प्रमाणान्तरमस्ति, यथा — दम्पत्योः, तत्र विधिवाक्ये एकवचनश्रवणादाख्याते नाश्रयलक्षणा, एकत्वानन्वयापत्तेः। अतस्तत्र द्वित्वलक्षणायां प्रमाणाभावादाख्यातेनैव लाघवात् कर्तृत्वत्वेन कर्तृत्वं लक्ष्यते। न तदाश्रयोऽपि। तस्यार्थादेव बोधोपपत्तेः। इष्यते च कर्तृत्वत्वादिना कर्तृत्वबोधः तृतीयादौ। स परं शक्त्या तत्र।**

**अत्र तु लक्षणया इत्येतावान् भेदः। तत्रैव च साक्षात्सम्बन्धेनैकत्वान्वयः। नत्वाश्रये, तस्य द्वित्वात्।**

---

इदं चेति। कर्तृत्वं लक्ष्यतावच्छेदकीकृत्य कर्तरि आख्यातस्य लक्षणेति यदुक्तम्, तत् सामान्यन्यायमनुसृत्योक्तम्, आश्रयैकस्थलानुरोधेनोक्तमिति यावत्। यत्र तु कृत्याश्रयभेदग्राहकं प्रमाणान्तरमस्ति, यथा दम्पत्योः, यागानुकूलकृत्योः उभयनिष्ठयोः भेदात् तत्र, विधिवाक्ये 'यजेत स्वर्गकामः' इत्यत्र यजेत इत्येकवचनश्रवणात् आख्याते न आश्रये लक्षणा। आश्रययोः दम्पत्योः द्वित्वात्, एकत्वाभावात्। न च तत्र द्वित्वे आख्यातैकवचने लक्षणेति वाच्यम्। तत्र प्रमाणाभावात्। कर्तृत्वे लक्षणायां तु प्रमाणमस्ति लाघवानुगृहीतं 'लः कर्मणि च' (पा.सू 3.4.69) इति सूत्रम्। ततश्च लक्षणया आख्यातस्य कर्तृत्वमर्थः। लक्ष्यतावच्छेदकं कर्तृत्वत्वम्। कर्तृत्वं चाखण्डधर्मरूपं व्यासज्यवृत्ति। तर्हि कर्तृत्वाश्रयबोधः कथमित्यत्राह — **तस्यार्थादेव बोधोपपत्तेः** इति। कर्तृत्वस्याश्रयाविनाभावात् तद्बोध इति भावः। तत्रेति। चैत्रेण पच्यते इत्यादावित्यर्थः। **अत्र तु** = यजेत इत्यादौ तु। **तत्रैव** = कर्तृत्वे एव। न तु आश्रये कर्तृत्वाश्रये। तस्य कर्तृत्वाश्रयस्य दम्पतिरूपस्य द्वित्वात् इत्यर्थः। षष्ठोक्तन्यायेनेति। यागे दम्पत्योः सहाधिकारप्रतिपादकेन षष्ठाध्यायप्रथमपादचतुर्थाधिकरणन्यायेनेत्यर्थः।

**यदपि तत्राख्यातसमानाधिकरणं स्वर्गकामपदम्, तदपि न कर्तृपरम्, अपि तु लक्षणयोपस्थितस्वर्गाख्यभाव्यपरमेव। प्रथमा च तत्रत्या लक्षणया कर्मत्वार्थिकेति, न तत्सामानाधिकरण्यबलेनाप्याख्यातेनाश्रयलक्षणा। प्रथमाप्रयोजकन्तु सर्वत्र कर्तृत्वोक्तिरेव। सा परं कर्तृत्वप्रकारिका, कर्तृत्वविशेष्यिका वेत्यन्यदेतत्। अतः सिद्धाख्यातेऽपि कर्तृत्वादिलक्षणा।**

---

ननु यजेत स्वर्गकामः इत्यत्र आख्यातस्य लक्षणया कर्तृत्वार्थकत्वे आख्यातस्य स्वर्गकामपदसामानाधिकरण्यानुपपत्तिः। स्वर्गकामपदस्य स्वर्गेच्छावत्पुरुषवाचकत्वेन आख्यातस्य कर्तृत्वार्थकत्वेन उभयोः एकार्थकत्वाभावादित्याशङ्क्य, तत्र स्वर्गकामपदं न कर्तृवाचकम्। अपि तु लक्षणया स्वर्गबोधकम्। तत्रत्यप्रथमाविभक्तिश्च लक्षणया कर्मत्वार्थिका। स्वर्गकर्मिका यजमाननिष्ठकर्तृत्वनिरूपिका च भावनेति बोध इत्याशयेन समाधत्ते — **यदपीत्यादिना**। तथा च स्वर्गकामपदसामानाधिकरण्यं न आख्यातस्येत्युक्तं भवति।

## भावनाया मुख्यविशेष्यत्वे युक्तयः

**तदपि न भावनां प्रति विशेष्यम्। किन्तु भावनैव तद्विशेष्या। इतरथा 'पचति ब्रूते' इति प्रयोगापत्तिः। 'पक्ता ब्रूते' इतिवत् तस्य योग्यत्वात्। 'पचति भवती'ति भाष्योदाहृतप्रयोगानापत्तेश्च।**

**यत्तु 'अपाक्षीद् भवति, पक्ष्यति भवती'ति तदुदाहृतप्रयोगः। स च भूधातुना युक्तत्वलक्षणया भूतभाविपाकभावनावृत्ति वर्तमानयुक्तत्वाश्रयत्वमिति शाब्दबोधाङ्गीकारान्नायुक्तः।**

**दृश्यते च युज्यत इत्यर्थे लोके भवतीति प्रयोगः। एवं 'पचति भवती'ति प्रयोगोऽपि कर्तृविशेष्यत्वपक्षे नोपपद्यते। तथात्वे 'पचन्ति भवन्ती'ति प्रयोगापत्तेश्च। भावप्रधानमाख्यातम् इति निरुक्तस्मृत्या भावनातिरिक्ताख्यातार्थमात्रं प्रति भावपदवाच्यभावनाया विशेष्यत्वोक्तेश्च। अत्र हि न प्रकृत्यर्थं प्रति भावनायाः प्राधान्यं बोध्यते। 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः तयोस्तु प्रत्ययः प्राधान्येन' इति स्मृत्यैव प्रकृत्यर्थनिरूपितप्रत्ययार्थप्राधान्यस्य सुबर्थसाधारण्येन सिद्धेः।**

अन्यदेतदिति यदुक्तं, तदुपपादयति — **तदपि नेत्यादिना**। तदपि आख्यात-लक्ष्यं कर्त्रादिकमपि भावनां = कृत्यादिरूपां। तद्विशेष्या = कर्तारं कर्तृत्वं च प्रति विशेष्यभूता। इतरथा कर्तुः भावनां प्रति विशेष्यत्वे 'पचति ब्रूते' इति प्रयोगापत्तिः। पचतीत्यस्य हि तदा पाककर्ता इत्यर्थः। पाककर्ता वचनकर्ता इति वाक्यार्थस्याबाधितत्वादिति भावः। तदेवाह — **पक्ता ब्रूते इतिवत् तस्य पचति ब्रूते इत्यस्य योग्यत्वात्** = अबाधितार्थकत्वात्। अपि च पाकभावना भवतीत्यर्थे प्रयुक्तस्य पचति भवतीति वाक्यस्य महाभाष्योदाहृतस्य असंगतिश्च स्यात् इत्याशयः।

ननु भावनायाः विशेष्यत्वाङ्गीकारे 'अपाक्षीत् भवति' 'पक्ष्यति भवति' इति महाभाष्यकारप्रयोगः कथं संगच्छते। भूतकालिकपाकभावनावृत्ति वर्तमान-कालिकभवनाश्रयत्वं, भविष्यत्कालिकपाकभावनावृत्ति वर्तमानकालिकभवनाश्रयत्वम् इति बोधस्य वक्तव्यतया तस्य बाधितार्थकत्वात्, न हि भूतभविष्यत्पाक-भावनायां वर्तमानभवनाश्रयत्वमस्तीत्याशङ्क्य, तत्र भूधातोः लक्षणया युक्तत्वार्थकत्वात् आख्यातस्य आश्रयत्वरूपभावनार्थकत्वाच्च भूतभविष्यत्पाक-भावनावृत्ति वर्तमानकालिकयुक्तत्वाश्रयत्वम् इति बोधाङ्गीकारान्न दोष इति समाधत्ते यत्तु इत्यादिना। भूधातोः युक्तत्वार्थकत्वं लोके प्रयोगवशात् इत्याह — **दृश्यते चेति**। एवं पचति भवति इति प्रयोगोऽपि नोपपद्यते इति। पाकक्रिया भवतीति हि तदर्थः। भवने पाकक्रियायाः कर्तृत्वात्। आख्यातलक्ष्यस्य कर्तुः भावनाविशेष्यत्वे पाककर्ता भवनाश्रय इति वा युक्तत्वाश्रयो वेति ततो बोधो वक्तव्यः। ततश्च पाकक्रियायां भवनाश्रत्वस्य वा युक्तत्वाश्रयत्वस्य वा विवक्षया तत्प्रयोग इति भाष्यमसंगतं स्यादिति भावः। **भाष्योदाहृतेति**। इदं च भाष्यं 'भूवादयो धातवः' (पा.सू 1.3.1) इति सूत्रस्थम् 'पचादयः क्रियाः भवतिक्रियायाः

कर्त्र्यो भवन्ति इति। अपि च कर्तृविशेष्यकत्वपक्षे कर्तुः एकत्वाविवक्षायां पचति भवतीति प्रयोगवत् कर्तुः बहुत्वविवक्षायां 'पचन्ति भवन्ति' इति प्रयोगापत्तिः इत्याह — तथात्वे पचन्ति भवन्तीति प्रयोगापत्तेश्चेति।

भावनाविशेष्यकबोधे महाभाष्यकारसंमतिवत् निरुक्तकारस्य यास्कस्यापि संमतिरस्तीत्याह — **भावप्रधानमित्यादिना**। आख्यातं भावप्रधानमित्यनेन आख्यातार्थेषु संख्याकालभावनाद्यर्थेषु आख्यातार्थभावनायाः आख्यातार्थकाल-संख्यादिकं प्रति विशेष्यत्वरूपं प्राधान्यमुच्यते। न तु आख्यातप्रकृतिभूतधात्वर्थं प्रत्यपि विशेष्यत्वं बोध्यते। प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः इति स्मृत्यैव प्रकृत्यर्थनिष्ठप्रकारतानिरूपितविशेष्यत्वस्य सुप्तिङ्रूपप्रत्ययार्थे बोधनात्। अतः तादृशस्मृत्यलभ्यं आख्यातार्थभावनायाः तदितराख्यातार्थनिष्ठप्रकारतानिरूपित-विशेष्यत्वमेव बोध्यत इत्यर्थः।

## धात्वर्थ एव भावपदार्थ इति वैयाकरणमतखण्डनम्

**न च 'धात्वर्थः केवलश्शुद्धो भाव इत्यभिधीयते' इति वैयाकरणस्मृत्यनुरोधेन भावशब्दस्य धात्वर्थपरत्वावसायात् तस्यैवाख्यातार्थापेक्षया प्राधान्यमनया स्मृत्या नियम्यते, प्रत्ययार्थप्राधान्यस्मृतिस्तु सामान्यविषयत्वात् सुबर्थाभिप्रायेण व्याख्ये-येति वैयाकरणमतमेव युक्तमिति वाच्यम्, एतस्य परिभाषारूपत्वेन नदीवृद्ध्यादि-वदन्यत्राप्रवृत्तेः। अत एव व्याकरणशास्त्र एव तस्य 'भावे घञ्' (पा.सू 3.3.18) इत्यादौ प्रवृत्तिः। सापि न सर्वत्र, 'भावे त्वतलावि'त्यादावप्रवृत्तेः। अतश्च निरुक्त-भावशब्देन णिजन्तभूधातोरच्प्रत्ययान्तत्वव्युत्पत्त्या भवनानुकूलव्यापाररूपा भाव-नैवोच्यते, न धात्वर्थः।**

उक्तार्थोऽनुपपन्न इति वैयाकरणमतानुसारेण शङ्कते **न च धात्वर्थ इत्यादिना।** धातोः फलं व्यापारः (क्रिया) कृतिरूपभावना चार्थः। तेषु त्रिषु अर्थेषु मध्ये भावः इति शब्देन शुद्धः फलं कृतिं च वर्जयित्वा क्रियामात्रमुच्यते इति इत्यभिप्रायकं यत् 'धात्वर्थःकेवलः शुद्धो भाव इत्यभिधीयते' इति वैयाकरणस्मरणं तदनुरोधेन क्रियाया एव = धात्वर्थभूतायाः क्रियाया एव आख्यातार्थापेक्षया प्राधान्यं 'भावप्रधानमाख्यातम्' इति निरुक्तस्मरणेनोच्यते ननु प्रत्ययार्थभावनायाः। 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः' इति स्मृतिस्तु सुबर्थस्य सुप्प्रकृत्यर्थापेक्षया प्राधान्यं बोधयति इति शङ्कितुराशयः। तत्र समाधत्ते — एतस्य **परिभाषा-रूपत्वेनेति।** एतस्य 'धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते इति वचनस्य परिभाषारूपत्वेन तच्छास्त्रसकेतरूपत्वेन अन्यत्र शास्त्रे अप्रवृत्तेः। शास्त्रान्तरे 'भावे चोपलब्धेः' 'तत्त्वं भावेन' इत्यादौ भावशब्दस्यार्थान्तरे प्रयोगदर्शनात्। 'यथा यूस्त्र्याख्यौ नदी' (पा.सू 1.4.3) 'वृद्धिरादैच्' (पा.सू 1.1.1) इत्यादौ नदीवृध्यादिशब्दाः पारिभाषिकाः तद्वत्। किं च व्याकरणशास्त्रेऽपि भावशब्दस्य धात्वर्थपरत्वं सर्वत्र नास्ति। 'तस्य भावस्त्वतलौ' (पा.सू 5.1.119) इत्यादौ भाव-शब्दस्य प्रकृत्यर्थे यः विशेषणभूतो धर्मः घटत्वादिः तद्वाचकत्वेन धात्वर्थवाचक-त्वाभावात्। 'भावे घञ्' इत्यत्र तु धात्वर्थपरः भावशब्दः। न सर्वत्रेति भावः।

**अतश्चेति।** पूर्वोक्तयुक्त्या भावशब्दस्य धात्वर्थक्रियामात्रवाचकत्वं नास्ति। अस्तु — तस्य भावशब्दस्य निरुक्तवचनस्थस्य आख्यातार्थभावनावाचकत्वं कथमिति शङ्कायामाह — **अतश्चेति।** भावयतीति भावः। णिजन्तात् भूधातोः 'एरच्' (पा.सू 3.3.56) इति सूत्रेण अच् प्रत्यये णेर्लोपे भावशब्दः निष्पद्यते। भवनानुकूलव्यापारः इति भावशब्दार्थः। भावनापि भवनानुकूलव्यापारत्वात् भाव-शब्दार्थः। भावनैव प्रधानभूताख्यातार्थेषु इति यास्कवचनार्थः।

**अत एव 'सर्वमाख्यातजं नामे'ति स्मृत्याख्यातशब्दस्य धातुपरत्वावसायादनयाऽपि स्मृत्या धातोरेव भावप्राधान्यनियमाद्धात्वर्थमुख्यविशेष्यकत्वोपपत्तिरित्यपास्तम्।**

**कृदन्ते पाचकपदादौ आख्यातशब्दप्रयोगाभावेन तत्रत्याख्यातशब्दस्य धातौ लाक्षणिकत्वस्य कौस्तुभे व्युत्पादितत्वात्। अतश्चाख्यातार्थानेकत्वे कस्य प्राधान्यम्, कस्य वा गुणत्वमित्यपेक्षिते 'भावप्रधानमाख्यातम्' इति स्मृत्या भावनातिरिक्ताख्यातार्थं प्रति भावनाया एव प्राधान्यमिति नियम्यते। अत एव कालादिसाधारण्येनैकः कार्यकारणभाव इत्यपि लाघवम्।**

---

ननु एतावता भवता 'भावप्रधानमाख्यातम्' इति निरुक्तवचनस्थस्य आख्यातपदस्य तिङ्परत्वमभिमत्य तिङर्थेषु भावनायाः प्राधान्यमित्यर्थो वर्णितः। परं तु आख्यातशब्दस्य धात्वर्थकत्वमप्यस्ति। सर्वमाख्यातजं नाम इति यास्केनैव घटादिनामशब्दः सर्वोऽपि धातोः निष्पाद्यत इति कथनात् तत्र आख्यातजमित्यस्य धातुजमित्यर्थात् नाम्नः तिङ्न्यत्वाभावात् भावप्रधानमाख्यातमित्यत्रापि आख्यातपदस्य धात्वर्थकत्वात् धात्वर्थविशेष्यकबोधजनको धातुः इत्येवार्थः यास्कवचनस्येति प्रत्ययार्थभावनाविशेष्यकबोधजनकत्वं आख्यातस्य इति न तद्वचनाल्लभ्यते इति शङ्कामपाकरोति — **अत एवेत्यादिना**। भवदुक्तरीत्या आख्यातशब्दस्य धातुपरत्वाङ्गीकारे सर्वं नाम आख्यातजमिति वचनस्य उपपत्तावपि 'भावप्रधानमाख्यातम्' इत्यत्र आख्यातस्य धातुपरत्वे भावशब्दस्य धात्वर्थपरत्वे च धातोः धात्वर्थविशेष्यकबोधजनकत्वमित्येव लभ्येत। आख्यातार्थकालादिप्रकारकधात्वर्थविशेष्यकबोधजनकत्वं कथं लभ्येत।

अतः पूर्वोक्तरीत्या भावशब्दस्य भावना अर्थः। आख्यातस्य लकारसामान्यमर्थः। लकाराः लकारार्थसंख्यादिप्रकारकलकारार्थभावनामुख्यविशेष्यकबोधजनका इत्यर्थः। धात्वर्थं प्रत्यपि लकारार्थभावनायाः विशेष्यत्वं तु प्रकृत्यर्थं प्रति प्रत्ययार्थप्राधान्यबोधकव्युत्पत्त्यन्तरलभ्यमिति आशयः।

**अनयापि स्मृत्येति।** 'भावप्रधानमाख्यातम्' इति स्मृत्यापीत्यर्थः। धातोरेव धात्वर्थक्रियाप्राधान्यनियमसूचनात् धात्वर्थक्रियामुख्यविशेष्यकत्वोपपत्तिः इत्यपास्तम्। अपास्तत्वे हेतुमाह — **कृदन्ते इत्यादिना। पाचकशब्दादाविति।** तद्घटकपचधातावित्यर्थः। कृत्प्रकृतिपचधातौ आख्यातशब्दप्रयोगाभावेन आख्यातशब्दो न धातुवाचक इति भावः। एवं च आख्यातशब्दो न धातुपर इति अवगमात्, यत्र धातुपरत्वमाख्यातशब्दस्य आवश्यकं तत्र आख्यातशब्दस्य धातौ लक्षणा। यथा 'आख्यातजं नाम' इति वचनस्थस्य आख्यातपदस्य धातौ लक्षणां। तथा च सर्वं नाम धातुजमिति तदर्थः। भावप्रधानमाख्यातम् इत्यत्र तु आख्यातपदं तिङ्परम् इति भावः।

प्रकृतमाह — **अतश्चेति।** प्रकृत्यर्थापेक्षया प्रत्ययार्थप्राधान्यस्य स्मृत्यन्तरसिद्धत्वात् 'भावप्रधानमाख्यातम्' इति वचनस्य तिङर्थेष्वनेकेषु मध्ये तिङर्थभावनायाः प्राधान्यम् इत्यर्थः। एवं च सति कार्यकारणभावे लाघवमपि भवतीत्याह — **अत एवेति। एक.कार्यकारणभाव इति।** अर्थभावनातिरिक्तलकारार्थकालादिप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति अर्थभावनानिष्ठविशेष्यतासंबन्धेन आख्यात (तिङ्) पदजन्योपास्थितिः कारणम् इत्येवंरूपः कार्यकारणभाव इत्यर्थः।

## आख्यातार्थकालस्य भावनान्वयप्रकारः

कालोऽपि नञ्समभिव्याहाराभावे कालिकसम्बन्धेन भावनायामन्वेति, नञ्समभिव्याहारे तु तत्कालीनाभावप्रतियोगित्वसम्बन्धेन (साक्षादेव वा) तस्यामेव। तथा हि — 'वर्तमाने लट्' (पा.सू. 3.2.123) इति सूत्रात्पचतीत्यत्र वर्तमानत्वं लडर्थः। तच्च लडुच्चारणकालाभिन्नकालकत्वम्। तच्च कालिकवृत्तित्वसम्बन्धेन कृतावन्वेति।

विक्लित्त्युपधायककृतिकूटान्तर्गतयत्किञ्चित्कृतेस्तदुच्चारणकालीनत्वात्। अत्र सर्वत्र कृतिशब्दो भावनापरः। तेन जानातीत्यादावाश्रयत्वस्य वर्तमानत्वान्न क्षतिः। नश्यतीत्यादौ च धातुना नाशस्यैवोक्तिः। प्रत्ययेन च प्रतियोगित्वस्य लक्षणा। वर्तमानकालस्य परमनुभवानुरोधेन स्ववृत्त्युत्पत्तिकनाशीयत्वसम्बम्धेन प्रतियोगित्व एवान्वयः। तथा च घटवृत्ति नाशप्रतियोगित्वं वर्तमानकालोत्पत्तिकनाशीयत्वसम्बन्धेन वर्तमानत्ववदित्येव अस्मन्मते शाब्दबोधः। एवञ्च धातुना उत्पत्तिं लक्षयित्वा, तस्यां कालस्य कथञ्चिदन्वय इत्यपि न कल्पनीयम्। एवं सम्बन्धभेदसत्त्वेऽपि वर्तमानकालस्सर्वत्र कृतावेवान्वेतीति, न क्वापि तस्य विशेष्यान्तरकल्पना।

---

अथ आख्यातार्थकालस्य भावनायामन्वयप्रकारमाह — **कालोऽपीति**। चैत्रः पचतीत्यादौ आख्यातस्य वर्तमानत्वं एकत्वसंख्या कृतिरूपा आर्थीभावना चार्थः। वर्तमानत्वं च लडुच्चारणकालाभिन्नकालकत्वम्। तच्च कालिकवृत्तित्वसंबन्धेन = कालिकसंबन्धावच्छिन्नाधेयतासंबन्धेन कृतावन्वेति। धात्वर्थस्य पाकस्य विक्लित्त्यनुकूलव्यापारस्य अनुकूलत्वसंबन्धेन कृतावन्वयः। तथा च विक्लित्त्यनुकूल-

व्यापारानुकूला लहुच्चारणकालाभिन्नकालनिरूपिताधेयतावती एका कृतिः इति पचतीत्यतः शाब्दबोधः। पाकजनककृतिः अधिश्रयणाधःश्रयणादिनानाक्रियानुकूलनानाकृतिः तदन्तर्गतायाः कस्याश्चित् कृतेः लहुच्चारणकालाभिन्नकालवृत्तित्वात् पचतीति प्रयोगस्योपपत्तिः। अत्र सर्वत्र कृतिशब्दः अर्थभावनापरः। अर्थभावनाशब्देन मुख्या कृतिः उच्यते। आश्रयत्वप्रतियोगित्वादिरूपा अमुख्या कृतिः आख्यातेन लक्षणया उच्यते। ततश्च पचतीत्यत्र पाकानुकूलो यत्नः वर्तमानकालवृत्तिः इति बोधः। जानतीत्यत्र ज्ञानाश्रयत्वं वर्तमानकालवृत्तीति बोधः। नश्यतीत्यत्र नाशप्रतियोगित्वं वर्तमानकालवृत्तीति बोधः। किं च जानातीत्यत्र आख्यातार्थे आश्रयत्वे आख्यातार्थवर्तमानकालस्य स्ववृत्त्युत्पत्तिकज्ञाननिरूपितत्वसंबन्धेनान्वयः। नश्यतीत्यत्र आख्यातार्थप्रतियोगित्वे तादृशकालस्य स्ववृत्त्युत्पत्तिकनाशनिरूपितत्वसंबन्धेनान्वयः ततश्च जानाति चैत्रः इति वाक्यात् चैत्रवृत्ति ज्ञानाश्रयत्वं वर्तमानकालवृत्तीति बोधः। घटो नश्यतीति वाक्यात् घटवृत्ति नाशप्रतियोगित्वं वर्तमानकालोत्पत्तिकनाशनिरूपितत्वसंबन्धेन वर्तमानत्ववत् इति बोधः इति घट्टार्थः।

**नञ्समभिव्याहारे तु इति**। चैत्रो न पचतीत्यादौ **वर्तमानकालीनाभावप्रतियोगित्वसंबन्धेन** कृतौ वर्तमानकालान्वयः इत्यर्थः। तथा च चैत्रकर्तृका पाकानुकूला वर्तमानकालवृत्त्यभावप्रतियोगिनी भावनेति बोध इति भावः। **तच्चेति**। वर्तमानत्वं चेत्यर्थः। **कालवृत्तित्वसंबन्धेन** = कालिकसंबन्धेन। **विक्लित्त्युपधायकेति**। विक्लित्तिजनकेत्यर्थः। **भावनापर** इति। मुख्यभाक्तसाधारणभावनातात्पर्यक इत्यर्थः। मुख्या भावना कृतिः। आश्रयत्वप्रतियोगित्वादिकं भाक्तभावना। **नाशस्यैवेति**। एवकारेण प्रतियोगित्वव्यवच्छेदः। **स्ववृत्तीत्यादि**।

स्वं वर्तमानकालः तद्वृत्तिः तन्निष्ठा या उत्पत्तिः तदाश्रयो यो नाशः तत्प्रतियोगित्वसंबन्धेनेत्यर्थः। **नाशस्यैवेति।** एवकारेण प्रतियोगित्वरूपभावनायाः व्यवच्छेदः। **संबन्धभेदसत्त्वेऽपि** = क्वचित् कालिकवृत्तित्वं, क्वचित् स्ववृत्त्युत्पत्तिकनाशीयत्वम् इति संबन्धभेदस्य सत्त्वेऽपि। **कृतावेवेति।** मुख्यभाक्तसाधारणभावनायामेवेत्यर्थः। **तस्य** = कालस्य। विशेष्यान्तरकल्पना भावनातिरिक्तस्य विशेष्यस्य कल्पना।

## संबन्धभेदेनान्वये कार्यकारणभावानन्त्यशङ्कापरिहारौ

न चैकविशेष्यत्वलाभेऽपि सम्बन्धभेदेन समभिव्याहारज्ञानस्य कार्यकारणभावानन्त्यतादवस्थ्यमिति वाच्यम्। वस्तुतस्सम्बन्धभेदेऽपि सम्बन्धसामान्येन तत्प्रकारकतद्विशेष्यकशाब्दबुद्धित्वावच्छिन्नम्प्रति तादृशसमभिव्याहारज्ञानस्य कारणतेत्येवमेकस्यैव तस्योपपत्तौ, सम्बन्धाननुगमस्यादोषत्वात्। यथैव हि संयोगसमवायकालिकादिसम्बन्धभेदेऽपि घटवद्द्रव्यमित्येवंविधवाक्यात् संबन्धसामान्यसंसर्गके घटप्रकारके मत्वर्थद्रव्यविशेष्यके शाब्दबोधे जाते, पश्चात् सम्बन्धस्य तत्त्वेन जिज्ञासायां प्रमाणान्तरेण तात्पर्येऽवधारिते यत्रैकस्मिन्नेव संसर्गे तात्पर्यमवधारितम्, तत्र तत्संसर्ग एव शाब्दबोधपर्यवसानम्। यत्रानेकेषु तात्पर्यम्, तत्रानेकेषु शाब्दबोधपर्यवसानम्। तत्र च वस्तुतस्तात्पर्यविषयीभूतस्यापि सम्बन्धस्य तत्त्वेन बोधस्य प्रमाणान्तराधीनत्वात्, शाब्दबोधे च सम्बन्धत्वेनैव बोधान्न 'घटवद्द्रव्यमि'त्येवंविधसमभिव्याहारज्ञानस्य कार्यकारणभावानन्त्यम्। पर्यवसितबोधमादायैव बाधबुद्धिप्रतिबध्यप्रतिबन्धकभावः। अत एव संयोगेन 'न घटवद्द्रव्यमि'ति बुद्धिसत्त्वेऽपि 'न घटवद्द्रव्यमि'ति बुद्धिर्जायमाना सम्बन्धान्तरमादाय पर्यवस्यति। संयोगविषयता तु तस्या आपाततः प्रतीता

**बाध्यत इति स्वानुभवसिद्धमेतत्। घटो नास्तीत्यादौ वा संयोगसमवायाद्यवच्छिन्न-प्रतियोगितारूपसम्बन्धभेदोऽनुसन्धेयः।**

---

ननु वर्तमानकालस्य भावनायां तत्तत्स्थलानुरोधेन भिन्नभिन्नसंबन्धेनान्वये संबन्धभेदेन कार्यकारणभावानेकत्वं स्यात् इति शङ्कते — **न चैकविशेष्यत्व-लाभेऽपीति**। भावनारूपैकविशेष्यकत्वलाभेऽपीत्यर्थः। **आनन्त्यमिति**। एतत्प्रका-रकैतत्संसर्गकैतद्विशेष्यकशाब्दबोधं प्रति एतादृशपदसमभिव्याहारज्ञानं कारण-मिति कल्पनया गौरवमिति भावः। एवं कारकाणां धात्वर्थस्य च भावनान्वयेऽपि संबन्धभेदोऽस्तीति तत्प्रयुक्तः कार्यकारणभेदोऽपि विवक्षितः। तथा च वर्तमान-कालप्रकारककालिकसंसर्गककृतिविशेष्यकशाब्दबोधं प्रति पच्यादिधातुसमभि-व्याहृताख्यातज्ञानं कारणम्। वर्तमानकालप्रकारकाश्रयत्वविशेष्यककालिकसं-सर्गकशाब्धबोधं प्रति ज्ञादिधातुसमभिव्याहृताख्यातज्ञानं कारणम्। वर्तमानकाल-प्रकारकस्ववृत्त्युत्पत्तिकनाशनिरूपितत्वसंसर्गकप्रतियोगित्वविशेष्यकशाब्दबोधं प्रति णशधातु समभिव्याहृताख्यातज्ञानं कारणमिति रीत्या अनेककार्यकारण-कल्पनया गौरवमिति शङ्कितुर्भावः। तत्र समाधानमाह — **वस्तुत** इत्यादिना। अयं भावः — पचति इत्यत्र पाकानुकूला संबन्धसामान्येन वर्तमानकालविशिष्टा कृतिः इति आदौ बोधः। एवम् जानातीत्यतः संबन्धसामान्येन वर्तमान-कालविशिष्टं ज्ञानविशिष्टमाश्रयत्वम् इति बोधः। तथा नश्यतीत्यतः संबन्ध-सामान्येन वर्तमानकालविशिष्टं नाशप्रतियोगित्वमिति बोधः। तदनुसारेण संबन्धसामान्येन वर्तमानकालप्रकारककृतिविशेष्यकशाब्दबोधं प्रति पचधात्वा-ख्यातसममभिव्याहारज्ञानं कारणम् संबन्धसामान्येन वर्तमानकालप्रकारक-आश्रयत्वविषयकशाब्दबोधं प्रति णशधात्वाख्यातसमभिव्याहारज्ञानं कारणम् इति

कार्यकारणभावः। संबन्धविशेषं निवेश्य न कार्यकारणभावः। तत्र दृष्टान्तः **यथैव हीति**। संबन्धः संयोगः। समवायः कालिकःविशेषणता इत्यादिभेदेन अनेकविधः। तथा सत्यपि 'घटवत् द्रव्यम्' इत्येवंविधवाक्यश्रवणानन्तरं संबन्धसामान्यसंसर्गकः घटप्रकारकः मनुवर्थद्रव्यविशेष्यको बोधो जायते। तदनन्तरं संबन्धः कः इति तत्त्वेन विशष्य जिज्ञासायां प्रमाणान्तरेण = तात्पर्यग्राहकेण वाक्यादन्येन प्रमाणेन संसर्गविशेषे तात्पर्ये निर्धारणीये यत्र एकस्मिन्नेव संबन्धे तात्पर्यं निश्चितं तत्र तस्मिन्नेव संबन्धे शाब्दबोधस्य पर्यवसानम्। यत्रानेकेषु संसर्गेषु तात्पर्यम् तत्रानेकेषु संसर्गेषु शाब्दबोधस्य पर्यवसानम् — अनेकसंसर्गविषयकशाब्दबोध इति भावः। पर्यवसानं नाम पुनराकाङ्क्षारहितत्वम्। तत्र च वस्तुतः तात्पर्यविषयीभूतस्यापि संबन्धस्य विशेषरूपेण बोधस्य शब्दातिरिक्तप्रमाणाधीनत्वात् मानसत्वात् इति यावत् शाब्दबोधे प्राथमिके संबन्धत्वेनैव भानात् शाब्दबोधं प्रति घटवद्द्रव्यम् इत्याकारकसमभिव्यारविषयकज्ञानस्य एकमेव कारणत्वम्, कार्यैक्यात् इति भावः। ननु घटवद्भूतलम् इति वाक्यस्य संयोगेन घटाभाववत् भूतलम् इति ज्ञानप्रतिबन्धकज्ञानजनकत्वं सर्वसंप्रतिपन्नम्। घटवत् भूतलमिति वाक्यस्य संबन्धत्वावच्छिन्नसंसर्गकघटप्रकारकभूतलविशेष्यकशाब्दबोधजकत्वे तस्य शाब्दबोधस्य संयोगेन घटाभाववत् भूतलमित्याकारकज्ञानप्रतिबन्धकत्वाभावात् अनुभवसिद्धं प्रतिबन्धकत्वं कथमुपपद्यते इत्याशङ्क्याह — **पर्यवसितबोधमादायैवेति**। संबन्धसामान्येन घटवत् भूतलम् इत्याकारकशाब्दबोधानन्तरं जायमानस्य तात्पर्यज्ञानसहकृतमानसबोधस्य प्रतिबन्धकत्वमादाय तज्जनकशाब्दबोधे प्रतिबन्धकत्वव्यवहारः प्रामाणिकानामिति भावः।

**एवं विशेष्यप्रकारभेदेऽपि तदनुगमकधर्मैक्ये न तदानन्त्यम्। न हि श्वेत-रक्तादिप्रकारभेदे, घटपटादिरूपविशेष्यभेदे वा नामार्थयोरभेदान्वयः इति व्युत्पत्तिर्भिद्यते।**

---

ननु 'संयोगसंबन्धेन न घटवत् द्रव्यम्' इत्याकारकज्ञानानन्तरं 'घटवत् द्रव्यम्' इत्याकारकवाक्यात् घटसंबन्धिद्रव्यं (भूतलम्) इत्याकारकं संबन्धत्वेन संबन्ध-विपथकं ज्ञानं जायते। तत् कथं स्यात् इत्याशङ्क्य संयोगत्वेन संयोग-संबन्धविषयकस्य ज्ञानस्य संयोगत्वावच्छिन्नसंयोगविषयकज्ञानं प्रत्येव प्रतिबन्ध-कत्वम्, नतु संबन्धत्वावच्छिन्नविषयकाज्ञानं प्रति। अतः तत्र घटवत् द्रव्य-मितिज्ञानं जायमानं संबन्धत्वेन सामान्यरूपेण संयोगातिरिक्तसंबन्धविषयकम् अतिरिक्तसंबन्धः कालिकादिसंबन्धः इत्याशयेन समाधत्ते। **अत एवेत्यादिना। आपाततः** इति। प्रायशः घटवत् इति प्रतीतेः संयोगसंबन्धविषयकत्वात् इति भावः। **बाध्यत** इति। 'संयोगेन न घटवत् द्रव्यम्' इति बुद्ध्येति शेषः। आपाततः प्रतीतिर्नाम अनिश्चयात्मिका संशयविपर्ययसंहिष्णुः बुद्धिः। यथा संबन्धानां भेदेऽपि संबन्धत्वेन अनुगत्तरूपेण तेषामेकीकरणात् न कार्यकारणभावानन्त्यं, तथा विशेष्याणां प्रकाराणां च भेदेऽपि विशेष्याणां घटपटादिरूपेण प्रकाराणां श्वेतरक्तादिभेदेन च भेदेऽपि नामार्थयोरभेदेनान्वय इति व्युत्पत्तिर्न भिद्यते। नदनुगमकधर्मैक्यात् = विशेष्य प्रकारयोरनुगमको धर्मः विशेष्यत्वप्रकारत्वरूपो वा नामार्थत्वरूपो वा तस्य एकत्वात्।

**अस्तु वा एवमादिस्थले सर्वत्र तद्भेदः, तथापि एककार्यकारणभावकल्पना-दशायामुपस्थितस्य विशेष्यस्यैव कार्यकारणभावान्तरे विशेष्यत्वकल्पनौचित्यात्। न च विनिगमनाविरहः। द्वितीयान्तादिपदानां तावत् क्रियापदं विना निराकांक्षत्वा-**

भावस्योभयवादिसिद्धतया क्रियाप्रतिपादकपदस्य विशेष्यप्रतिपादकत्वावश्यम्भावात्, तत्रापि धात्वर्थं प्रति, कालादिकञ्च प्रति विशेष्यभूताया भावनाया एव 'प्रधानभूतविशेष्यत्वे सम्भवति, प्रकारविशेष्यत्वस्यान्याय्यत्वादि'ति न्यायेन विशेष्यत्वोपस्थितिलाघवानुरोधेन च विशेष्यत्वकल्पनौचित्यात्। न च प्रथमान्तस्य क्रियापदसाकांक्षत्वे प्रमाणाभावः, चैत्र इत्येतन्मात्रस्य शाब्दबोधाजनकत्वेन तस्यापि साकाङ्क्षत्वात्। न च तथात्वेऽपि पण्डितादिपदसमभिन्याहारेणापि शाब्दबोधजननात् क्रियापदसाकाङ्क्षत्वे प्रमाणाभावः। अस्तिर्भवन्तीपरः प्रथमपुरुषेऽप्रयुज्यमानोऽप्यस्ति' इति कात्यायनस्मणेन तस्यापि क्रियापदसाकाङ्क्षत्वात्। भवन्तीपरः — लङन्त इत्यर्थः। न च क्रियापदान्तराध्याहारस्यापि योग्यतानुसारेणावश्यकत्वाद् एतदनुशासनवैयर्थ्यम्। योग्यतासाधारण्ये वेदादौ तात्पर्यग्रहाभावे च सत्यस्त्यध्याहारनियमार्थत्वात्। प्रथमान्तमुख्यविशेष्यकत्वभ्रमनिरासार्थत्वेनैव वा सार्थक्याच्च।

---

ननु संबन्धत्वेन सामान्यरूपेण संबन्धानां भानं न संभवति, अपि तु विशिष्यैव। निरूपितं चैतत् गदाधरभट्टाचार्येण चतुर्दशलक्षण्याम् — "वस्तुतस्तु संयोगसमवायादिसाधारणसंबन्धत्वस्य कथंचित् सुवचत्वेऽपि तेन रूपेण संयोगादीनां भानस्य निर्युक्तिकतया व्यापकताशरीरे लाघवानुरोधात् साध्यप्रकारेण आधिकरणनिवेशे साध्यसंबन्धोऽपि विशिष्य संसर्गतया निवेश्यः। तथा च विशिष्य साध्यतावच्छेदकसंबन्धनिवेशनमावश्यकमिति ध्येयम्" इति। नागेशेन च मञ्जूषायाम् — 'तत्तद्व्युत्पत्त्यनुसारेण तथा तथा बोधस्य तेषां तेषां जायमानत्वेन तथा तथा कार्यकारणभावानां सर्वेषामावश्यकत्वेन तल्लाघवगौरवविचारस्यायुक्तत्वात्' इत्युक्तम्। एवं च संबन्धभेदेन विशेष्यभेदेन प्रकारभेदेन च

कार्यकारणभेदः अवर्जनीय इत्याशङ्कायामाह — **अस्तु वेत्यादिना**। कार्यकारणभावकल्पनदशायां प्रकाराणां संबन्धानां च भेदेऽपि अनेकत्वेऽपि विशेष्यभूतायाः भावनायाः ऐक्यमेव। विशेष्यभेदो नास्तीति यावत्। तथा हि — विशेष्यतासंबन्धेन आख्यातार्थसंख्याप्रकारकशाब्दबोधं प्रति विशेष्यतासंबन्धेन आख्यातजन्यभावनोपस्थितिः कारणम्। एवं लडर्थकाल प्रकारकशाब्दबोधं प्रति विशेष्यतासंबन्धेन आख्यातार्थभावनोपस्थितिः कारणम् इति रीत्या कार्यकारणभावकल्पनात् शाब्दबोधे भावनाया एव विशेष्यत्वम् इति भावः। **एककार्यकारणभावकल्पनायामिति**। सुबर्थलिङ्गसंख्याव्यतिरिक्तप्रातिपदिकार्थव्यतिरिक्तप्रकारकशाब्दबोधं प्रति भावनानिष्ठविशेष्यतासंबन्धेन लिङ्गानन्वयिपदजन्योपस्थितिः कारणमिति एककार्य**कारणभावः**, तत्कल्पनादशायामित्यर्थः। **विशेष्यस्य** भावनारूपस्य विशेष्यस्य। कार्यकारणभावान्तरे आख्यातार्थकालसंख्यादीनां भावनान्वयं प्रति कल्पिते कार्यकारणभावेऽपि भावनायाः विशेष्यत्वकल्पनस्य युक्तत्वादिति भावः।

तार्किकः शङ्कते — **न च विनिगमनाविरह** इति। आख्यातार्थसंख्यायाः प्रथमान्तपदार्थेऽन्वयेन तत्रैव आख्यतार्थभावनाया अप्यन्वयोऽस्तु। प्रथमान्तपदार्थरूपैकविशेष्यलाभात् आख्यातार्थप्रकारकशाब्दबोधं प्रति अन्याविशेषणीभूतप्रथमान्तपदार्योपस्थितिः विशेष्यतासंबन्धेन कारणमिति एककार्यकारणभावलाभादिति नैयायिकस्यापि शङ्का। समाधत्ते — **द्वितीयान्तादिपदानामिति**। नैयायिकेनापि द्वितीयादिसप्तम्यन्तपदार्थानां क्रियायामेवान्वयस्वीकारेण क्रियापदस्यैव विशेष्यसमर्पकत्वात् तिङन्ते क्रियापदेऽपि प्रत्ययार्थप्राधान्यन्यायेन भावनाया एव विशेष्यत्वात् आख्यातर्थभावनाया एव इतरपदार्थापेक्षया भावनेतराख्यातार्थापेक्षया प्राधान्यं युक्तमिति भावनाविशेष्यकशाब्दबोधाङ्गीकार

एव युक्त इति भावः। तत्रापीति। क्रियापदेऽपीत्यर्थः। धात्वर्थं प्रति आख्यातार्थकालादिकं च प्रति विशेष्यभूताया भावनाया एव 'प्रधानभूतविशेष्यत्वे मुख्यविशेष्यत्वे अन्याविशेषणत्वविशिष्टविशेष्यत्वे संभवति प्रकारस्य भावनातिरिक्तस्य पदार्थस्य विशेष्यत्वमन्याय्यम्' मुख्यविशेष्यत्वं इतराविशेषणत्वे सति विशेष्यत्वम्। भावनातिरिक्तस्य पदार्थस्य धात्वर्थादेः इतरापेक्षया विशेष्यत्वेऽपि भावनां प्रति विशेषणत्वात् इतराविशेषणत्वविशिष्टविशेष्यत्वरूपं मुख्यविशेष्यत्वं न युक्तमिति तात्पर्यम्। तस्य भावः प्रकारविशेष्यत्वमिति विग्रहः

अथ वा प्रकारविशेष्यत्वम् इत्यस्य भावनायाः प्रकारत्वं प्रथमान्तार्थं प्रति प्रकारत्वं, धात्वर्थं प्रति विशेष्यत्वं च नैयायिकोक्तं न युक्तमिति भावः। प्रकारश्चासौ विशेष्यश्च प्रकारविशेष्यः **प्रकारविशेष्यत्वस्येति**। भावनायां प्रकारस्य धात्वर्थस्य आख्यातार्थकालादिकं प्रति विशेष्यत्वस्येत्यपि व्याचक्षते। **विशेष्यत्वोपस्थितिलाघवानुसारेण चेति**। धत्वर्थं प्रति आख्यातार्थकालादिकं प्रति च विशेष्यत्वस्य क्लृप्तत्वात् प्रथमान्तार्थं प्रत्यपि विशेष्यत्वेनोपस्थितिकल्पने लाघवमिति भावः।

ननु प्रथमान्तपदस्य यदि क्रियापदसाकाङ्क्षत्वं स्यात् तदैव प्रथमान्तार्थस्य भावनायामन्वयः स्यात्। तस्य क्रियापदसाकाङ्क्षात्व एव प्रमाणं नास्तीति शङ्कते — **न च प्रथमान्तार्थपदस्येति**। क्रियापदं विना चैत्रः इत्येतावन्मात्रस्य शाब्दबोधाजनकत्वेन प्रथमान्तस्यपि क्रियापदसाकाङ्क्षत्वमिति समाधत्ते — **चैत्र इत्येतावन्मात्रस्येति। तस्यापि** = प्रथमान्तपदस्यापि। साकाङ्क्षत्वात् आकाङ्क्षानिवर्तकपदसापेक्षत्वात्। ननु तथात्वेऽपि साकाङ्क्षत्वेऽपि पण्डित इत्यादिपदसमभिव्याहारेणापि निराकाङ्क्षबोधजननसंभवात् क्रियापदापेक्षाविरहात् इत्याशयेन शङ्कते — **न च तथात्वेऽपीति**।

अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्ति' इति कात्यायनस्मृत्या अप्रयुज्यमानोऽपि लट्परकः असधातुरस्तीतिं मन्तव्यमिति बोधनात् चैत्र इत्यत्रापि अस्तीति अध्याहृत्य क्रियाविशेष्यकः अथवा भावनाविशेष्यकः बोधः सम्पादनीयः इति समाधत्ते — **अस्तिर्भवन्तीपर इत्यादिना**। भवन्ती इति लटः प्राचां संज्ञा। अप्रयुज्यमानः लडन्तः असधातुः अस्तीति मत्वा भावनाविशेष्यक-बोधः सम्पादनीयः इति भावः।

तत्र शङ्कते — **न चेति**। यत्र क्रियापदं न प्रयुज्यते तत्र अस्तीति क्रियापदमेवाध्याहरणीयमिति को निर्बन्धः। योग्यस्य अन्यस्यापि क्रिया-पदस्याध्याहर्तुं शक्यत्वात्। यथा पण्डितः इत्युक्ते प्रवक्ति अथ वा वेद इत्यपि अध्याहारसंभवात् इति शङ्का। तत्र समाधानम् — पण्डितः इति पदेन साकं अनेकेषां क्रियापदानां योग्यतावशात् अध्याहारे प्रसक्ते वक्तुः अस्यां क्रियायां तात्पर्यमिति वक्तृतात्पर्यज्ञानाभावे च सति अस्तीति क्रियैव अध्याहरणीयेति नियमबोधनाय कात्यायनवचनमिति। वेदादौ इत्यस्य वेदं, अध्यापयति प्रवक्ति इत्यादि क्रियायां तात्पर्यज्ञानाभावे सति इत्यर्थः। अस्त्यध्याहारेति। अस्ति इति लडन्तस्य असधातोरेव अध्याहारः कर्तव्य इति नियमबोधकत्वात् वार्तिकस्येति भावः।

**प्रथमान्तेति**। अथ वा अस्तीति क्रिया नियमेन अध्याहरणीया इति वार्तिकस्यायं भावः — प्रथमान्तपदार्थमुख्यविशेष्यक एव बोध इति मतस्य निराकरणार्थमेव वार्तिककारेण क्रियापदाध्याहारः बोधितः। तेन क्रियापदार्थ-मुख्यविशेष्यकबोधज्ञापनात्।

**न चैवं तर्हि प्रथमपुरुषभिन्ने अहं पण्डितः, त्वं पण्डितः इत्यादौ तत्साकांक्षत्वे प्रमाणाभावः। तत्रापि प्रातिपदिकार्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति विशेष्यता-**

**सम्बन्धेन सुब्जन्योपस्थितिः कारणम्, लिङ्गसंख्याव्यतिरिक्तसुबर्थप्रकारकशाब्द-बुद्धित्वावच्छिन्नं प्रति च क्रियापदजन्योपस्थितिः कारणमिति क्लृप्तकार्यकारण-भावयोरेव प्रमाणत्वात्। अत एव प्रथमास्थलेऽपि न प्रातिपदिकोपस्थितस्यैव चैत्रस्य क्रियायामन्वयः, अपि तु प्रथमोपस्थितस्यैव। प्रातिपदिकार्थमात्रे प्रथमेत्यनु-शासनेन प्रातिपदिकार्थस्यैव प्रथमार्थत्वात्। प्रकृतिप्रत्ययार्थयोश्च अभेदसंबन्धेन अन्वयात् न क्लृप्तव्युत्पत्तिभङ्गः। प्रातिपदिकं वा तात्पर्यग्राहकमिति वक्ष्यते। यदा त्वभिहितकारकवाचिनी प्रथमेति मतम्, तदा सुतराम्। अतस्सिद्धं लाघवानुरोधेन सर्वत्र भावनैव मुख्यविशेष्यभूतेति।**

---

पुनः शङ्कते — नचैवं तर्हीति। यत्र क्रियापदं न श्रूयते तत्र अस्तीति क्रियापदमेवाध्याहार्यमिति नियमाङ्गीकारे अहं पण्डितः, त्वं पण्डितः इत्यादौ अस्मि, असि इति उत्तमपुरुषस्यैव योग्यत्वात् अस्तीति नियमोल्लङ्घनप्रसङ्गात् इत्याशङ्का। समाधत्ते — **तत्रापीति**। अहं पण्डितः, त्वं पण्डित इत्यादौ असधातुमविहाय योग्यतावशात् योग्योत्तममध्यमपुरुष-असधातुक्रिया अध्या-हारणीयेति वार्तिकहृदयम्। अस्तीति प्रथमपुरुषस्य उत्तमध्यमपुरुषासधातु-प्रयोगोपलक्षणपरतया वार्तिककारेणोक्तत्वात्। एवं रीत्या क्रियाध्याहारकथनस्य व्युत्पत्तिविशेषसूचने तात्पर्यम्। व्युत्पत्तिश्च कार्यकारणभावः। स चेत्थम् — प्रातिपदिकार्थं प्रति सुबर्थस्य विशेष्यत्वात्, विशेष्यतासंबन्धेन प्रातिपदिकार्थ-प्रकारकशाब्दबोधं प्रति विशेष्यतासंबन्धेन सुप्-जन्योपस्थितिः कारणम् इति एकः कार्यकारणभावः। लिङ्गसंख्यातिरिक्तसुबर्थप्रकारकशाब्दबोधं प्रति क्रियापद-जन्योपस्थितिः कारणमिति अपरः कार्यकारणभावः। लिङ्गसंख्ययोः सुबर्थे कर्मत्वादिकारके एव सामानाधिकरण्यसंबन्धेनान्वयस्वीकारात् लिङ्गसंख्या-

व्यतिरिक्तेति सुबर्थस्य विशेषणमुपात्तम्। ननु द्वितीयातृतीयाद्यन्तस्थले तण्डुलं पचति, चैत्रेण पच्यते इत्यादौ द्वितीयातृतीयार्थलिङ्गसंख्ययोः स्वाश्रयवृत्तित्वरूप-सामानाधिकरण्यसंबन्धेन द्वितीयातृतीयार्थकर्मत्वकरणत्वयोः अन्वयसंभवेन लिङ्गसंख्याव्यतिरिक्तेति सुबर्थे विशेषणमस्तु। चैत्रः पचतीत्यत्र प्रथमा-विभक्त्यर्थस्य कुत्रान्वयः। संख्याकारकयोश्च सुबर्थयोः कुत्रान्वय इति शङ्का-यामाह — **प्रातिपदिकार्थमात्रे** इति। **अयमाशयः** — चैत्रः पचतीत्यादौ 'प्राति-पदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' (पा.सू. 2.3.46) इत्यनुशासनेन चैत्र-पदोत्तरप्रथमायाः प्रातिपदिकस्य चैत्रपदस्य योऽर्थः चैत्रः स एवार्थः। प्रकृत्यर्थस्य चैत्रस्य प्रथमार्थे तस्मिन् अभेदसंबन्धेन अन्वयः। तस्य च आख्यातार्थ-भावनायामन्वय इति भावः। एवं च चैत्रः पचतीत्यत्र प्रातिपदिकस्य चैत्र इत्यस्य योऽर्थः तस्याभेदसंबन्धेन प्रथमाविभक्तिरूपसुबर्थे चैत्रेऽन्वयात् प्रातिपदिक-चैत्रपदार्थप्रकारकः अभेदसंसर्गकः शाब्दबोधः विशेष्यतासंबन्धेन प्रथमार्थे चैत्रे भवति। तत्र विशेष्यतासंबन्धेन सुब्जन्योपस्थितिरस्तीति प्रातिपदिकार्थप्रकारक-शाब्दबोधं प्रति विशेष्यतासंबन्धेन सुप्जन्योपस्थितिः कारणमिति कार्यकारण-भावस्य तत्र समन्वयः।

तण्डुलं पचति, चैत्रेण तणडुलः पच्यते इत्यादौ कर्मत्वे करणत्वे च सुबर्थैक-त्वादिसंख्यायाः सामानाधिकरण्यसंबन्धेनान्वयः। सुबर्थकर्मत्वकरणत्वयोः स्व-निरूपकक्रियानुकूलत्वसंबन्धेन क्रियापदार्थ (पचति, पच्यते, इति पदार्थभावना-यामन्वयात् संख्यातिरिक्तसुबर्थप्रकारकशाब्दबोधं प्रति विशेष्यतासंबन्धेन क्रिया-पदजन्योपस्थितिः कारणमिति कार्यकारणभावस्य समन्वयः कार्य इति भावः।

यदा त्वित्यादि। चैत्रः पचतीत्यादौ प्रथमायाः प्रातिपदिकार्थ एव अर्थः इति पाणिनेर्मतम्। आख्याताभिहितकारकवाचिनी प्रथमेति कात्यायनमतम्। तन्मते

चैत्रः पचतीत्यत्र कर्तृत्वं प्रथमार्थः। तत्र आधेयत्वसंबन्धेन चैत्रस्यान्वयः। कर्तृत्वस्य निरुपकत्वबन्धेन क्रियायामन्वयः। चैत्रनिष्ठकर्तृत्वनिरूपिका पाक-भावना इति बोध इति भावः। लाघवानुरोधेनेति। कार्यकारणभावलाघवानु-सारेणेत्यर्थः।

## भावनामुख्यविशेष्यत्वे शङ्कापरिहारौ

न चानुभवानुरोधेन व्युत्पत्तिनानात्वमप्यङ्गीकृत्य योग्यतया साक्षात्सम्बन्धेन तत्तद्विशेष्ये तस्य तस्यान्वयो नायुक्त इति वाच्यम्। तथात्वे 'राजपुरुषः' इत्यादावपि राज्ञस्साक्षात्स्वस्वामिभावसम्बन्धेनैवान्वयानुभवात् समासस्थले व्युत्पत्त्यन्तरमङ्गीकृत्य राज्ञ एव भेदसम्बन्धेन पुरुषान्वयोपपत्तेः पूर्वपदे सम्बन्धिलक्षणानापत्तेः। अर्धपिप्पलीत्यादौ उत्तरपदे लक्षणानापत्तेश्च। यजेत स्वर्गकामः इत्यादौ स्वर्गसाधनत्वस्य यागे प्रतीयमानस्य मानसबोधविषयत्व-मङ्गीकृत्य क्लृप्तव्युत्पत्तित इष्टसाधनीभूतयागानुकूलकृतिमान् स्वर्गकाम इत्येवंविध-शाब्दबोधस्य भवत्सम्मतस्य अनापत्तेश्च। तस्मादनुभूयमानस्य साक्षात्सम्बन्धस्य परम्परासम्बन्धघटकत्वेन, मानसबोधविषयतया वोपपत्तेर्न प्रथमक्लृप्तव्युत्पत्तिभङ्गेन व्युत्पत्त्यन्तरकल्पनं प्रमाणवत्। अतस्सिद्धं सर्वत्र वर्तमानकालस्य कृतावेवान्वयः इति। अतस्तत्क्षणेष्वेव लटश्शक्तिः, न तु लडुच्चारणस्य शक्यतावच्छेदक-कोटिप्रवेशः। तस्य तदादौ बुद्धिस्थत्वस्येव शक्तिग्रहोपलक्षणत्वात्।

---

नैयायिकः शङ्कते — अनुभवानुरोधेनेति। चैत्रः तण्डुलं पचतीति वाक्यात् तण्डुलकर्मकपाकानुकूलकृतिमांश्चैत्रः इति बोधानुभवात् तदनुरोधेन प्रातिपदि-कार्थस्य द्वितीयादिविभक्त्यर्थे कर्मत्वादौ अन्वयः, कर्मत्वादेः धात्वर्थेऽन्वयः,

तस्याख्यातार्थकृतावन्वयः, तस्याः प्रथमान्तपदार्थेऽन्वयः इति स्वीकृत्य प्रातिपदिकार्थप्रकारकशाब्दबोधं प्रति सुबर्थोपस्थितिः कारणम्, सुबर्थप्रकारकशाब्दबोधं प्रति धातुजन्योपस्थितिः कारणम्, धात्वर्थप्रकारकशाब्दबोधं प्रति आख्यातजन्योपारिस्थतिः कारणम्, आख्यातार्थप्रकारकशाब्दबोधं प्रति प्रथमान्तपदजन्योपस्थितिः कारणमिति कल्पनं नायुक्तमिति शङ्कितुर्भावः। समाधत्ते — **तथात्वे** इति। राजपुरुष इत्यादौ समासस्थले भवद्भिः राजपदस्य राजसंबन्धिनि लक्षणां स्वीकृत्य तस्याभेदसंबन्धेन पुरुषपदार्थेऽन्वयः स्वीक्रियते। तथा कुतः स्वीकरणीयम्। राजपदे लक्षणां विनैव राजपदशक्यार्थस्य राज्ञः स्वस्वामिभावसंबन्धेन पुरुषेऽन्वयस्यानुभवात् नामार्थस्य नामार्थान्तरेऽभेदेनान्वयः इतिवत् समासस्थले नामार्थस्य नामार्थान्तरे भेदसंबन्धेनाप्यन्वयं स्वीकृत्य तत्र कार्यकारणभावान्तरं कल्प्यताम्। किमर्थं लक्षणां स्वीकृत्य कश्चित् कार्यकारणभावः कल्प्यते। अनुभवानुसारिकार्यकारणभावकल्पने गौरवं न दोष इति भवतां संमतत्वात् इति भावः। तत्पुरुषे पूर्वपदे लक्षणास्वीकारे अर्धपिप्पली इत्यादावपि तत्पुरुषे पूर्वपद एव लक्षणायाः संभवात् उत्तरपदे लक्षणायाः भवत्स्वीकृतायाः अनुपपत्तेश्चेति भावः।

**व्युत्पत्तिनानात्वमिति**। अनेककार्यकारणभाव इत्यर्थः। **तथात्वे इति**। साक्षादन्वयलोभेन अनेककार्यकारणभावस्य स्वीकारे इत्यर्थः। समासस्थले = राजपुरुष इति तत्पुरुषसमासे। व्युत्पत्त्यन्तरम् राजप्रकारकस्वत्वसंसर्गकपुरुषविशेष्यकशाब्दबोधं प्रति राजपदसमभिव्याहृतपुरुषपदज्ञानं कारणमिति अन्या व्युत्पत्तिः कार्यकारणभावः। पुरुषान्वयोपपत्तेः = पुरुषेऽन्वयसंभवात्। संबन्धिलक्षणानापत्तेः राजपदस्य राजसंबन्धिनि लक्षणायाः अनुपपत्तेः।

नैयायिका अपि कुत्रचिन्मानसबोधविषयत्वमङ्गीकुर्वन्त्येव। यथा — यजेत स्वर्गकाम इति वाक्यात् आदौ इष्टसाधनीभूतयागानुकूलकृतिमान् स्वर्गकाम इति बोधो जायते। लिङर्थस्य इष्टसाधनत्वस्य धात्वर्थे यागेऽन्वयः। यागस्यानुकूलतासंबन्धेन आख्यातत्वावच्छिन्नलिङर्थकृतावन्वयः। कृतेश्च आश्रयत्वसंबन्धेन प्रथमान्तस्वर्गकामपदार्थेऽन्वय इति स्वीकारः। एवंविधप्राथमिकबोधानन्तरं यागः स्वर्गत्वावच्छिन्नसाधनम् इति मानसो बोधो जायते इति ते वदन्ति। तद्वत् तण्डुलं पचतीत्यादौ द्वितीयार्थकर्मत्वस्य स्वनिरूपकपाकानुकूलत्वसंबन्धेन आख्यातार्थभावनायामन्वयः प्राथमिकबोधे भासते। अनन्तरम् कर्मत्वपाकयोः निरूपकत्वरूपः धात्वर्थपाकाख्यातार्थभावनयोः अनुकूलत्वरूपश्च परंपरासंबन्धघटकतया अनुभूयमानः मानसबोधविषयतया उपपद्यत इति अस्माभिः स्वीक्रियते। अतः का नाम तेषां पक्षे अविद्यमाना अस्मत्पक्षे अनुपपत्तिः। तस्मात् सर्वेषां भावनायामन्वय इति प्रथमक्लृप्तायाः व्युत्पत्तेः भङ्गेन पृथक् पृथक्खण्डशाब्दबोधाय नानाव्युत्पत्तिकल्पनं नोचितमिति भावः।

प्रकृतमुपसंहरति — **अतः सिद्धमिति।** पूर्वम् लटः वर्तमानत्वमर्थः। वर्तमानत्वं च लडुच्चारणकालाभिन्नकालकत्वम् इत्युक्तम्। तत्रापि पाकस्य अनेकक्रियासमूहरूपत्वात् तत्तत्क्रियाधिकरणक्षणसमूहरूपो भवति कालः। तत्रैव लटः शक्तिः। लडुच्चारणं तु शक्यक्षणसमूहस्योपलक्षणम्। न तस्य लट्शक्यतावच्छेदककोटौ प्रवेशः। यथा तदादिसर्वनामशब्दस्य बुद्धिविशेषविषयत्वोपलक्षिततत्तत्पदार्थे शक्तिः तद्वत् इति भावः।

**अथवा लडादेर्लट्त्वादिकमेव शक्यतावच्छेदकम्। तदवच्छिन्नस्य च कालिकसम्बन्धेन प्रकृतशाब्दबोधोपधायकस्ववृत्तित्वं कृतौ सम्बन्धः। कृतेः आख्यातत्वेन**

**रूपेण लड्वोध्यत्वात्। तेन मैत्रीयप्रयोगकालीनकृतिध्वंसकाले न चैत्रलट्प्रयोगापत्तिः।**

---

**अथवेति।** लडादेः लट्त्वादिकमेव शक्यतावच्छेदकम्। तदवच्छिन्नस्य लटः आख्यातार्थकृतौ प्रकृतशाब्दबोधोपधायकस्ववृत्तित्वसंबन्धेन अन्वयः। स्वशब्देन लट् ग्राह्यः। लटि लट्त्वम् आख्यातत्वं चेति धर्मद्वयमस्ति। तत्र लट् लट्त्वेन रूपेण वर्तमानकालं बोधयति। आख्यातत्वेन रूपेण कृतिं बोधयति। तथा च सः लट् वर्तमानकालवृत्तिः भावनेति प्रकृतशाब्दबोधस्य उपधायकः जनको भवति। कालिकसंबन्धेनेति तृतीयायाः अवच्छिन्नत्वमर्थः। तस्य वृत्तित्वेऽन्वयः। एवं च लट्त्वावच्छिन्नस्य पूर्वोक्तशाब्दबोधजनकतानिरूपितकालिकसंबन्धावच्छिन्नस्ववृत्तित्वसंबन्धेन कृतावन्वयः इति भावः। तदेतन्मनसिकृत्याह — **कृतेः आख्यातत्वरूपेण लट्बोध्यत्वादिति।** कृतेः आख्यातत्वावच्छिन्नलट्निष्ठजनकतानिरूपितजन्यत्वाश्रयबोधविषयत्वात् इत्यर्थः। तेन बोधोपधायकत्वं लटः उपपादितं भवति। तेनेति। पूर्वोक्तोपपादनेन यः लट्प्रयोगं करोति तत्काले कृतेः सत्ता आवश्यिकीति लाभात्, मैत्रीयप्रयोगकालीनकृतिध्वंसकाले मैत्रीया या कृतिः इत्यन्वयः। प्रयोगशब्दात् पूर्वं चैत्रकर्तृकेत्यध्याहार्यम्। तथा च मैत्रीयपाककृतिध्वंसकाले चैत्रकर्तृकलट्प्रयोगस्य मैत्रः पचतीति प्रयोगस्य नापत्तिः। एतत्काले मैत्रकर्तृकपाकानुकूलकृतेः अभावात् इति भावः।

## लिडर्थः, तदन्वयप्रकारश्च

**एवं लिडर्थोऽपि भूतानद्यतनत्वविशिष्टपारोक्ष्यरूपो भावनायामन्वेति। तत्र भूतत्वं लिडुच्चारणकालीनध्वंसप्रतियोगिक्षणवत्त्वम्। तच्च कालिकसम्बन्धेन कृतावन्वेति।**

**इदञ्चान्तिमकृतावेव, तेनानेकदिनसाध्यपाकस्थलेऽप्याद्यकृतिध्वंसकाले न पपाचेति लिङ्प्रयोगः। लिडुच्चारणकालीनध्वंसप्रतियोगित्वं वा। तदपि स्वरूपम्बन्धे- नान्तिमकृतावन्वेति। लिडुच्चारणकाल एव वा लिडर्थः। लिडेव वा पूर्ववत्। तस्य च स्ववृत्तिध्वंसप्रतियोगित्वादिसम्बन्धेन तस्यामन्वयः। ननाशेत्यादौ भूतत्वान्वयः पूर्ववत्। अनद्यतनत्वम् — लिडुच्चारणदिनभिन्नदिनवृत्तित्वम्। परोक्षत्वञ्च प्रयोक्तृ- वृत्तिसाक्षात्करोमीत्येतादृशविषयताशालिज्ञानाविषयत्वम्। इदं द्वयमपि कृता- वन्वेति। परन्त्वाद्यं साक्षात्सम्बन्धेन, द्वितीयं तु स्वसम्बन्धिधात्वर्थावछिन्न- त्वसम्बन्धेन। चैत्रवृत्तिकृतेः प्रयोक्तृसाक्षात्काराविषयत्वेन, तस्यां तदभावबोधस्य व्यर्थत्वात्। बुध्यतां वा स्वकृतौ प्रसिद्धस्य साक्षात्कारविषयत्वस्य तस्यामभावः। उत्तमपुरुषेऽप्यनवधानेन पारोक्ष्यं द्रष्टव्यम्। शक्तिस्त्वर्थत्रये प्रत्येकम्, विशेषण- विशेष्यभावे विनिगमनाविरहात्। अत एवोक्तक्षणेऽपि न विशेषणता, विनिगमनाविरहात्।**

---

लिडर्थ माह — **लिडर्थोऽपि इति**। पपाच इत्यादौ लिडर्थः भूतत्वे सति अन- द्यतनत्वे सति परोक्षत्वम्। तस्य लिङ्गताख्यातत्वावच्छिन्नवाच्यायां भावनायां = कृतौ अन्वयः। अपिना लडर्थः समुच्चीयते दृष्टान्तार्थम्। यथा लडर्थः भावनायामन्वेति तथेत्यर्थः। तत्र भूतत्वं लिडुच्चारणकालिकः यः ध्वंसः तत्प्रतियोगिक्षणवत्त्वम्। पपाच इति प्रयोगकाले पाकानुकूलकृतेः नाशात् तस्याः भूतत्वम्। भूतत्वघटकक्षणकालस्य कालिकसंबन्धेन कृतावन्वयः।

ननु यत्र पाकः अनेकदिनसाध्यः तत्र पाकानुकूलकृतीनामनेकत्वात् आद्य- कृतिध्वंसकाले पपाचेति लिङ्प्रयोगप्रसङ्गः। तदानीं पचतीति प्रयोगस्यैव प्रामा-

णिकत्वात्। पपाचेति प्रयोगक्षणे आद्यकृतिक्षणध्वंसस्य सत्त्वात् आपत्तिः लिडुच्चारणकालीनः यः आद्यकृतिक्षणध्वंसः तत्प्रातियोगिक्षणवृत्तित्वात् आद्य-कृतेः इति शङ्कायामाह — **इदं चान्तिमकृतावेवेति।**

कालपदेन स्थूलकालो ग्राह्यः। लाघवादाह — **लिडुच्चारणेति।** लिडुच्चारण-कालवृत्तिः यः क्षणध्वंसः तत्प्रतियोगी यःक्षणः तद्वृतित्वापेक्षया लिडुच्चारणकाल-वृत्तिध्वंसप्रतियोगित्वस्य लघुत्वात् इति भावः। तथा च पपाच इत्यतः लिडुच्चारणकालवृत्तिध्वंसप्रतियोगिनी पाकानुकूला भावना इति बोध इति भावः। ततोऽपि लाघवादाह — **लिडुच्चरणकाल एव वेति।** लिडुच्चारणकालस्य स्ववृत्ति-ध्वंसप्रतियोगित्वसंबन्धेन भावनायामन्वय इति भावः। ततोऽपि लाघवादाह — **लिडेव वा पूर्ववत्** इति। लड्वत् इत्यर्थः। यथा लटः लडेवार्थः तद्वत् इत्यर्थः। लिटः भावनायां कालिकसंबन्धेन स्ववृत्तिर्यः ध्वंसः नत्प्रतियोगित्वसंबन्धेन कृतावन्वय इति भावः। प्रतियोगित्वादीति आदिपदेन स्वोच्चारणकालीनध्वंस-प्रतियोगिक्षणवृत्तित्वसंबन्धः गृह्यते।

**ननाशेत्यादाविति।** तत्र लिटः स्वोच्चारणकालवृत्तिध्वंसप्रतियोगिक्षणोत्पत्तिक-नाशनिरूपितत्वसंबन्धेन आख्यातलक्ष्ये प्रतियोगित्वेऽन्वय इति भावः। एतावता लिडर्थघटकभूतत्वपरिष्कारः तस्याख्यातार्थभावनायामन्वयप्रकारश्चोक्तः। अथ तद्घटकमनद्यतनत्वं परिष्करोति — **अनद्यतनत्वमिति। लिडुच्चारणदिनभिन्नदिन-वृत्तित्वम् इति।** इदम् लिडुच्चारणदिनात् भिन्नं दिनमित्यनेन पूर्वतत्पूर्वादिदिनं ग्राह्यम् इत्याशयेनोक्तम्। अनेन भविष्यद्दिनव्यावृत्तिर्न भवति। तद्वारणायैव भूतत्वोक्तिः। भूतानद्यतनप्रत्यक्षविषयभावनायाः व्यावृत्त्यर्थं परोक्षत्वस्यापि लिडर्थेऽन्तर्भावः। तत्र परोक्षत्वं परिष्करोति — **परोक्षत्वं चेति।** लिड्वयोक्ता यः पुरुषः तद्वृत्तिः यः साक्षात्कारः तदविषयत्वं परोक्षत्वम्। इदमपि कृतावन्वेति। **इदं**

**द्वयमपीति।** अनद्यतनत्वं परोक्षत्वं चेति द्वयमपि कृतावन्वेति। तत्र आद्यम् अनद्यतनत्वं साक्षात्संबन्धेन स्वरूपसंबन्धेन कृतावन्वेति। द्वितीयं तु प्रयोक्तृपुरुष-वृत्तिसाक्षात्काराविषयत्वं स्वसंबन्धिधात्वर्थावच्छिन्नत्वसंबन्धेनान्वेति। स्वं — पुरुषवृत्तिसाक्षात्काराविषयत्वं तत्संबन्धी तदाश्रयो यो धात्वर्थः पाकादिः तद-वच्छिन्नत्वसंबन्धेन अनुकूलत्वरूपधात्वर्थपाकादिविशिष्टत्वसंबन्धेन कृतावन्वेति। न तु साक्षात्संबन्धेन कृतौ, कृतेः साक्षात्कारायोग्यतया साक्षात्कारविषयत्वाभावेन तस्यां तद्बोधस्य साक्षात्कारविषयत्वाभावबोधस्य व्यर्थत्वात्। धात्वर्थस्य तु तद्योग्यतास्तीति तत्साक्षात्कारानुकूलकृतिदशायां पपाचेति प्रयोगवारणाय तत्र साक्षात्कारविषयत्वाभावबोधनाय लिड्प्रयोग उपपन्नो भवतीत्याशयः। तदाह — **चैत्रवृत्तिकृतेः इति।** बुध्यतां वेति।

अहं करोमीति स्वकीयकृतौ प्रसिद्धस्य साक्षात्कारविषयत्वस्य चैत्रवृत्तिकृतौ अभावस्यान्वयेन साक्षात्कारविषयत्वाभावः कृतौ बोधयितुं शक्य इति भावः। ननु अहं पपाचेति उत्तमपुरुषे लिड्प्रयोगः कथं संगच्छते। स्वीयायाः पाकानुकूलकृतेः स्वीयसाक्षात्कारविषयत्वेन साक्षात्कारविषयत्वाभावस्य बाधादित्याशङ्क्य तत्र अनवधानेन स्वीयसाक्षात्कारविषयत्वाभावो भवितुमर्हतीति समाधत्ते — **उत्तम-पुरुषेऽपीति। शक्तिस्तु इति।** लिटः भूतत्वे अनद्यतनत्वे पारोक्ष्ये च पृथक् शक्तित्रयम्। न तु भूतत्वविशिष्टानद्यतनत्वविशिष्टपरोक्षत्वे एका शक्तिः इति वक्तुं शक्यम्। त्रयाणां विशेषणविशेष्यभावे विनिगमनाविरहेण शक्तिषट्कप्रसक्त्या गौरवात्। तथा हि —

1. भूतत्वविशिष्टानद्यतनत्वविशिष्टपरोक्षत्वे एका शक्तिः

2. भूतत्वविशिष्टपरोक्षत्वविशिष्टानद्यतनत्वे एका शक्तिः

3. अनद्यतनत्वविशिष्टभूतत्वविशिष्टपरोक्षत्वे एका शक्तिः

4. अनद्यतनत्वविशिष्टपरोक्षत्वविशिष्टभूतत्वे एका शक्तिः

5. परोक्षत्वविशिष्टभूतत्वविशिष्टानद्यतत्वे एका शक्तिः

6. परोक्षत्वविशिष्टानद्यतननत्वविशिष्टभूतत्वे एका शक्तिः

इति। ननु अनद्यतनत्वे पृथक्शक्तिर्मास्तु। भूतत्वशरीरप्रविष्टक्षणे लिडुच्चारणदिनभिन्नत्वं निवेश्य भूतत्वे परोक्षत्वे चार्थद्वये लिटः शक्तिरस्तु इति शङ्कायामाह — अत एवेति। भूतत्वघटकक्षणस्य लिडुच्चारणकालीनध्वंसप्रतियोगित्वविशिष्टलिडुच्चारणदिनभिन्नत्वेन वा लिडुच्चारणदिनभिन्नत्वविशिष्टलिडुच्चारणकालीनध्वंसप्रतियोगित्वेन वा निवेश इत्यत्र विनिगमनाविरहादिति भावः।

लुडर्थस्तु — पक्ता इत्यादौ अनद्यतनत्वविशिष्टं भावित्वम्। तच्च लुडुच्चारणकालीनप्रागभावप्रतियोगिक्षणवत्त्वादिकं पूर्ववदाद्यकृतावन्वेति।

लृडर्थोऽपि पक्ष्यति इत्यादौ अद्यतनानद्यतनसाधारणभविष्यत्त्वसामान्यं तत्रैव।

लेड् वेद एव। तदर्थो लिङर्थ एव समिधो यजतीत्यादौ।

लोडर्थोऽपि लिङर्थ एव, प्रैषादयः, कृत्यप्रत्ययार्थाश्च। 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च' (पा.सू.3.3.136) इति सूत्रे चकारेण लोटोऽप्यनुकर्षणात्।

लङर्थस्त्वनद्यतनभूतत्वम्। अपचदित्यत्र 'भूते' इत्यनुवृत्तौ 'अनद्यतने लङ्' (पा.सू.3.2.111) इति सूत्रात्।

लिङर्थस्तु पूर्वमेव निरूपितः।

लुङर्थः — अपाक्षीदित्यत्र भूतत्वमात्रम्।

लृङर्थस्तु हेतुहेतुमद्भावविशिष्टक्रियातिपत्तिः। यथा यदि सुवृष्टिः अभविष्यत्, तदा सुभिक्षमभविष्यदिति। अत्र वृष्टिसुभिक्षयोर्हेतुहेतुमद्भावात्। उभयोरनिष्पत्त्या च क्रियातिपत्तिः। अयं भाविनि भूते च। दृष्टो मया भवतः पुत्रोऽन्नार्थे चंक्रममाणः, दृष्टश्चापरो द्विजो ब्राह्मणार्थी, यदि तेन स दृष्टः अभविष्यत्ततोऽभोक्ष्यत, न तु भुक्तवानित्यादौ भूतेऽपि प्रयोगदर्शनात्। अनयोश्चार्थयोस्साक्षादेव स्वरूपसम्बन्धेन भावनान्वयः।

अत्र च सर्वत्र लकारेषु शक्ततावच्छेदकं तत्तल्लकारत्वम्, वक्ष्यमाणरीत्या वा तत्तदादेशविशेषत्वं बोध्यम्। सर्वथा तदर्थस्य भावनायामेवान्वयः इति सिद्धम्।

---

अथ लुडर्थमाह — लुडर्थस्तु इति। चैत्रः पक्ता इत्यादौ अनद्यतनत्वविशिष्टं भविष्यत्त्वं लुडर्थः। तच्च लुडुच्चारणकालीनः यः प्रागभावः पाककृतिक्षणप्रागभावः तत्प्रतियोगी यः क्षणः तद्वत्त्वम्। तच्च कालिकसंबन्धेन भाव्याद्यकृतावन्वेति। यद्वा लुडुच्चारणकालीनप्रागभावप्रतियोगित्वं लुडर्थः। तस्य भाव्याद्यकृतावन्वयः। यद्वा लुडुच्चारणकाल एवार्थः। तस्य स्ववृत्तिप्रागभावप्रतियोगित्वसंबन्धेन आद्यकृतावन्वयः। यद्वा लुडेव लुडर्थः। तस्य स्वोच्चारणकालीनप्रागभावप्रतियोगित्वसंबन्धेन आद्यकृतावन्वयः इति मत्वा पूर्ववदित्याह। अनद्यतनत्वस्यापि तत्रान्वयः।

लृडर्थोऽपीति। पक्ष्यतीत्यादौ भविष्यत्त्वमर्थः। भविष्यत्त्वं नाम अद्यतनानद्यतनसाधारणं लृडुच्चारणाधिकरण क्षणभिन्नकालवृत्तित्वम्। इदमपि तेनैव भावनायामेवान्वेति।

लेट् वेदे एव प्रयुज्यते — समिधो यजतीत्यादौ। तदर्थः लिङर्थ एव। लिडर्थश्च पूर्वं निरूपितः।

अनद्यतनभूतत्वं लङर्थः। अनद्यतनत्वभूतत्वयोः निर्वचनं लिडर्थनिरूपणावसरे उक्तमेवात्रापि।

लुङर्थः — भूतत्वमात्रम्। मात्रपदेनानद्यतनत्वव्यवच्छेदः।

लृङर्थस्तु — हेतुहेतुमद्भावविशिष्टक्रिययोः अनिष्पत्तिः। शिष्टं स्पष्टम्।

## आत्मनेपदार्थस्यान्वयप्रकारः

**एवमुपग्रहविशेषरूपस्यात्मनेपदादेरर्थः कर्तृगामिफलादिरूपः, सोऽपि कर्मतादिसंबन्धेन तस्यामेवान्वेति, यद्यपि स्वर्गत्वादिरूपेणासौ स्वर्गकामादिपदैरुक्तः, तथापि कर्तृगामित्वादिना तदभिधानमात्मनेपदादिना नानुपपन्नम्। अस्तु वा कर्तृगामित्वादिकमेव तदर्थः, स च स्वाश्रयफलकर्मत्वादिसम्बन्धेन कृत्यन्वयी।**

---

उपग्रह इति आत्मनेपदस्य अपरं नाम। आत्मनेपदस्यार्थः कर्तृगामिफलादिरूपः। आदिना 'व्यक्तवाचां समुच्चारणे' इत्यादिसूत्रे चोदितस्य व्यक्तवाक्त्वादेः ग्रहणम्। संप्रवदन्ते ब्रह्मणाः इति उदाहरणम्। लृङर्थः हेतुहेतुमद्भावविशिष्टक्रियातिपत्तिः — कार्यकारणभावापन्नयोः क्रिययोः अतिपत्तिः अनिष्पत्तिः यथा 'यदि सुबृष्टिरभविष्यत् तदा सुभिक्षमभविष्यत् इति। अत्र सुवृष्टिः हेतुः सुभिक्षं हेतुमत् कार्यम्। अनिष्पन्नसुवृष्टिः हेतुः अनिष्पन्नसुभिक्षं हेतुमत् कार्यम्। अनिष्पन्नसुवृष्टिभावनाहेतुका अनिष्पन्नसुभिक्षभावना इति बोधः। अथवा सुवृष्ट्यनिष्पत्तिहेतुका सुभिक्षानुत्पत्तिभावनेति बोधः।

## आख्यातवाच्यसंख्याया अन्वयप्रकारः

एवमेकत्वादिसंख्याया अपि तिबाद्युक्तायास्सामानाधिकरण्यसम्बन्धेन तस्यामेव अन्वयः, न तु साक्षात्सम्बन्धेन कर्त्रादौ, 'भावप्रधानमि'ति स्मृतिसंकोचे

**प्रमाणाभावात्। कार्यकारणभावादिकल्पनागौरवापत्तेश्च। तत्रापि कर्त्राख्यातस्थले स्वाश्रयसमवेतत्वसम्बन्धेन, 'चैत्रेणौदनः पच्यते' इत्यत्र हि चैत्रेण पाकेनौदनः क्रियत इति विवरणानुसारात् कृतिरेवाख्यातार्थः। पाकस्य करणत्वम्, चैत्रस्य च कर्तृत्वं प्रतीयते। आत्मनेपदेन च लक्षणया कर्म, उक्तानुशासनानुरोधात्। फलन्तु विक्लित्त्यादि न कस्यापि पदस्यार्थः, तस्यान्यलभ्यत्वात्। अत एव फलमात्मनेपदस्यार्थः, कृतिस्तृतीयार्थ इत्यप्यपास्तम्। चैत्रः पचतीत्यादौ कृतावपि शक्तेरावश्यकत्वेन अनेकशक्तिकल्पने गौरवात्। चैत्रेणौदनः क्रियते इति तृतीयातः कृतेः पृथग्विवरणाच्च। अतश्च तत्र कृतेरेवाख्यातार्थत्वात्तस्यामेकत्वान्वयः। स्वाश्रयीभूतौदनवृत्तिविक्लित्तिरूपफलजनकपाकजनकत्वसम्बन्धेन नानुपपन्नः।**

---

अथ आख्यातार्थसंख्यायाः अन्वयप्रकारमाह — **एवमेकत्वादिसंख्याया** इति। तिबादिना उक्तायाः एकत्वादिसंख्यायाः स्वाश्रयवृत्तित्वसंबन्धेन भावनायामन्वयः। चैत्रः पचतीत्यत्र स्वाश्रयचैत्रवृत्तिर्भावना इति बोधः। न तु साक्षात्संबन्धेन आश्रयत्वसंबन्धेन कर्तरि कर्मणि वा अन्वयः। भावप्रधानमाख्यातम् इति स्मृत्या आख्यातार्थेषु भावनायाः इतरापेक्षया प्राधान्यबोधनात् तत्संकोचे संख्यातिरिक्तविषयकत्वे प्रमाणाभावात्। संख्यातिरिक्तविषये एकः कार्यकारणभावः, संख्याविषये अन्यः कार्यकारणभावः इति कल्पने गौरवाच्च। तत्रापि कर्त्राख्यातस्थले पचतीत्यादौ संख्यायाः स्वाश्रयकर्तृसमवेतत्वसंबन्धेन भावनायामन्वयः। कर्माख्यानस्थले चैत्रेण ओदनः पच्यते इत्यादौ संख्यायाः स्वाश्रयकर्मवृत्तिफलप्रयोजकत्वसंबन्धेनान्वयः। चैत्रेण ओदनः पच्यते इत्यनेन हि पाकेन ओदनः क्रियते इति विवरणानुसारात् कृतिरेवाख्यातार्थः। पाकस्य करणत्वं चैत्रस्य च कर्तृत्वं प्रतीयते। आत्मनेपदेन च लक्षणया कर्म उच्यते। लः

कर्मणीत्यनुशासनानुसारात्। आख्यातस्य भावनायामेव शक्तिरित्युक्तत्वात् कर्मणि लक्षणेत्युक्तम्। **न कस्यापि पदस्यार्थ** इति। विक्लित्त्यादिरूपं फलं न कस्यापि पदस्यार्थः = आत्मनेपदस्य परस्मैदस्य वा नार्थः। कुतः? तस्यान्य-लभ्यत्वात् = विक्लित्त्यादिरूपफलस्य धातुलभ्यत्वादित्यर्थः।

नैयायिकमतं दूषयति — **अत एवेति**। फलस्य अन्यलभ्यत्वादेवेत्यर्थः। तथा कृतेरपि आख्यातलभ्यत्वात् सा न तृतीयाविभक्त्यर्थः इति भावः। अन्यलभ्यत्व-मेवाह — **चैत्रः पचते इत्यादाविति**। आख्यातस्य तत्र कृतौ शक्तिस्वीकारात् फलेऽपि शक्तिकल्पने गौरवात् फलस्य धात्वर्थत्वमेवेति भावः। कृतेः तृतीयार्थत्वे तत एव कृतेः बोधात् पृथक् क्रियते इति कृधानुना तस्याः विवरणमसंगतं स्यात्। अतः अखण्डोपाधिरूपं कर्तृत्वं तृतीयार्थः। तस्य स्वनिरूपकपाकानुकूल-त्वसंबन्धेन आख्यातार्थकृतावन्वयः। आख्यातार्थैकत्वसंख्यायाः स्वाश्रयीभूतौ-दनवृत्तिविक्लित्तिरूपफलजनकव्यापारजनकत्वसंबन्धेन अन्वयः। एकत्वाश्रयः यः ओदनः तद्वृत्तिः या विक्लित्तिः पाकः तज्जनको यो व्यापारः अधिश्रयणाधः-श्रयणादि तज्जनकत्वसंबन्धेन अन्वयः इत्यर्थः।

## भावाख्यातार्थनिरूपणम्

**एवं भावाख्यातेऽपि 'चैत्रेण सुप्यते, गगनेन स्थीयते' इत्यादौ आख्यातेन स्वापः क्रियत इति विवरणात् भावनैवोच्यते। स्थीयत इत्यत्राप्याश्रयत्वम्। न च तत्र लक्षणायां प्रमाणाभावः, 'चैत्रो जानाती'त्यादौ विशेषणीभूतधात्वर्थान्वयस्येव 'गगनेन स्थीयते' इत्यादौ विशेषणीभूतधात्वर्थान्वयस्यापि लक्षणाबीजत्वोपपत्तेः। न च तत्र धात्वर्थविशेष्यक एव बोधः, भावनाप्रकारबोधत्वावच्छिन्नं प्रत्याख्यात-पदज्ञानत्वेन कारणत्वस्यान्यत्र क्लृप्ततया समिधो यजतीत्यादौ प्रथमान्तपदाध्या-**

हारस्येव, धात्वर्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति धातुपदज्ञानत्वेन कारणत्वस्यान्यत्र क्लृप्ततया तन्निर्वाहार्थं भावाख्यातेऽप्याश्रयत्वलक्षणोपपत्तेः। तत्रापि 'भावप्रधानमि'ति स्मृत्या, प्रत्ययार्थप्राधान्यस्मृत्या च भावनाया एव प्राधान्यम्। अनुशासनबलाच्चाख्यातेन कर्तृकर्मलक्षणावद्भावरूपधात्वर्थस्यापि गुणत्वेन लक्षणा। तथा — गगननिष्ठं स्थितिमत्स्थित्याश्रयत्वमिति शाब्दबोधः। द्वितीयवारं स्थितिबोधस्त्वनुवादस्साधुत्वार्थः। अतः स्थीयत इत्येकत्वमपि स्वाश्रयीभूतभावरूपधात्वर्थनिरूपितत्वसम्बन्धेनाश्रयत्वादावेवान्वेति। भावप्रधानमिति स्मृतिसंकोचे प्रमाणाभावात्। न चैवं धात्वर्थस्य द्वित्वादिविवक्षायां द्विवचनाद्यापत्तिः।

प्रयोगाभावसहकृतानुशासनबलेन एकवचनेनैव द्वित्वादिलक्षणात्। अत एव 'उष्ट्रासिका आस्यन्ते' इति महाभाष्यकारवचनात् भावेऽपि बहुवचनं क्वाचित्कमेव। एवं कर्मवत्कर्मणा तुल्यक्रियः (पा.सू 3.2.87) इति सूत्रात् 'पच्यते ओदनस्स्वयमेवे'त्यादौ यत्र सकर्मकधातोर्यत्कर्मकारकं तद्वृत्त्यखण्डोपाधिरूपकर्मत्वाविवक्षया कर्तृत्वविवक्षा, तत्राख्यातेन तस्यैव गुणत्वेन लक्षणयोपादानादाख्यातेन विवरणानुसारेण शक्त्यैव कृतेरुपादानात् तस्यामेव कर्तृत्वस्य स्वनिरूपकविक्लित्तिरूपफलजनकपाकजनकत्वसम्बन्धेन, ओदनस्य च स्वनिष्ठकर्मत्वनिरूपकफलप्रयोजकत्वसम्बन्धेनान्वय इति व्यक्तं कौस्तुभे।

---

अथ भावाख्यातार्थम् निरूपयति — एवं भावाख्यतेऽपीत्यादिना। चैत्रेण सुप्यते; गगनेन स्थीयते इत्यादौ तिङन्तेन सुप्यते इत्यनेन स्वापः क्रियते इति यत्नार्थककृधातुना आख्यातस्य विवरणात् कृतिरूपा भावना आख्यातार्थः। स्थीयते इत्यत्र आश्रयत्वरूपा भावना आख्यातार्थः।

नन्‌ स्थीयते इत्यादौ आख्यातस्य आश्रयत्वे लक्षणायां प्रमाणं नास्तीत्याशङ्क्य यथा जानातीत्यत्र प्रमाणविषयसंबन्धाधीनत्वात्‌ ज्ञानस्य कृतिजन्यत्वाभावात्‌ आख्यातस्य न कृतिरर्थः, अपि तु आश्रयत्वं लक्षणया अर्थ इति स्वीक्रियते तथा गगनेन स्थीयते इत्यादौ गगननिष्ठकृतेः अप्रसिद्ध्या कृत्यर्थकत्वासंभवात्‌ आश्रयत्वार्थकत्वमाख्यातस्य स्वीकार्यमिति समाधत्ते — **न च तत्रेत्यादिना**। तत्र आश्रयत्वे। धात्वर्थान्वयस्यापीत्यनन्तरम्‌ अनुपपत्तेः इति शेषः।

ननु गगनेन स्थीयते इत्यादौ गगननिष्ठा स्थितिरित्येवं धात्वर्थविशेष्यकबोध एव भवतु किमर्थमाख्यातस्य आश्रयत्वे लक्षणां स्वीकृत्य तद्विशेष्यकबोधस्वीकरणमिति शङ्कते — **न च तत्रेति**। तार्किकमते चैत्रः पचतीत्यादौ आख्यतार्थभावनाप्रकारकशाब्दबोधस्य जायमानतया तदनुसारेण आख्यातार्थप्रकारकशाब्दबोधं प्रति तिङन्तधातुपदज्ञानं कारणमिति कार्यकारणभावस्य क्लृप्ततया समिधो यजति, ओदनं पचति इत्यादौ प्रथमान्तचैत्रपदाध्याहारः इष्यते, तद्वत्‌ धात्वर्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति धातुपदज्ञानत्वेन कारणत्वस्य पचतीत्यादौ क्लृप्ततया तन्निर्वाहाय स्थीयते इत्यादिभावाख्यातस्थलेऽपि आख्यातस्य आश्रयत्वे लक्षणामङ्गीकृत्य धात्वर्थस्थितिप्रकारकाख्यातार्थाश्रयत्वविशेष्यकशाब्दबोधस्य अङ्गीकरणीयत्वात्‌ इति भावः।

**तत्रापीति**। आख्यातार्थप्राधान्येऽपि आख्यातार्थान्तर्गतभावनाया एव प्राधान्यं विशेष्यत्वम्‌। भावप्रधानमाख्यातम्‌, लः कर्मणि च भावे चाकर्मकेभ्यः (पा.सू 3.4.69) इति व्याकरणसूत्रेण आख्यातस्य कर्तरि कर्मणि च लक्षणावत्‌ धातोः धात्वर्थस्य गुणत्वविशिष्टतया लक्षणा। गुणत्वं नाम अप्राधान्यम्‌। तथा च गगनेन

स्थीयते इति वाक्यात् गगननिष्ठं स्थितिविशिष्टं स्थित्याश्रायत्वम् इति बोधः। द्वितीयवारं स्थितिबोधः स्थितेः गुणत्वसूचनार्थः। आश्रयत्वरूपा भावना तत्र स्थितिः गुणभूता अप्रधानभूता। अप्रधानत्वं च शाब्दबोधीयाश्रयत्वरूपभावना-निष्ठविशेष्यतानिरूपितप्रकारतारूपमिति भावः। अत इति। तत्र आश्रयत्वस्य मुख्यविशेष्यत्वात् आख्यातार्थस्य एकत्वसंख्याया अपि तत्र स्वाश्रयीभूतभावरूप धात्वर्थनिरूपितत्वसंबन्धेनान्वयः। स्वम् एकत्वं तदाश्रयीभूता धात्वर्थस्थितिः तन्निरूपितत्वं आख्यातार्थे आश्रयत्वे। एतादृशस्थले धावत्वर्थविशेष्यकबोध-स्वीकारे भावनाप्राधान्यबोधकस्य भावप्रधानमाख्यातमिति स्मृतिवचनस्य भावार्थकधातुव्यतिरिक्तविषयकतया संकोचः कर्तव्यः स्यात्। स च असंकोचे संभवति न न्याय्यः इति भावः।

तत्र शङ्कते — **न चैवमिति।** संख्यायाः धात्वर्थद्वारा आख्यातार्थे आश्रयत्वेऽन्वयः इति अङ्गीकारे धात्वर्थस्य द्वित्वादिविवक्षायां द्विवचनाद्यापत्तिः इति शङ्का। समाधानं तुः धात्वर्थस्य द्वित्वबहुत्वविवक्षायां द्विवचनबहुवचनयोः प्रयोगाभावात् तत्सहकृतेन अनुशासनेन एकवचनेनैव द्वित्वबहुत्वयोः लक्षणया बोधः स्वीकरणीयः इति। धात्वर्थस्य द्वित्वबहुत्वविवक्षायां द्विवचनबहुवचनयोः यादृशधातूत्तरं प्रयोगः प्रामाणिकानामस्ति तादृशः प्रयोगः लक्षणया निरूह्यते। न सर्वत्रेति भावः। उक्तविषये महाभाष्यकारप्रयोगं प्रदर्शयति अत एवेत्यादिना। उष्ट्रासिका आस्यन्त इति। उष्ट्राणां यादृशानि आसनानि उपवेशनानि तादृशानि देवदत्तकर्तृकाणि आसनानि इत्यर्थः। हतशायिकाः शय्यन्ते इत्यस्य हतानां यानि शयनानि तत्सदृशानि देवदत्तस्य शयनानि इत्यर्थः। 'सार्वधातुके' (पा.सू 3.1.67) इति सूत्रे इदं भाष्यम्। आसधातोः शीङ्धातोश्च भावे लटि प्रथमपुरुषे

बहुवचने आस्यन्ते शय्यन्ते इति रूपे। आसिका शायिका इत्यत्र धात्वर्थे ण्वुल्। आसनानि शयनानि इत्यर्थः।

एवमित्यादि। कर्मवत्कर्मणा तुल्यक्रियः (पा.सू 3.2.87) इति सूत्रस्याय-मर्थः — कर्मस्थक्रियया तुल्यक्रियः कर्ता कर्मवत् इति। कार्यातिदेशोऽयम्। यदा सौकर्यातिशयविवक्षया कर्तुः पुरुषस्य व्यापारः प्रयत्नः न विवक्ष्यते। किन्तु कर्मगत एव व्यापारः विक्लित्त्यादिफलानुकूलत्वेन विवक्ष्यते तदा कर्मादिकार-काण्यपि कर्तृसंज्ञां लभन्ते इत्यर्थः। तेन कर्मवाचकपदसमव्याहृतलकारेण कर्तृत्वमुच्यते। पच्यते ओदनः स्वयमेवेत्युदाहरणम्। ततश्च ओदने कर्मत्वा-विवक्षया कर्तृत्वविवक्षा। तत्र आख्यातेन लक्षणया अखण्डोपाधिरूपकर्तृत्वं उच्यते। तस्य कर्तृत्वस्य आख्यातशक्यार्थभूतकृतिरूपभावनायां स्वनिरूपक-विक्लित्तिरूपफलजनकपाकजनकत्वसंबन्धेनान्वयः। स्वं कर्तृत्वं तन्निरूपकः यः विक्लित्तिजनकः पाकः तज्जनकत्वसंबन्धेनेत्यर्थः। ओदनस्य च स्वनिष्ठकर्तृत्व-निरूपकफलप्रयोजकत्वसंबन्धेन कृतावेवान्वयः। फलप्रयोजकत्वं विक्लित्तिजनक-व्यापारजनकत्वम्। तथा च उक्तसंबन्धेन स्वनिरूपकविक्लित्तिजनकपाकजनकत्व-संबन्धेन ओदननिष्ठकर्तृत्वविशिष्टा स्वनिष्टकर्तृत्वनिरूपकफलप्रयोजकत्वसंबन्धेन ओदनविशिष्टा च भावनेति बोध इत्याशयः। कर्मत्वनिरूपकेत्यत्र कर्मत्वेत्यप-पाठः। **कर्तृत्वनिरूपकेति** पाठः साधुः। सूत्रेण कर्मत्वाविवक्षायां कर्मवद्भावाति-देशादिति ध्येयम्।

**तत्सिद्धं भावनातिरिक्ताख्यातार्थस्य सर्वस्य भावनायामेव प्रकारतेति, तस्या मुख्यविशेष्यत्वम्। धात्वर्थं प्रति तु तस्या विशेष्यत्वम्, 'प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः, तयोस्तु प्रत्ययः प्राधान्येन' इति स्मृतिवशादेवाविवादम्। अत एव न**

**तस्य प्रत्ययार्थान्तरं प्रति प्रकारता; विशेष्यगामित्वे संभवति, प्रकारगामित्वस्य अन्याय्यत्वात्।**

**इति श्रीमदाचार्यखण्डदेवविरचिते भाट्टतन्त्ररहस्ये भावनावादः समाप्तः**

---

एतावता निर्णीतमर्थं संक्षेपेणानुवदति — तत्सिद्धमिति। **तस्याः** भावनायाः। अत एव न तस्य = धात्वर्थस्य। प्रत्ययार्थान्तरं प्रति आख्यातवाच्यभावनातिरिक्तमर्थं प्रति। विशेष्यगामित्वे = मुख्यविशेष्यभूतभावनान्वयित्वे। प्रकारगामित्वस्य = विशेषणेऽन्वयस्य।

**इति सारप्रकाशिकायां भावनावादः समाप्तः**

# धात्वर्थनिरूपणम्

## मण्डनमिश्रमतोपन्यासतन्निरासौ

अथ कोऽयं धात्वर्थो नाम? अत्र मण्डनमिश्राः तावत् विक्लित्त्यादिरूपं फलमेव धात्वर्थः, तदनुकूलफूत्कारादिरूपो व्यापारसंघस्तु सर्वोऽपि व्यापारत्वेन प्रत्ययार्थः, फलस्य च तं प्रति प्रकारत्वमित्याहुः।

तन्न। गमनजन्यसंयोगाश्रयो ग्राम इति प्रयोगानापत्तेः। संयोगाख्यस्य फलस्य गमनरूपत्वेन तज्जन्यत्वाभावात्। गमनाश्रयो ग्राम इति प्रयोगापत्तेश्च। न च ल्युटो भावनावाचकत्वेन व्यापाराभिधानान्नैतादृशप्रयोगाद्यापत्तिः। गम्यर्थवान् ग्राम इति प्रयोगस्यैवमप्यापत्तेः। गम्यर्थजन्यसंयोगाश्रयो ग्राम इति प्रयोगानापत्तेश्च। स्वत्वध्वंसाख्यस्य फलस्य यजिपदार्थत्वे तस्यैव फलभावनाकरणत्वेन स्वर्गसाधनतापत्तेः, स्थायिनस्तस्मादेव स्वर्गोत्पित्त्युपपत्तावपूर्वकल्पनानापत्तेश्च।

---

एतावता मुख्यविशेष्यभावनावाचकाख्यातार्थो निरूपितः। अथ आख्यातप्रकृतिभूतधात्वर्थं निरूपयति — अथ कोऽयं धात्वर्थ इत्यादिना। तत्र आदौ मण्डनमिश्रमतं खण्डनार्थमनुवदति — **तत्र मण्डनमिश्रा इत्यादिना**। मण्डनमिश्राणां भावनाविवेकाख्यग्रन्थे धात्वर्थविचार आख्यातार्थविचारश्च विस्तरेण वर्तते। शाब्दबोधमीमांसायां मया विवेचितश्च। तत्रान्ततो निर्णीतमर्थमनुवदति — पच्यादिसकर्मकधातूनां विक्लित्त्यादिरूपं फलमेवार्थः तदनुकूलफूत्कारादिव्यापारास्तु व्यापारत्वेन रूपेण धातूत्तरप्रत्ययार्थः। विक्लित्त्यादिफलस्य तु अनुकूलत्वसंबन्धेन व्यापारं प्रति प्रकारत्वमिति।

तन्मतं खण्डयति — **तन्नेत्यादिना**। यदि धातोः संयोगादिरूपं फलमर्थः, तदा गमनजन्यसंयोगाश्रयो ग्राम इति प्रयोगस्यानुपपत्तिः। भावे धावर्थे ल्युडन्तस्य गमनशब्दस्य संयोगरूपफलार्थत्वात् संयोगजन्यसंयोगाश्रयः ग्राम इत्येव तद्वाक्यार्थत्वात् संयोगजन्यत्वस्य संयोगेऽभावात् बाधितार्थकत्वात्। गमनाश्रयो ग्राम इति प्रयोगप्रसङ्गाच्च। संयोगरूपगमनाश्रयत्वस्य ग्रामेऽबाधितत्वात्। न च ल्युडन्तस्य संयोगानुकूलव्यापारोऽर्थः तज्जन्यत्वात् संयोगस्य गमनजन्य-संयोगाश्रयो ग्राम इति प्रयोगस्योपपत्तिः। तादृशव्यापारानाश्रयत्वात् ग्रामस्य ग्रामो गमनवानिति प्रयोगस्य च नापत्तिरिति वाच्यम्। ल्युटो व्यापारवाचित्वेन धातोः संयोगार्थकत्वेन संयोगानुकूलव्यापारस्य ल्युडन्तवाच्यत्वमिति आशयेन भवता आपत्त्यानापत्ती परिह्रियेते।

एवमपि गम्यर्थवान् ग्रामः इति प्रयोगस्यापत्तिः। गम्यर्थसंयोगाश्रयत्वस्य ग्रामेऽबाधात् इति भावः।

फलमात्रस्य धात्वर्थत्वे दोषान्तरमप्याह — स्वत्वध्वंसाख्यफलस्येति। यजधातोः स्वत्वध्वंसानुकूलव्यापारवाचकस्य स्वत्वध्वंसरूपफलमात्रार्थकत्वे स्थायिनः त्यज्यमानहविर्निष्ठस्वत्वध्वंसादेव स्वर्गरूपफलसिद्धेः उपपत्तौ अपूर्व-कल्पनानुपपत्तेश्चेति भावः। अतः धातोः फलमात्रवाचकत्वमिति मण्डनमिश्र-मतमयुक्तमित्यर्थः।

## व्यापारमात्रं धात्वर्थ इति प्राचीनशाब्दिकमतम्

**अतो व्यापारमात्रं धात्वर्थः, फलञ्च द्वितीयार्थ इत्यन्ये। तदपि न, व्यापारत्वेन वाच्यत्वे, सर्वधातूनां पर्यायतापत्तेः, क्रियात्वादिना विशेषरूपेण वाच्यत्वे, त्यजि-गम्योः पर्यायतापत्तेश्च। पूर्वदेशविभागानुकूला क्रिया त्यजेरर्थः। उत्तरदेश-**

**संयोगानुकूला सैव गमेः। तद्यदि क्रियामात्रं धात्वर्थः, फलसामान्यञ्च द्वितीयार्थः, तदा तयोः पर्यायतापत्तिः।**

---

व्यापारमात्रं धात्वर्थ इति मतनिरासः। नैयायिकाः प्राचीनाः व्यापारमात्रं धात्वर्थः, फलं तु द्वितीयार्थः इति वदन्ति। तन्मतम्रनूद्य दूषयति — अतो व्यापारमात्रं धात्वर्थ इति। ग्रामं गच्छति इत्यत्र द्वितीयाविभक्तेः संयोगरूपं फलमर्थः। व्यापारमात्रं धात्वर्थः। तत्र फलस्य जनकतासंबन्धेनान्वयः इति तेषामाशयः। संयोगे आधेयतया प्रकृत्यर्थस्य ग्रामस्यान्वयः। ग्रामनिष्ठ-संयोगजनकव्यापारानुकूलकृतिमान् चैत्र इति बोध इति।

तदपि न। सर्वेषामपि धातूनां व्यापारत्वावच्छिन्नव्यापारवचकत्वे पर्यायत्वा-पत्तेः। एकधर्मावच्छिन्नैकार्थवाचकत्वस्यैव पर्यायत्वात्। व्यापारत्वं नाम तज्जन्यत्वे सति तज्जन्यजनकत्वम्। क्रियात्वं चेष्टात्वमिति भेदः। सर्वेषामपि धातूनां व्यापारत्वावच्छिन्नवाचकत्वे क्रियात्वावच्छिन्नवाचकत्वे वा पर्यायत्वं दुर्वारम्। क्रियात्वावच्छिन्नवाचकत्वे त्यजिगम्योः पर्यायत्वापत्तिः। तयोः पर्यायत्वमुप-पादयति — **पूर्वदेशेति**। पूर्वदेशविभागानुकूला क्रिया त्यजेरर्थः। उत्तरदेश-संयोगानुकूलाक्रिया गमेरर्थः। यदि च क्रियामात्रं धात्वर्थः। फलसामान्यं च द्वितीयार्थः तदा त्यजिगम्योः पर्यायत्वं दुर्वारमिति।

## धात्वर्थविषये नव्यवैयाकरणमतोपन्यासः

**अत उभयं फलम्, व्यापारश्च धात्वर्थः, उभयत्र च प्रत्येकं शक्तिः। नात ओदनादिपदार्थस्यैकदेशान्वयशङ्का। तयोश्च जन्यजनकभावस्संसर्गः। व्यापार-विशेष्यकश्च बोधः। तत्रैव कर्मकारकातिरिक्तसर्वकारकाणामन्वयः, कर्मकारकस्य**

**च फले। व्यापारश्च शरीरनिष्ठः फूत्कारादिः, आत्मनिष्ठः प्रयत्नादिश्च तत्त्वेन वाच्यः। अनुगतैकधर्मान्तरस्य निर्वक्तुमशक्तेः। न चैवं सर्वकारकव्यापाराणां तत्त्वेन वाच्यत्वे नानार्थकत्वापत्तिः, इष्टापत्तौ वा सर्वकारकाणां प्रथमान्ततापत्तिः। नानार्थत्वेऽपि यत्कारकव्यापाराणां यदा विवक्षा, तदा तेषामेव बोधस्तदादाविव बुद्धिस्थस्य। तत्कारकस्यैव च तदा प्रथमान्तत्वम्, अत एव 'स्थाली पचती'त्यादिप्रयोगोऽपि विवक्षायां संगच्छते। अतस्सर्वोऽपि व्यापारो धात्वर्थः। आख्यातार्थस्तु यगादिविकरणस्थले कर्म, शबादिविकरणस्थले कर्ता, अकर्मक-धातूत्तरयगादिविकरणस्थले च भावरूपो धात्वर्थ एव। 'लः कर्मणि' इत्याद्यनु-शासनात्। सर्वेषाञ्च धात्वर्थं प्रति योग्यसम्बन्धेन गुणत्वम्। 'भावप्रधानमाख्या-तमि'ति स्मृत्या भावपदवाच्यधात्वर्थस्याख्यातार्थं प्रति प्राधान्योक्तेः। प्रत्ययार्थ-प्राधान्यस्मृतिस्तु सुबादिविषया — इति वैयाकरणाः।**

---

वैयाकरणास्तु — फलावच्छिन्नव्यापाररूपे विशिष्टे एकशक्त्यङ्गीकारे तण्डुलं पचतीत्यादौ द्वितीयार्थस्य आश्रयस्य तण्डुलादिपदार्थस्य आधेयतासंबन्धेन धात्वर्थैकदेशे फले जनकत्वसंबन्धेनान्वयस्य वक्तव्यतया पदार्थः पदार्थेनान्वेति, न तु तदेकदेशेनेति व्युत्पत्तिविरोधः। अतः फलं व्यापारश्च विशकलितं धात्वर्थः। फलस्य व्यापारस्य च जन्यजनकभावात् फलस्य व्यापारे जनकत्वसंबन्धे-नान्वयः। आख्यातार्थः कर्ता। तत्र प्रथमान्तपदार्थस्य अभेदसंबन्धेनान्वयः। कर्तुः व्यापारे अन्वयः। तथा च तण्डुलाभिन्नाश्रयनिष्ठविक्लित्तिरूपफलजनकः चैत्राभिन्नकर्तृकः पाकः इति धात्वर्थविशेष्यको बोधः चैत्रः तण्डुलं पचतीति वाक्यात् जायते। तत्रैवेति। धात्वर्थव्यापार एवेत्यर्थः। कर्मकारकस्य धात्वर्थ-फलेऽन्वयः। कर्मकारकातिरिक्तकारकाणां व्यापारेऽन्वयः। व्यापारश्च शरीरनिष्ठः

फूत्कारादिः आत्मनिष्ठः प्रयत्नश्च फूत्कारत्वप्रयत्नत्वादिना रूपेण धातुवाच्यः। सर्वव्यापारसाधारणस्य एकधर्मस्य निर्वक्तुमशक्यत्वात्।

**न चैवमिति।** कारकव्यापाराणां सर्वेषां तत्त्वेन विशेषरूपेण धातुवाच्यत्वे गम्यादिधातूनां नानार्थकत्वापत्तिः। न चेष्टापत्तिः। तद्व्यापाराश्रयवाचककारक-पदानां प्रथमान्तत्वापत्तेः। व्यापाराश्रयवाचकपदस्य प्रथमान्तत्वनियमात् इति नाशङ्कनीयम्। धातोः अनेकव्यापारवाचकत्वेऽपि यदा यत्कारकगतव्यापार-विवक्षा तदा तत्कारकवाचकपदस्यैव प्रथमान्तत्वम्। व्यापाराणां धात्वर्थानामने-कत्वेऽपि विवक्षावशात् विवक्षितव्यापाराणामेव बोधः। तदादिसर्वनामपदात् वक्तृबुद्धिविषयार्थबोधवत्। ततश्च सर्वोऽपि व्यापारो धात्वर्थः। आख्यातार्थस्तु यगादिविकरणस्थले पच्यते इत्यादौ कर्म। शवादिविकरणस्थले पचतीत्यादौ कर्ता। स्थीयते, शय्यते इत्यादि-अकर्मकधातूत्तरयगादिस्थले भावरूपो धात्वर्थ एव आख्यातार्थः। "लः कर्मणि च भावे चाकर्मकेभ्यः" (पा.सू 3.4.69) इति सूत्रात्। सर्वेषां च कारकाणां धात्वर्थं प्रति योग्यसंबन्धेन गुणत्वम् विशेषणत्वम्। भावप्रधानमाख्यातमिति स्मृत्या भावपदवाच्यस्य धात्वर्थस्य आख्यातार्थं प्रति प्राधान्योक्तेः। प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः, तयोस्तु प्रत्ययः प्राधान्येन इति प्रत्ययार्थप्राधान्यबोधकस्मृतिवचनं तु सुबन्तविषयम् — इति प्राहुः।

## वैयाकरणमतखण्डनम्

**तदपि न। पूत्कारत्वादेः पचतीत्यतोऽप्रतीतेः, अभासमानस्य शक्यतावच्छेद-कत्वायोगात्। फूत्कारादिकं विनापि चैत्रनिष्ठक्रियान्तरमादाय स्वतस्सिद्धज्वालया जायमाने ओदने चैत्रः पचतीति प्रयोगाच्च। तत्तद्व्यापारस्य तत्त्वेनानुभवे यागः, इच्छा, ज्ञानं वेति वादिविप्रतिपत्त्यनुपपत्तेश्च। अतः अनुभूयमानं पाकत्व-**

**यागत्वादिकमेव तत्तत्फलोपधायकतावद्व्यापारवृत्ति अखण्डोपाधिरूपं सामान्यं पच्यादिपदशक्यतावच्छेदकम्। तत्सत्त्वे पाकः पाक इत्याद्यनुगतप्रतीतिः प्रमाणम्। फलोपधायकतावच्छेदकतया, शक्यतावच्छेदकतयैव वा तत्सिद्धिः। फलोपधायकव्यापारत्वादेः प्रमाणान्तरतो बोधः, अखण्डोपाधिरूपकर्मत्वस्यैव तदर्थतायाः स्थापयिष्यमाणत्वात्। शक्ततावच्छेदकञ्च तत्तद्धातुत्वम्।**

---

**तदपि नेत्यादि।** तन्मतमपि न समीचीनम्। पचतीत्युक्ते पाकत्वेनैव पाकक्रिया प्रतीयते। पाकश्च अनेकफूत्कारादिक्रियासमूहः। सर्वासामपि तासां पाकत्वरूपैणैव प्रतीतिर्भवति, न तु फूत्कारत्वादिरूपेण। अभासमानस्य फूत्कारत्वादेः न पचधातुशक्यतावच्छेदकत्वम्। अपि च फूत्कारादिकं विनैव चैत्रनिष्ठव्यजनबीजनादिक्रियान्तरमादाय स्वतस्सिद्धज्वालया जायमाने ओदने चैत्रः पचतीति प्रयोगाच्च। यदि तत्तद्व्यापारस्य तत्तद्रूपेणानुभवः स्यात् तदा यागः इच्छा ज्ञानं वेति यागत्वावच्छिन्नविशेष्यक-इच्छात्वज्ञानत्वादिप्रकारकस्य वादिनां संशयस्य अनुपपत्तेश्च। ततश्च पचति यजति इत्यादिधातुश्रवणानन्तरं बुध्यमानं पाकत्वायागत्वादिकमेव विक्लित्त्यादिफलजनकव्यापारवृत्ति अखण्डोपाधिरूपं सामान्यं पच्यादिधातुशक्यतावच्छेदकमिति युक्तम्। पाकत्वादिजातौ च पाकः पाकः इत्यनुगतप्रत्यक्षमेव प्रमाणम्। अथ वा अनुमानं प्रमाणम्। तथा हि — विक्लित्त्यादिफलजनकता किंचिद्धर्मावच्छिन्ना जनकतात्वात् दण्डनिष्ठघटजनकतावत् इति वा पचधातुशक्यता किंचिद्धर्मावच्छिन्ना शक्यतात्वात् घटपदशक्यतावत् इति वा अनुमानेन पाकत्वजातिसिद्धिः। एवं यागत्वादिजातिरपि। पाकनिष्ठं फलोपधायकव्यापारत्वं न पचतीति शब्दात् बुध्यते, अपि तु प्रत्यक्षादिप्रमाणेन बुध्यते। अत एव फलोपधायकव्यापारस्य शब्दात् न बोधः, इत्युक्तत्वादेव फलमपि न

द्वितीयया बुध्यते, अपि तु कर्मत्वरूपोऽखण्डधर्म एव तथा बोध्यते। पाकयागादि-शक्ततावच्छेदकं च पचादितत्तद्धातुत्वम् इति घट्टार्थः। अभासमानस्य = शब्दतो-ऽज्ञायमानस्य। वादिविप्रतिपत्तीति। देवतोद्देशेन द्रव्यत्यागो यागः। स्वस्वत्व-निवृत्तिविशिष्टपरस्वत्वप्रकारकेच्छा अथवा तादृशज्ञानं याग इति विप्रतिपत्तिः।

## पाकपदार्थनिर्वचनम्

**पाकत्वादिकञ्च विक्लित्तिजनकव्यापारवृत्त्येव, न तु तत्प्रयोजकयत्नादिवृत्त्यपि। 'पाकं करोमी'त्यादिना यत्नादेः पाकात्पृथग्विव्रियमाणत्वात्। न च घञादिसमभि-व्याहृतधातोः फल एव शक्तिकल्पनात् पृथग्विवरणोपपत्तिः, अनेकशक्तिकल्पने व्यापारविषयकशक्तिप्रतिबन्धकल्पने वा गौरवात्। 'ग्रामो गमनवानि'ति प्रतीत्या-पत्तिभयेन व्यापारप्रतीतेरप्यावश्यकत्वाच्च। अत एव विक्लित्तिजनकव्यापारसमूह एव पाकपदार्थः, न तु तज्जनकयत्नादिरपि, तस्य पृथग्विव्रियमाणत्वेन पच्यर्थत्वा-भावात्।**

**अत एव — तेजस्संयोगमात्रं पच्यर्थः, न तु विक्लित्त्यनुकूलव्यापारसामान्य-मित्यपि प्रत्युक्तम्। अग्निसंयोगानुकूलकृत्यभाववत्यपि भक्तविक्लित्त्यनुकूलावस्रा-वणकर्तरि पचतीति प्रयोगात्।**

**अत एव पाकात्पृथग्विव्रियमाणयत्नादेर्भासमानस्य भानकारणजिज्ञासायां पारि-शेष्यादाख्यातार्थत्वमेव। तस्मिंश्च पाकादेः प्रकारत्वम्, प्रकृत्यर्थत्वादेव। एवञ्च प्रत्ययार्थप्रधान्यस्मृतिरपि न संकोचिता भवति।**

**इति श्रीमदाचार्यखण्डदेवविरचिते भाट्टतन्त्ररहस्ये धात्वर्थनिरूपणं समाप्तम्।**

---

पाकत्वरूपोऽखण्डोपाधिश्च विक्लित्तिजनकफूत्कारादिव्यापार एव वर्तते, न तु तज्जनकप्रयत्नादिवृत्तिरपि। आदिपदेन इच्छाज्ञानयोः परिग्रहः। पाकं करोमि इति पाकात् पृथक् यत्नस्य करोतिना विव्रियमाणत्वात्।

अयमाशयः — पचतीत्यत्र पचधातुः आख्यातं चेति भागद्वयमस्ति। पचतीत्यस्य विवरणं पाकं करोति इति। तत्र यथासंख्यं पाकशब्दः पचधातुविवरणम्। करोतिशब्दः आख्यातविवरणम्। एवं च कृधात्वर्थभिन्नः व्यापार एव पचधात्वर्थः। कृधात्वर्थयत्नस्तु आख्यातार्थ इति लाभात् यत्नः न धात्वर्थः इति।

ननु आख्यातसमभिव्याहृतपचधातोः फलजनकव्यापारवाचकत्वेऽपि घञन्तपचधातोः विक्लित्तिरूपफलमात्रमर्थोऽस्तु, अत एव करोतीति व्यापारवाचककृधातुना व्यापारबोधनम्। ततश्च कृधातुना विवरणं न यत्नस्य आख्यातार्थत्वसाधकम् इति शङ्कितुराशयः। अनेकशक्तिकल्पने इत्यादिग्रन्थस्यायमाशयः — धातोः घञ्समभिव्याहारे फले शक्तिः आख्यातसमभिव्याहारे फलानुकूलकृत्यतिरिक्तव्यापारे शक्तिः इत्यनेकशक्तिकल्पने गौरवात्। धातोः सर्वत्र फले व्यापारे च शक्तिः। आख्यातस्य कृतौ शक्तिः इति कल्पनमेव युक्तम्। अपि च धातोः फलमात्रे यदि शक्तिः स्यात् तदा ग्रामो गमनवान् इति प्रयोगापत्तिः। धात्वर्थसंयोगरूपफलाश्रयत्वस्य ग्रामे सत्त्वात्। अत एव विक्लित्तिजनकव्यापारसमूहः पचधातोरर्थः घञन्तपाकपदार्थश्च। यत्नस्तु आख्यातार्थः, न तु धात्वर्थः। तस्य करोतिना पृथग्विव्रियमाणत्वात् पचधात्वर्थत्वाभावादिति भावः। पाकं करोति इत्यत्र घञन्तपचधातोः व्यापारे विद्यमानायाः शक्तेः प्रतिबन्ध इति कल्पने गौरवात् धातोः फलव्यापारोभयवाचकत्वम्। आख्यातस्य कृतिवाचकत्वमित्येव युक्तम्।

**अत एवेति।** वक्ष्यमाणहेतोरेवेत्यर्थः। तेजस्संयोगमात्रम् अग्निसंयोगमात्रम् मात्रशब्देन चुल्ल्युपरिधारणफूत्कारतण्डुलनिक्षेपमण्डस्रावणादिव्यवच्छेदः। एवकारव्यवच्छेद्यं स्वयमेवाह — **ननु** इति। स्पष्टमन्यत्। **भक्तेति।** भक्तशब्दस्यान्नमित्यर्थः। अन्ननिष्पादनानुकूलं यत् स्रावणं तण्डुलस्रावणं तत्कर्तरि। पाकात् पचधात्वर्थात् पृथक् कृधातुना विव्रियमाणस्य यत्नस्य भाने किं कारणमिति जिज्ञासायां पारिशेष्यात् आख्यातवाच्यत्वमेव कारणमिति निर्णीयते।

तस्मिन् आख्यातार्थे कृतौ धात्वर्थपाकादेः प्रकारत्वं प्रकृत्यर्थत्वात् इति। प्रत्ययार्थस्यैव विशेष्यत्वात् प्रकृत्यर्थस्य पाकादेः प्रकारत्वम्। प्रत्ययार्थप्राधान्यस्मृतिः = प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः तयोस्तु प्रत्ययः प्राधान्येन इति स्मृतिः

**इति सारप्रकाशिकायां धात्वर्थनिरूपणं समाप्तम्।।**

# आख्यातार्थनिरूपणम्

## पार्थसारथिमिश्राणां मतरीत्याख्यातार्थविवरणम्

अत्र च पाकाद्यनुकूलव्यापारसामान्यस्यैव प्रत्ययार्थत्वम्, 'पाकं भावयती'ति णिजन्तभूधातुना व्यापारसामान्यवाचकेन विवरणात्। यदपि पाकं करोतीति विवरणम्, तदपि करोतेर्व्यापारसामान्यवाचकत्वादनुकूलमेव। नहि करोतिः यत्नार्थकः, तथात्वे करोतेर्यततेरिवाकर्मकतापत्तेः। फलव्यधिकरणव्यापारवाचित्वं हि धातोः सकर्मकत्वम्। फलसमानाधिकरणव्यापारवाचित्वञ्चाकर्मकत्वम्। पचेः फलं विक्लित्तिरोदनवृत्तिः, व्यापारश्चैत्रवृत्तिरिति व्यधिकरणत्वात् सकर्मकः। स्वापस्य फलं सुखम्, तच्चैत्र एवेति द्वयोस्समानाधिकरणत्वमिति, सोऽकर्मकः। तद्यदि करोतियतत्योः एकार्थकत्वम्, तदा एकस्यैवार्थस्य फलव्यधिकरणत्वम्, फलसमानाधिकरणत्वञ्च विरुद्धम्। अतः करोतिरपि व्यापारसामान्यवाच्येव।

---

पचधातोः पाकः (विक्लित्तिः) अर्थः। तदनुकूलाः फूत्कारादयः शारीराः यत्नश्च आत्मगतः सर्वेऽपि व्यापारत्वेन रूपेण आख्यातवाच्याः। पचति पाकं भावयति इति व्यापारसामान्यवाचिना णिजन्तेन भूधातुना आख्यातस्य विवरणात्। न च पचति पाकं करोति इति यत्नार्थककृधातुना आख्यातस्य विवरणात् तस्य यत्नार्थकत्वम्, न व्यापारसामान्यवाचकत्वमिति वाच्यम्। कृधातोरपि न यत्नमात्रवाचकत्वम्। अपि तु व्यापारसामान्यवाचकत्वम्। अतः आख्यातस्य व्यापारसामान्यवाचकत्वमेव। अपि च कृधातोः यत्नमात्रवाचकत्वे, यत्नमात्रार्थकयतधातोरिव अकर्मकत्वं स्यात्। न चेष्टापत्तिः। पचति पाकं करोतीति सकर्मकत्वानुभवात्। फलव्यधिकरणव्यापारवाचकत्वं सकर्मकत्वम्। फलसमानाधिकरण-

व्यापारवाचकत्वं अकर्मकत्वम्। यथा पचधातोः विक्लित्त्यनुकूलव्यापारवाचकत्वात् विक्लित्तिः फलम्। तत् ओदनवृत्ति। तदनुकूलव्यापारः चैत्रवृत्तिः इति फलव्यापारयोः एकाधिकरणवृत्तित्वाभावात् फलानधिकरणवृत्तिव्यापारवाचकत्वात् पचधातोः सकर्मकत्वम्। स्वपिति इत्यत्र स्वपधातोः स्वापः अर्थः। तस्य फलं सुखम्। उभयोः स्वापसुखयोः एकत्र चैत्रे सत्त्वात् फलसमानिकरणः व्यापारः। तद्वाचकत्वात् स्वपधातोः अकर्मकत्वम्। यदि तु करोतियतत्योः कृधातोः यतधातोश्च यत्नरूपैकार्थत्वं स्यात्, तदा एकस्यैवार्थस्य फलव्यधिकरणत्वं = फलानधिकारणवृत्तित्वम्, फलसमानाधिकरणत्वं फलाधिकरणवृत्तित्वं च विरुद्धम्। अतः करोतिरपि कृधातुरपि व्यापारसामान्यवाची। तेन विवरणात् तिङः व्यापारसामान्यवाचकत्वमिति अपिशब्देन अभिप्रेतम्। व्यापारसामान्यशब्देन फूत्कारादिरूपः शारीरव्यापारः यत्नरूपः आत्मगतव्यापारश्च उच्यते। **व्यापारवाची** = व्यापारत्वावच्छिन्नवाचकः न तु कृतित्वावच्छिन्नवाचकः। **अत एवेति**। कृधातोः व्यापारसामान्यवाचकत्वादेव रथो गच्छतीत्यस्य रथो गमनं करोतीति विवरणं संगच्छते। अचेतने रथे यत्नान्वययोग्यत्वाभावात्। तस्य यत्नवाचित्वे रथः करोतीति वक्तुमशक्यत्वात्। कृधातोः व्यापारवाचकत्वे तु रथस्य चलनक्रियाश्रयत्वात् गच्छतीति प्रयोग उपपन्नो भवति। एतावता विक्लित्तिसंयोगादिरूपं फलं धात्वर्थः। तदनुकूलस्यन्दयत्नादिरूपः सर्वो व्यापारः आख्यातार्थः इति ज्ञायते।

**अत एव 'रथो गच्छती'त्यत्र रथो गमनं करोतीति विवरणमपि संगच्छते। अतः करोतिभावयतिभ्यां विवरणादाख्यातस्यापि फलोद्देश्यकं प्रकृतधात्वर्थातिरिक्तं व्यापारसामान्यं वाच्यम्। तच्च फलं क्वचिद्धात्वर्थः, क्वचित्स्वर्गादीत्यन्यदेतत्। व्यापारसामान्यस्य च विशेषाकांक्षारूपेतिकर्तव्यताकांक्षायां प्रयाजादिवाक्यैः विशेषसमर्पणमिति पार्थसारथिः।**

अस्मिन् निर्णये युक्त्यन्तरमाह — **अतः इत्यादिना**। गच्छतीत्यस्य गमनं करोति, गमनं भावयति इति कृधातुना णिजन्तभूधातुना च आख्यातस्य विवरणात् फलोद्देश्यकं = फलजनकं प्रकृतिभूतधात्वर्थातिरिक्तं व्यापारसामान्यं सर्वोऽपि व्यापारः वाच्यम् — शक्य इत्यर्थः। तच्च फलं विक्लित्त्यादि क्वचित् पच्यादिधात्वर्थः। आदिपदेन संयोगादिफलं गम्यादिधात्वर्थश्च ग्राह्यम्। क्वचित् यजेत स्वर्गकामः इत्यादौ स्वर्गादिरूपं फलम्। **व्यापारसामान्यस्य** चेति। व्यापारविशेषरूपा या इतिकर्तव्यता तदाकाङ्क्षायां समिधो यजति, इडो यजति इत्यादिवाक्यैः समिद्यागादिरूपविशेषव्यापारबोधनम्। इति **पार्थसारथिमतम्**। फलमात्रं धात्वर्थः तदनुकूलव्यापारः सर्वोऽपि शारीरः आत्मनिष्ठो यत्नश्च आख्यातार्थ इति सारम्।

### अत्रास्वरसः, यत्नस्यैवाख्यातवाच्यत्वमिति स्वमतञ्च

**वस्तुतस्तु तत्तफलभेदेन, तत्तद्व्यापारभेदेन चानुगतैकलघुभूतशक्यतावच्छेदकाभावात् पचति — पाके यतते, पाकं करोतीत्यादिविवरणाच्चाख्यातस्य यत्नत्वमेव शक्यतावच्छेदकम्। न च करोतिस्तदनुकूलव्यापारवाची। वातरोगादिना स्पन्दमाने चैत्रे स्पन्दानुकूलविजातीयवायुसंयोगरूपव्यापारवत्यपि 'नाहं स्पन्दं करोमि, अपि तु वातरोगेण मच्छरीरं स्पन्दते' इति प्रतीत्या करोतेर्यत्नार्थकत्वप्रतीतेः, यत्नत्वस्य शक्यतावच्छेदकत्वे लाघवाच्च। एवञ्च 'रथो गमनं करोती'त्यादावनुकूलव्यापारे कृञो लक्षणेति ध्येयम्।**

**न च भवत्यर्थकर्तृकर्मत्वाविशेषात् करोतेर्भावयतिपर्यायत्वम्। पर्यायत्वाभावेऽपि भावयतिशक्यतावच्छेदकव्याप्ययत्नत्वशक्यतावच्छेदककत्वेनापि भवत्यर्थकर्तृकर्मकत्वोपपत्तेः।**

---

16

तन्मतखण्डनम् — **वस्तुतस्त्वित्यादि**। धातुभेदेन तत्तत्फलानामनेकत्वात् तद्भेदेन तदनुकूलव्यापाराणां च भिन्नत्वात् तत्तत्फलवृत्ति तत्तद्व्यापारवृत्ति च एकं शक्यतावच्छेदकं दुर्वचम्। अपि च पचति इत्यस्य पाके यतते, पाकं करोति इति विवरणात् यत्नत्वमेव आख्यातशक्यतावच्छेदकम्। **न चेति**। कृधातुः धात्वर्थ-फलानुकूलव्यपारवाचकः, नतु पाकानुकूलयत्नमात्रवाचकः इति न शङ्कनीयम्। कृधातोः यत्नातिरिक्तव्यापारमात्रे सति यत्नतात्पर्येण प्रयोगात्। यथा — वातरोग-वशात् चैत्रशरीरे स्पन्दमाने सति चैत्रः स्पन्दानुकूलवातरोगरूपवायुसंयोगवान् भवति। तद्दशायां चैत्रो वदति — नाहं स्पन्दं करोमि, अपि तु वातरोगेण मच्छरीरं स्पन्दते इति। अत्र "नाहं स्पन्दं करोमि अहं स्पन्दजनककृत्यभाववान् इति हि अर्थः। अनेन स्पन्दरूपव्यापारातिरिक्तः कृधात्वर्थः इति हि प्रतीयते। स च कृतिरूपः यत्नरूप इति व्यक्तम्। अपि च यत्नत्वस्य शक्यतावच्छेदकत्वे लाघवम्। व्यापारत्वस्य शक्यतावच्छेदकत्वे गौरवं च तज्जन्यत्वे सति तज्जन्यजनकत्व-रूपत्वात्तस्येति भावः। **एवं चेति**। पूर्वमुपपादितया रीत्या कृधातोः यत्नवाचित्वे निश्चिते सति यत्र चेतनासाधारणयत्नो नास्ति तत्र कृधातोः प्रयोगे यथा रथो गमनं करोतीत्यत्र गमनशब्दस्य चलनक्रिया अर्थः। तत्समभिव्याहृतकृधातोः **लक्षणया तदनुकूलव्यापारोऽर्थः**। अथ वा चलनशब्दस्य उत्तरदेशसंयोगोऽर्थः कृधातोः तदनुकूलव्यापारः लक्षणया अर्थः इति भावः।

तत्र शङ्कते — **न च भवत्यर्थेति**। भवन्तं करोति भावयतीति व्युत्पत्त्या भूधात्वर्थस्य यः कर्ता तं भावयति इत्येवं भावनायाः भवत्यर्थकर्तृकर्मकत्वं प्रतीयते। तत्र णिजन्तभूधातोः व्यापारः अर्थः। तद्वत् भवन्तं करोति भावयति इति व्युत्पत्त्या कृधात्वर्थस्य भूधात्वर्थकर्तृकर्मकत्वात् कृधातो रपि व्यापारमात्रवाचकत्वं

न यत्नवाचकत्वम्। तथा च अत्रेदं अनुमानं विवक्षितम्। कृधातुः व्यापारमात्र-वाचकः न यत्नवाचकः भूधात्वर्थकर्तृकर्मकत्वात् णिजन्तभूधातुवत् इति।

तत्र समाधत्ते — **पर्यायत्वाभावेऽपीति**। भावयतिकरोत्योः भिन्नार्थकत्वेऽपि भावयतिशक्यतावच्छेदकं णिजन्तभूधातुशक्यतावच्छेदकं यत् व्यापारत्वं तद्व्याप्यं यत् यत्नत्वं तच्छक्यतावच्छेदकं यस्य तत्त्वेनापि भवत्यर्थकर्तृकर्मकत्वस्योपपत्तेः इत्यर्थः। तथा च पूर्वोक्तानुमाने हेतुरस्तु साध्यं मास्तु इति अप्रयोजकत्वशङ्कायां तद्वारकः तर्को नास्तीत्याशयः।

## सकर्मकत्वाकर्मकत्वनिर्वचनम्

**न च करोतेर्यत्नार्थकत्वे यततेरिवाकर्मकतापत्तिः। सत्यपि यत्नरूपैकार्थत्वे धात्वर्थतावच्छेदकतदनवच्छेदकफलभेदेन सकर्मकत्वाकर्मकत्वव्यवस्थोपपत्तेः। यततेर्हि चैत्रनिष्ठा क्रियैव यत्नसमानाधिकरणं फलम्। करोतेस्तु तद्व्यधिकरण-मुत्पत्त्याख्यं धात्वर्थतावच्छेदकं फलम्। ततश्च यथैव पचतिगच्छत्योः व्यापार-रूपक्रियैकत्वेऽपि फलभेदादेव व्यवस्था, एवमिहापि व्यापाररूपक्रियैकत्वेऽपि फलभेदादेव सकर्मकत्वाकर्मकत्वव्यवस्थोपपत्तिः। तत्फलं पुनरुभयत्रापि प्रमा-णान्तरावगतमेव धात्वर्थोपलक्षणम्, धातुवाच्यमेव वेत्यन्यदेतत्।**

---

पुनः शङ्कते — **न च करोतेरिति**। यदि कृधातोः यतधातोरिव यत्नार्थकत्वं स्वीक्रियते, तदा यतधातोरिव अकर्मकत्वं स्यात्। न चेष्टापत्तिः। घटं करोतीति सकर्मकत्वानुभवादिति शङ्का। समाधानमाह — **सत्यपीति**। कृधातोः यत-धातोश्च यत्नरूपैकार्थकत्वेऽपि धात्वर्थतावच्छेदकफलभेदेन द्वयोः धात्वोः सकर्म-कत्वाकर्मकत्वव्यवस्योपपत्तेः। अत्र मूले धात्वर्थतावच्छेदकतदनवच्छेदकफल-

भेदेनेति पाठः साधुः। अत एव यतेः फलकथनवेलायां फलस्य धात्वर्थताव-च्छेदकमिति विशेषणं न दत्तम्। ततश्च यततेः यत्नः अर्थः। तस्य फलं क्रिया चैत्रनिष्ठा। ततश्च क्रियातत्फलयोः एकनिष्ठत्वात् फलसमानाधिकरणव्यापार-वाचकत्वरूपं अकर्मकत्वं यततेरूपपन्नम्। अत एव पाके यतत इति प्रयोगः। कृधातोस्तु उत्पत्तिरूपं फलं धातुवाच्यम्। यत्नोऽपि धातुवाच्यः। उत्पत्तिस्तु फलनिष्ठा यत्नः आत्मनिष्ठ इति। फलव्यधिकरणव्यापारवाचकत्वात् सकर्मक-त्वम्। फलसमानाधिकरणत्वं फलाधिकरणवृत्तित्वम्। फलव्यधिकरणत्वं फला-नधिकरणवृत्तित्वम्। ततश्च चैत्रः घटं करोतीत्यतः घटनिष्ठोत्पत्त्यनुकूलयत्ना-श्रयत्वं चैत्रवृत्तीति बोधः। चैत्रो यतते इत्यतः चैत्रवृत्ति यत्नाश्रयत्वम् इति, अथवा चैत्रवृत्ति पाकविषयकयत्नाश्रयत्वमिति बोधः इति भावः। एतादृशस्थले आश्रयत्वं आख्यातार्थ इति पूर्वमुक्तं स्मर्तव्यम्। ततश्च फलसमानाधिकरणव्यापारवाचकत्वं अकर्मकत्वम्। फलव्यधिकरणव्यापारवाचकत्वं सकर्मकत्वम्। फलस्य धात्वर्थत्व-धातुभिन्नार्थत्वविशेषणे न नैर्भर्यं खण्डदेवस्य।

अत्राहुः — खण्डदेवः आख्यातस्य व्यापारसामान्यवाचित्वमिति शास्त्र-दीपिकाकारस्य मतं निरस्य वार्तिकव्याख्यातुः भट्टसोमेश्वरस्य मनमनुवर्तमानः आख्यातवाच्यः प्रयत्न इति पक्षं समर्थयति स्म। तस्य गमकानि इमानि भाष्यवाक्यानि — तथा यतेत यथा किंचित् भवति इति प्रयत्नवाचित्वमाख्यातस्य विवृतम्। इन्द्रियकामाधिकरणे जुहुयादिति शब्दस्य एतत्सामर्थ्यम् यत् होम-विशिष्टं प्रयत्नमाहेत्यभिधानात् होमे यतेतेत्यर्थः सूचितो भवति। अस्यायमा-शयः — प्रयत्नस्येच्छायोनित्वात् निष्फले प्रयत्नो न भवति। अतस्तस्य भाव्यनिष्ठत्वमवगम्यते। धात्वर्थे निष्पत्तिमात्रेण फलवत्त्वासिद्धेः धात्वर्थकरणकस्य

प्रयत्नस्य फलसाधनत्वं न विहन्यते। अतः प्रयत्न एवाख्यातार्थः — इति। तथा च न्यायसुधा —

प्रयत्नव्यतिरिक्तार्थीभावना तु न शक्यते।
वाक्कुमाख्यातवाच्येह प्रस्तुतेत्युपरम्यते।।
वोढ्रश्वादिगतं यत्नं रथादावुपचर्य वा।
तिङ्वाच्यो हि करोत्यर्थः तदन्यानुपलम्भनात्।
न चौलूक्यैः प्रयत्नस्य गुणत्वपरिभाषणात्।
न करोत्यर्थता शङ्क्या सिद्धरूपा प्रयोगतः।।
बुद्धीच्छाद्वेषयत्नानां शब्दज्ञैः कर्मतेष्यते।
आचार्यैश्च प्रयत्नस्य व्यापारत्वाभिधानतः।।
धात्वर्थव्यतिरिक्ता सा प्रयत्नाख्यार्थभावना।।
यजत्यादिपराख्यातवाच्यैवेति समञ्जसम्।। इति।

न्यायाचार्या उदयनाचार्या अपि आख्यातस्य प्रयत्नार्थकत्वं साधितवन्तः। तत्जिज्ञासूनामुपकारायात्र लिख्यते — न्यायकुसुमाञ्जलौ —

कृताकृतविभागेन कर्तृरूपव्यवस्थया।
यत्न एव कृतिः पूर्वा परस्मिन् सैव भावना।।

घटः कृतः नाङ्कुर इति कृताकृतव्यवहारव्यवस्थया चेतनाचेतनकारकसमुदायेन कार्ये निष्पाद्यमाने चेतन एव कर्तृत्वव्यवस्थया च पूर्वा मुख्यभूता कृतिः यत्नः एव। परस्मिन् अन्यत्र जघन्ये गौणे या कृतिः व्यवह्रियमाणा तन्तवः कुर्वन्तीत्यादौ सा केवलमनुकूलव्यापारात्मकभावनायामिति श्लोकार्थः। अथवा पूर्वापरस्मिन् इत्येकपदम्। पूर्वापरीभूतव्यापारकलापे फलभाव्यको यत्न एव कृतिरित्युच्यते। सैव भावनेत्युच्यते इत्यर्थः। यद्वा कर्तृरूपव्यवस्थया कृधातोः

कर्तरि तृचा निष्पन्नस्य कर्तृ इति शब्दस्वरूपस्य यत्नाश्रयवाचकत्वनिश्चयात् कृञो यत्नार्थकत्वम्। पूर्वापरीभूतक्रियासमूहविषयिणी सैव कृतिरेव भावनेत्यर्थः। मणि-दीधित्यादिग्रन्थेष्वपि कृधातोर्यत्नवाचित्वं साधितम्। अधिकविस्तरः मदीयशाब्द-बोधमीमांसायां द्रष्टव्यः।

## उक्तलक्षणखण्डनम्, लक्षणान्तरप्रणयनञ्च

**वस्तुतस्तु — एतल्लक्षणस्य कौस्तुभोक्तरीत्या अव्याप्त्यादिदोषदुष्टत्वात् अविवक्षाविरहविशिष्टकर्माकांक्षधातुत्वमेव सकर्मकत्वम्, तदभावश्चाकर्मकत्वमि-त्येवं कौस्तुभोक्तलक्षणं युक्तम्। अत्र चाकांक्षा समभिव्याहारात्मिका शब्दधर्मः। तेन सत्यप्यर्थैकत्वे यथा घटः कर्मत्वमित्यादावनाकांक्षत्वम्, घटमित्यादौ साकांक्षत्वम्, तथैव यततेः कर्मानाकांक्षत्वम्, करोतेश्च कर्मसाकांक्षत्वमविरुद्धम्। पच्यादेश्च स्वरूपेण कर्मसाकांक्षत्वेऽप्यविवक्षादशायामकर्मकत्वादविवक्षाविरहेति। अत एव ओदनस्य पच्यत इति भावेऽपि प्रयोगः, आसादिधातूनाञ्च स्वरूपेणा-कर्मकाणामपि मासादिकालयोगे कर्मसाकांक्षत्वात् सर्मकत्वाच्चैत्रेणास्यते मास इति प्रयोगोपपत्तिः।**

---

प्रकृतमनुसरामः — फलसमानाधिकरणव्यापारवाचकत्वम अकर्मकत्वम् फल-व्यधिकरणव्यापारवाचकत्वं सकर्मकत्वमिति पूर्वमुक्तम्। तत्रानुपपत्तिमालोच्य सकर्मकत्वाकर्मकत्वे प्रकारान्तरेण लक्षयति — **वस्तुतस्तु इत्यादिना। कौस्तु-भोक्तरीत्येति।** पूर्वोक्तसकर्मकत्वाकर्मकत्वलक्षणयोः अव्याप्त्यादिदोषदुष्टत्वं भावा-र्थाधिकरणे कौस्तुभे प्रतिपादितं यथा — अतो नेयं सकर्मकाकर्मकयोर्निरुक्तिः तथा हि — फलव्यधिकरणो यो व्यापारः तद्वाचकत्वं सकर्मकत्वम् इत्यङ्गीकारे

फलाविवक्षया अकर्मकत्वेनाभिमतेषु पच्यादिष्वतिव्याप्तिः। तत्र फलव्यधिकरणत्वस्य वस्तुतो व्यापारे सत्त्वात्। आस्ते इत्यादीनामकर्मकाणामपि कालादिकर्मणा सकर्मकत्वस्य आस्यते मासः चैत्रेण इत्याद्यर्थमावश्यकतया तत्रास्य लक्षणस्याव्याप्तिश्च। फलवैयधिकरण्यस्य व्यापारे वस्तुतः असत्त्वात्। अत एव फलव्यधिकरणत्वेन व्यापारवाचित्वं तत्त्वमिति स्वीकारेऽपि अव्याप्तितादवस्थ्यमेव। किं च फलव्यधिकरणत्वस्य वस्तुस्वभावबललभ्यत्वेन वाच्यत्वाङ्गीकारे गौरवं च — इति। कौस्तुभोक्तं लक्षणमेवानुवदति — अविवक्षाविरहविशिष्टकर्मसाकाङ्क्षधातुत्वं सकर्मकत्वम्। अविवक्षाविरहविशिष्टकर्मसाकाङ्क्षत्वाभावः अकर्मकत्वम्। अस्ति चेदं घटं करोतीत्यादौ। कृञो नियमेन विवक्षायां सत्यां कर्मपदसाकाङ्क्षत्वात् न तु पर्यायत्वेऽपि यततेः। आकाङ्क्षायाः पदसमभिव्याहाररूपायाः शब्दधर्मत्वेन पर्यायत्वाबाधकत्वात्। सत्यप्यर्थैक्ये यथा घटः कर्मत्वमानयनं कृतिः इत्यादावनाकाङ्क्षत्वम्, घटम् इत्यादेः साकाङ्क्षत्वम्, तथैव यततेः कर्मानाकाङ्क्षत्वम्, करोतेः कर्मसाकाङ्क्षत्वं चाविरुद्धम्। अविवक्षाविरहविशिष्टेति विशेषणस्य प्रयोजनमाह — **पच्यादेश्चेति**। सकर्मकस्य पच्यादिधातोः किं पचतीति कर्माकाङ्क्षायां सत्यामपि कर्माविवक्षादशायामकर्मकत्वाङ्गीकारात् तद्दशायां सकर्मकत्ववारणाय अविवक्षाविरहविशिष्टेत्युक्तम्। **अत एवेति**। सकर्मकत्वलक्षणे अविवक्षाविरहेति विशेषणदानादेव। ओदनस्य पच्यते इति सकर्मकस्यापि पचेः भावेऽपि प्रयोगः इष्यते। तथा आस उपवेशने इत्यादिधातूनां स्वरूपेणाकर्मकाणामपि मासकालयोगे कर्मसाकाङ्क्षत्वात् सकर्मकत्वमस्तीति आस्यते मास इति कर्मणि प्रयोगस्योपपत्तिरिति भावः।

एवमेकस्यैव ग्रथधातोः चैत्रनिष्ठव्यापारवाचित्वरूपधर्मपुरस्कारेण कर्मसाकांक्षत्वात् सकर्मकत्वम्, पुष्पनिष्ठव्यापारवाचित्वेन कर्मानाकांक्षत्वादकर्मकत्वञ्च द्रष्टव्यम्।

अतो यत्नार्थकत्वेऽपि करोतेस्सकर्मकत्वाक्षतेः, तेन विव्रियमाणाख्यातस्यापि यत्नार्थकत्वम्। एवञ्च'रथो गच्छति, जानाति, इच्छति, प्रयतते' इत्यादौ यत्र यत्नस्य बाधः, तत्रानुकूलव्यापारस्य, आश्रयत्वस्य वा लक्षणेति द्रष्टव्यम्, नश्यतीत्यादौ प्रतियोगित्वे लक्षणा। तत्सिद्धं भाक्तमुख्यसाधारण्येन सर्वत्र धात्वर्थातिरिक्ता भावनाख्यातार्थः — इति।

---

एवमेकस्यैव ग्रन्थधातोरिति। ग्रन्थ बन्धने इति चुरादौ पठितो धातुः। तस्यैकस्यैव अर्थविशेषप्रतिपादकत्वपुरस्कारेण कर्मसाकाङ्क्षत्वम्, तदनाकाङ्क्षत्वं च दृश्यते। तथाहि पुष्पं ग्रथ्नानि चैत्र इत्यत्र ग्रथितृचैत्रनिष्ठव्यापारवाचित्वरूपधर्मपुरस्कारेण कर्मसाकाङ्क्षत्वात् सकर्मकत्वम्। ग्रथ्यमानपुष्पनिष्ठव्यापारवाचित्वेऽकर्मकत्वम्। पुष्पेण ग्रथ्यते इति।

उक्तमर्थं पुनः सारतया निगमयति — अतो यत्नार्थकत्वेऽपीत्यादिना। भाक्तमुख्य साधारण्येनेति। आश्रयत्वप्रतियोगित्वादिकं भाक्तभावना अमुख्यभावना। अत एव तत्राख्यातस्य लक्षणा। यत्नस्तु मुख्या भावना। अमुख्या = लक्षणया बोध्या। मुख्या = शक्त्या बोध्या। उभयविधापि भावना आख्यातार्थ इति संक्षेपः।

## शक्ततावच्छेदकनिरूपणम्

तस्याश्च शक्ततावच्छेदकं करोतीतिविव्रियमाणाख्यातत्वम्। अतश्च भवति इत्यादौ करोतिना विवरणाभावेन भावनाभावात्, धात्वर्थ एव कारकान्वयः, परम्परासम्बन्धेनैकत्वान्वयश्चेति प्राञ्चः।

**वस्तुतस्तु लाघवादाख्यातत्वमेव शक्ततावच्छेदकम्। भवतीत्यादावाश्रयत्वे लक्षणा। एवञ्च कारकाद्यन्वये न व्युत्पत्त्यन्तरकल्पनाऽपि। शक्ततावच्छेदकञ्च न लत्वम्। यथाकथञ्चिदुपस्थितलकारादपि भावनोपस्थित्यापत्तेः। नाप्यादेशोपस्थापितलत्वम्, शानजाद्यादेशोपस्थापितलकारादपि शक्त्या भावनाबोधापत्तेः। नापि तिवाद्यादेशोपस्थापितलत्वम्। तथात्वे तिबादीनामनेकेषां प्रवेशात् शक्ततावच्छेदकानामननुगमेन शक्त्यनेकत्वापत्तेः। तद्वरं तिप्त्वादिनैव प्रत्येकं शक्तिः। अत एव तिप्त्वादिना लकारानुपस्थितावपि शाब्दबोधः। अन्यथाऽनेकेषु तिबादिषु तावतां शक्तिभ्रमाणां कारणत्वकल्पने गौरवात्।**

---

अथ भावनाशक्ततावच्छेदकम् निरूपयति — **अस्याश्चेति**। अस्याः मुख्यभाक्तसाधारणायाः भावनायाः शक्ततावच्छेदकम् करोतिविव्रियमाणम् आख्यातत्वम्। **अतश्चेत्यादि**। भवतीत्यादौ आख्यातस्य करोतिना विवरणाभावेन भावनायाः अभावात् धात्वर्थ एव आख्यातार्थसंख्यायाः स्वाश्रयकर्तृनिष्ठत्वरूपपरंपरासंबन्धेन धात्वर्थभवने सत्तायामन्वयः इति प्राचीनमीमांसकाः।

नवीनमतमाह — **वस्तुतस्तु** इत्यादिना। करोतिविव्रियमाणमिति विशेषणरहितमाख्यातत्वं शक्ततावच्छेदकम्। भवतीत्यादौ आख्यातस्य आश्रयत्वे लक्षणा। **एवं चेति**। कारकप्रकारकशाब्दबोधं प्रति करोतिविव्रियमाणाख्यातजन्योपस्थितिः करणमिति एकः कार्यकारणभावः। भूधात्वर्थप्रकारकशाब्दबोधं प्रति भूधातूत्तराख्यातजन्योपस्थितिः कारणमिति एकः कार्यकारणभावः। इति कार्यकारणभेदो नास्तीत्यर्थः। आख्यातार्थातिरिक्तप्रकारकशाब्दबोधं प्रति आख्यातजन्यमुख्यभाक्तसाधारणभावनोपस्थितिः कारणमिति एक एव कार्यकारणभाव इति भावः।

भावनायाः शक्ततावच्छेदकमाख्याततत्वमिति पूर्वमुक्तम्। तच्छक्ततावच्छेदकं लत्वम् इति केचिदाहुः। तन्न। यथाकथंचित् उपस्थितादपि भू + ल इत्येव-मुपस्थितादपि भावनोपस्थित्यापत्तेः। नापि श्रूयमाणः यः तिप् ततः स्थान्यादेश-भावसंबन्धं पुरस्कृत्य उपस्थापितत्वं लकारनिष्ठं, भावनाशक्ततावच्छेदकम्। लकारस्य यः आदेशः शानच् ततः उपस्थितात् लकारादपि भावना बोधापत्तेः। एतद्दोषवारणाय तिबाद्यादेशोपस्थापितलत्वं भावनाशक्ततावच्छेदकमिति यद्युच्यते तदा तिबदीति आदिपदेन तस्-झसादीनामनेकेषां शक्ततावच्छेदककोटौ प्रवेशात् शक्ततावच्छेदकानां अनेकत्वेन शक्ततावच्छेदकभेदेन शक्तिभेदापत्तेः। तदपेक्षया लाघवेन श्रूयमाणतिवादीनां तिप्त्वदिना प्रत्येकमेव भावनायां शक्तिरिति युक्तम्। अन्यथा तिबादिश्रवणानन्तरं तत्स्थानिनः लकारस्यानुपस्थितौ शाब्दबोधो न स्यात्। यदि लकारस्यानुपस्थितिमतां पुंसां तिवादिषु शक्तत्वभ्रमात् शाब्दबोध इति कथ्यते, तदा अनेकेषु तिबादिषु बहूनां शक्तिभ्रमाणां कारणत्वं कल्पनीयमिति गौरवं स्यादिति भावः।

**एतेन आख्याततत्वमेवैकं शक्ततावच्छेकम्। तच्च शक्यत्वसम्बन्धेनाख्यात-पदवत्त्वम्। तद्वत्वञ्च तिबादिष्विति, ते शक्ताः — इत्यपास्तम्। तिबादिषु आख्यातपदवाच्यत्वाज्ञानेऽपि तिप्त्वेन पचतीत्यादौ ज्ञानेऽपि भावनाबोधात्। अतस्सिद्धम् आख्यातार्थो भावनेति।**

---

एतेनेत्यादि। केचित् आहुः — आख्याततत्वमेव एकं शक्ततावच्छेदकम्। तच्च शक्यत्वसंबन्धेन आख्यातपदवत्त्वम्। इदं अष्टादशतिङ्साधारणम्। तेषामाख्यात-पदवाच्यत्वात् शक्यत्वसंबन्धेन आख्यातपदवत्त्वात्। एवं च तिबादयः अष्टादश आख्यातपदशक्या इति वदन्ति। तन्मतं न युक्तम्। तिबादयः आख्यातपदशक्याः

इति ज्ञानाभावेऽपि तिप्त्वादिना ज्ञानेऽपि पचति अपचत् इत्यादौ भावनाविषयकशाब्दबोधोत्पत्तेः व्यतिरेकव्यभिचारेण तत्ज्ञानस्य शाब्दबोधकारणत्वाभावादिति भावः। ततश्च आख्यातार्थो भावनेति सिद्धम्।

## भावनायाः प्राधान्योपसंहारः

**तस्याञ्च धात्वर्थस्य प्रकारत्वेनान्वयः। प्रत्ययार्थप्राधान्यस्मृतेस्संकोचे प्रमाणाभावात्। भावप्रधानमित्यस्य आख्यातार्थेषु अनेकेषु कस्य प्राधान्यमित्यपेक्षिते, भावपदवाच्यभावनाप्राधान्यमित्यपेक्षितार्थविधायकत्वोपपत्तौ प्रत्ययार्थप्राधान्यस्मृतिसंकोचानुपपत्तेः। अतो निरुक्तस्मृतौ भावपदेन वैयाकरणपरिभाषितधात्वर्थस्य न ग्रहणमित्युक्तमेव।**

---

**तस्यां चेत्यादि**। आख्यातार्थभावनायां धात्वर्थस्य प्रकारतया अन्वयः। तस्य शाब्दबोधे प्रकारतया भानमिति यावत्। तत्र हेतुमाह — **प्रत्ययार्थप्रधान्यस्मृतेरिति**। प्रकृतिप्रत्ययार्थयोर्मध्ये प्रत्ययार्थस्य प्राधान्यमिति स्मृतेः आख्यातातिरिक्तप्रत्ययार्थविषयकतया संकोचे प्रमाणभावदित्यर्थः। तर्हि भावप्रधानमाख्यातमित्यस्य कोऽर्थ इति शङ्कायामाह — **भावप्रधानमित्यस्येति**। आख्यतार्थेषु अनेकेषु मध्ये कस्य प्राधान्यमिति शङ्कायाम् भावपदवाच्याया भावनायाः प्राधान्यम् इत्येवम् जिज्ञासितप्राधान्यरूपार्थविधायकत्वोपपत्तौ अनपेक्षितप्रत्ययार्थप्राधान्यसंकोचेन धात्वर्थप्राधान्यबोधकत्वानुपपत्तेः इति भावः। **अतो निरुक्तस्मृताविति**। भावप्रधानमाख्यातमित्यकारकयास्ककृतनिरुक्तस्मृतिस्थभावपदेन वैयाकरणपरिभाषितधात्वर्थस्य न ग्रहणमिति भावः। धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते इति वैयाकरणपरिभाषा।

न च प्रत्ययार्थप्राधान्यस्मृतेः सुबाद्यर्थलिङ्गसंख्यादेः प्रकृत्यर्थं प्रति प्रकारतया संकोचावश्यकत्वे, यत्र करणत्वादौ प्रमाणान्तरेण प्रकृत्यर्थं प्रति प्राधान्यं प्रमितम्, तदनुवादमात्रतया भावनाविषयेऽपि (बाधे) बाधकाभावः। 'प्रत्ययार्थं सह ब्रूत, तयोस्तु प्रत्ययः प्राधान्येन' इत्येकवचनश्रवणेन प्रत्ययार्थत्वसामानाधिकरण्येन प्रकृत्यर्थं प्रति प्राधान्यनियमात्। सुबाद्यर्थलिङ्गसंख्यादीनामप्राधान्येऽपि क्षतिविरहात्।

वस्तुतस्तु लिङ्गसंख्यादीनामपि प्रत्ययार्थान्तराणां न प्रकृत्यर्थप्रकारता, अपि तु समानाभिधानश्रुत्या करणत्वादिरूपप्रत्ययार्थान्तरम्प्रत्येवेति वक्ष्यते। अतस्सिद्धं धात्वर्थस्य भावनायां प्रकारता — इति।

---

पुनः शङ्कते — **न च प्रत्ययार्थेति**। प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थः प्रधानम् इति स्मृतिस्थप्रत्ययपदं सुबादिभिन्नप्रत्ययपरम् इति संकोचनीयम्। यतो हि चैत्रः इत्यादौ सुबाद्यर्थलिङ्गसंख्यादेः प्रत्ययार्थत्वेऽपि प्रकृत्यर्थेऽन्वयेन प्रकारतया भानमस्ति। ततश्च तादृशस्मृतेः संकोचस्य आवश्यकत्वात् अर्थात् स्मृतिस्थप्रत्ययार्थपदस्य सुबादिभिन्नप्रत्ययार्थपरतया संकोच आवश्यकः। न च तथा सति चैत्रेण पच्यते इत्यादौ तृतीयादिसुबर्थकरणत्वादेः प्रकृत्यर्थं प्रति विशेष्यत्वानुपपत्तिः इति वाच्यम्। प्रत्ययार्थप्राधान्यस्मृतिः न प्रत्ययार्थप्राधान्यविधायिका, अपि तु तृतीयादिविभक्त्यर्थकरणत्वादिप्राधान्यानुवादिका। अतः सा यथा सुबर्थसंख्याविषये बाध्यते, तथा आख्यातार्थभावनाविषयेऽपि प्राधान्यबाधिका भवतु इति शङ्कितुराशयः। समाधत्ते — **प्रत्ययार्थं सहेत्यादिना**।

समाधातुरयमाशयः। प्रत्ययार्थप्राधान्यस्मृतिः प्रत्ययार्थत्वसामानाधिकरण्येन प्रकृत्यर्थं प्रति प्राधान्यं बोधयति,न तु प्रत्ययार्थत्वावच्छेदेन। अतः सुबर्थलिङ्गसंख्ययोः प्रकृत्यर्थं प्रति विशेषणत्वे बाधकाभावः। अतः प्रत्ययार्थत्वसामा-

नाधिकरण्येन प्रकृत्यर्थं प्रति प्राधान्यमिति नियमस्य यत्र बाधो नास्ति, यथा तृतीयार्थकरणत्वादौ तत्र प्रकृत्यर्थं प्रति विशेष्यत्वे बाधकाभावः। आख्यातार्थभावनायामपि प्रत्ययार्थत्वसत्त्वात् तत्सामानाधिकरण्येन भावनायां प्राधान्ये न कोऽपि बाधः इति। **एकवचनश्रवणेनेति**। तयोस्तु प्रत्ययः इत्येकवचनश्रवणेन सर्वे प्रत्ययाः स्वार्थं प्राधान्येन बोधयन्तीति नार्थः, किं तु केचन प्रत्ययाः प्राधान्येन स्वार्थं बोधयन्तीत्यर्थः। अनेन प्रत्ययार्थत्वसामानाधिकरण्येन प्राधान्यबोधका इत्येव स्मृतेः अर्थः। अनेन औत्सर्गिकोऽयं नियमः असति बाधकेऽनुसरणीयोऽयं नियम इति गभीरोऽयं भावः खण्डदेवाचार्यस्य। तदुक्तम्— **सुबर्थलिङ्गसंख्यादीनामिति**। अयं सारांशः — प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्य प्राधान्यमिति औत्सर्गिकः नियमः। भावप्रधानमाख्यातम् इति विशेषवचनम्। औत्सर्गिकनियमस्य क्वचिद्बाधेऽपि विशेषवचोऽनुगृहीतायाः पूर्वोक्तस्मृतेः बाधो नोचितः इति।

**वस्तुतस्तु** इत्यादि। चैत्रेण पच्यते इत्यादौ प्रत्ययार्थः करणत्वं पुंलिङ्गम् एकत्वसंख्या च। तेषु लिङ्गसंख्ययोः न प्रकृत्यर्थं प्रति प्रकारता। अपि तु एकपदवाच्यत्वरूपश्रुतिप्रमाणेन करणत्वे सामानाधिकरण्यसंबन्धेन = स्वाश्रयवृत्तित्वसंबन्धेनान्वयः। स्वं — पुंस्त्वम् एकत्वं च तदाश्रयः चैत्रः तद्वृत्तित्वं करणत्वे। उपसंहरति — **अतः सिद्धं धात्वर्थस्य भावनायां प्रकारता इति**।

## धात्वर्थस्य भावनायां प्रकारतानिरूपणम्

**धात्वर्थश्च क्वचिच्छक्यार्थ एव प्रकारः। यथा 'सोमेन यजेत' इत्यादौ। क्वचिल्लक्ष्यार्थ एव। यथा — 'अग्नीषोमीयं पशुमालभेत' इत्यादौ यागः। लक्ष्यार्थोऽपि क्वचिच्छक्यार्थयुक्तः। यथा 'पृष्ठैरुपतिष्ठते' इत्यादावात्मनेपदानुरोधेन**

**समीपस्थतिरूपशक्यार्थविशिष्टमभिधानम्। वस्तुतस्तु 'सोमेन यजेत' इत्यादौ, तत्तद्विधिष्वपि विजातीययागत्वादिनैव लक्षणेति शक्यार्थान्वयोऽन्यत्रानुसन्धेयः।**

---

क्वचित् धातोः यः शक्यार्थः स एव आख्यातार्थभावनां प्रति प्रकारः। यथा सोमेन यजेत इत्यादौ। अत्र हि यजधात्वर्थो यागः देवतोद्देशेन द्रव्यत्यागरूपः धातोः शक्यार्थः। तस्य करणत्वेन आख्यातार्थभावनायामन्वयः। यागकरणिका भावनेति बोधः। क्वचित् धातोः लक्ष्यार्थः भावनायामन्वेति। यथा अग्नीष्टोमीयं पशुमालभेन इत्यादौ। अत्र हि आङ्पूर्वकलभधातोः स्पर्शः शक्यार्थः। यागः लक्ष्यार्थः। तस्यैव देवतासंबन्धात्। तस्य भावनायामन्वयः। लक्ष्यर्थोऽपि क्वचिच्छक्यार्थयुक्तः भावनायामन्वेति — यथा पृष्ठैरुपतिष्ठते इत्यत्र। अत्र उप इत्युपसर्गपूर्वकस्थाधातोः "उपान्मन्त्रकरणे" (पा.सू 1.3.25) इति सूत्रेण आत्मनेपदं भवति। अत्र धातोः समीपस्थितिः शक्यार्थः। लक्ष्यार्थस्तु समीपस्थितिपूर्वकस्तोत्रम्। स्तोत्रं नाम गुणिनिष्ठगुणाभिधानं धातुलक्ष्यार्थ इति यावत्। तस्य करणतया आख्यातार्थभावयामन्वयः इति भावः। पृष्ठसंज्ञकसामकरणक — समीपस्थितिपूर्वकस्तुतिकरणकभावनेति वाक्यार्थः। **अभिधानम्** इति। गुणिनिष्ठगुणाभिधानमित्यर्थः। अत्र धातुलक्ष्यार्थः समीपस्थितिरूपशक्यार्थयुक्तः।

पूर्वं धातुशक्यार्थस्य भावनायामन्वयस्य सोमेन यजेन इति उदाहरणं दत्तम्। वस्तुतस्तत्र लक्ष्यार्थस्यैव भावनायामन्वय इत्याह — **वस्तुतस्त्विति**। सोमेन यजेत इत्यत्र शक्यार्थः यागत्वावच्छिन्नः न विवक्षितः। अपि तु विजातीययागत्वावच्छिन्नरूपः लक्ष्यार्थ एव। तर्हि धातुशक्यार्थस्य भावनायामन्वये किमुदाहरणमिति शङ्कायामाह — **शक्यार्थान्वयोऽन्यत्रानुसन्धेय** इति। **अन्यत्र** — ऋत्विग्भ्यो दक्षिणां ददाति इत्यादौ।

## धात्वर्थस्य भावनान्वये संसर्गविमर्शः

तस्य च कृतौ संसर्गो नानुकूलत्वम्, पचति पाकं करोतीति पाककर्मत्वस्यैव विवरणबलेन संसर्गत्वप्रतीतेः। अत एवौदनं पचतीत्यादौ पाकेनौदनं करोतीति विवरणात् पाककरणत्वस्यापि प्रतीतेस्तस्यापि संसर्गत्वम्। अतश्च कर्मत्वकरण-त्वान्यतरसंसर्गेणैव सर्वत्र भावनायां धात्वर्थस्यान्वयः। यद्यपि कृतिं प्रति पाकस्य करणत्वं बाधितम्, कृतिसाध्यत्वात्पाकादेः। तथापि स्वनिष्ठकरणत्वनिरूपकौद-नोद्देश्यकत्वसम्बन्धेन पाकस्य कृतावन्वयात्, करणत्वस्यापि संसर्गघटकतया संसर्गत्वोपपत्तिः। अस्ति चौदनस्यापि कृतावुद्देश्यताख्या विषयतेति नैतादृश-संसर्गबाधः।

---

धात्वर्थस्य शक्यस्य लक्ष्यस्य वा केन संबन्धेन आख्यातार्थकृतावन्वय इति जिज्ञासायामाह — **तस्य च कृतावित्यादिना**। पचति इत्यस्य पाकं करोति इति विवरणेन कृतौ पाककर्मकत्वस्यैव प्रतीत्या अनुकूलत्वं न संसर्गः — पाकानुकूला कृतिरिति। ततश्च धात्वर्थस्य पाकस्य कर्मत्वसंबन्धेन = स्वनिष्ठकर्मतानिरूप-कत्वसंबन्धेन कृतावन्वयः। **अत एव** = अनुकूलत्वसंबन्धेनान्वयाभावादेव ओदनं पचति इत्यादौ पाकेन ओदनं करोति इति विवरणात् पाककरणकत्वस्यापि प्रतीतेः करणत्वमपि संबन्धः। तथा च यथायोग्यं धात्वर्थस्य आख्यातार्थकृतौ कर्मत्व-करणत्वान्यतरसंबन्धेनान्वय इति भावः।

ननु धात्वर्थपाकस्य कृतिं प्रति करणत्वं बाधितम्। कृतिसाध्यत्वात् पाकस्य कृतिकरणत्वाभावात् इत्याशङ्क्य पाकस्य स्वनिष्ठकरणत्वनिरूपकौदनोद्देश्यक-त्वरूपपरंपरासंबन्धेन कृतावन्वयाभ्युगमात् न देषः। उक्तपरंपासंबन्धघटकत्वात्

करणत्वं संसर्ग इति कथ्यत इति समाधत्ते — यद्यपीत्यादिना तथापीति। ओदनोद्देश्यकत्वं कृतेरुपपादयति — अस्ति चेति।

**तत्र च यत्र विध्यश्रवणम्, तत्र द्वितीयान्तपदाद्यश्रवणे 'पचति चैत्रः' इत्यादौ धात्वर्थस्येष्टसाधनत्वाज्ञानेऽपि तस्य कर्मत्वमेव। आख्यातोपात्तभावनायाः करोत्यर्थतया तद्वदेव सकर्मकत्वनियमात्। अत एवाकर्मकधातुस्थले अपि आख्यातोपात्ताया भावनायाः सकर्मकत्वमेव। अत एव तस्यास्तदाकांक्षायां 'स्वास्थ्यकामः शयीते'त्यादौ कामपदोपात्तस्वास्थ्यादेरेव कर्मत्वेनान्वयः, स्वर्गकामपदेनेव लक्षणया स्वर्गादेः। धातुस्त्वकर्मक एव। अत एवात्र न भावनाकर्मणि द्वितीया। सा तु धात्वर्थकर्मण्येव।**

---

एतावता धात्वर्थस्य स्वकर्मकत्वस्वकरणकत्वान्यतरसंबन्धेन आख्यातार्थभावनायामन्वयः। पचतीत्यत्र पाककर्मकभावनायाः बोधः। ओदनं पचतीत्यत्र पाककरणकौदनोद्देश्यकभावनायाः बोधः इत्युपपादितम्। अथ यत्र विधिः लिङादिः न श्रूयते तत्र धात्वर्थस्य भावनायामन्वयप्रकारमाह — **तत्र चेति। इष्टसाधनत्वाज्ञानेऽपि इति।** इष्टसाधनत्वज्ञाने तु इष्टस्य कर्मत्वेनान्वयो भवेत् इति भावः। धात्वर्थस्य भावनायामन्वयविषये इत्यर्थः। यत्र विध्यश्रवणं विधिवाचकशब्दाश्रवणं तत्र द्वितीयान्तपदाद्यश्रवणे यथा पचति चैत्रः इत्यादौ, तत्र भावनायां धात्वर्थस्य कर्मत्वेनैवान्वयः। न तु करणत्वेन। फलाश्रवणात् स्वकरणकफलोद्देश्यकत्वसंबन्धेनान्वयासंभवात्। तथा च तत्र भावनायाः कृतिरूपायाः सकर्मकत्वात् कर्माकाङ्क्षायां समानपदोपात्तधात्वर्थस्यैव कर्मत्वौचित्यात् इति भावः। तद्वदेवेति। करोतिवदेवेत्यर्थः। यथा कृधात्वर्थस्य सकर्मकत्वं तथा कृधातुना विव्रियमाणस्याख्यातस्यापि सकर्मकत्वात् इति भावः। **अत एवेति।**

आख्यातस्य कृधातुना विव्रियमणस्य कृधातुवत् कर्मसाकाङ्क्षत्वादेव धातोः अकर्मकत्वेऽपि तदुत्तराख्यातस्य सकर्मकत्वात् अकर्मकधातूत्तराख्यातवाच्य-भावनायाः कर्माकाङ्क्षायां स्वास्थ्यकामः शयीत इत्यादौ कामनाविषयतया उपात्तस्य स्वास्थ्यस्यैव कर्मत्वेनान्वयः। तत्र दृष्टान्तः — स्वर्गकामपदेनेवेति। यथा स्वर्गकामो यजतेत्यत्र स्वर्गकामपदेन लक्षणया बोधितस्य स्वर्गस्य भावनायां कर्मत्वेनान्वयः तद्वत् इति भावः। धातुस्तु शयीतेत्यादौ अकर्मक एव। ननु अकर्मकधातुस्थलेऽपि स्वास्थ्यादेः कर्मत्वे तद्वाचकपदोत्तरं 'कर्मणि द्वितीया' (पा. सू 2.3.2) इति सूत्रेण द्वितीया कुतो न भवतीत्याशङ्कायामुक्तम् — **अत एवेति।** अत्र अकर्मकधातूत्तराख्यातस्थले आख्यातस्य सकर्मकत्वेऽपि धातोरकर्मकत्वा-देव धात्वर्थकर्मण्येव द्वितीयानुशासनात् भावनाकर्मवाचकधातूत्तरं न द्वितीया-विभक्तिः इति भावः।

**सकर्मकधातुस्थले यथा व्रीहीनवहन्ति इत्यादौ, तत्र तेषां प्रथमतो भावनायां कर्मत्वेनान्वयेऽपि, पार्ष्ठिकं धात्वर्थेऽपि कर्मत्वमिति, तेषां धातूनां सकर्मकत्वोप-पत्तिः। अतो भावनाया नित्यं सकर्मकत्वात् पचति चैत्रः इत्यादौ निरुक्तस्थले भावनायाः कर्माकांक्षायां समानपदश्रुत्या धात्वर्थस्यैव कर्मत्वम्। लौकिक-वाक्यत्वाच्च तस्य वैयर्थ्येऽपि न दोषः। वेदे तु विध्यन्तरैकवाक्यत्वादिना स्तावकत्वाद्यसम्भवेन स्वाध्यायविध्यवगतप्रयोजनवत्त्वानुरोधेन लडादेरेव लेड्भ्रम्, लेडर्थकत्वं वा लक्षणया परिकल्प्य, भावनायास्स्वर्गादिभाव्यान्तरपरिकल्पनया धात्वर्थस्य तत्र करणत्वेन अन्वयः। विधेः प्रवर्तकत्वान्यथानुपपत्त्या तत्समभि-व्याहृतायां भावनायामिष्टभाव्यकत्वावश्यम्भावात्। 'घटं पटञ्चानये'त्यादौ चकारं विना कर्मद्वयान्वयादर्शनात्, करोतेरिवाख्यातोपात्तभावनाया अपि एककर्मकत्व-नियमेन यागादेरपि तस्यां कर्मत्वानुपपत्तेश्च।**

ननु सकर्मकधातुस्थलेऽपि धात्वर्थकर्मणामपि भावनायामेव अन्वयस्वीकारात् धात्वर्थकर्मवाचकपदोत्तरं ओदनं पचतीत्यादौ द्वितीया न स्यात् इत्याशङ्क्य, तादृशस्थले प्राथमिकबोधे धात्वर्थकर्मणां कर्मत्वेन भावनायामन्वयेऽपि पार्ष्ठिक-बोधे धात्वर्थकर्मत्वेनैव कर्मणां भानात् द्वितीयाद्यनुशासनस्य पार्ष्ठिकबोधानुसारेण विभक्तिविधाने तात्पर्यात् कर्मणि द्वितीयायाः नानुपपत्तिः इत्याशयेन समाधत्ते — **सकर्मकधातुस्थल** इत्यादिना।

ननु पचति चैत्र इत्यादीनां वैयर्थ्यं स्यात्। पाकादेः अपुरुषार्थत्वेन तत्र चैत्रादेः प्रवर्तकत्वासंभवात् इत्यत आह लौकिकेति। तस्य पचति चैत्र इति वाक्यस्य। वैयर्थ्येऽपि पाकादेरपुरुषार्थत्वात् तत्र चैत्रादेःप्रवृत्त्यजनकत्वात् वैयर्थ्येऽपि न दोषः। वेदे तु व्रीहीनवहन्ति इत्यादौ व्रीहिभिर्यजेत इत्यादिविध्यन्तरैक-वाक्यत्वादिना स्तावकत्वासंभवेन सर्वेषामपि वाक्यानां स्वाध्यायोऽध्येतव्यः इति विधिना प्रयोजनवत्त्वस्य चावगमेन तदनुसारेण लडादेः लेट्त्वं लेडर्थकत्वं वा लक्षणया परिकल्प्य भावनायाः स्वर्गादिभाव्यान्तरकल्पनया धात्वर्थस्य तत्र करणत्वेनान्वयः।

ननु किमर्थोऽयं प्रयासः। वेदेऽपि धात्वर्थस्य कर्मत्वेनैव भावनायामन्वयोऽस्तु, करणत्वेनान्वयः कुत इति शङ्कायामाह — विधेः प्रवर्तकत्वेति। यागादौ प्रवृत्तिजनकत्वं विधेः इष्टसाधनत्वं विना न संभवतीति साधनत्वेनान्वय एव युक्त इति भावः। साधनत्वमपि यागादेः धात्वर्थस्य भावनाभाव्यनिर्वर्तकत्वेनेत्यादि ग्रन्थान्तरे व्यक्तम्।

ननु वस्तुतो धात्वर्थस्य भावनाकर्मत्वमेवास्ति। तथैवान्वयः कुतो न स्वीक्रियत इत्यत आह — **घटं पटं चेति**। द्विकर्मकधातुभिन्नानां धातूनां घटं पटं

चानयेत्यादाविव द्विकर्मकत्वानुपपत्त्या धात्वर्थयाग — स्वर्गयोः कर्मत्वेनान्वयासंभवात् यागादेः धात्वर्थस्य भावनायां करणत्वेनान्वय एव युक्त इति भावः।

**अत्र नैयायिकाः** — कृतिर्हि भावना। कृतेश्च यः कर्म, स विषय एव सविषयकार्थकधातूनां विषयकर्मकत्वात्। कृतेश्च उपादानं उद्देश्यं साध्यं चेति विषयत्रयम्। यजेत स्वर्गकाम इत्यत्र कृतेः उद्देश्यंरूपं कर्म स्वर्गः। साध्यरूपं कर्म यागः। अतश्च मृदं घटं करोति इत्यादाविव द्विकर्मकत्वं चकारं विनापि कुतो न संभवतीति।

**अत्र खण्डदेवस्यायमाशयः** — पूर्वमेव द्वितीयादिविभक्तिः धात्वर्थकर्मत्वमादयैव भवतीत्युक्तम्। धात्वर्थस्य यत् कर्म धात्वर्थतावच्छेदकफलाश्रयरूपं तत् एकस्य धातोः यदि द्वयं तदा समुच्चयार्थकश्चकारः आवश्यकः। यथा घटं पटं चानयेति। एवं द्विकर्मकत्वेन परिगणितानां धातूनामेव कर्मद्वयं चकारं विनापि भवति। यथा — गां दोग्धि पयः इत्यादौ। तत्र कर्मद्वये फलवैलक्षण्यमस्ति। धात्वर्थतावच्छेदकं धात्वर्थतावच्छेदकतावच्छेदकं चेति। अन्यत्र तु एककर्मकत्वमेव। स्वयमेवानुपदमेककर्मकत्वादिकं निर्वक्ष्यति। तेनोक्तशङ्कानां परिहरो लभ्येत।

**अत एव यत्र विधिसमभिव्याहारस्य सत्त्वे, असत्त्वे वा द्वितीयादिना भाव्यान्तरं निर्दिष्टम्। यथा — 'व्रीहीनवहन्यात्, ओदनं पचतीत्यादौ' तत्र धात्वर्थस्य करणत्वमेव।**

**यत्र तु तादृशस्थले अप्राप्तकरणान्तरसत्त्वम्, धात्वर्थस्य च प्रकरणादिना प्राप्तिः। यथा 'गोदोहनेन पशुकामस्य प्रणयेत्, दध्नेन्द्रियकामस्य जुहुयादि'त्यादौ, तत्र आश्रयतया प्रकरणप्राप्तधात्वर्थानुवादमात्रं साधुत्वसिद्ध्यर्थं धातुः। न तु तदर्थस्य**

**करणत्वेनान्वयः, न वाश्रयत्वेन। कर्मत्वातिरिक्तस्याश्रयत्वस्य निर्वक्तुमशक्यत्वेन भावनायामिन्द्रियरूपकर्मावरुद्धायां होमस्यापि कर्मत्वेनान्वये एककर्मकत्व-भङ्गापत्तेः। अत एवानेकोद्देश्यनिमित्तकवाक्यभेदेऽपि एककर्मकत्वभङ्ग एव दूषकताबीजमुक्तं कौस्तुभादौ।**

---

**अत एवेति।** भावनायाः एककर्मकत्वनियमादेवेत्यर्थः। यत्र विधिसमभि-व्याहारसत्त्वे विध्यर्थकप्रत्ययसमभिव्याहारसत्त्वे यथा व्रीहीनवहन्यात् इत्यादौ, असत्त्वे च तदसत्त्वे च यथा ओदनं पचतीत्यादौ तत्र धात्वर्थस्य करणत्वमेव अवहनेन भावयेत् पाकेन भावयेत् — अर्थात् अवहननकरणभावना, पाककरण-कभावना इति। यत्र तु तादृशस्थले विधिसमभिव्याहारस्य सत्त्वे असत्त्वे च अप्राप्तं करणान्तरमस्ति, यथा 'गोदोहनेन पशुकामस्य प्रणयेत्', दध्नेन्द्रियकामस्य जुहुयात् इति तत्र प्रकरणप्राप्तस्य 'अग्निहोत्रं जुहोति' 'अपः प्रणयति' इति वाक्याभ्यां प्राप्तस्य च धात्वर्थस्य आश्रयत्वेनानुवादमात्रम्। धातुश्च साधुत्वसिद्ध्यर्थं प्रयुज्यते। न केवला प्रकृतिः प्रयोक्तव्या नापि केवलः प्रत्यय इति न्यायात्। धात्वर्थस्य कर्मत्वातिरिक्ताश्रयत्वस्य निर्वक्तुमशक्यत्वात्। अपि च भावनायाम् इन्द्रियरूपकर्मावरुद्धायां धात्वर्थस्य होमस्यापि कर्मत्वेन अन्वये भावनायाः एककर्मकत्वमिति नियमस्य भङ्गापत्तेः। शिष्टं स्पष्टम्।

## भावनाया एककर्मकत्वस्वरूपविचारः

**एककर्मकत्वञ्च नैककर्मत्वम्, एककर्मत्वाश्रय (कर्म) कत्वं वा, 'सर्वेभ्यो दर्शपूर्ण-मासौ, घटमानये'त्यादौ तदनापत्तेः। तत्र पुत्रादिवृत्तिकर्मत्वानाम्, कर्मत्वाश्रय-पुत्रादीनां वा अनेकत्वात्। नाप्येककर्मत्वावच्छेदककत्वम्। 'सर्वेभ्यो दर्शपूर्ण-**

मासावि'त्यादौ, व्रीहीन् प्रोक्षतीत्यादौ च तदनापत्तेः। तत्र पुत्रत्वपशुत्वादीनाम्, तदपूर्वसाधनत्वानाञ्च कर्मतावच्छेदकानां भेदात्। किन्त्वेकबोधविषयकर्मत्व-पर्याप्त्यधिकरणतावच्छेदकधर्मवत्त्वमित्युक्तं कौस्तुभे। निरुक्तस्थलेषु च सर्वत्र कर्मत्वपर्याप्त्यधिकरणतावच्छेदकधर्माणामेकेन पदैनैकस्यैव समूहालम्बनात्मकस्य बोधस्य जननादेककर्मकत्वोपपत्तिः। 'अध्वर्युयजमानौ वाचं यच्छतः' इत्यत्र चाध्वर्युत्वयजमानत्वयोः कर्मत्वाधिकरणतावच्छेदकयोरेकबोधविषयत्वाभावात् द्विकर्मकत्वापत्तिः। अतः पर्याप्तीति। तत्र द्वन्द्वोत्तरविभक्तया देवतात्वादेरिव कर्मत्वादेरपि व्यासज्यवृत्तित्वावसायात्, तत्पर्याप्त्यधिकरणतावच्छेदकधर्मस्य अध्वर्युयजमानोभयत्वस्य द्वन्द्वजन्यैकबोधविषयत्वेनैककर्मत्वोपपत्तेः। उपपादितं चैतत् कौस्तुभादौ।

---

अथ एककर्मकत्वं निर्वक्ति — **एककर्मकत्वं चेति**। एकं कर्म यस्य तत् एककर्मकं तस्य भावः एककर्मकत्वम् अस्य यथाश्रुतार्थः यस्य कर्म एकमेव भवति तत् इति। तेन भावनायाः एकमेव कर्म इति लभ्यते। तत् सर्वेभ्यो दर्शपूर्णमासौ इति दर्शपूर्णमासयोः सर्वफलकर्मकत्वश्रवणात् तादृशभावनायां एककर्मकत्व-स्याव्याप्तेः 'एकैकस्मै कामाय अन्ये यज्ञक्रतव इज्यन्ते सर्वेभ्यो दर्शपूर्णमासौ' इति श्रुतिः। एवं घटानानयेति लौकिकवाक्ये वहुवचनेन धात्वर्थस्य भावनायाः वा अनेकघटकर्मकत्वावगमात् तत्र इष्टस्य एककर्मकत्वस्यानुपपत्तेश्च। नापि एकं यत् कर्मत्वं तदाश्रयकत्वम् एककर्मकत्वम्। सर्वेभ्यो दर्शपूर्णमासौ इत्यत्रैवाव्याप्तेः। पुत्रादिरूपाणां कर्मणां तद्वृत्तिकर्मत्वानां चानेकत्वात्। तदेवोपपादयति — **तत्रेति**। पुत्रपश्वादिफलवृत्तिकर्मत्वानां, कर्मणां पुत्रादीनां च अनेकत्वात्। नापि एकं यत् कर्मतावच्छेदकं तत्कत्वम् एककर्मकत्वम्। सर्वेभ्यो दर्शपूर्णमासौ इत्यत्र

कर्मतावच्छेदकानां पुत्रत्वादीनां भेदात् अव्याप्तेः। एवं तत्र द्वारभूतापूर्वाणामपि भेदात् अपूर्वमादायापि एककर्मकत्वं नोपपादयितुं शक्यम्। इति भावः।

अतः सर्वानुगतम् एककर्मकत्वं परिष्कृत्य आह — **किं तु इति।** एकस्मिन् बोधे विषयभूताः ये कर्मत्वपर्याप्त्यधिकरणतावच्छेदकधर्माः तद्वत्त्वम् एककर्मकत्वम्। घटानानय इत्यत्र कर्मत्वपर्याप्त्यधिकरणतावच्छेदकः धर्मः घटत्वं अनेकघट-वृत्तिर्धर्मः। स घटाः इत्येकस्मिन् बोधे विषयः। सर्वेभ्यो दर्शपूर्णमासौ इत्यत्र सर्वपदात् पशुत्वपुत्रत्वाद्यनेकधर्माः कर्मत्वपर्याप्त्यवच्छेदकाः तद्विषयकः समूहा-लम्बनबोधो जायते। अतः तत्र भावनायाः एककर्मकत्वसमन्वयः। कर्मत्व-पर्याप्त्यधिकरणेत्यत्र पर्याप्तिपदस्य प्रयोजनमाह — **अध्वर्युयजमानाविति।** पर्याप्तिपदाभावे एकबोधविषयकर्मत्वाधिकरणतावच्छेदकधर्मवत्त्वम् एककर्मकत्वम् इत्युक्ते 'अध्वर्युयजमानौ वाचं यच्छतः' इत्यत्र कर्मत्वाधिकरणतावच्छेदकयोः अध्वर्युत्वयजमानत्वयोः एकबोधविषयत्वाभावात् तत्र भावनायाः द्विकर्मकत्वा-पत्तिः। अध्वर्युपदजन्यबोधविषयत्वात् अध्वर्युनिष्ठकर्मत्वस्य यजमानपदजन्य-बोधविषयत्वात् यजमाननिष्ठकर्मत्वस्येति अतः पर्याप्तिनिवेशः। तन्निवेशे च तत्र द्वन्द्वसमासोत्तरद्विवचनविभक्त्या कर्मत्वार्थिकया, कर्मत्वस्य प्रकृत्यर्थाध्वर्युयज-मानयोः द्वयोः पर्याप्तेः बोधनात् कर्मत्वस्योभयपर्याप्तत्वरूपं व्यासज्यवृत्तित्व-मवसीयते। तेन कर्मत्वाधिकरणतावच्छेदकधर्मस्य अध्वर्युयजमानोभयत्वरूपस्य द्वन्द्वजन्यैकबोधविषयत्वेन एकबोधविषयकर्मत्वपर्याप्त्यधिकरणतावच्छेदकधर्म-वत्त्वरूपमेककर्मकत्वं भावनाया उपपन्नं भवति। **उपपादितं चैतत् कौस्तुभादाविति।** ग्रहैकत्वाधिकरणकौस्तुभे।

**एवं 'शुक्लं घटमानय' इत्यादौ शुक्लस्य घटे अभेदान्वयात् पदद्वयेन, घटपदेनैव वा शुक्लगुणविशिष्टघटलक्षणादेककर्मत्वोपपत्तिः। एवं घटं पटञ्चानयेत्यादौ इतरेतर-**

योगार्थचकाररूपतात्पर्यग्राहकानुरोधेन द्वितीयान्तपदद्वये लक्षणया तदुपपत्तिः। यथा चैवं सति निमित्तद्वयस्थले उद्देश्यानेकत्वनिमित्तकवाक्यभेदस्य दूषकताबीजम् एककर्मकत्वभङ्गापत्तिः, तथा कौस्तुभे व्यक्तम्।

तत्सिद्धं यत्र द्वितीयादिना भाव्यान्तरं भावनायामन्वययोग्यमुपात्तम्, तत्र न धात्वर्थस्य कर्मत्वम् — इति

---

**एवं शुक्लं घटमित्यादि**। शुक्लं घटमानयेत्यत्र कर्मत्वार्थकद्वितीयान्तपदद्वय-सत्त्वेन कथमेककर्मकत्वं भावनाया इति चेत् — तत्र शुक्लपदार्थस्य घटपदार्थेऽभेदेनात्वयात् शुक्लाभिन्नघटरूपैकपदार्थनिष्ठस्य एकस्य कर्मत्वस्य द्वितीयया बोधनात् एकबोधविषयकर्मत्वपर्याप्त्यधिकरणतावच्छेदकशुक्लाभिन्नघटत्ववत्त्वरूपं एकं कर्मत्वं द्वितीयया बोध्यत इति तन्निरूपकत्वरूपमेककर्मकत्वं भावनाया-मक्षतमिति भावः।

**एवं घटं पटं चेति**। घटं पटं चानयेत्यत्र इतरेतरयोगार्थकचकारेण तात्पर्य-ग्राहकेण द्वितीयान्तपदद्वये घटसहितपटे लक्षणाङ्गीकारात् लक्षणाजन्यैकबोध-विषयकर्मत्वपर्याप्त्यधिकरणतावच्छेदकधर्मद्वयवत्त्वरूपमेकं कर्मत्वं बोध्यते। तादृशकर्मत्वनिरूपकत्वरूपमेककर्मकत्वं भावनायामुपपन्नमिति भावः।

**तत् सिद्धमिति**। यत्र द्वितीयादिना धात्वर्थातिरिक्तं भाव्यान्तरं निर्दिष्टम्, घटमानय, अध्वर्युयजमानौ वाचं यच्छतः, शुक्लं घटमानय, घटं पटं चानय इत्यादौ तत्र धात्वर्थस्य न कर्मत्वम्, अपि तु करणत्वमिति आनयनेन घटं भावयेत् इति रीत्या बोधः इति भावः।

## धात्वर्थस्य कर्मत्वेनान्वयस्थलानि

**यत्र तु तन्नोपात्तम्, धात्वर्थस्य चेष्टसाधनत्वं प्रमाणान्तरेण प्रमितम्, तत्र स्ववाक्यविधेयगुणान्तरसत्त्वे धात्वर्थस्य कर्मत्वमेव। यथा — 'दध्ना जुहोती'त्यादौ। न चैवं जुह्वा जुहोति इत्यादौ जुहोतेस्सकर्मकत्वात्, कर्मान्तरावश्यंभावेन भावनाया द्विकर्मकत्वापत्तिः। सकर्मकस्यापि भावाख्यात इव कर्माविवक्षोपपत्तेः। एतादृशेऽपि विषये यदि तृतीयान्तनामधेयश्रवणम्, तदा करणत्वमेव। यथा — 'समे दर्शपूर्णमासाभ्यां यजेत, उच्चैः प्रवर्ग्येणे'त्यादौ। यत्र तु तादृशगुणश्रवणाभावः, तत्र धात्वर्थस्यैव कर्मत्वेन प्रयोजनान्तरार्थमनुवादः। यथा — विद्वद्वाक्ययोः, तदभावे तु 'तनूनपातं यजती'त्यादौ कर्मान्तरमेव करणत्वेनेत्याद्याकरे व्यक्तम्।**

---

**यत्र तु तन्नोपात्तमिति।** यत्र तु द्वितीयादिविभक्त्यन्तेन भाव्यान्तरं साध्यान्तरं भावनायां कर्मत्वेनान्वययोग्यं नोपान्तं, तथा धात्वर्थस्येष्टसाधनत्वं प्रमाणान्तरेण ज्ञातं, तत्र स्ववाक्यवेद्यगुणान्तरसत्त्वे धात्वर्थस्य कर्मत्वेनान्वयः, न करणत्वेन। यथा दध्ना जुहोति इति। अत्र हि द्वितीयान्तं कर्म न निर्दिष्टम्। धात्वर्थस्य होमस्य इष्टसाधनत्वं अग्निहोत्रं जुहुयात् स्वर्गकामः इति वाक्येन प्राप्तम्। दधिरूपं गुणान्तरं च तृतीयान्तेन श्रुतं, अतः धात्वर्थस्य होमस्य कर्मत्वेनान्वयः दधा होमं भावयेत् इति।

तत्र शङ्कते — **न चैवमिति।** पूर्वोक्तरीत्या विधेयगुणान्तरसत्त्वे धात्वर्थस्य कर्मत्वाङ्गीकरोऽपि तत्र हु धातोः वस्तुतः सकर्मकत्वात् होमस्य किं कर्मेति कर्माकाङ्क्षायां आज्यादिकर्मणाम् भावनायामन्वये सति भावनायाः द्विकर्मकत्वापत्तिरिति शङ्का। तत्र समाधत्ते — **सकर्मकस्यापीति।** सकर्मकस्यापि हुधातोः

कर्मणोऽविवक्षया न कर्मान्तरान्वयः। यथा भावाख्यातस्थले स्थीयते इत्यादौ भावनायाः कर्माविवक्षा तद्वत् इति समाधानम्।

**एतादृशेऽपि विषये** इति। यत्र तु तन्नोपान्तमित्यादिना उक्तेऽपि विषये यदि तृतीयाविभक्त्यन्तं नामधेयं श्रूयते, यथा — समे दर्शपूर्णमासाभ्यां यजेत, उच्चैः प्रवर्ग्येण प्रवृणक्ति, तत्र धात्वर्थस्य करणत्वमेव न तु कर्मत्वम्। समे = उर्ध्वाधो-भावं विना समप्रदेशे दर्शपूर्णमासयागं कुर्यात् इत्यर्थः। अत्र वाक्ये समदेशरूपो गुण उपात्तः। दर्शपूर्णमासाभ्याम् इति तृतीयान्तं नामधेयं च श्रूयते, तत्र धात्वर्थस्य करणत्वमेव। समप्रदेशे दर्शपूर्णमाससंज्ञकयागाभ्यां स्वर्गं भावयेत् इति।

एवम् उच्चैः प्रवर्ग्येण प्रवृणक्ति इति। अत्र उच्चैस्त्वाख्यः गुणः श्रुतः। तप्ते धृते पयःप्रक्षेपः प्रवृञ्जनं, तद्यत्र कर्मणि तत् प्रवर्ग्यमित्युच्यते। तत् यथा संपद्यते तथा प्रवृञ्जनं कुर्यात् इत्यर्थः। प्रवृञ्जनेन भावयेत् इति वाक्यार्थः। अत्र धात्वर्थस्य करणत्वेनान्वय इत्युक्तत्वात्।

**यत्र तु** इत्यादि। यत्र तु तादृशगुणः स्ववाक्यविधेयो गुणो न श्रूयते, तत्र धात्वर्थस्यैव कर्मत्वेन प्रयोजनान्तरार्थम् अनुवादः। यथा विद्वद्वाक्ययोः "य एवं विद्वान् पौर्णमासीं यजते स यावदुक्थ्येनाप्नोति तावदुपाप्नोति" "य एवं विद्वान-मावास्यां यजते स यावदतिरात्रेणोपाप्नोति तावदुपाप्नोति" इति वाक्यद्वयं श्रुतम्। तत्र "यदाग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति" इत्यादिभिः पौर्णमासीकालसंबद्धाः आग्नेयोपांशुयाजाग्नीषोमीयाः अमावास्याकालसंबद्धाः आग्नेयसानाय्यैन्द्राग्नाश्च यागा अनूद्यन्ते। अत्र षण्णां यागानां मध्ये आग्नेय-सांनाय्यैन्द्राग्नीनां दर्शशब्देन आग्नेयोपांशुयाजाग्नीषोमयागानां पूर्णमासशब्देन

चानूद्य दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत इति वाक्येन स्वर्गरूपफलसंबन्धः प्रतिपाद्यते। अत्र धात्वर्थस्य यागस्य प्रप्तस्यैव स्वर्गरूपप्रयोजनार्थमनुवादः।

**तदभावे तु** = प्रयोजनान्तराभावे तु। "तनूनपातं यजति, समिधो यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजति" इत्यत्र यजतेः पञ्चवारमभ्यासात् तनूनपादादिसंज्ञकाः पञ्च यागाः विधीयन्ते। एतत्संज्ञकैर्यागैः इष्टं भावयेदिति वाक्यार्थः। अत्र धात्वर्थानां यागानां भावनायां करणत्वेनान्वयः।

**यत्र तु नेष्टसाधनत्वं प्रमितम्, स्ववाक्ये चोद्भिदादिवन्न वा तृतीयान्तनामधेयश्रवणं यथा — सोमेन यजेत, अग्निहोत्रं जुहोती'त्यादौ, तत्र स्ववाक्ये इष्टविशेषानवगमेऽपि विधिबलेन भावनाया इष्टभाव्यकत्वावगमात्, इष्टसामान्यस्यैव तत्र भाव्यत्वमङ्गीकृत्य धात्वर्थस्य करणत्वमेव। अग्निहोत्रमित्यत्र द्वितीयाऽपि तत्र करणत्वलक्षणार्थैवेति सांप्रदायिकाः। एतादृशे विषये समानपदश्रुत्या भावनापेक्षितं कर्म धात्वर्थ एव, सुतरामग्निहोत्रमिति द्वितीयान्तश्रवणे।**

---

**यत्र तु** इत्यादि। यत्र कर्मणि इष्टसाधनत्वं न प्रमाणेनावगमितम्, स्ववाक्ये च उद्भिदादिवत् "उद्भिदा यजेत पशुकामः इत्यत्रेव तृतीयान्तं नामधेयं न श्रूयते, यथा "सोमेन यजेत, अग्निहोत्रं जुहोति" इत्यादौ तत्र स्ववाक्ये इष्टविशेषस्य फलविशेषस्य अश्रवणेऽपि विधिप्रत्ययबलेन भावनाया इष्टभाव्यकत्वस्यावश्यकत्वावगमात् इष्टसामान्यस्यैव तत्र भाव्यत्वमङ्गीकृत्य धात्वर्थस्य करणत्वेनैव भावनायामन्वयः सोमवता यागेनेष्टं भावयेत्, अग्निहोत्रसंज्ञकेन होमेनेष्टं भावयेत् इति। सोमपदस्य मत्वर्थे लक्षणा। द्वितीयायाः करणत्वे लक्षणा।

सांप्रदायिकाः = पार्थसारथिमिश्रप्रभृतयः प्रचीनसंप्रदायानुयायिनः। तत्र स्वमतमाह — **एतादृशे विषये** इति। पूर्वोदाहृतवाक्यविषये तिङन्तपदे तिङर्थ-

भावनाया अपेक्षितं कर्म धात्वर्थ एव। सुतराम् अग्निहोत्रम्, कर्मार्थकद्वितीयान्तत्वात्। तस्याभेदसंबन्धेन धात्वर्थेऽन्वयः। अग्निहोत्रनामकहोमः धात्वर्थः भावनायाः कर्म भवति।

**न च इष्टसाधनत्वेनाज्ञातस्य कर्मत्वानुपपत्तिः, अनीप्सितकर्मत्वेन अन्वयोपपत्तेः। न च विधेः प्रवर्तकत्वव्याघातः, विध्यवगतेष्टभाव्यकत्वज्ञानस्य प्रवृत्तिं प्रति कारणत्वेऽपि शाब्दबोधं प्रत्यकारणत्वात्, तदभावेऽपि होमकर्मकभावनाशाब्दज्ञानोपपत्तेः। न च भाव्यत्वेनान्वितस्य तस्य भाव्यान्तरानाकांक्षत्वात् फलवाक्येऽपि स्वर्गसाधनत्वबोधानापत्तिः। साधनत्वेनान्वितस्यार्थाद्विध्यनुरोधेनैव इष्टविशेषसाधनतया वाक्यान्तरेण, विश्वजिन्न्यायेन वा बोधोपपत्तेः। अत उत्पत्तिवाक्ये धात्वर्थस्य कर्मत्वेनैवान्वय इति प्रभाकरोक्तमपि युक्तमिति तर्करसिकाः। सर्वथा सिद्धं धात्वर्थस्य कर्मत्व-करणत्वान्यतरसंसर्गेण भावनायां प्रकारता — इति।**

---

**न चेष्टसाधनत्वेनेति।** न च "अग्निहोत्रं जुहोति" इति वाक्ये इष्टसाधनत्ववाचकपदाभावात् धात्वर्थस्य कथं कर्मत्वमिति वाच्यम्। अनीप्सितकर्मत्वेन होमस्य भावनायाम् अन्वयसंभवात्। "तथायुक्तं चानीप्सितम्" इति सूत्रात्। क्रियाजन्यफलाश्रयतया अनीप्सितस्यापि कर्मसंज्ञा तत्सूत्रेण विधीयते। क्रियाजन्यफलाश्रयतया इष्टत्वाभावे तत्र प्रवृत्त्यसंभवात् विधेः तत्र प्रवर्तकत्वानुपपत्तिः इति न वाच्यम्। विध्ववगतेष्टसाधनत्वज्ञानस्य प्रवृत्तिं प्रति कारणत्वेऽपि अग्निहोत्रं जुहोतीति वाक्यजन्यशाब्दबोधं प्रति कारणत्वाभावात्। तदभावेऽपि = इष्टसाधनत्वज्ञानाभावेऽपि अग्निहोत्रहोमकर्मकभावनाविषयकशाब्दबोधस्योपपत्तेः। **न च भाव्यत्वेनेति।** "अग्निहोत्रं जुहोति" इति वाक्यात् भाव्यत्वेनान्वितत्तया अवगतस्य धात्वर्थहोमस्य भाव्यान्तराकाङ्क्षाविरहात् फल-

वाक्ये अग्निहोत्रं जुहुयात् स्वर्गकामः इति वाक्येऽपि भाव्यस्य होमस्य भाव्यान्तरस्वर्गसाधनत्वबोधानुपपत्तिरिति न शङ्कनीयम्। यजेत स्वर्गकामः यागेन स्वर्गं भावयेत् इति साधनत्वेन अवगतस्यापि धात्वर्थस्य यागस्य लिङ्प्रत्ययेन कृतिसाध्यत्वं यथा अवगम्यते, तथा कृतिसाध्यत्वेन अवगतस्यापि विध्यपेक्षानुरोधेन प्रवर्तनाया अपि इष्टसाधनत्वाविनाभावेन इष्टविशेषसाधनत्वस्य वाक्यान्तरेण वा विश्वजिन्न्यायेन वा अवगमोपपत्तेः। अतः उत्पत्तिवाक्ये कर्मस्वरूपबोधके अग्निहोत्रं जुहोति इति वाक्ये धात्वर्थस्य कर्मत्वेनैवान्वयः। फलवाक्ये तु तस्य करणत्वेनान्वयः इति तर्करसिकाः प्राभाकराः प्राहुः।

## करणत्वकर्मत्वादेर्धातुलक्ष्यत्वमिति संप्रदायमतम्

**सांप्रदायिकास्तु — धातुना स्वार्थवृत्तिकर्मत्वकरणत्वान्यतरत् लक्षणया प्रतिपाद्यते। तस्यैव स्वनिरूपकत्वस्वनिरूपकोद्देश्यकत्वान्यतरसंसर्गेण भावनायामन्वयः, न तु कर्मत्वादेरपि संसर्गत्वम्। तथात्वे — प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः, इति साहित्यरूपान्वयानुशासनवैयर्थ्यापत्तेः। नहि पदार्थानुशासनप्रवृत्तानां तेषामन्वयानुशासकत्वं युज्यते। अतः कर्मत्वकरणत्वादिरूपान्वयोऽपि वृत्त्यैव पदार्थविधया भासते। अत एव ज्योतिष्टोमेनेति तृतीयापि पदार्थविधया भासमानकरणत्वानुवादिकेति संगच्छते। विशेषणविशेष्ययोः प्रकारतया भासमानकारकवत्त्वस्यौत्सर्गिकत्वात् — इत्याहुः।**

**तत्सिद्धं धात्वर्थस्य सर्वत्र भावनायां प्रकारतेति। सा परमाख्यातोपात्ता, कृदाद्युपात्ता च लिङ्गानन्वयिनीति वक्ष्यते, तेन वस्तुपदोपात्तायां भावनायां नान्वयः।**

---

सांप्रदायिकमतमाह — सांप्रदायिकास्तु इत्यादिना। धातुना स्वार्थवृत्ति कर्मत्वं करणत्वं वा लक्षणया प्रतिपाद्यते। तस्यैव धात्वर्थस्यैव कर्मत्वस्य स्वनिरूपक-

त्वसंबन्धेन, धात्वर्थस्यैव करणत्वस्य स्वनिरूपकोद्देश्यकत्वसंबन्धेन भावनाया-मन्वयः। न तु कर्मत्वकरणत्वयोः संसर्गघटकत्वम्। प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः इत्यनुशासनात्। तस्य हि अयमर्थः — प्रकृतिप्रत्ययौ सह = सहितम् अन्वितमर्थं ब्रूतः इति। अनेन अन्वयस्य पदार्थत्वं स्पष्टमेवावगम्यते। अन्वयः अत्र कर्मत्वं करणत्वं च। एवं सति कर्मत्वकरणत्वयोः भावनया संबन्धः स्वनिरूपकत्वस्वनिरूपकोद्देश्यकत्वरूपः तस्यापि धात्वर्थत्वं स्यादिति प्रश्ने किमुत्तरमिति न ज्ञायते।

अतः = एतत्स्मृत्या। वृत्त्यैव लक्षणारूपया वृत्त्यैव। अत एव = कर्मत्वकरणत्वयोः पूर्वोक्तरीत्या पदार्थत्वादेव। स्पष्टमन्यत्।

## सुबर्थस्य भावनान्वयनिरूपणम्, संबुद्ध्यर्थश्च

**एवं सुबर्थस्यापि लिङ्गसंख्याभिन्नस्य तस्यामेवान्वयः प्रकारतयेति ज्ञेयम्। तथाहि प्रथमार्थस्तावल्लिङ्गसंख्याभिन्नस्तस्यां प्रकारत्वेनान्वेति। न च तस्याः साधुत्वमात्रार्थमुच्चारणेन तदर्थे मानाभावः। सम्बोधनेऽभिमुखत्वस्यापि भास-मानत्वेन तदसिद्धेः। तच्च प्रकृतशाब्दबोधाश्रयत्वप्रकारकवक्तृभिन्नविशेष्यक-वक्रिच्छाविषयीभूतशाब्दज्ञानवत्त्वम्, प्रकृतशाब्दबोधनिष्ठविषयतानिरूपितवक्तृ-भिन्ननिष्ठवक्रिच्छाविषयतावत्वं वा। युष्मत्पदशक्यतावच्छेदकश्च तदेव। अस्ति 'चेदं देवदत्त! गामानयेत्यादौ, देवदत्त! चैत्रो गमानयती'त्यादौ च। तस्य उक्तविध-ज्ञानवत्त्वात्। तादृशविषयतावत्त्वाद्वा।**

**न च यत्र स्नुषां बोधयितुं कन्यासम्बोध्यवाक्यप्रयोगः, तत्र स्नुषायामतिव्याप्तिः। तत्र स्नुषायास्सम्बोध्यत्वेऽपि तत्संबोधनस्य शब्दतात्पर्यविषयत्वाभावेन तस्यां**

**सम्बोधनप्रथमानापत्तेः। तात्पर्यविषयत्वसत्त्वे च भवत्येव सा। अत एव चेतन एव सम्बोधनं मुख्यम्, अचेतने तु ज्ञानवत्त्वारोपेण गौणो व्यवहारः।**

---

एतावता धात्वर्थस्य आख्यातार्थभावनायां प्रकारतया अन्वयः सयुक्तिकं सप्रमाणं च निरूपितः। अथ सुबर्थस्यापि भावनायां प्रकारतया अन्वयं निरूपयति। "प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा" (पा.सू 2.3.46) इति पाणिनेः सूत्रम्। प्रातिपदिकार्थपदेन प्रवृत्तिनिमित्तं तदाश्रयश्चोच्यते। लिङ्गं पुंस्त्वादि। परिमाणं महत्त्वादि। वचनं संख्या। तत्र प्रथमाविभक्तेः लिङ्ग-संख्याभ्यामतिरिक्तः अर्थः। तस्य भावनायां प्रकारत्वेनान्वयः। न च प्रथमायाः प्रयोगसाधुत्वमात्रार्थमुच्चारणेन तस्य अर्थः कश्चित् नास्तीति वाच्यम्। संबोधने प्रथमया पूर्वोक्तार्थव्यतिरिक्तस्य अभिमुखत्वस्यापि भासमानत्वेन तस्याः **तदसिद्धेः** साधुत्वमात्रार्थमुच्चारणासिद्धेः।

**तच्चेत्यादि।** संबोधनं च प्रकृतशाब्दबोधाश्रयत्वप्रकारकवक्तृभिन्नविशेष्यक-वक्रिच्छाविषयीभूतशाब्दज्ञानवत्त्वम्। प्रकृतशाब्दबोधः संबोधनविभक्त्यन्तपद-समभिव्याहृतवाक्यजन्यशाब्दबोधः तदाश्रयत्वप्रकारिका वक्तृभिन्नविशेष्यिका च या वक्तुः इच्छा तद्विषयभूतं यत् शाब्दबोधात्मकं ज्ञानं तदाश्रयत्वं **संबोधनत्वम्** अभिमुखत्वमित्यर्थः। यथा — देवदत्त गामानयेत्यत्र देवदत्तः गामानयेति वाक्यजन्यशाब्दबोधाश्रयो भवतु इति वक्तुः यज्ञदत्तस्य या इच्छा सा च वक्तृयज्ञदत्तभिन्नदेवदत्तविशेष्यिका प्रकृतशाब्दबोधाश्रयत्वप्रकारिका च। तस्याम् इच्छायां विषयीभूतं यत् शाब्दज्ञानं तद्वत्त्वं देवदत्तस्यास्तीति तस्य अभिमुखत्वम्। गामानयेति वाक्यजन्यः शाब्दबोधश्च गोकर्मकानयनभावना मदिष्टसाधनम् इत्याकारकः।

अथ वा प्रकृतशाब्दबोधनिष्ठविषयतानिरूपितवक्तृभिन्ननिष्ठवक्रिच्छाविषय-तावत्त्वं संबोधनम् अथ वा अभिमुखत्वम्। प्रकृतशाब्दबोधनिष्ठविषयतानिरूपिता (प्रकारता निरूपिता) वक्तृभिन्ननिष्ठा **वक्रिच्छीया** वक्तृगतेच्छानिरूपिता **विषयता** विशेष्यता तदाश्रयत्वम् अभिमुखत्वम् इत्यर्थः। इच्छायाः आकारस्तु पूर्वोक्त एव देवदत्तः गामानय इति वाक्यजन्यशाब्दबोधाश्रयो भवतु इति पूर्वोक्त एव। तादृशेच्छानिरूपिता प्रकृतशाब्दबोधनिष्ठप्रकारतानिरूपिता विशेष्यता देवदत्तेऽस्तीति समन्वयः। तस्य देवदत्तस्य **उक्तविधज्ञानवत्त्वात्** प्रथमपरिष्कारानुसारेणेति शेषः। **तादृशविषयतावत्त्वाद्वा** द्वितीयपरिष्कारानुसारेणेति शेषः।

अत्र शङ्कते — **न च यत्र स्नुषां बोधयितुमिति। कन्यासंबोध्यवाक्यप्रयोगः** = कन्या संबोध्या यस्मिन् तस्य वाक्यस्य प्रयोगः। कन्ये इदं कुरु इति वाक्यप्रयोगः तत्र समीपस्थितायाः स्नुषायाः अपि तादृशबोधाश्रयत्वात् स्नुषायाः संबोध्यत्वापत्तिः इति शङ्का। तत्र समाधत्ते — **तत्र स्नुषाया इति**। स्नुषायां संबोध्यत्वसत्त्वेऽपि तत्संबोधनस्य शब्दतात्पर्यविषयत्वाभावेन तस्यां संबोधनप्रथमायाः अप्रसङ्गात्। शब्दतात्पर्यविषयत्वे च भवत्येव स्नुषाशब्दात् प्रथमा।

## संबोधनार्थस्य भावनान्वयनिरूपणम्

**अत एवाद्योदाहरणेऽभिमुखत्वम्, कर्तृत्वञ्चेत्युभयं प्रथमार्थः, तत्र चाधेयत्वं प्रातिपदिकार्थसंसर्गः, तयोश्च विषयत्वनिरूपकत्वाभ्यां भावनायामन्वयः। अन्त्ये चाभिमुखत्वस्यैव विषयत्वसंसर्गेण। 'चैत्र मैत्रः कीदृशः' इत्यादावपि 'अस्तिर्भवन्ती' इत्यादिना क्रियापदाध्याहारस्यावश्यकत्वाच्छाब्दबोधाविघातः। चैत्र! मैत्रो ग्रामं गच्छतु इत्यादौ तु लोडर्थप्रार्थनाया विषयीभूतायां भावनायां निरुक्तसम्बन्धेन सम्बोध्यत्वस्य स्वरूपसम्बन्धेन स्वनिष्ठव्यापारप्रयोज्यत्वस्य चान्वयः, प्रतीत्य-**

**नुसारेण तत्तदर्थकलोडादेरेव तात्पर्यग्राहकत्वात्। अत्र च प्रथमादेशविशेषाणामेव सम्बोधने शक्तिः, पृथगनुशासनबलात्। हेशब्दादिकं तात्पर्यग्राहकम्। व्यापार-प्रयोज्यत्वादौ तु लक्षणैव।**

---

एतावता संबोधनपदार्थः निष्कृष्योक्तः। अथ संबोधनप्रथमायाः अर्थमाह — **अत एवेति। आद्योदाहरणे** देवदत्त गामानय इत्यत्र अभिमुखत्वं कर्तृत्वं चेत्युभयं संबोधनप्रथमाविभक्त्यर्थः। तत्र उभयत्र आधेयतासंबन्धेन प्रकृत्यर्थस्य देवदत्त-स्यान्वयः। अभिमुखत्वस्य शाब्दज्ञानात्मकस्य विषयतासंबन्धेन आख्यातार्थ-भावनायामन्वयः। कर्तृत्वस्य निरूपकतासंबन्धेन तस्यामन्वयः। देवदत्तनिष्ठाभि-मुखत्वविषयीभूता देवदत्तनिष्ठकर्तृत्वनिरूपिका च गोकर्मकानयनानुकूलभावना इति बोधः। **प्रथमोदाहरणे** देवदत्त गामानय इत्युदाहरणे। **अन्त्ये द्वितीयोदाहरणे** देवदत्त चैत्रो गामानयति इत्यत्र अभिमुखत्वस्यैव विषयतासंबन्धेन भावनाया-मन्वयः। एवकारेण कर्तृत्वान्वयव्यवच्छेदः। देवदत्तनिष्ठशाब्दज्ञानविषयीभूता चैत्रनिष्ठकर्तृत्वनिरूपिका गोकर्मकानयनभावनेति शाब्दबोधः। एवं चात्र संबोधनविभक्तेः न कर्तृत्वमर्थः। अभिमुखत्वमात्रमर्थः इत्युक्तं भवति। आनय-नस्य संबोध्यदेवदत्तकर्तृकत्वाभावात् इत्युक्तं भवति।

**चैत्र मैत्रः कीदृशः इत्यादावपि** अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्य-मानोऽप्यस्ति इत्यनुशासनानुसारेण अस्ति इति पदस्याध्याहारात् चैत्रनिष्ठ-कर्तृत्वनिरूपिका जिज्ञासाविषयधर्मवत्कर्तृका अस्तित्वभावना इति बोधः।

चैत्र मैत्रो ग्रामं गच्छतु इत्यत्र चैत्रनिष्ठशाब्दज्ञानविषयभूता मैत्रनिष्ठ-कर्तृत्वनिरूपिका ग्रामकर्मकगमनानुकूला चैत्रप्रार्थनाविषयभूता चैत्रनिष्ठप्रेरणा-प्रयोज्या च भावनेति बोध इति भावः।

अत्र चेत्यादि। **प्रथमादेशविशेषः** = प्रथमायाः आदेशः 'एङ्ह्रस्वात् संबुद्धेः' इति सूत्रविहितो लोपः। तस्य संबोधने शक्तिः। **पृथगनुशासनम्** = संबोधने च इति सूत्रम्। **व्यापारप्रयोज्यत्वम्** = प्रेरणाप्रयोज्यत्वम्। हे भो इत्यादयः शब्दाः हे राम इत्यादौ संबोधनतात्पर्यग्राहकाः। अभिमुखत्वं संबोधनप्रथमायाः अर्थः। व्यापारप्रयोज्यत्वे च तस्याः लक्षणा।

**'चैत्र! मैत्रो ग्रामं गच्छती'त्यादौ प्रथमान्ते च तार्किकमतेऽपि भावनाविशेष्यत्वं नास्ति, प्रथमार्थरूपान्यविशेषणत्वात्। तत्राख्यातोपात्तसंख्यान्वयाभावाच्च। अतस्तैः सम्बुद्धिभिन्नप्रथमान्तपदजन्योपस्थितिरेव भावनान्वयप्रयोजिकेति वाच्यम्। न च तदपि वक्तुं शक्यम्, चैत्र! गामानयेत्यादौ तदनापत्तेः, न च तत्र त्वंपदाध्याहारः. तथात्वे 'भो ब्राह्मणाः त्वं पचे'ति प्रयोगापत्तिः। न च युष्मदर्थकर्तृसम्बुद्ध्योः एकसंख्याकत्वं, व्युत्पत्त्यन्तरकल्पनापत्तेः।**

**एतेनाभिमुखत्वादेः सर्वत्र प्रातिपदिकार्थप्रकारत्वमित्यापास्तम्। 'चैत्र! मैत्रः पचती'त्यादौ चैत्रे भावनाद्यन्वयापत्तेः।**

**वस्तुतस्तु अस्मन्मतेऽपि चैत्र! मैत्रः पचतीत्यादौ चैत्रस्य कर्तृत्वेन भावनान्वयस्य निवारयितुमशक्यत्वात् सर्वत्र सम्बोधनमेव सम्बुद्धिप्रथमायाः अर्थः, न तु कर्तृत्वमपि। 'चैत्र! पचे'त्यादौ मध्यमपुरुषस्थले आख्यातेन सम्बोध्यायास्तद्व्यक्तेरेव कर्तृत्वेन लक्षणान्न सम्बोध्यातिरिक्तस्य कर्तृत्वप्रसङ्गः इति ध्येयम्। अतो द्वितीयादिसाधारण्येन प्रथमासुबर्थस्यापि प्रकारत्वमेव सर्वत्र युक्तम्।**

**इति श्रीमदाचार्यखण्डदेवविरचिते भाट्टतन्त्ररहस्ये**
**आख्यातार्थनिरूपणं समाप्तम्**

---

**चैत्र मैत्रो गच्छतीत्यादाविति।** एतादृशवाक्यघटकसंबुध्यन्तचैत्रपदार्थचैत्रस्य गच्छतीति आख्यातार्थकृतिं प्रति विशेष्यत्वं तार्किकमतेऽपि नाङ्गीक्रियते। मैत्रपदार्थ एव आख्यातार्थकृतेरन्वयात्। तथा च आख्यातार्थकृतिप्रकारकशाब्दबोधं प्रति विशेष्यतासंबन्धेन प्रथमान्तपदजन्योपस्थितिः कारणमिति कार्यकारणभावस्य संबुध्यन्ते अन्वयव्यभिचारात्। संबुद्धेरपि प्रथमाविभक्तित्वात्। अपि च आख्यातार्थसंख्यायाः प्रथमान्तपदार्थेऽन्वय इति नियमोऽपि तन्मते संबुध्यन्तार्थे आख्यातार्थसंख्यान्वयाभावेन व्यभिचरितः। अतः तार्किकैः संबुद्धिभिन्नप्रथमान्तपदजन्योपस्थितिरेव आख्यातार्थभावनायाः अन्वये प्रयोजिकेति वक्तव्यम्। न च तथैवेति वक्तुं शक्यम्। चैत्र गामानय इत्यादौ संबुध्यन्तचैत्रपदार्थे एव आख्यातार्थकृतेरन्वयात्। न च तत्र त्वमिति पदमध्याहृत्य तदर्थे एव भावनायाः अन्वयः। तत्र युष्मच्छब्दस्य संबुद्धिभिन्नप्रथमान्तत्वात् तदर्थे भावनान्वयसंभवादिति वाच्यम्। अध्याहारं विनापि अन्वयबोधसंभवे तस्यानावश्यकत्वात्। अपि च त्वंपदाध्याहारे भोः ब्राह्मणाः त्वं पच इति प्रयोगापत्तिः इति भावः।

**न च युष्मदर्थेति।** तत्र युष्मच्छब्दार्थः पाककर्ता त्वंपदार्थः। संबुद्धिः ब्राह्मणपदार्थः। तयोः एकसंख्याकत्वनियमात् न तथा प्रयोगापत्तिरिति न च वाच्यम् इति भावः। कुत इत्यत्राह — **व्युत्पत्त्यन्तरकल्पनापत्तेरिति।** समभिव्याहृतसंबुद्धिजन्यसंख्यान्वयबोधं प्रति युष्मच्छब्दसमानवचनकपदजन्योपस्थितिः कारणमिति अधिकः कार्यकारणभावः कल्पनीयः इति गौरवमिति भावः।

**एतेनेति।** लक्ष्यमाणहेतुनेत्यर्थः। **प्रातिपदिकार्थप्रकारत्वमिति।** संबोधनप्रथमार्थस्य अभिमुखत्वस्य स्वप्रकृतिभूतप्रातिपदिकार्थेऽन्वयेन प्रातिपदिकार्थं प्रति प्रकारत्वमित्यर्थः। उक्तं हि — व्युत्पत्तिवादे गदाधरभट्टाचार्यैः — संबोधने च इति विहितायाः प्रथमायाः संबोधनमर्थः। चैत्र त्वया भुज्यताम् इत्यत्र

चैत्रपदोत्तरसंबोधनप्रथमायाः संबोधनमर्थः। संबोधनं नाम वक्तृनिष्ठा संबोधन-प्रथमान्ताव्यवहितशब्दजन्यशाब्दबोधाश्रयत्वप्रकारकेच्छा। सा च त्वया भुज्यतामिति शब्दजन्यशाब्दबोधाश्रयश्चैत्रः भवतु इत्याकारिका। सा च चैत्रप्रातिपदिकार्थे विशेष्यतासंबन्धेन अन्वेति। तथा च त्वत्कर्तृकभोजनकर्मौदनविषयकः त्वया भुज्यताम् इति वाक्यजन्यो यो बोधः तदाश्रयत्वप्रकारकेच्छाविशेष्यश्चैत्रः इति उक्तस्थले बोधः — इति।

एतद्दूषणयुक्तिः — चैत्र मैत्रः पचतीत्यादौ चैत्रे भावनान्वयापत्तेः इति। चैत्रस्य प्रथमान्तपदोपस्थाप्यत्वादिति भावः। पूर्वं देवदत्त गामानय इत्यादौ अभिमुखत्वं कर्मत्वं चेत्युभयं प्रथमार्थः इत्युक्तम्। ततश्च चैत्र मैत्रः पचतीत्यादौ संबुद्ध्यर्थस्य कर्तृत्वस्य भावनायामन्वयापत्तिः। न चेष्टापत्तिः। तत्र पाकभावनायाः मैत्र-कर्तृकत्वेन चैत्रकर्तृकत्वाभावात् इत्यालोच्य स्वमतं निष्कृष्य वदति — **वस्तुतस्तु इत्यादिना**। तथा च उक्तदोषप्रसङ्गात् सर्वत्र संबोधनमेव संबुद्धिप्रथमार्थः। न तु कर्तृत्वमपि। तर्हि चैत्र पच इत्यादौ पाकभावनायाः चैत्रकर्तृकत्वप्रतीतिः कथमिति न शङ्कनीयम्। तादृशमध्यमपुरुषस्थले आख्यातेन संबोध्यव्यक्तिः कर्तृत्वेन रूपेण लक्षणया प्रतिपाद्यते। अतस्तत्र संबोध्यातिरिक्तव्यक्तिविशेषस्य कर्तृत्वप्रसङ्गः इति नाशङ्कनीयम्। **अत इति**। यथा वा द्वितीयादिविभक्त्यर्थस्य प्रकारत्वेन भावनाया-मन्वयः, तथा प्रथमारूपसुबर्थस्यापि भावनायां प्रकारत्वमेव। संबुद्ध्यर्थस्य अभि-मुखत्वस्य भावनायामन्वय इति पूर्वमुपपादितत्वात् इति भावः।

**इति सारप्रकाशिकायाम् आख्यातार्थनिरूपणं समाप्तम्**

# पाणिनिमतेन प्रथमाविभक्त्यर्थविचारः

## प्रथमायाः प्रातिपदिकार्थेन अर्थवत्त्वोपपादनम्

न च प्रथमायाः लिङ्गसंख्ययोरिव सम्बोधनरूपार्थवत्त्वेपि तदतिरिक्तार्थाभावात् चैत्रः पचतीत्यादौ प्रातिपदिकार्थातिरिक्तस्य विशेष्यभूतार्थस्याभावेन कथं द्वितीयादिसाधारण्येन सर्वत्र प्रथमार्थस्य प्रकारत्वमिति वाच्यम्। असम्बुद्धिप्रथमाया अपि अनुशासनबलेन लिङ्गसंख्याव्यतिरिक्तार्थवाचित्वावगतेः। तथाहि पाणिनिमतं तावत् 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' (पा.सू 2.3.46) इति सूत्रात् प्रातिपदिकार्थ एव। इदं हि लिङ्गाद्यंशे शक्यत्वानुशासनवत् प्रातिपदिकार्थांशे शक्यत्वानुशासनमेव, न तु प्रातिपदिकार्थे प्रातिपदिकेन विवक्षिते प्रथमायाः साधुत्वमित्येवम्परम्, वैयर्थ्यापत्तेः, वैरूप्यापत्तेश्च। अतश्च प्रातिपदिकार्थश्चैत्रादिरेव प्रथमार्थः।

---

**न च प्रथमाया इति**। प्रथमायाः विभक्तेः यथा लिङ्गं संख्या चार्थः तथा संबोधनरूपार्थवत्त्वेऽपि तदतिरिक्तस्य अर्थस्याभावात् प्रातिपदिकार्थातिरिक्तस्य विशेष्यस्याभावेन लिङ्गसंख्ययोः प्रकारतया भानं कथं संभवति। द्वितीयाद्यर्थस्य तु कर्मत्वादिकारकस्य विशेष्यभूतोऽर्थः धात्वर्थक्रिया वा आख्यातार्थभावना वा विशेष्यभूतेति वक्तुं शक्यते इति शङ्का। **द्वितीयादिसाधारण्येनेति**। द्वितीयादिविभक्त्यर्थस्य कर्मत्वादेः यथा प्रकारत्वं तथा प्रथमार्थस्य वक्तुमशक्यम्। सामान्यतो विशेष्यतासंबन्धेन आख्यातजन्यशाब्दबोधं प्रति सुबर्थप्रकारकोपस्थितिः कारणम् अथ वा प्रकारतासंबन्धेन सुब्जन्योपस्थितिः कारणम् इति

कार्यकारणभावस्य असंभवादिति प्रष्टुराशयः। तत्र समाधत्ते — **असंबुद्धिप्रथमाया अपीति।** संबुद्ध्यतिरिक्तप्रथमाया अपि लिङ्गसंख्यान्वययोग्यतदतिरिक्तार्थवाचकत्वाङ्गीकारात् तस्य च भावनायां प्रकारतया अन्वयात् पूर्वोक्तसामान्यकार्यकारणभावः संभवतीति भावः। तदुपपादयति — **तथा हीत्यादिना।** "प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा" इति पाणिनिसूत्रम्। इदं सूत्रं लिङ्गपरिमाणसंख्यानां शक्यत्वविधानवत् प्रातिपदिकार्थस्यापि प्रथमाविभक्तिशक्यत्वमनुशास्ति। न तु प्रातिपदिकेन प्रातिपदिकार्थे विवक्षिते प्रथमायाः साधुत्वम् इत्येवंतात्पर्यकम्। स्वौजस् इत्यादिसूत्रेणैव साधुत्वार्थं प्रथमायाः सिद्धत्वात् पुनस्तदर्थं प्रातिपदिकार्थे प्रथमाविधानस्य व्यर्थत्वात्। ननु सिद्धस्यैव अनुवादकतया सार्थक्यमित्यत आह — **वैरूप्यापत्तेरिति।** प्रातिपदिकार्थेत्यादिसूत्रं लिङ्गाद्यंशे प्रथमायाः शक्तत्वबोधकम्। प्रातिपदिकार्थांशे अनुवादकमिति वैरूप्यापत्तेरिति भावः। **अतश्च** = तस्य सूत्रस्य शक्यार्थानुशासकत्वात् प्रातिपदिकार्थः चैत्रादिरेव प्रथमायाः अर्थः।

**न चैवमपि तस्य प्रातिपदिकेनैव बोधसिद्धेः प्रथमायास्तदंशे साधुत्वार्थमनुवादकतया न प्रथमार्थस्यान्यत्र प्रकारतेति वाच्यम्। प्रातिपदिकस्यैव प्रथमार्थविशेषतात्पर्यग्राहकत्वाङ्गीकारेण प्रथमार्थस्यान्यत्र प्रकारत्वे बाधकाभावात्। इतरथा सुबर्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति धात्वादिपदजन्योपस्थितिः कारणमिति एवंविधकार्यकारणभावे प्रथमातिरिक्तत्वप्रवेशे गौरवात्।**

**प्रकृत्यर्थस्य प्रत्ययार्थं प्रति प्रकारत्वे प्रथमान्तप्रातिपदिकातिरिक्तत्वप्रवेशे गौरवाच्च। आख्याताद्यर्थभावनादेः प्रथमान्तार्थं प्रति प्रकारत्वे व्युत्पत्त्यन्तरकल्पनापत्तेश्च। अतो लाघवात् सुबर्थत्वेन प्रथमार्थस्यापि चैत्रादेराख्यातार्थभावनायामेव प्रकारता। अत एवैतादृशे विषये प्रकृत्यर्थस्य चैत्रादेर्न प्रथमार्थ-**

**चैत्रादावन्वयः, प्रकृतिप्रत्यययार्थयोः व्युत्पन्नस्य भेदान्वयस्य बाधात्, अभेदान्वयस्य चाव्युत्पन्नत्वात्। अतः प्रातिपदिकं तत्र प्रथमार्थविशेषतात्पर्यग्राहकमेव प्रथमोपस्थापितस्तु स एवाख्यातार्थभावनान्वयी।**

---

**न चैवमपीति।** प्रातिपदिकार्थस्य चैत्रादेः प्रथमाशक्यत्वाङ्गीकारेऽपि तस्य प्रकृतिभूतप्रातिपदिकेनैव बोधसिद्धेः प्रथमायास्तदंशे चैत्राद्यंशे साधुत्वार्थमनुवादकत्वात् न प्रथमार्थस्यान्यत्र प्रकारतेति न वाच्यम्। तत्र चैत्रादिः प्रथमाविभक्तेरेवार्थः, प्रातिपदिकं तु प्रथमार्थचैत्रादितात्पर्यग्राहकमिति स्वीक्रियते। तथा च प्रथमार्थस्य चैत्रादेः अन्यत्र प्रकारत्वे बाधकाभावात्। **इतरथा** प्रकृतिभूतप्रातिपदिकार्थस्य अन्यत्र प्रकारतया अन्वयाङ्गीकारे प्रथमार्थस्य अन्यत्रानन्वयात् सुबर्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति धात्वादिपदजन्योपस्थितिः कारणमित्येवंविधकार्यकारणभावे प्रथमातिरिक्तेति सुपो विशेषणं परिकल्प्य प्रथमातिरिक्तः यः सुप् तदर्थप्रकारकेत्यादिकार्यकारणभावकल्पने अधिकस्य प्रथमातिरिक्तत्वस्य प्रवेशेन गौरवादिति भावः।

**प्रकृत्यर्थस्येति।** अपि च प्रकृत्यर्थस्य प्रत्ययार्थे प्रकारत्वमिति सामान्यनियमे प्रथमान्तप्रातिपदिकातिरिक्तप्रकृत्यर्थस्येति अधिकस्य प्रथमान्तप्रातिपदिकातिरिक्तत्वस्य प्रवेशे गौरवात् इति भावः। नैयायिकमते दूषणमाह — **आख्यातार्थेति।** आख्यातार्थकृतेः प्रथमान्तार्थेऽन्वयः इति स्वीकारात् भावनां प्रति प्रथमान्तार्थस्य विशेष्यत्वात् विशेष्यतासंबन्धेन आख्यातार्थभावनाप्रकारकशाब्दबोधं प्रति विशेष्यतासंबन्धेन प्रथमान्तपदजन्योपस्थितिः कारणमिति कार्यकारणभावान्तरकल्पनापत्तेश्चेति भावः। **अतो लाघवादिति।** व्युत्पत्त्यन्तराकल्पनरूपलाघवात् इतरसुबर्थवत् प्रथमारूपसुबर्थस्यापि चैत्रादेः सुबर्थत्वेन

रूपेण आख्यातार्थभावनायामेव प्रकारता। न तु भावनायाः प्रथमार्थं प्रति प्रकारतेति भावः।

अत एवेति। प्रातिपदिकार्थतयाभिमतचैत्रादेः सुबर्थत्वात् प्रातिपदिकस्य तत्तात्पर्यग्राहकत्वादेव — यदुक्तं कैश्चित् चैत्रः पचतीत्यादौ प्रथमार्थचैत्रे प्रकृत्यर्थस्य चैत्रस्य अभेदसंवन्धेनान्वयः इति, तदपि न प्रकृत्यर्थस्य प्रत्ययार्थे भेदेनैव अन्वयः इति व्युत्पत्तेः तस्याः बाधात् = बाधप्रसङ्गादिति भावः। अत इति। उक्तैः हेतुभिः चैत्रः पचतीत्यादौ प्रथमायाः चैत्रादिः अर्थः, चैत्रप्रातिपदिकं प्रथमार्थतात्पर्यग्रहकम्। प्रथमार्थः चैत्रादिः आख्यातार्थभावनायामन्वेतीति भावः।

## नीलो घट इत्यादौ क्रियापदाध्याहारेणैव बोधः

**न चैवमाख्यातपदाभावे तस्यानन्वयः। 'काष्ठैरोदनमि'त्यादौ क्रियापदाध्याहारेणेव नीलो घट इत्यादावपि अस्तीत्यध्याहारस्यानुशासनशिष्टतया सुतरामुपपत्तेः। नीलपदस्यापि वक्ष्यमाणरीत्या नीलगुणे, नीलत्वजातौ वा शक्तस्य लक्षणया लक्षितलक्षणया वा, नीलत्वावच्छिन्नगुणविशिष्टद्रव्यपरस्य तात्पर्यग्राहकत्वात्, तदुत्तरप्रत्ययोक्तस्य तद्द्रव्यस्यापि न घटेन सहाभेदेनान्वयः। अपि तु घटवदेवास्तीत्याख्यातोपात्तभावनायामेव, एकव्युत्पत्त्यैव शाब्दबोधोपपत्तेः। इतरथा विशेषणवाचकनामार्थस्याभेदसम्बन्धेन नामार्थान्तरान्वयकल्पना, तदुत्तरद्वितीयादिविभक्तेरपि साधुत्वार्थकत्वकल्पना प्रकृत्यर्थस्य प्रत्ययार्थान्वयव्युत्पत्तेश्च विशेषणवाचकप्रकृतिभिन्नविषयत्वकल्पनेत्येवं गौरवापत्तेः।**

---

ननु यत्र आख्यातपदं तिङन्तपदं नास्ति यथा नीलो घट इत्यादिवाक्ये, तत्र तस्य = प्रथमार्थस्य चैत्रादेः घटादेश्च अन्वयो न स्यादिति शङ्कते — **न चैवमिति।**

एवं = एवं सति प्रथमार्थस्य आख्यातार्थेऽन्वय इति स्वीकारे सति। तत्रापि काष्ठैरोदनम् इत्यादौ पचतीति तिङन्तपदस्याध्याहरवत् नीलो घटः इत्यादावपि अस्ति इति क्रियापदाध्याहारस्य अस्तिर्भवन्तीपरः अप्रयुज्यमानोऽप्यस्तीति अनुशासनेन विहिततया सुतरां अस्त्यर्थभावनायामन्वयस्य संभवादिति समाधत्ते — **काष्ठैरोदनम् इत्यादिना।**

## नीलगुणस्य घटे भानोपपत्तिः

**न च नीलघटयोरभेदानुभवानुरोधेन गौरवाङ्गीकरणमपि न दोष इति वाच्यम्। प्रथमाद्वयार्थस्य, नीलगुणविशिष्टस्य घटस्य च कर्तृतासंसर्गेण शाब्दबोधे भावनाविशेष्यके जाते, पश्चाद् घटस्य परिच्छेदकीभूतगुणापेक्षायां गुणविशिष्टस्य च जात्यपेक्षायां मानसोऽभेदानुभव इति पार्ष्ठिकबोधमादायानुभवोपपत्तेः।**

---

ननु नीलो घटः इत्यत्र घटपदोत्तरप्रथमार्थस्य घटस्य अस्त्याख्यातार्थभावनायां स्ववृत्तित्वसंबन्धेन अन्वयसंभवेऽपि नीलपदोत्तरप्रथमार्थस्य घटेऽभेदेनान्वितस्य कथमाख्यातार्थेऽन्वयः संभवति। एकत्र विशेषणतया अन्वितस्य अन्यत्र प्रकारतया अन्वयासंभवादित्याशङ्क्य तत्रापि नीलपदार्थस्य न घटे अभेदेनान्वयः, अपि तु नीलपदोत्तरप्रथमार्थस्य नीलस्य अस्त्यर्थभावनायामेव अन्वयः। ततश्च नीलवृत्तिः घटवृत्तिश्च **सत्ताभावना** सत्ताश्रयत्वम् इति शाब्दबोधः। नीलाभिन्नो घट इति बोधस्तु पार्ष्ठिको मानसो बोध इति समाधत्ते — **नीलपदस्यापीत्यादिना।** नीलो घट इत्यत्र नीलपदस्य नीलगुणे नीलत्वजातौ वा शक्तिः। नीलत्वजातिविशिष्टनीलरूपगुणविशिष्टद्रव्ये (घटे) लक्षणा लक्षितलक्षणा वा अङ्गीक्रियते। तदुत्तरप्रथमार्थस्य तस्य द्रव्यस्य अस्त्याख्यातार्थभावनायामेव

आधेयत्वसंबन्धेनान्वयः। नीलपदं तात्पर्यग्राहकम्। ततश्च नीलत्वविशिष्टनील-गुणविशिष्टद्रव्यवृत्तिसत्ताश्रयत्वमिति शाब्दबोधः। नीलप्रातिपदिकं तात्पर्य-ग्राहकम्। तादृशद्रव्यघटयोरभेदान्वयबोधस्तु पार्ष्ठिकः इति भावः। **एक-व्युत्पत्त्यैवेति**। विशेष्यतासंबन्धेन सुबर्थप्रकारकशाब्दबोधं प्रति विशेष्यतासंबन्धेन आख्यातजन्येपस्थितिः कारणमिति एककार्यकारणभावेनेत्यर्थः। **इतरथा** = एवमनङ्गीकारे नीलपदार्थस्य घटपदार्थे अभेदेनान्वयः इति स्वीकारे च विशेषण-वाचकप्रातिपदिकार्थस्य अभेदसंबन्धेन नामान्तरार्थे अन्वयकल्पना नीलं घटमान-येत्यादौ विशेषणवाचकनीलपदोत्तरविभक्तेरपि साधुत्वार्थकत्वकल्पना प्रकृत्यर्थस्य प्रत्ययार्थे अन्वय इति व्युत्पत्तेश्च विशेषणवाचकप्रकृतिभिन्नप्रकृतिविषयकत्व-कल्पनेत्येवं गौरवापत्तेः इति भावः।

पुनः शङ्कते — **न च नीलघटयोरिति**। न च नीलो घटः इति वाक्य-श्रवणानन्तरं नीलघटयोरभेदस्य बोधो भवतीत्यनुभवसिद्धम्। तदनुसारेण कार्यकारणभावकल्पनगौरवं न दोषायेति वाच्यम्। तादृशवाक्यश्रवणानन्तरं प्रथमाविभक्तिद्वयार्थस्य नीलगुणविशिष्टस्य नीलपदार्थस्य घटस्य च घटपदार्थस्य च कर्तृत्वसंसर्गेण भावनाविशेष्यके बोधे प्रथमं जाते सति पश्चात् घटस्य परिच्छेदकीभूतगुणजिज्ञासायां गुणविशिष्टस्य जातिविशेषाकाङ्क्षायां च नीलगुणविशिष्टघटत्वजातिविशिष्टयोः मानसोऽभेदेनान्वयबोध इति स्वीकारात् नानुभवानुपपत्तिः इत्याशयात्।

## अरुणैकहायन्योरभेदभानप्रकारः

न च शब्दादभासमानस्याभेदस्य वेदोत्थज्ञानविषयत्वाभावात्, अरुणयैक-हायन्या इत्यत्रारुण्यस्यैकहायन्यामन्वयाकरणेऽपि दोषाभावापत्तिः। वेदापेक्षितार्थ-

**विषयकस्य मानसस्यापि ज्ञानस्य तात्पर्यविषयतया वेदार्थत्वात्। न हि वेदपदवृत्तिविषयत्वम्, वेदजन्यशाब्दबोधविषयत्वमेव वा वेदतात्पर्यविषयत्वप्रयोजकम्। तथात्वे 'इमामगृभ्णन्रशनामृतस्येत्यश्वाभिधानीमादत्ते' इत्यत्र शाब्दबोधे मन्त्राश्वाभिधानीसम्बन्धमात्रस्यैव विषयीकरणात्। तस्य च लिङ्गकल्प्यश्रुत्यैव सिद्धावेतद्वाक्यवैयर्थ्यापत्तेः। तत्परिहारार्थमनुमीयमानस्य लैङ्गिकश्रुत्यभावस्यापि वेदतात्पर्यविषयत्वानापत्तेः परिसंख्याफलकत्वानापत्तिः। अतो वेदापेक्षाशामकज्ञानविषयत्वमेव वेदतात्पर्यविषयत्वप्रयोजकम्। तच्च गुणविशिष्टद्रव्यस्य एकहायन्याश्वाभेदेऽपि अक्षतमेव।**

---

पुनः शङ्कते — **शब्दादित्यादिना।** शब्दादभासमानस्य शाब्दबोधानन्तरं मानसज्ञानविषयस्य अभेदस्य वेदजन्यज्ञानविषयत्वाभावात् — अरुणया एकहायन्या गवा सोमं क्रीणाति इति वाक्यार्थे अनुपपत्तिरिति। तथा हि — अरुणाशब्दः आरुण्यरूपगुणवाचकः। एकहायनीशब्दः एकवर्षवयोवाचकः। अत्र तृतीयाविभक्त्या करणत्वं बोध्यते। तस्य च क्रयभावनायां निरूपकत्वेनान्वयः। ततश्च आरुण्यकरणिका एकहायनीकरणिका गोकरणिका च क्रयभावनेति प्रथमतः शाब्दबोधो जायते। ततः गोद्रव्यस्य परिच्छेदकाकाङ्क्षायां पूर्वोक्तशाब्दबोधानन्तरं या गौः सा अरुणा एकहायनी चेति मानसज्ञाने आरुण्यविशिष्टा एकहायनविशिष्टा च गौरित्येवंरूपे आरुण्यादिपरिच्छिन्नत्वं गवि ज्ञायते। तेन इतरगोव्यवच्छेदो ज्ञायते। एवं च गोनिष्ठं यत् आरुण्यादिपरिच्छिन्नत्वं तस्य शाब्दज्ञानविषयत्वाभावात् एकहायन्यां गवि अन्वयाकरणेऽपि दोषो न स्यात्। गोनिष्ठारुण्यस्य वेदजन्यशाब्दज्ञानाविषयत्वात् इति शङ्का।

समाधानं तु वेदवाक्यापेक्षितार्थविषयकस्य मानसस्य अभेदादिज्ञानस्यापि वेदतात्पर्यविषयतया वेदजन्यत्वात् तद्विषयस्य गोगतारुण्यस्यापि वेदजन्यज्ञानविषयत्वमस्त्येवेति।

ननु वेदस्थपदवृत्तिविषयत्वस्य वेदजन्यशाब्दबोधविषयत्वस्य वा वेदतात्पर्यविषयत्वप्रयोजकत्वात् मानसबोधविषयस्य तदुभयशून्यस्य कथं वेदतात्पर्यविषयत्वम् इत्याशङ्क्याह — **न हीति**। भवदुक्तं न वेदतात्पर्यविषयत्वप्रयोजकम्। तथा हि — इमामगृभ्णन् रशनामृतस्य इत्यश्वाभिधानीमादत्ते इति किंचिद्वेदवाक्यम्। तस्यायमर्थः — **अभिधानी** = बन्धनसाधनभूता रज्जुः, अश्वस्याभिधानी **अश्वाभिधानी** = अश्वबन्धनसाधनभूता रज्जुः। इष्टकानिर्माणार्थमृदानयनाय शकटं नयति। तत्र एकस्मिन् पार्श्वे गर्दभः अपरस्मिन् पार्श्वे अश्वश्च बद्धो भवति। शकटेन गमनकाले शाकटिकः उभाभ्यां रशनाभ्यां अश्वं गर्दभं च बद्ध्वा शकटं चालयति। तदा इमामगृभ्णन् इत्यनेनैव सामान्यतः अर्थप्रकाशनसामर्थ्यरूपलिङ्गात् अश्वरशनाग्रहणस्यापि प्राप्तत्वात् अश्वरशनाग्रहणेऽपि इमामगृभ्णन् इति मन्त्रस्याङ्गतया प्राप्तत्वादिति यावत् अश्वाभिधानीमादत्ते इति वाक्ये स्थितया लिङ्गापेक्षया प्रबलया द्वितीयाविभक्तिरूपया श्रुत्या अश्वरशनाग्रहण एव अस्य मन्त्रस्याङ्गत्वं बोध्यते इति स्थितिः। अतोऽत्र मन्त्रस्य लिङ्गात् शेषिद्वयप्राप्तौ एकस्मात् शेषिणः मन्त्रस्य निवृत्तिरिति यावत्।

प्रकृतमनुसरामः — वेदस्थपदवृत्तिविषयत्वं वा वेदजन्यशाब्दबोधविषयत्वं वा यदि वेदतात्पर्यविषयत्वप्रयोजकं स्यात् तदा इमामगृभ्णन् रशनामृतस्य इत्यश्वाभिधानीमादत्ते इति वाक्यजन्यशाब्दबोधे मन्त्रअश्वाभिधान्यादानयोः संबन्धमात्रस्यैव विषयीकरणात् तस्य च विषयस्य लिङ्गकल्प्यया अनेन मन्त्रेण अश्वरशनां गृह्णीयात् इति श्रुत्यैव अवगमात् एतद्वाक्यवैयर्थ्यं स्यात्। ततश्च

इत्यश्वाभिधानीमादत्ते इत्येतद्वाक्यवैयर्थ्यपरिहाराय लिङ्गात् श्रुतिर्न कल्पनीये-त्येवंरूपस्य अनुमीयमानश्रुत्यभावस्य वेदतात्पर्यविषयत्वं यदिष्टं तदनुपपन्नः। अस्यार्थस्य वेदपदवृत्तिविषयत्वाभावात् वेदजन्यशाब्दबोधविषयत्वाभावाच्च। न च मास्तु वेदतात्पर्यविषयत्वमुक्तार्थस्येति वाच्यम्। तथा सति परिसंख्याफलक-त्वानुपपत्तेः। तस्मात् वेदाकाङ्क्षानिवर्तकज्ञानविषयत्वमेव वेदतात्पर्यविषयत्व-प्रयोजकम्। लिङ्गात् श्रुतिर्न कल्पनीयेत्येवंरूपोऽर्थः वेदाकाङ्क्षानिवर्तकज्ञान-विषय इति ध्येयम्।

उक्तमर्थं प्रकृते योजयति — **तच्च गुणविशिष्टेति**। आरुण्यरूपगुणविशिष्ट-द्रव्यस्य एकहायन्याश्च योऽभेदः पार्ष्ठिकबोधविषयः तत्रापि वेदापेक्षाशामक-ज्ञानविषयत्वरूपं वेदतात्पर्यविषयत्वमक्षतमिति भावः।

**आवश्यकञ्चैतत् परेषामपि। इष्टसामान्यसाधनत्वस्यैव लिङर्थत्वात् स्वर्गादि-पदार्थस्य च कामनाविशेषणत्वेनेष्टेऽभेदान्वयानुपपत्तेः, इष्टसाधनीभूतयागानु-कूलकृतिमान् स्वर्गकाम इति शाब्दबोधस्यावश्यकत्वात्, तदुत्तरमिष्टे स्वर्गा-भेदबोधो मानस एव शास्त्रतात्पर्यविषय इति। एतादृशतात्पर्यविषयीभूतबोध एव चेष्टे स्वर्गे भेदनिश्चयप्रतिबध्यः, न तु शाब्दबोध इति त्वयाप्यङ्गीकार्यमिति, न ममैव तच्चोद्यावकाशः।**

---

**आवश्यकं चैतदिति**। परेषां नैयायिकानामपि एतद् वेदापेक्षाशामकज्ञान-विषयत्वमेव वेदतात्पर्यविषयत्वप्रयोजकम् इत्येतत् आवश्यकम्। अवश्याङ्गी-करणीयम्। तैः यजेत स्वर्गकामः इत्यादौ लिङः इष्टसाधनत्वमर्थः इति स्वीकृतम्। तत्र कीदृशेष्टसाधनत्वमिति जिज्ञासायां स्वर्गरूपेष्टसाधनत्वमिति वक्तुं न शक्यम्। स्वर्गपदार्थस्य कामनाविशेषणतया उपस्थितस्य लिङर्थैकदेशे इष्टे

अभेदसंबन्धेन अन्वयासंभवात्। एकत्र विशेषणतया उपस्थितस्य अन्यत्र विशेषणतया नान्वयः इति व्युत्पत्तेः। ततश्च लिङर्थस्य इष्टसाधनत्वस्य धात्वर्थे यागेऽन्वयः। यागस्यानुकूलतासंबन्धेन आख्यातार्थकृतावन्वयः। कृतेश्च आश्रयतासंबन्धेन प्रथमान्तस्वर्गकामपदार्थेऽन्वयः। ततश्च इष्टसाधनीभूतयागानुकूलकृत्याश्रयः स्वर्गकामः इति शाब्दबोधः प्रथमतो जायते। तदनन्तरम् इष्टे स्वर्गाभेदबोधो मानस एव। स एव शास्त्रतात्पर्यविषय इति अङ्गीकरणीयम्। अस्य बोधस्यैव इष्टं किम् इत्याकाङ्क्षाशामकत्वात्। एतादृशतात्पर्यविषयो बोधः एव इष्टे स्वर्गभेदनिश्चयेन प्रतिबध्यः। अथ वा स्वर्गे इष्टभेदनिश्चयप्रतिबन्धकः। न तु शाब्दबोधः। भेदनिश्चयप्रतिबध्य इत्यस्य तत्पुरुषसमासत्वे भेदनिश्चयेन प्रतिबध्य इत्यर्थः। तस्य बहुव्रीहिसमासत्वे भेदनिश्चयः प्रतिबध्यो यस्येति विग्रहात् भेदनिश्चयप्रतिबन्धक इत्यर्थः। व्युत्पत्तिवादादौ स्पष्टोऽयं विषयः।

## अरुणैकहायन्योरभेदस्य शाब्दत्वोपपादनम्

**यदि तु त्वया एतादृशदोषभिया स्वर्गादिसाधनत्वमेव शक्त्या, लक्षणया वा लिङर्थः, स्वर्गादिपदञ्च तात्पर्यग्राहकमित्यभ्युपेयते, तदा मयाऽपि नीलपदोत्तरप्रथमार्थस्य गुणविशिष्टद्रव्यस्य स्वाभिन्नघटवृत्तिकर्तृत्वसंसर्गेण भावनान्वयः, घटपदञ्च संसर्गेऽपि तात्पर्यग्राहकम्। घटपदोत्तरप्रथमार्थस्य स्ववृत्तिकर्तृत्वेनेति शक्यं वक्तुम्, ततस्चाभेदस्यापि शाब्दत्वोपपत्तेः न कश्चिद्दोषः।**

---

एतावता "अरुणया एकहायन्या गवा" इत्यत्र अरुणाशब्दार्थ-एकहायनीशब्दार्थयोः आदौ भावनायामन्वयः तयोरभेदान्वयबोधस्तु पार्ष्ठिको मानस इत्युपपादितम्। अथ तयोरभेदान्वयस्यापि प्राथमिकशाब्दबोधविषयत्वं संभवती-

त्युपपादयति। **यदि तु इत्यादिना।** यदि तु त्वया नैयायिकेन एतादृशदोषभिया शाब्दत्वानुपपत्त्यादिदोषः स्यादिति भीत्या स्वर्गादिसाधनत्वमेव स्वर्गत्वावच्छिन्ननिरूपितसाधनत्वमेव शक्त्या लक्षणया वा लिङोऽर्थः, स्वर्गादिपदं च तदर्थतात्पर्यग्राहकम् इत्युच्यते, तदा मयापि नीलो घटोऽस्ति इत्यत्र नीलपदोत्तरप्रथमायाः नीलरूपविशिष्टद्रव्यमर्थः। तस्य स्वाभिन्नघटवृत्तिकर्तृत्वनिरूपकत्वसंबन्धेन अस्तित्वभावनायां सत्ताश्रयत्वरूपायामन्वयः। घटपदं नीलपदार्थद्रव्ये तद्घटितसंसर्गे च तात्पर्यग्राहकम्। घटपदोत्तरप्रथमायाः घटोऽर्थः। तस्य स्ववृत्तिकर्तृत्वनिरूपकत्वसंबन्धेन भावनायामन्वयः। एवं च अभेदस्यापि शब्दवृत्तिजन्यबोधविषयत्वरूपं शाब्दत्वमुपपन्नम् इति भावः।

**केचित्तु — विशिष्टविध्यादौ विशेषणविध्यादिवाचकपदसमूहकल्पनावदभेदबोधकवाक्यान्तरकल्पनैवेत्याहुः। सर्वथा प्रथमार्थस्य भावनायां द्वितीयादिसाधारण्येन भेदसम्बन्धेन प्रकारतेति सिद्धम्।**

**एतेन — चैत्रादेर्नामार्थस्य, प्रथमार्थस्यैव वाख्यातोपात्ते कर्त्रादावभेदान्वय इति वैयाकरणमतमप्यपास्तम्; व्युत्पत्त्यन्तरकल्पने प्रमाणाभावात्।**

---

अत्र विषये मतान्तरमाह — **केचित्तु इति।** "सोमेन यजेत" इत्यादौ यागेनेष्टं भावयेत् इत्येवं धात्वर्थयागरूपकरणान्वयेन शान्ताकाङ्क्षायां भावनायां सोमस्य करणतया अन्वयासंभवात् सोमेनेति तृतीयया धात्वर्थवृत्त्येव करणत्वमभिधेयमिति तन्निर्वाहाय सोमपदस्य मत्वर्थे लक्षणामङ्गीकृत्य तस्याभेदसंबन्धेन धात्वर्थे अन्वयं स्वीकृत्य सोमवता यागेन इष्टं भावयेत् इति वाक्यार्थबोधानन्तरं यागस्य सोमवत्त्वं केन रूपेणेति जिज्ञासायां सोमेन यागं भावयेत् इति कल्प्यमानेन विधिना सोमस्य यागकरणत्वावगतिः भवति। इदमेव विशेषण-

विधिवाचकपदसमूहकल्पनम्। तद्वत् नीलो घटोऽस्तीत्यादौ प्राथमिकः शाब्द-बोधः नीलगुणवृत्तिभवनाश्रयत्वं घटवृत्तिभवनाश्रयत्वम् इति। ततो घटरूप-द्रव्यस्य परिच्छेदकगुणाकाङ्क्षायां नीलाभिन्नो घटः इति वाक्यान्तरं कल्पनीयम् इति भावः। प्रकृतमर्थं संगृह्य निगमयति — **सर्वथेति**। **भेदसंबन्धेन** = स्ववृत्ति-कर्तृत्वकत्वसंबन्धेन।

अथ वैयाकरणमतं निराकरोति — **एतेनेति**। चैत्रः तण्डुलं पचति इत्यादौ प्रातिपदिकार्थस्य वा प्रथमार्थस्य वा चैत्रस्य आख्यातार्थे कर्तरि अभेदेनान्वयः कर्तुश्च धात्वर्थेऽन्वयः चैत्राभिन्नकर्तृकः पाकः इति बोधः। चैत्रेण पच्यते ओदनः इत्यत्र चैत्रकर्तृकः ओदनाभिन्नकर्मकः पाकः इति बोध इति वैयाकरणमतम्। **अपास्तमिति**। तत्र हेतुः **व्युत्पत्त्यन्तरकल्पने गौरवादिति**। द्वितीयादिविभक्ति-साधारण्येन एककार्यकारणभावस्वीकारेण प्रथमार्थस्यापि भावनायामेव अन्वये लाघवादिति भावः।

## प्रथमार्थस्य चैत्रादेराख्यातार्थकर्त्रभेदान्वये युक्त्यन्तरम्, तत्खण्डनञ्च

**यत्तु — 'स्तोकं पचति' इत्यादौ नामार्थस्य स्तोकस्य पाके अभेदान्वयार्थं अभेद-सम्बन्धेन निरर्थकसुप्समभिव्याहृतनामार्थप्रकारकशाब्दत्वावच्छिन्नम्प्रति निरुक्त-नामसमभिव्याहृतपदजन्योपस्थितिः कारणमिति कार्यकारणभावस्यैव आवश्यक-त्वात्, तेनैव चैत्रादेः योग्यतया कर्त्रादावभेदेनान्वयोपपत्तिः — इति।**

**तन्न — चैत्रपदोत्तरप्रथमाया निरर्थकत्वस्य पाणिन्यादिविरुद्धत्वात् स्वलेखन-विरुद्धत्वाच्च। स्तोकमित्यत्र स्तोकप्रातिपदिकार्थः स्तोकत्वम्, द्वितीयार्थो लक्षणया आश्रयत्वम्, तस्य च साक्षात्, परम्परया वा पाकादौ, भावनायां वान्वयान्न निरर्थकसुप्त्वमिति तादृशव्युत्पत्तिकल्पनाया असिद्धेश्च।**

यत्तु इत्यादि। स्तोकं पचति इत्यत्र स्तोकपदं द्वितीयान्तम्। तत्र द्वितीया-प्रकृतिभूतस्तोकरूपप्रातिपदिकार्थस्य स्तोकस्य (अल्पस्य) अभेदसंबन्धेन धात्वर्थे पाके अन्वयात् स्तोकाभिन्नः पाकः इति बोधो जायते इति तदनुसारेण निरर्थक-सुप्समभिव्याहृतप्रातिपदिकार्थनिष्ठप्रकारतानिरूपकशाब्दबोधं प्रति निरुक्तप्राति-पदिकसमभिव्याहृतपदजन्योपस्थितिः कारणमिति कार्यकारणभावस्यावश्यक-त्वात् तेनैव कार्यकारणभावेन चैत्रः पचतीत्यादौ चैत्रप्रातिपदिकार्थस्य चैत्रस्य आख्यातार्थकर्तरि अभेदसंबन्धेनान्वयोपपत्तिः इति न कार्यकारणभावान्तर-कल्पनप्रसङ्गः। अतो न प्रथमार्थस्य आख्यातार्थे कर्त्रादावन्वय इति मतम्।

तन्न। चैत्रपदोत्तरप्रथमायाः निरर्थकत्वस्य प्रातिपदिकार्थे प्रथमाविधायक-पाणिनिसूत्रविरुद्धत्वात्। अपि च स्तोकमित्यत्र स्तोकरूपप्रातिपदिकस्यार्थः स्तोकत्वम्। द्वितीयायाः लक्षणया आश्रयत्वमर्थः। तस्य च साक्षात् = आश्रयत्वसंबन्धेन धात्वर्थपाके अन्वयः। अथ वा तस्य स्तोकत्वस्य परम्परया स्वाश्रयधात्वर्थानुकूलत्वसंबन्धेन आख्यातार्थभावनायामन्वयः। अतः स्तोक-पदोत्तरसुपः न निरर्थकत्वम्। अत एव निरर्थकसुप्समभिव्याहृतेत्यादिपूर्वोक्त-कार्यकारणभावस्य न कल्पनम्। ततश्च स्तोकत्वनिरूपिताश्रयतावान् पाकः इति वा स्तोकत्वनिरूपिताश्रयतावत्पाकानुकूलकृतिरिति वा बोध इति भावः।

यस्यापि स्तोकत्वविशिष्टं प्रातिपदिकार्थः, तस्यापि मते अभेदो लक्षणया द्वितीयार्थः, स च स्तोकप्रतियोगिकान्योन्याभावाभावरुपः स्तोकत्वमेव, तस्य च भेदसम्बन्धनैव पाकादावन्वयः। 'द्रव्यत्वावच्छिन्नवृत्तिद्रव्यत्ववान् पटः' इतिवच्च स्तोकत्वावच्छिन्नवृत्तिस्तोकत्ववान् पाकादिरिति शाब्दबोध इति, क्व नामार्थस्याभेद-सम्बन्धेनान्वयः, क्व वा द्वितीयाया निरर्थकत्वम्।

**यस्यापीत्यादि।** अपि च यस्य मते स्तोकत्वविशिष्टं प्रातिपदिकार्थः तस्य मतेऽपि अभेदः लक्षणया द्वितीयाविभक्तेरर्थः। अभेदः भेदाभावः। भेदे प्रतियोगितासंबन्धेन स्तोकपदार्थस्य अन्वयः। तथा च स्तोकप्रतियोगिकभेदाभावः द्वितीयान्तार्थः। स च स्तोकत्वरूपः। भेदाभावस्य भेदप्रतियोगितावच्छेदकधर्मरूपत्वात्। तस्य आश्रयत्वरूपभेदसंबन्धेन धात्वर्थपाकादौ अन्वयः स्तोकत्वाश्रयः पाक इति फलितो वाक्यार्थः।

यथा द्रव्यं घट इति वाक्यात् द्रव्यत्वविशिष्टवृत्तिद्रव्यत्ववान् घट इति बोधः। तथा स्तोकं पचति इति वाक्यात् स्तोकत्वविशिष्टवृत्तिस्तोकत्ववान् पाकः इति शाब्दबोधः। अतो न कुत्रापि द्वितीयायाः निरर्थकत्वमिति घट्टार्थः।

**न च लक्षणादोषभिया व्युत्पत्त्यन्तरकल्पनम्, द्वितीयाया निरर्थकत्वकल्पनञ्च न दोषः। तथात्वे चैत्रो जानातीत्यादावाश्रयत्वलक्षणायाश्शिरोमणिसम्मताया अनापत्तेः। अत्रापि कृत्यविषयीभूतार्थकधात्वर्थस्य व्युत्पत्त्यन्तरेणैव नामार्थप्रकारकत्वोपपत्तेः, लक्षणायाः फलमुखत्वाच्च। अन्यथा लक्षणोच्छेदापत्तेः। तस्माद्युक्तं प्रथमार्थस्यापि कर्तृत्वकर्मत्वरूपसंसर्गेणाख्यातार्थभावनायामन्वयः, प्रातिपदिकञ्च तात्पर्यग्राहकम्, लिङ्गसंख्यान्वयश्च प्रथमार्थ एवेति सर्वमनवद्यम्।**

---

शङ्कते — **न च लक्षणादोषभियेति।** स्तोकपदोत्तरद्वितीयायाः अभेदे लक्षणाख्यदोषः भवेत् इति भीत्या निरर्थकसुप्समभिव्याहृतेत्यादिपूर्वोक्तकार्यकारणभावकल्पनं द्वितीयायाः निरर्थकत्वकल्पनं च युक्तमिति न शङ्कनीयम्। तथात्वे चैत्रो जानातीत्यादौ आश्रयत्वे लक्षणायाः रघुनाथशिरोमणिकथितायाः अनुपपत्तेः। तत्रापि कृत्यविषयीभूतज्ञानाद्यर्थकधात्वर्थस्य मणिकारोक्तरीत्या आश्रयत्वसंबन्धेन नामार्थे प्रकारतया अन्वयसंभवात् तदर्थं व्युत्पत्त्यन्तरकल्पन-

संभवाच्च। व्युत्पत्त्यन्तरं च कृत्यविषयीभूतज्ञानाद्यर्थकधात्वर्थनिष्ठाश्रयत्वरूप-भेदसंबन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबोधं प्रति विशेष्यता-संबन्धेन नामजन्योपस्थितिः कारणमिति कार्यकारणभावः। किं च लक्षणा न दोषः, फलमुखत्वात् इति। फलानुगुणत्वादिति यावत्। **अन्यथा** फलानुगुणायाः लक्षणाया दोषत्वे गङ्गायां घोषः इत्यादौ लक्षणायाः शैत्यपावनत्वादिप्रतीति-रूपफलपर्यवसायिन्याः उच्छेदापत्तेः इति भावः।

निगमयति — **तस्माद्युक्तमिति।** पूर्वोक्तहेतुवशात् प्रथमाविभक्त्यर्थस्य चैत्रादेः चैत्रः पचतीत्यादौ स्वनिष्ठकर्तृत्वनिरूपकत्वसंबन्धेन आख्यातार्थभावनायाम-न्वयः। चैत्रेण पच्यते तण्डुल इत्यादौ तण्डुलपदोत्तरप्रथमाविभक्त्यर्थस्य तण्डुलस्य स्वनिष्ठकर्मत्वनिरूपकत्वसंबन्धेन आख्यातार्थभावनायामन्वयः। प्रातिपदिकं च प्रथमार्थचैत्रादितात्पर्यग्राहकम्। लिङ्गसंख्ययोः आश्रयत्वसंबन्धेन प्रथमार्थचैत्रादावेवेति सर्वं समञ्जसम् इति भावः।

## विशेषणप्रथमार्थस्य भावनान्वये संसर्गप्रदर्शनम्

**संसर्गश्च आख्यातनिपातोपात्तकर्तृत्वकर्मत्वमेव, न तु कृदाद्युपात्तमपि। तेन 'पाठकश्चैत्रः पचती'त्यत्र चैत्ररूपप्रथमार्थस्य पाकक्रियाकर्तृत्वसंसर्गेणाऽन्वयः, अत एव आख्यातोपात्तभावनायामेव, योग्यत्वात्, न तु लिङ्गानन्वयित्वेऽपि कृदुपात्तायां पाठकृतौ, तस्यामाख्यातोपात्तकर्तृत्वसंसर्गेण अयोग्यत्वात्। एतादृशसंसर्गविशेषा-नङ्गीकारे च 'चैत्रः पाठकेन पच्यते ओदनः, इत्यस्याप्यापत्तेः। अतश्चैत्रः पाठकर्ता च द्वावपि पाककृतावेव तन्निरूपितकर्तृत्वसंसर्गेणान्वीयेते, तयोः परस्पराभेदभानं तु पूर्ववत्। चैत्रस्य पाठकृत्याश्रयत्वभानन्तु सर्वमते मानसमेव।**

---

विशेषणीभूतप्रथमार्थस्य भावनायामन्वये संबन्धविशेषं दर्शयति — **संसर्गश्चेत्यादिना।** पूर्वोक्तः कर्तृत्वकर्मत्वरूपः आख्यातवाच्यःनिपातवाच्यश्च कर्तृत्वकर्मत्वरूपः। न तु कृत्प्रत्ययादिवाच्यकर्तृत्वकर्मत्वरूपः। आख्यातं = तिङ्। निपातः सांप्रतम् इत्यादि। न तु कृत्प्रत्ययोपात्तं कर्तृत्वकर्मत्वादिकं संबन्धः। तथात्वे दोषमाह — **तेन पाठक इति।** पाठकश्चैत्रः पचतीत्यत्र पठधातूत्तरकृत्प्रत्ययस्य कर्तृत्वमर्थः। तथा तत्र पचधातूत्तरतिप्रत्ययस्यापि कर्तृत्वमर्थः। चैत्रपदोत्तरप्रथमार्थस्य चैत्रस्य तु आख्यातोपात्तं यत् पाकनिरूपितं कर्तृत्वं तेन संबन्धेनैव आख्यातोपात्तभावनायामन्वयः, न तु अकप्रत्ययवाच्यं यत् पठननिरूपितं कर्तृत्वं तेन संबन्धेनान्वयः। चैत्रकर्तृकपाकदशायां पठनानुकूलकृतेरभावात् पठनानुकूलकृतौ चैत्रकर्तृकत्वस्य अभावात् इति भावः। **एतादृशेति।** आख्याताद्युपात्तकर्तृत्वमेव संसर्गः न तु कृदुपात्तकर्तृत्वमपीति संसर्गविशेषानङ्गीकारे चैत्रः पाठकेन ओदनः पच्यते इति प्रयोगापत्तिः। कर्मणि लकारे कर्तृत्वस्य अनभिधानात् उभयत्रापि तृतीयायां चैत्रेण पाठकेन पच्यते तण्डुलः इति प्रयोगः उपपद्यते। चैत्रस्य कृदुपात्तभावनायामन्वये तु कृता कर्तृत्वस्य अभिहितत्वात् प्रथमापत्तिः इति भावः। **अत इति।** उक्तापत्तिपरिहाराय चैत्रः पाककर्ता च द्वावपि पाककृतावेव आख्यातार्थकृतिनिरूपितकर्तृत्वसंबन्धेन अन्वितः। पाठकचैत्रयोः परस्परमभेदभानं तु पूर्ववत् मानसं शाब्दं वा इति भावः। तथा चैत्रस्य पाठानुकूलकृत्याश्रयत्वभानमपि मानसमेवेत्याशयः।

**एवं 'पक्व ओदनो भुज्यते' इत्यत्रापि ओदनरूपप्रथमार्थस्य भोजनकृतिनिरूपितकर्मत्वसंसर्गेण भोजनकृतावेवान्वयः, न तु पाककृतिकर्मत्वेन पाककृतौ तदुपात्तायाम्, तथात्वे 'ओदनः पक्वं भुंङ्क्ते' इत्यस्याप्यापत्तेः। अतस्तत्रापि पूर्ववदेवान्वयः।**

**चैत्र इव मैत्रो गायति 'विषवृक्षोऽपि संवर्ध्य स्वयं च्छेतुमसाम्प्रतमित्यत्राख्यातोपात्तकर्तृत्वकर्मत्वाभावेऽपि इवादिनिपातोपात्तकर्तृत्वसंसर्गेण तदुपात्तभावनायां लिङ्गान्वयरहितायां चैत्रविषवृक्षयोः प्रथमोपात्तयोरन्वयाच्च निपातेति। तदेवं पाणिनिमते प्रथमार्थनिष्कर्षः।**

**इति श्रीमदाचार्यखण्डदेवविरचिते भाट्टतन्त्ररहस्ये पाणिनिमतेन प्रथमाविभक्त्यर्थविचारः समाप्तः**

---

एतावता पाठकश्चैत्रः ओदनं पचतीत्यत्र कर्त्रर्थककृत्लकारोभयसमभिव्याहारस्थले संसर्गविशेषमुक्त्वा कर्मार्थककृल्लकारोभयसमभिव्याहारस्थले संसर्गविशेषमाह — **एवं पक्वः ओदनः भुज्यते इत्युभयत्रापीति**। तत्र आख्यातस्य भावना कर्मत्वं चार्थः। ओदनप्रातिपदिकोत्तरप्रथमायाः ओदनोऽर्थः। ओदनप्रातिपदिकं तात्पर्यग्राहकम्। प्रथमार्थस्य ओदनस्य स्ववृत्ति यत् भोजननिरूपितं कर्तृत्वं तन्निरूपकत्वसंबन्धेन भावनायामन्वयः। न तु पक्व इत्यत्र क्तप्रत्ययोपात्तायां कृतौ पाकानुकूलकृतिनिरूपितक्तप्रत्ययार्थकर्मत्वनिरूपकत्वसंबन्धेन अन्वयः। तथा सति ओदनः पक्वं चैत्रो भुङ्क्ते इति प्रयोगस्यापि साधुत्वापत्तेः। कर्त्राख्याते कर्मत्वस्य अनभिधानात् ओदनं पक्वं चैत्रो भुङ्क्ते इति ओदनपदे पक्वपदे च द्वितीयान्तत्वमेव साधु। ओदनस्य कृदुपात्तभावनायामपि अन्वयस्वीकारे तेन कर्मत्वस्यानभिधानात् ओदने प्रथमान्तत्वापत्तिरिति भावः। **पूर्ववदेवेति**। कर्त्राख्यातवदेव पृथगेव भावनायामन्वयः इति भावः।

पूर्वं संसर्गश्च आख्यातनिपातोपात्तकर्तृत्वकर्मत्वमेव इत्युक्तम्। तत्र आख्यातोपात्तकर्तृत्वकर्मत्वयोः संसर्गत्वमेतावता उपपादितं सोदाहरणम्। अथ निपातो-

पात्तयोः तयोः संसर्गत्वं सोदाहरणं प्रदर्शयति — चैत्र इव मैत्रो गायति इत्यादिना। चैत्र इव मैत्रो गायति इत्यत्र आख्यातबोध्या या गानानुकूला भावना तस्यां मैत्रपदोत्तरप्रथमार्थस्य चैत्रस्य यथा स्वनिष्ठं यत् आख्यातलक्ष्यं कर्तृत्वं तन्निरूपकत्वसंबन्धेनान्वयः, तथा चैत्रपदोत्तरप्रथमार्थस्य चैत्रस्य इवशब्देन गानकर्तृत्वरूपसादृश्याभिधानात् तदभिहितकर्तृत्वनिरूपकत्वसंबन्धेन गानानुकूलभावनायामन्वयः। एवं विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम् इत्यत्र सांप्रतमिति निपातेन योग्य इत्यर्थकेन कर्मत्वस्याभिधानात् तेन संबन्धेन अध्याहृतास्त्यर्थभावनायामन्वयः। प्रागप्येतत् प्रथमाप्रयोजकविचारे प्रतिपादितम्। तत्र द्रष्टव्यम्। **तदुपात्तभावनायामिति।** आख्यातवाच्यभावनायामित्यर्थः।

**इति सारप्रकाशिकायां पाणिनिमतेन प्रथमाविभक्त्यर्थविचारः**

## कात्यायनमतेन प्रथमाविभक्त्यर्थनिरूपणम्

**कात्यायानस्तु न प्रातिपदिकार्थे प्रथमा, तथात्वे प्रातिपदिकस्य तात्पर्यग्राहकत्वमात्रकल्पनया शाब्दबोधजनकत्वानापत्तेः, अपितु अभिहितकारकत्वमेव प्रथमार्थः। तस्मिंश्च कर्तृत्वादिरूपे प्रथमार्थे प्रातिपदिकार्थश्चैत्रादिर्भेदसम्बन्धेनैव अन्वेति, संख्यादिकञ्च द्वितीयान्तपद इवेति न क्वापि व्युत्पत्त्यन्तरकल्पना, कर्तृत्वादिकञ्च सुबन्तरार्थवदेव क्रियापदार्थ इति, न तत्रापि सा। न च कर्तृत्वादेराख्यातावगतस्य भावनायामन्वितत्वात् पुनर्बोधवैयर्थ्यम्। चैत्रत्वावच्छिन्नवृत्तित्वेन तस्याख्यातेनानवगमात् सार्थक्योपपत्तेः। न च तथापि आख्यातजन्यस्य सामान्यधर्मप्रकारकबोधस्य वैयर्थ्यम्, तस्य प्रथमोत्पत्तिप्रयोजकत्वात्, इतरथा तृतीयाद्यापत्तेः। नहि कृत्याद्यभिधानमात्रं तत्प्रयोजकम्। भावाख्यातेऽपि 'चैत्रेण सुप्यते' इत्यादौ कृञा विवरणेन कृत्यभिधानात्प्रथमापत्तेः। अतः कर्तृत्वाद्यभि-**

**धानमेव प्रथमाप्रयोजकम्। तच्च शक्त्या, लक्षणया वेत्यन्यदेतत्। तस्मादभिहित-कारकत्वं प्रथमार्थः।**

**न च प्रासाद आस्ते पक्वं भुङ्क्ते इत्यादौ कृत्प्रत्ययेनाधिकरणत्वकर्मत्वयोः उक्तत्वात् प्रथमापत्तिः। तिङ्-निपाताभिहितकर्तृत्वकर्मत्वयोरेव प्रथमार्थत्वात् प्रासाद इत्यत्र सदिधातूत्तरघञा अधिकरणत्वाभिधानेऽपि सप्तम्यविरोधात्। पक्वमित्यत्र क्तप्रत्ययेन कर्मत्वाभिधानेऽपि द्वितीयायाः अविरोधाच्च। तिङ्-निपातो-दाहरणानि पूर्वमेव प्रदर्शितानि।**

---

अथ कात्यायनमतेन प्रथमाविभक्त्यर्थं निरूपयति — **कात्यायनस्तु इत्यादिना।** सूत्रस्वारस्यं यद्यपि प्रातिपदिकस्य योऽर्थः स एव प्रथमायाः अर्थः इत्यत्रैव। तत्र एकस्यैवार्थस्य प्रातिपदिकात् प्रथमातश्च भानमिति पौनरुक्त्यपरिहाराय प्रातिपदि-कस्य प्रथमार्थतात्पर्यग्राहकत्वमुपवर्णितम्। कात्यायनस्तु आख्यातादिभिः अभि-हितं यत् कारकं तद्वाचिनी प्रथमेत्याह। तथा च चैत्रः पचति इत्यत्र आख्यातेनाभिहितं यत् कारकं कर्तृत्वं तदेव प्रथमायाः अर्थः। चैत्रेण पच्यते तण्डुलः इत्यत्र आख्यातेनाभिहितं यत् कर्मत्वं तदेव तण्डुलपदोत्तरप्रथमार्थः। तयोश्च निरूपकतासंबन्धेन धात्वर्थे आख्यातार्थे भावनायां वा अन्वयः। प्रातिपदिकार्थे प्रथमा इति पाणिनिमते प्रातिपदिकस्य तात्पर्यग्राहकत्वं कल्प-नीयमिति शाब्दबोधजनकत्वं नोपपद्यते। अतोऽभिहितकारकत्वं प्रथमार्थः। ततश्च चैत्रः पचतीत्यत्र प्रथमायाः आख्याताभिहितं कर्तृत्वमर्थः। तत्र आधेयतासंबन्धेन चैत्रपदार्थस्यान्वयः चैत्रवृत्तिकर्तृत्वमिति बोधः। प्रथमार्थसंख्यायाः स्वाश्रयवृत्ति-त्वरूपसामानाधिकरण्यसंबन्धेन कर्तृत्वेऽन्वयः। यथा तण्डुलं पचतीत्यत्र द्विती-यार्थकर्मत्वे तदर्थैकत्वसंख्यायाः सामानाधिकरण्यसंबन्धेनान्वयः। तद्वत् इति

भावः। **कर्तृत्वादिवदिति**। आदिपदेन कर्मत्वादिकं गृह्यते। कर्तृत्वादिकं च **सुबन्तरार्थवत्** द्वितीयार्थकर्मत्वादिवत् क्रियापदार्थेऽन्वेति। अतः न व्युत्पत्त्यन्तर-कल्पनम्।

अत्र शङ्कते — **न च कर्तृत्वादेः इति**। सुबर्थकर्तृत्वकर्मत्वादेः आख्यातार्थतया भावनायामन्वयात् पुनः सुबर्थस्य तस्य भावनायामन्वये पौनरुक्त्यमिति शङ्का। आख्यातेन यद्यपि कर्तृत्वमभिहितम्। तथापि तत् चैत्रादिवृत्तित्वेन नाभिहितम्। सुबर्थकर्तृत्वादिकं प्रकृत्यर्थचैत्रादिवृत्तित्वेन बोध्यत इति न पौनरुक्त्यशङ्का इति समाधानम्। ननु सुपा आख्यातेन च द्वाभ्यां कर्तृत्वाद्यभिधाने पौनरुक्त्यमित्याशङ्क्य चैत्रवृत्तित्वेन कर्तृत्वं सुपाभिधीयते। तद्वृत्तित्वेन सामान्यतः आख्यातेन कर्तृत्वमभिधीयते इत्युक्तावपि सामान्यतः कर्तृत्वाभिधाने प्रयोजनाभावः इत्याशङ्क्य तस्य प्रथमोत्पत्तिप्रयोजकतया सार्थक्यं आख्या-तेनाभिधानस्यैव प्रथमोत्पत्तिप्रयोजकत्वात् इति समाधत्ते — **न च तथापी-त्यादिना। इतरथा** आख्यातेन कर्तृत्वानभिधाने चैत्रः पचतीत्यत्र चैत्रपदोत्तरं तृतीया स्यात् इति भावः।

ननु आख्यातेन कर्तृत्वानभिधानेऽपि कृत्यभिधानमस्तीति चैत्रपदोत्तरं न तृतीयापत्तिः। आख्यातेन कृत्यनभिधानस्यैव तृतीयाप्रयोजकत्वात् इत्या-शङ्क्याह — **न हि कृत्याद्यभिधानमात्रमिति**। मात्रपदेन कर्तृत्वाभिधान-व्यवच्छेदः। कृत्यभिधानं प्रथमाप्रयोजकम्, कृत्यनभिधानं तृतीयाप्रयोजकमिति न वक्तुं शक्यते। चैत्रेण सुप्यते इत्यत्र स्वापः क्रियते इति विवरणेन कृत्यभि-धानसत्त्वात् चैत्रपदोत्तरं प्रथमाया आपत्तेः। कृत्यनभिधानविरहात् तृतीयायाः अनुपपत्तेश्चेति भावः। निगमयति — **अत इति**। कर्तृत्वादीत्यादिपदेन कर्मत्वं गृह्यते। तच्च कर्तृत्वाद्यभिधानं च।

शङ्कते — **न च प्रासाद इति।** प्रासादे आस्ते इत्यत्र प्रकर्षेण सीदत्यस्मिन्निति प्रासाद इत्यर्थे प्रपूर्वकसद्-धातोः अधिकरणार्थे घञि प्रासादशब्दः निष्पन्नः। तत्र कृत्प्रत्ययेन घञा अधिकरणकारकस्योक्तत्वात् प्रथमाविभक्तिरेव साधुः, कथं सप्तमी भवेत्। एवं पक्वं भुङ्क्ते इत्यत्र क्तप्रत्ययाभिहितकर्मकारकवाचित्वात् विभक्तेः प्रथमाया एव साधुत्वं कथं द्वितीया भवेत् इति शङ्कितुराशयः। **कृत्प्रत्ययेन** = घञा क्तप्रत्ययेन च यथासंख्यम् अधिकरणत्वकर्मत्वरूपयोः कारकयोरभिधानात् प्रथमाया एव युक्तत्वात् इति भावः। उक्तशङ्कां समाधत्ते — **तिङ्निपातेति।** तिङा निपातेन चाभिहितयोः कर्तृत्वकर्मत्वयोरेव प्रथमा-विभक्त्यर्थत्वात् घञा अभिहिते अधिकरणे प्रासादे इत्यत्र प्रथमायाः न प्रसक्तिः। पक्वमित्यत्र क्तप्रत्ययेन कर्मत्वाभिधानेऽपि तिङ्निपाताभिहितत्वाभावात् न प्रथमा। आद्योदाहरणे तिङ्निपाताभिहितत्वमपि नास्ति कर्तृत्वकर्मत्वरूपत्वमपि नास्ति। द्वितीयोदाहरणे कर्मत्वरूपत्वेऽपि तस्य तिङ्निपातान्यतराभिहितत्वं नास्तीति विशेषः। कर्तृकर्मत्वयोरेवेति एवकारेण अधिकरणत्वव्यवच्छेदः तिङ्निपा-तेत्यनेन घञः क्तप्रत्ययस्य च व्यावृत्तिः। तथा च तिङ्निपाताभ्यामेवाभिहितयोः कर्तृत्वकर्मत्वयोरेवेति च अवधारणद्वयमभिप्रेतम्।

**पूर्वमेव प्रदर्शितानीति।** प्रथमाप्रयोजकविचारे पाणिनिमतेन प्रथमार्थविचारे च 'चैत्रः पचति' 'चैत्र इव मैत्रो गच्छति' 'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम्' इत्युदाहरणानि प्रदर्शितानि इति भावः।

## तिङ्-निपाताभिहितकर्तृत्वं प्रथमार्थ इत्यत्र शङ्का

**नन्वेवं तिङ्निपाताभिहितकारके प्रथमा, तदनभिहिते तु तृतीयादिः इत्यर्थापत्ते-स्तिङर्थान्वयिनि चैत्रादौ प्रथमोपपत्तावपि कर्त्रर्थककृदुपात्तभावनान्वये विवक्षिते**

तृतीयापत्तेः 'चैत्रेण पाचको भुङ्क्ते' इति प्रयोगापत्तिः। न हि कृदुपात्तभावनायां कारकाणामनन्वयः। 'काष्ठैस्स्थाल्यामोदनस्य पाचकोऽन्नं भुङ्क्ते' इत्यादौ काष्ठादीनामन्वयदर्शनात्। अतश्च तद्वदेव कर्तृकारकस्यापि अन्वयोपपत्तेः, तत्र च तिङुपात्तक्रियान्वयविवक्षाभावेन प्रथमानुपपत्तेः कृदुपात्तक्रियान्वयित्वेन विवक्षितस्य चैत्रस्य तिङाद्यनभिहितकर्तृत्वार्थका तृतीया दुर्वारा। एवम् 'ओदनं पक्को भुज्यते चैत्रेण' इत्यपि द्वितीयान्तप्रयोगापत्तिः। कर्मत्वस्य पाकनिरूपितस्य तिङाऽनुक्तत्वात्। शाब्दबोधश्च तत्र चैत्रकर्तृकपाकानुकूलकृत्याश्रयो भुङ्क्त इति। वारद्वयं कर्तृत्वबोधश्च 'घटत्ववान् घटः' इतिवन्नानुपपन्नः। एवं ओदनं पक्को भुज्यते 'इत्यत्रापि शाब्दबोधः, वारद्वयं कर्मत्वबोधश्चानुसन्धेय इति चेत्,

---

नन्वेतावता तिङा निपातेन च अभिहिते कर्तृत्वकर्मत्वे प्रथमायाः प्रयोजके ताभ्यां तयोरनभिधाने तु तृतीयाद्वितीये इत्यर्थपर्यवसानात्, तिङर्थान्वयिनि चैत्रः पचति इत्यत्र तिङर्थकर्तृत्वान्वयिनि चैत्रे प्रथमायाः उपपत्तावपि, कर्त्रर्थककृदुपात्तकृत्यन्वये विवक्षिते चैत्रः पाचको भुङ्क्ते इत्यत्र पचधातूत्तर कृत्संज्ञकण्वुल्प्रत्ययेन कर्तरि विहितेन अभिहितायां भावनायां चैत्रस्यान्वयविवक्षायां चैत्रपदोत्तरं तृतीयापत्त्या चैत्रण पाचको भुङ्क्ते इति प्रयोगापत्तिः चैत्रकर्तृकपाकानुकूलकृत्याश्रयः भुङ्क्ते इति बोधः। न च कृदुपात्तभावनायां कारकाणां नान्वय इति वाच्यम्। 'काष्ठैः स्थाल्यामोदनस्य पाचकोऽन्नं भुङ्क्ते' इत्यादौ काष्ठादिकरणस्थाल्याद्यधिकरणौदनादिकर्मकारकाणां कृदर्थभावनायां अन्वयदर्शनात्। तत्र हि काष्ठककरणकस्थाल्यधिकरणकौदनकर्मकपाककर्तृकर्तृकान्नकर्मकभोजनानुकूला कृतिः इत्यन्वयबोधात् तद्वत् कर्तृकारकस्यापि कृदर्थभावनायामन्वयसम्भवात्। तत्र तिङुपात्तभावनायां चैत्रस्यान्वयविवक्षाविरहेण चैत्रपदोत्तरं प्रथमाया अनुप-

पत्तेः। ततश्च उक्तस्थले तिङुपात्तक्रियायां (भावनायाम्) अन्वयविवक्षाविरहात् + प्रथमाया अनुपपत्तिः, तिङनभिहितकृदभिहितकर्तृत्वार्थिका तृतीया चैत्रपदोत्तरं प्राप्नोतीति नन्वित्यारभ्य शङ्का। वारद्वयं कर्तृत्वबोधश्च घटत्ववान्घट इतिवत् उपपद्यते।

एवम् इत्यादि। उक्तप्रकारेण ओदनं पक्वो भुज्यते चैत्रेण इति प्रयोगापत्तिः। पाकनिरूपितकर्मत्वस्य ओदननिष्ठस्य कृता क्तप्रत्योनाभिधानेऽपि भुजधातूत्तर-तिङा अनभिहितत्वात् तृतीयायाः संभवात्। ओदनकर्मकपाककर्मकर्मक-भोजनानुकूला चैत्रकर्तुका भावनेति बोधः। कर्मणः द्विधाभानं कर्मत्ववत् कर्मेतिवदुपपन्नमिति भावः।

## उक्तशङ्कापरिहारः

'अनभिहिते' इत्यस्य स्वान्वयिभिः कृदादिभिरनभिहित इत्यर्थात्। अतश्च तत्र कृता कर्तृत्वकर्मत्वयोरुक्तत्वान्न तृतीयाद्यापत्तिः। प्रथमायास्तु तदन्वयविवक्षायां निमित्ताभाव एव। न चैवं तदन्वयविवक्षायां षष्ठ्यापत्तिः। अनभिहित इत्यधिकारस्य प्रथमाविधायकसूत्रेण विच्छेदात् 'कर्तृकर्मणोः कृति' इति कर्तृषष्ठीविधायकसूत्रे अनुवृत्त्यभावादिति वाच्यम्। मण्डूकप्लुतिन्यायेन तत्रापि तदनुवृत्तेः सर्वसम्म-तत्वात्।

अन्यथा 'चैत्रः पाचको भुंक्ते' इति वक्तव्ये, 'चैत्रस्य पाचको भुंक्ते' इत्यपि प्रयोगापत्तेः। अतस्तत्र पक्व इति प्रथमान्तयोरुभयोरपि भुङ्क्त इति क्रियाया-मेवान्वयः, परस्परमभेदान्वयबोधस्तु पूर्ववत्। यत्रापि क्रियापदाश्रवणम्, तत्रापि 'अस्तिर्भवन्ती'-इत्यनेनाध्याहर्तव्यम्।

उक्तपूर्वपक्षस्य समाधानमाह — **अनभिहित इत्यस्येति। स्वान्वयिभिः** = कर्तृत्वादिकारकप्रतियोगिकान्वयानुयोगिभिः। कर्तृत्वादिरूपं कारकं यत्रान्वेति तैः) **कृदादिभिः** = कृत् तिङ् इत्यादिसंज्ञकैः अनभिहिते कर्तृत्वादौ, तद्वाचकतृतीयादिविभक्तिर्भवतीत्यर्थः, **अतश्च** = उक्तार्थस्वीकारात्। **तत्र** चैत्रः पाचको भुङ्क्ते, ओदनः पक्वो भुज्यते चैत्रेण इत्यत्र चैत्रनिष्ठकर्तृत्वान्वयितया विवक्षितक्रियाप्रतिपादकपाचकपदेन तद्घटककृत्प्रत्ययेन अकेन कर्तृत्वस्याभिहिततया तद्वाचकप्रथमैव चैत्रपदोत्तरं भवति, न तृतीया। एवं ओदननिष्ठकर्मत्वान्वयितया विवक्षितेन कृत्संज्ञकक्तप्रत्ययेन कर्मत्वस्योक्ततया ओदनपदोत्तरं प्रथमैव भवति, न द्वितीयेति भावः।

**प्रथमायास्तु इति।** कृदर्थकर्तृत्वकर्मत्वान्वयविवक्षायां प्रथमायाः निमित्तं नास्ति। तिङनिपाताभिहितकर्तृत्वकर्मत्वयोरेव कर्तृकर्मवाचकपदोत्तरं प्रथमायाः साधुत्वात्। यथा चैत्रःपचति, ओदनो भुज्यते इति, इति भावः।

पुनः शङ्कते — **न चैवमिति।** एवम् — चैत्रः पाचको भुङ्क्ते, ओदनः पक्वो भुज्यते, इत्यत्र चैत्रपदोत्तरं तृतीयायाः ओदनपदोत्तरं द्वितीयायाश्च पूर्वोक्तरीत्या वारणेऽपि 'कर्तृकर्मणोः कृति' इति सूत्रेण चैत्रपदोत्तरं षष्ठ्याः, ओदनपदोत्तरमपि षष्ठ्याः प्रसङ्गः। कृत्प्रत्यययोगे कर्तृकर्मवाचकपदोत्तरं षष्ठ्याः विधानात्। न च तत्सूत्रेऽपि अनभिहिते इत्यस्याधिकारात् न तदापत्तिरिति वाच्यम्। 'प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा' (पा.सू 2.3.46) इति सूत्रे 'अनभिहिते' (पा.सू 2.3.1) इति सूत्रं नानुवर्तते। अनभिहितानां प्रातिपदिकार्थानामभावात्। अतस्तेन सूत्रेण विच्छेदात् 'कर्तृकर्मणोः कृति' (पा.सू 2.3.65) इति सूत्रेऽपि तत् नानुवर्तते। तथा च कृता कर्तृकर्मणोरभिधानेपि 'कर्तृकर्मणोः कृति' (पा.सू

2.3.65) इति सूत्रेण षष्ठ्याः प्राप्त्या 'चैत्रेण पाचको भुङ्क्ते' 'ओदनं पक्को भुज्यते चैत्रेण' इति प्रयोगयोरापत्तिरिति शङ्का।

तत्र समाधानमाह — **मण्डूकप्लुतिन्यायेनेति**। 'कर्तृकर्मणोः कृति' इति सूत्रेऽपि मण्डूकप्लुतिदृष्टान्तेन अनभिहिते इत्यधिक्रियते इति भाष्यकारादिसंमतत्वात् न पूर्वोक्तापत्तिः। कृत्प्रत्ययेन कर्तृकर्मणोरभिहितत्वात् इति भावः।

**अन्यथेति**। 'अनभिहिते' इत्यस्य 'कर्तृकर्मणोः कृति' इति सूत्रे अनुवृत्त्यभावे कर्तरि कृता अभिहितेऽपि कर्तृवाचकपदोत्तरं षष्ठी भवतीत्यङ्गीकारे चैत्रः पाचको भुङ्क्ते इति वक्तव्ये चैत्रस्य पाचको भुङ्क्ते इति प्रयोगापत्तिरिति भावः।

तथा च वार्तिककारमते प्रथमायाः अभिहितकारकवाचकत्वात् चैत्रः पाचकः इति प्रथमान्तयोरुभयोरपि भुङ्क्ते इति क्रियायामन्वयात् चैत्रकर्तृका पाचककर्तृका च पाककृतिः इति शाब्दबोधे जाते पश्चात् चैत्राभिन्नः पाचक इति वोधो जायते। **उभयोरपीति**। यत्र चैत्रः पाचकः इत्येतावन्मात्रमुक्तम्, तत्र अस्तीति पदमध्याहर्तव्यम्। अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्तीति वार्तिकात्।

## लटि तिङोऽभावापत्तिशङ्का, तत्परिहारश्च

**न चैवं प्रथमायास्तिङ्निपातान्यतरसामानाधिकरण्यनिमित्तत्वेन 'चैत्र पच् ल्' इति स्थितिदशायां तिङोऽभावात् प्रथमानिमित्ताभावेन अप्रथमासमानाधिकरणपदत्वरूपस्य शतृशानचोर्निमित्तस्य सत्त्वात् लटः शतृशानचावप्रथमासमानाधिकरणे (पा.सू 3.2.124) इत्यनेन विशेषविधिना शतृशानचोरेव लटि प्राप्त्यापत्तेः तिङादेर्लिडादिमात्रविषयत्वेनाऽपि सामान्यविधिवशादुपपत्तेः लटि तिङोऽभावापत्तिरिति वाच्यम्, एतादृशार्थस्य लटि शतृशानज्विधानमात्रेण सिद्धेः अप्रथमासमानाधिकरण इति, पदवैयर्थ्यापत्तेः। तत्परिहारार्थं प्रथमाया लट्यपि ज्ञापकबलेन**

सिद्धेः तस्याश्च प्रयोजकीभूततिङादिसामानाधिकरण्यं विनानुपपत्तेः लटि तिङ्क्ष्विद्ध्युपपत्तेः। अत एव ज्ञापकेन भावि तिङादिकं निमित्तीकृत्य सर्वा एव विभक्तयो लटि भवन्तीति ज्ञाप्यते। तत्र च प्रथमाभिन्नविभक्तिसामानाधिकरण्ये शतृशानचोः विधानेऽपि, न तयोः पूर्वप्रमिततिङादिबाधकत्वम्। एवञ्च अप्रथमा-समानाधिकरणे इत्यस्य पर्युदासत्वेऽपि तिङाद्युपपत्तिः। प्रसज्यप्रतिषेधत्वपक्षे तु सुतराम्। महाभाष्यकारीया लटि तिङाद्यनुपपत्ति — परिहारास्तु दुरुपपादत्वादिह न लिखिताः। सर्वथा तिङ्निपातोभयाभिहितकर्तृत्वकर्मत्वयोः प्रथमेत्याहु। तयोश्च द्वितीयाद्यर्थवदेवाख्यातोपात्तभावनान्वय इति सिद्धम्। न चैवमपि प्रथमार्थ-स्याख्यातार्थ एवान्वयः, द्वितीयार्थादेस्तु कृदाद्यर्थेऽपीति, कथं कार्यकारण-भावैक्यमिति वाच्यम्, सुबर्थप्रकारकशाब्दत्वावच्छिन्नं प्रति लिङ्गानन्वयिपद-जन्योपस्थितेर्भावनाविशेष्यतासम्बन्धेन कारणत्वेऽपि प्रमाणान्तरजन्याभिहितत्वा-द्युपस्थितिरूपकारणान्तरवशेन विशेषलाभोपपत्तेरिति दिक्।

**इति श्रीमदाचार्यखण्डदेवविरचिते भाट्टतन्त्ररहस्ये कात्यायनमतेन प्रथमाविभक्त्यर्थविचारः समाप्तः**

---

**न चैवमित्यादि।** अयमाशयः — अभिहिते प्रथमा इति 'तिङ्समानाधिकरणे प्रथमा' इति च कात्यायनवार्तिकम्। तदनुसारेण प्रथमायाः अर्थमुपवर्ण्य 'शतृशानचोश्च निमित्ताभावात् तिङोऽभावः तयोरपवादत्वात्' इति कात्यायने-नोद्भावितं दोषमाविष्करोति — **न चैवमिति।** एवं पूर्वोक्तरीत्या तिङ्निपातयोः अन्यतरेण सामानाधिकरण्यं निमित्तं यस्याः तत्त्वे, प्रथमायाः तदन्यतरसामा-नाधिकरण्यनिमित्तकत्वे, लटि तिङोऽभावापत्तिः इत्यग्रिमेणान्वयः। लटि तिङोऽभावे तत्सामानाधिकरण्यनिमित्तकप्रथमायाः अप्रवृत्त्यापत्तिः। एवं च

पचति चैत्रः इत्यादौ चैत्रप्रातिपदिकोत्तरं प्रथमायाः अप्रवृत्त्यापत्तिः इत्याशयः। तिङ्समानाधिकरणे प्रथमायाः अप्रथमासामानाधिकरणे शत्रुशानशोश्च वाक्य-संस्कारपक्ष एवोपपत्तिः इत्याशयेन प्राथमिकीं प्रक्रियां प्रदर्शयति — **चैत्र इति।** चैत्र पच् लृ इति प्राथमिकदशायां **तिङोऽभावात्** = तिङोऽनुत्पत्तेः प्रथमायाः यत् निमित्तं तिङ्सामानाधिकरण्यं तस्याभावात् प्रथमायाः अप्रवृत्त्या अप्रथमासमा-नाधिकरणपदत्वरूपस्य शतृशानचोर्निमित्तस्य सत्त्वात् 'लटः शत्रुशानचाव-प्रथमासमानाधिकरणे' (पा.सू. 3.2.124) इति सूत्रेण लटः शत्रुशानचावेव आदेशौ प्राप्नुतः। ततश्च तत्र लटः तिङादेशो न प्राप्नोति। न च लकारस्य 'लस्य' इति सूत्रेण तिङादेशविधानसामर्थ्यात् तिङादेशो भवितुमर्हतीति वाच्यम्। तस्य सूत्रस्य लिडादि विषयत्वेनाप्युपपत्तेः लटि अप्रवृत्तेः इति **न चैवम्** इत्यारभ्य इति वाच्यमिति पर्यन्तस्य भावः। **अप्रथमासमानाधिकरणेति।** अप्रथमान्तं यत् समा-नाधिकरणं पदं तद्रूपस्येत्यर्थः। प्रथमायाः अप्रवृत्तौ चैत्र इत्यस्याप्रथमान्ततया तत्समानाधिकरणपदरूपस्येत्यर्थः। ननु शत्रुशानचोरेव प्रवृत्तौ किं विनिगमकम् इत्यत आह — **विशेषविधिनेति।** तिङादेशानां लकारसामान्यं स्थानि। शतृशान-चोस्तु लट् मात्रं स्थानि। अतः शानच्विधिः विशेषशास्त्रम्। अतोऽपवादत्वात् तिङं बाधित्वा शतृशानचावेव भवेतामिति भावः।

तर्हि तिङादेशः लकारस्य स्थाने विहितः किल। तस्योदाहरणं किमिति शङ्कायामाह — **तिङादेशस्येति।** अस्य उपपत्तेरित्येनान्वयः।

एतावत्पर्यन्तं कात्यायनकृतवार्तिककृताक्षेपानुवादः। अयमत्र पिण्डितार्थः — चैत्र ल् इत्यवस्थायां तिङोऽभावात् प्रथमाया अप्रवृत्त्या चैत्र इत्यस्याप्रथ-मान्ततया प्रथमान्तसामानाधिकरण्यरूपनिमित्ताभावात् तिङादेशबाधनेन विशेष-विहितत्वात् शतृशानचोः आपत्त्या लटि प्रथमायाः प्रयोग एव न स्यात्। तिङस्तु

लडतिरिक्तो लकारोऽवकाशः। स एव प्रथमायाः अप्यवकाशः। तथा च अभिहिते प्रथमा लिङ्गमानाधिकरणे प्रथमा इति कात्यायनोक्तलक्षणस्याव्याप्तिः, एष एव दोषो वार्तिककृता उक्तः।

तत्र समाधानमाह — **एतादृशार्थस्येत्यादिना**। लटि तिङो न प्रवर्तन्ते, अतस्तत्र प्रथमा न भवतीत्येतादृशार्थस्येत्यर्थः। अयं भावः — निरुक्तरीत्या लटि प्रथमा न प्रवर्तते, निमित्ताभावात्। तथा च प्रथमासामानाधिकरण्ये शतृशानचोर्वारणाय क्रियमाणम् 'अप्रथमासामानाधिकरणे' इति निषेधवचनं व्यर्थमेव। न चेष्टापत्तिः। शास्त्रानर्थक्यस्य वृद्धिसंज्ञासूत्रे नैकेनाप्यक्षरेणानर्थकेन भवितव्यम् इति भाष्यकारेण निराकृतत्वात्। अतस्तद्वचनबलेन लटयपि प्रथमा प्रवर्तते इति ज्ञाप्यते। प्रथमाप्रवृत्तेश्च तिङ्गामानाधिकरण्यमूलकतया मूलभूता तिङुत्पत्तिरपि लटि ज्ञाप्यते। 'यावता विनानुपत्तिः तावत् सर्वं ज्ञाप्यते' इति न्यायात्। एवं च प्रथमासामानाधिकरण्ये शत्रादिवारणाय सूत्रे निषेधवचनमिति स्वांशे चारितार्थ्यम् निषेधवचनस्य। परं तु तत्सूत्रीयविध्यंशप्रयोजकद्वितीयादिविभक्तिरपि अनेन ज्ञाय्यते। तेन विना सूत्रप्रवृत्तेरयोगात्। तेन 'पचन्तं चैत्रं पश्य' इत्यादि सिध्यति।

'तिङ्गमानाधिकरणे प्रथमा' इति सूत्रयतः तदुपरि 'शतृशानचोश्च निमित्ताभावात् प्रथमाभावस्तयोरपवादत्वात्' इति दोषमुद्भाव्य तमपरिहृतवतो वार्तिककारस्याशयोऽयमेवेति निश्चेतुं शक्यते। प्रकारान्तरसद्भावे तत् वार्तिककृता अवश्यं प्रदर्शनीयं स्यात्। तत् न कृतम्। यत्सूत्रप्रवृत्तिमूलकोऽयं दोषः तेनैव परिहारोऽपि सुकर इत्येव वार्तिककारस्य हृदयम्। सर्वमिदं खण्डदेवेनात्र मनसि कृतम्।

**शतृशानज्विधानमात्रेणैवेति**। निषेधवचनं विना विधिवाक्यमात्रेणैव सिद्धे-रित्यर्थः। **पदवैयर्थ्यापत्तेरिति**। लटि तिङोऽभावेन प्रथमाया अप्रवृत्त्या व्यावर्त्या-भावेन निषेधवचनवैयर्थ्यापत्तेरित्यर्थः। **तत्परिहारार्थम्** = वैयर्थ्यपरिहारार्थम्। ज्ञापकबलेन अप्रथमासमानाधिकरणे इति निषेधवचनरूपज्ञापकबलेन। **तस्याश्च** लटि प्रथमायाः। प्रयोजकीभूततिङ्सामानाधिकरण्यं विना अनुपपत्तेः लटि तिङ्सिद्धेः उपपत्तेः। तथा च तिङ्सामानाधिकरण्यरूप निमित्तसद्भावात् प्रथमायाः प्रवृत्त्या तत्र शत्रादिवारणाय अप्रथमासमानाधिकरणे इति निषेधश्चरितार्थः। अन्यत्र प्रयोजनं चैत्रः पचतीति प्रयोगसिद्धिरिति भावः।

ननु चैत्र पच् ल् इति दशायां चैत्रादेः कर्मत्वादिनिरूपकभावनायाः अभावेन कर्मत्वाद्यसिध्द्या तद्वाचकद्वितीयादीनामप्रवृत्तेरित्यत आह — **अत एव ज्ञापके-नेति**। अनेनैव ज्ञापकेन भावितिङं निपातं च निमित्तीकृत्य प्रथमत एव द्वितीयादीनां सर्वासां विभक्तीनां उत्पत्तिः स्वीक्रियते। तत्र चेदमेव शत्रादिविधानं ज्ञापकम् इति भावः। **सर्वा एव** = सर्वा अपि। **ज्ञाप्यत इति** । तेन पचन्तं चैत्रं पश्यति, पचमानात् चैत्राददाति इत्यादौ शत्रादिसिद्धिरिति भावः। ज्ञापितमर्थं प्रकृते योजयति — **तत्र चेति**। निरुक्तार्थस्वीकारे चेत्यर्थः। पचमानं चैत्रं पश्यति, गच्छन्तं मैत्रं पश्यति, धावते मैत्राय ददाति इत्यादौ शतृप्रत्ययस्य शानच्-प्रत्ययस्य च विधानेऽपि लटि प्रथमाविषये शत्रादिस्तिङं न बाधत इत्याह-**प्रथमाभिन्नेति**। तयोः शतृशानचोः। **पूर्वप्रमितेति**। अप्रथमासमानाधिकरणे इति निषेधसामर्थ्यात् लटि प्रथमा तदुपपादकस्तिङ् च स्वीक्रियते। तेन तिङः पूर्वं प्रमाणसिद्धत्वात् न तद्बाधकत्वं शत्रादेरिति भावः। एवं च पच् ल् इत्यवस्थायां तिङ्बाधनेन न शतृशानचौ प्रवर्तेते। ज्ञापकवशेन अत्र तिङ एव प्रवृत्तत्वात्। अतो

लटि प्रथमा प्रवर्तत एव। भावितिङादिनिमित्तकतया द्वितीयादीनां ज्ञापकवशात् प्रवृत्त्या शत्रादिः प्रवर्तते। अतो न कापि विप्रतिपत्तिरिति भावः।

एतावता वार्तिकोक्तरीत्या लटि तिङनुपपत्तिं तत्परिहारं च प्रदर्श्य प्रातिपदिकार्थसूत्रे महाभाष्यकारोक्तिं कटाक्षयन् आह — **एवं चेति**। निरुक्तरीत्या अप्रथमासमानाधिकरणे इति ज्ञापकेन लटि तिङामुपपत्तौ चेत्यर्थः। कर्मणि द्वितीया इत्यादौ कर्मादौ द्वितीयैवेत्यर्थनियमः, अप्रथमासमानाधिकरणे इति पर्युदासः इति पक्षे तिङामुपपत्तिर्नास्तीति भाष्योक्तं, पर्युदासपक्षे द्वितीया कर्मण्येवेति विभक्तिनियमपक्षे च तिङामुपपत्तिर्नास्त्येवेति हरदत्ताद्युक्तं चासंगतमेवेति ध्वनयन्नाह — **अप्रथमासमानाधिकरण इत्यस्येति**। इत्यस्य ज्ञापकाश्रयणात् पर्युदासपक्षेऽपि तिङामुपपत्तिः सुलभैवेति भावः। प्रसज्यप्रतिषेधपक्षे विमतेरभावादाह — **प्रसज्यप्रतिषेधत्वपक्षे त्विति**। एतत्पक्षे लटि सर्वैः तिङुत्पत्तेः अभ्युपगतत्वादाह — **सुतरामिति**। ज्ञापकाश्रयणात् सर्वेष्वपि पक्षेषु लटि तिङामुपपत्तिः निराबाधैवेति भावः।

ननु महाभाष्योक्तरीत्यैव तिङामुपपत्तिः प्रदर्श्यनाम्, किं तदनुक्तज्ञापकाश्रयणेनेत्यत आह — **महाभाष्यकारीयाः इति**। एतत्तत्त्वं **पेरि सूर्यनारायणशास्त्रिचरणैः** विशदं प्रतिपादितम्। ततोऽवगन्तव्यं जिज्ञासुभिः। अथ वा तैर्लिखितं तथैवात्र लिखामि।

**तिङनुपपत्तिपरिहारा इति**। वार्तिककारोक्ततिङनुपपत्तेः परिहारा इत्यर्थः। अयं भावः — शतृशानच्विधायके अप्रथमासमानाधिकरणे इत्यत्र पक्षद्वयम् —

1. प्रथमान्तभिन्नविभक्त्यन्तसमानाधिकरणे इति पर्युदासः।

2. प्रथमान्तसमानाधिकरणे नेति प्रसज्यप्रतिषेध इति।

तथा स्वौजसमौट् (पा.सू. 4.1.2) इत्यादिसामान्यसूत्रेण विभक्तिविधाने पक्षद्वयम् —

1. कर्मादेरर्थस्य विभक्त्यन्तरसंबन्धनिवर्तकः कर्मणि द्वितीयैव इत्येवंरूपोऽर्थनियमः।

2. विभक्तेरर्थान्तरसंबन्धनिवर्तकः कर्मण्येव द्वितीया इत्येवंरूपो विभक्तिनियमः इति।

एवं च आहत्य पक्षचतुष्टयं संपद्यते —

1. पर्युदासार्थनियमौ 2. प्रसज्यप्रतिषेधार्थनियमौ 3. पर्युदासविभक्तिनियमौ 4. प्रसज्यप्रतिषेधविभक्तिनियमौ इति।

तत्र पर्युदासार्थनियमपक्षाश्रयणे कर्मणि द्वितीयैवेति नियमे द्वितीयादीनामनियमनात् प्रातिपदिकार्थमात्रेऽपि स्वादिसूत्रेण सप्तानामपि विभक्तीनां समूहालम्बनबुद्धिविषयतया स्थितत्वात् प्रथमायाः विद्यमानत्वेऽपि प्रथमाभिन्नद्वितीयादिसामानाधिकरण्यरूपनिमित्तसद्भावात् तिङपवादतया शतृशानचौ स्याताम्। अतस्तत्पक्षे एव शतृशानचोश्च इत्यादिवार्तिकोक्तदोषो भवति। द्वितीयपक्षे तु द्वितीयादीनां सत्त्वेऽपि प्रथमाया विद्यमानत्वात् तदाश्रयः प्रतिषेधः प्रवर्तते। तथा च शतृशानचोरभावात् तिङि सति तत्सामानाधिकरण्यात् प्रथमैवेति नियमेन द्वितीयादीनां व्यावर्तनान्न दोषः। तृतीयचतुर्थयोरपि चैत्र पच् ल् इति अवस्थायां कर्मण्येव द्वितीयेत्येवं द्वितीयादीनां कर्माद्यर्थेषु नियमनात् तादृशार्थाभावात् द्वितीयादीनामप्रवृत्त्या अनियतायाश्च प्रथमाया विधानात् पर्युदासे प्रतिषेधे वा नास्ति शतृशानचोः प्रसङ्गः इति न दोषः।

एवं च प्रथमपक्षे दोषः, द्वितीयादिपक्षत्रये तिङामुपपत्तिसद्भावात् प्रथमा निराबाधेति तात्पर्यम्। प्रथमपक्षाश्रयणेन वार्तिकं प्रवृत्तम्। तत्पक्षे दोषमङ्गीकृत्य पक्षान्तराश्रयणेन समाहितं भाष्यकृतेति।

तथा च प्रतिपादिकार्थसूत्रे समाधानभाष्यम् — "पाक्षिक एष दोषः। कतरस्मिन् पक्षे। शतृशानचोः द्वैतं भवति अप्रथमा वा विधिना आश्रीयते, प्रथमा प्रतिषेधेन" इति।

विभक्तिनियमे चापि द्वैतं भवति — विभक्तिनियमो वा स्यात् अर्थनियमो वा इति। तत् यदा तावदर्थनियमः अप्रथमा च विधिना आश्रीयते तदा एष दोषो भवति। यदि हि विभक्तिनियमः तदा यद्येवम् अप्रथमा विधिना आश्रीयते अथापि प्रथमा प्रतिषेधेन न तदा दोषो भवति इति। एवं च भाष्ये परिहारास्त्रयः कथिताः। ते च निरुक्तदिशा द्रष्टव्याः इति बोध्यम्।

तेषामुपेक्षणे बीजमाह — **दुरुपपादत्वादिति।** दुष्टः उपपादः उपपादनं प्रमाणं येषां ते दुरुपपादाः निष्प्रमाणाः। तेषां भावः तस्मात् निष्प्रमाणत्वादित्यर्थः।

अयं भावः — भाष्यकृता पर्युदासेऽपि विभक्तिनियमपक्षे शतृशानचौ न प्रवर्तेते इत्युक्तम्। तदयुक्तम्। तत्पक्षेऽपि तयोर्दुर्वारत्वात्। तथा हि — कर्मण्येव द्वितीयेति विभक्तिवियमेन द्वितीयादीनामनुत्पत्तावपि शेषषष्ठी दुर्वारा। सा हि शेष एवेति नियम्यते। यत्र च विभक्त्यन्तरस्य नियमो न प्रवृत्तः स शेषः। ततश्च तिङ्सामानाधिकरण्यात् प्राक् शेषलक्षणषष्ठ्यां सत्यां तिङ्बाधनेन शतृशानचौ प्रवर्तेते एव। अतो निर्दुष्टत्वेन भाष्यकृता प्रतिपादिते अस्मिन् पक्षेऽपि तद्दोषतादवस्थ्यात् एतद्भाष्यस्य प्रौढिवादमात्रत्वात् तद्बलेन लटि तिङुपपत्तिकल्पनापेक्षया मदुक्तसरणिरेव ज्यायसी। अत एव अर्थनियमे विभक्तिनियमे च पर्युदासे दोष एव।

नियमद्वयेऽपि प्रसज्यप्रतिषेधे न दोषः इति हरदत्ताद्युक्तिरपि नादर्तव्या। पर्युदासेऽपि मदुक्तरीत्या लटि तिङुपपत्तेः सुकरत्वादिति। एतत्सर्वमभिप्रेत्यैव — एवं चाप्रथमासमानाधिकरण इत्यस्य पर्युदासत्वेऽपि लटि तिङुपपत्तिरित्युक्तम्। कात्यायनमतमुपसंहरति — **सर्वथेति**। सर्वैः प्रकारैः इत्यर्थः उद्भावितदोषाणां वारणादित्यर्थः। **इत्याहेति**। इत्यर्थकमाहेत्यर्थः। **तयोश्चेति**। प्रथमाविभक्त्यर्थयोः द्वितीयाद्यर्थवत् कर्मत्वकरणत्वादिवत् आख्यातार्थभावनायां निरूपकत्वसंबन्धेन अन्वय इत्यर्थः।

शङ्कते — **न चैवमिति**। प्रथमार्थस्य आख्यातार्थे एवान्वयः द्वितीयाद्यर्थस्य तु ओदनं पचमानः काष्ठेन पचमानः इत्यादौ द्वितीयार्थस्य कर्मत्वस्य तृतीयार्थस्य करणत्वस्य च कृदर्थभावनायामन्वयः इति कार्यकारणभावैक्यं भवदुक्तं कथमुपपद्यते इति शङ्का। समाधानं तु सुबर्थप्रकारकशाब्दत्वावच्छिन्नं प्रति लिङ्गानन्वयिपदजन्योपस्थितिः भावनानिष्ठविशेष्यतासंबन्धेन कारणमिति एक एव कार्यकारणभावः। ओदनं पचमानः इत्यत्र लिङ्गान्वयरहितशानच्प्रत्ययोपस्थापिता भावना विशेष्यभूता।

चैत्रः ओदनं पचति काष्ठेन पचति इत्यादौ लिङ्गान्वयरहिताख्यातजन्योपस्थितिविशेष्यभूता भावना इति आख्यातं कृत्प्रत्ययं च लिङ्गानन्वयिपदत्वेन अनुगतीकृत्य एक एव कार्यकारणभावः कल्प्यत इति न कल्पनागौरवम्। भावनायाः क्वचित् कृता अभिधानं क्वचित् आख्यातेनेति वैषम्यं अभिधानानभिधानप्रयुक्तविभक्तिनियमार्थं षोढव्यम् इति भावः।

**इति सारप्रकाशिकायां प्रथमाविभक्त्यर्थविचारः।**

# द्वितीयाविभक्त्यर्थविचारः

## कर्मत्वस्वरूपनिर्वचनम्

द्वितीयार्थस्तु “कर्मणि द्वितीया” (पा.सू 2.3.2) इति सूत्रात् कर्मत्वम्। तदपि भावनायामेवान्वेति। अत्र विवदन्ते। तत्र नवीनतार्किकास्तावत् — धात्वर्थानधिकरणत्वे सति धात्वर्थतावच्छेदकफलशालित्वं कर्मत्वम्। पच्यादिधात्वर्थो हि फलावच्छिन्नो व्यापारः तदवच्छेदकीभूतफलस्य विक्लित्त्यादेर्देवदत्तवृत्तिव्यापारानधिकरणीभूतौदनवृत्तित्वादोदनादेः कर्मत्वमिति लक्षणसमन्वयः। गमनफलस्य संयोगस्य ग्राम इव चैत्रेऽपि सत्त्वात् धात्वर्थानधिकरणत्वे सतीति, चैत्रस्य गमनरूपधात्वर्थाधिकरणत्वात्। गमनजन्यपूर्वदेशविभागशालिनि पूर्वदेशे गमनानधिकरणत्वविशिष्टधात्वर्थजन्यफलशालित्वस्य सत्त्वादतिव्याप्तिः। एवं ‘वृक्षात् भूमौ पर्णं पतती’त्यत्र पतनक्रियाजन्यसंयोगविभागरूपफलाश्रययोर्भूमिवृक्षयोः अतिव्याप्तिः, अतो धात्वर्थतावच्छेदकेति फलविशेषणम्। एवञ्च गमेस्संयोग एव, त्यजेर्विभाग एव। पततिस्पन्दत्यादेर्नैव किञ्चित्फलं धात्वर्थतावच्छेदकमिति, नोक्तातिव्याप्तिः। फलपदञ्च क्रियाजन्यफलपरम्। तेन धात्वर्थतावच्छेदकव्यापारत्वमादाय व्यापारे अधोदेशमादायाऽधोदेशावयवे च नातिव्याप्तिः। पततेरधोदेशसंयोगः फलम्। अत एव नरकं पततीत्यपि प्रयोग इति केचित्।

---

अथ द्वितीयाविभक्त्यर्थं निरूपयति — **द्वितीयार्थस्तु इत्यादिना।** कर्मणि द्वितीया (पा.सू 2.3.2)इति सूत्रम्। तत्र कर्मपदं कर्मत्वपरम्। सप्तम्याः वाचकत्वमर्थः। कर्मत्ववाचिका द्वितीयेति सूत्रार्थः। चैत्रो ग्रामं गच्छति इत्यत्र ग्रमापदोत्तर-

द्वितीयायाः कर्मत्वमर्थः। तत्राधेयतासंवन्धेन प्रकृत्यर्थस्य ग्रामस्यान्वयः। कर्मत्वस्य निरूपकतासंवन्धेन अथ वा स्वनिरूपकधात्वर्थगमनानुकूलत्वसंवन्धेन आख्यातार्थभावनायामन्वयः। तथा च चैत्रकर्तृका ग्रामनिष्ठकर्मत्वनिरूपिका अथ वा ग्रामनिष्ठकर्मत्वनिरूपकगमनानुकूला भावना इति शाब्दबोधः।

अत्र नवीनतार्किकाणां विवादं प्रदर्शयति — **तत्र नवीनतार्किकाः इत्यादिना**। अत्र नवीनतार्किकपदेन कमभिप्रैतीति न जानीमः। धात्वर्थानधिकरणत्वे सति धात्वर्थतावच्छेदकफलाश्रयत्वं कर्मत्वम्। चैत्रः पचति ओदनम् इत्यत्र पचधातोः विक्लित्त्यनुकूलो व्यापारः अर्थः। विक्लित्तिः धात्वर्थतावच्छेदकं फलम्। तदाश्रयत्वं ओदने वर्तते। धात्वर्थः विक्लित्त्यनुकूलव्यापारः तदनधिकरणत्वं च तत्र वर्तते। अतः ओदनस्य कर्मत्वम्। **ओदनवृत्तित्वात् इति**। विक्लित्तिरूपफलस्य ओदनवृत्तित्वेन ओदनस्य फलाश्रयत्वरूपं कर्मत्वम्। कर्मत्वलक्षणे धात्वर्थानधिकरणत्वे सतीति विशेषणस्य प्रयोजनमाह — **गमनफलस्येति**। चैत्रो ग्रामं गच्छति इत्यत्र धातोः संयोगजनकव्यापारोऽर्थः। चैत्रगतव्यापारजन्यफलस्य संयोगस्य चैत्रग्रामोभयनिष्ठतया चैत्रगतव्यापारजन्यसंयोगाश्रयत्वं ग्रामे यथा अस्ति तथा चैत्रेऽप्यस्तीति चैत्रस्य ग्रामकर्मत्वं स्यात्। तथा च चैत्रपदोत्तरं कर्मत्वे द्वितीया च स्यात्। तद्वारणाय धात्वर्थानधिकरणत्वे सतीत्युक्तम्। चैत्रस्य धात्वर्थव्यापाराश्रयत्वात् तदनधिकरणत्वं नास्तीति न गमनकर्मत्वापत्तिः। धात्वर्थजन्येत्यनुक्त्वा धात्वर्थतावच्छेदकेत्युक्तेः प्रयोजनमाह — **गमनजन्येति**। धात्वर्थव्यापारजन्यफलाश्रयत्वं कर्मत्वम् इत्युक्ते सति चैत्रकर्तृकं यत् ग्रामं प्रति गमनं तेन पूर्वदेशविभागः उत्तरदेशसंयोगश्च जायते। तत्र गमनजन्यविभागरूपफलाश्रयस्य पूर्वदेशस्य कर्मत्वं स्यात्। तथा च तदा चैत्रः पूर्वदेशं गच्छतीति प्रयोगः स्यात्। एवं यदा वृक्षात् पर्णं भूमौ पतति तदा पतनक्रियया पर्णस्य वृक्षात् विभागः भूमौ

संयोगश्च जायते इति पतनक्रियाजन्यविभागाश्रयस्य वृक्षस्य पतनजन्यसंयोगाश्रयभूमेश्च कर्मत्वं स्यात् तथा च वृक्षपदोत्तरं द्वितीया भूमिपदोत्तरं च द्वितीया स्यात्। विभागसंयोगयोः द्विनिष्ठत्वात्। तद्वारणाय धात्वर्थजन्येत्यनुक्त्वा धात्वर्थतावच्छेदकेत्युक्तम्। तथोक्तौ च पतधातोः व्यापारमात्रवाचकतया विभागस्य धात्वर्थतावच्छेदकत्वाभावात् विभागाश्रयस्य वृक्षस्य न कर्मत्वम्। संयोगस्यापि धात्वर्थतावच्छेदकत्वाभावात् न तदाश्रयभूमेः कर्मत्वम्। भूमेः पतनाधारत्वं वृक्षस्य पतनावधित्वं च विवक्षितम्। भूम्यधिकरणकवृक्षावधिकपतनाश्रयः पर्णमिति बोध इति भावः। कर्मत्वलक्षणे धात्वर्थतावच्छेदकफलशालित्वमित्यत्र फलपदस्य प्रयोजनमाह — **फलपदं चेति**। फलपदानुपादाने धात्वर्थतावच्छेदकाश्रयत्वं कर्मत्वमित्युक्तं स्यात्। तथा सति ग्रामं गच्छतीत्यत्र गम्-धातोः संयोगावच्छिन्नव्यापारार्थकतया धात्वर्थतावच्छेदकम् इत्यस्य धात्वर्थविशेषणमित्यर्थकतया धात्वर्थे व्यापारे विशेषणं यथा संयोगः तथा व्यापारत्वमपीति धात्वर्थतावच्छेदकव्यापारत्वाश्रयस्य व्यापरस्यापि कर्मत्वं स्यात्। तथा च व्यापारं गच्छतीत्यपि प्रयोगस्यापत्तिः। तद्वारणाय फलपदम्। तस्य च व्यापारजन्यफलमित्यर्थः। गच्छतीत्यत्र गमनक्रियाजन्यं फलं संयोग एव। न तु व्यापारत्वम्। तस्य व्यापारवृत्तित्वेऽपि व्यापारजन्यफलत्वाभावात्। अतो न व्यापारस्य कर्मत्वापत्तिः।

एवं फलपदानुपादाने भूमौ पर्णं पततीत्यत्र अधोदेशस्यापि धात्वर्थतावच्छेदकत्वमस्ति। तथा हि — अधोदेशसंयोगविशिष्टव्यापारः पतधात्वर्थः। धात्वर्थतावच्छेदकः अधोदेशोऽपि । एवम् अधोदेशः अधोदेशावयवजन्यश्च। ततश्च धात्वर्थतावच्छेदकः जन्यश्च अधोदेशः। तदाश्रयत्वात् अधोदेशावयवस्य कर्मत्व-

प्रसक्त्या अधोदेशावयवं पततीति प्रयोगापत्तिः। तद्वारणाय फलपदम्। अधोदेशस्य क्रियाजन्यफलत्वाभावात् तदाश्रयस्य तदवयवस्य न कर्मत्वापत्तिः इति भावः।

न चैवमपि अधोदेशसंयोगरूपफलाश्रयत्वात् अधोदेशस्य कर्मत्वापत्तिः, तथा च भूमिं पततीति प्रयोगापत्तिरिति वाच्यम्। धात्वर्थतावच्छेदकनिरवच्छिन्न-फलाश्रयत्वस्य विवक्षितत्वात्। तत्र पतधात्वर्थतावच्छेदकफलस्य संयोगस्य भूमिरूपाधोदेशावच्छिन्नत्वात् निरवच्छिन्नसंयोगाश्रयत्वमधोदेशस्य नेति न तस्य कर्मत्वापत्तिरिति ध्येयम्।

**अत एवेति।** पतधातोः अधोदेशसंयोगानुकूलव्यापारार्थकत्वादेव नरकं पतितः इत्यत्र नरकस्य कर्मत्वोपपत्तिः। नरकस्य अधोदेशरूपत्वात् तत्संयोगस्य अधोदेशपुरुषयोः संयोगस्य आश्रयत्वात् नरकस्य कर्मत्वमुपपद्यते। नरकसंयो-गानुकूलव्यापारवान् पापवान् पुरुष इति बोध इति भावः।

## कर्मत्वलक्षणेऽव्याप्तिशङ्का

**ननु 'ग्रामं गमयति चैत्रो मैत्रमि'त्यत्र मैत्रे कर्मत्वलक्षणस्याव्याप्तिः। मैत्रस्य गमनरूपधात्वर्थाधिकरणत्वात्। 'न च सनाद्यन्ता धातवः' (पा.सू 3.1.22) इति वचनात् णिजन्तस्य धातुसंज्ञत्वावगतेः णिजन्तगमिधात्वर्थस्य गमनानुकूल-व्यापारस्य मैत्रेऽभावान्नाव्याप्तिः। तदर्थतावच्छेदकस्य गमनाख्यफलस्य मैत्रे सत्त्वेन विशेष्यदलस्यापि सत्त्वादिति वाच्यम्। तथात्वे ग्रामस्य कर्मत्वानुपपत्तेः। न च णिजन्तस्य धातुत्वेऽपि गमेरपि धातुत्वानपायात् ग्रामस्य तत्कर्मत्वोपपत्तिः, तथात्वे 'पाचयति चैत्रो मैत्रेणे'त्यत्रापि मैत्रस्य कर्मत्वापत्तेः, न चेष्टापत्तिः, द्वितीयान्तत्वापत्तेः। 'गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणिकर्ता स णौ' (पा.सू 1.4.52) इत्यनेन सूत्रेण गत्यादीनां धातूनामण्यन्तानां यः कर्ता, स**

**ण्यन्तानां कर्मेत्यर्थकेन गत्यादिभिन्नधातुयोगे कर्मसंज्ञानिषेधेन तत्रापीष्टापत्तेः, कर्तुमशक्यत्वात्।**

---

पूर्वोक्तनवीनतार्किकोक्तकर्मत्वपरिष्कारे शङ्कते — **ननु ग्रामं गमयति इत्यादिना।** ग्रामं गमयति चैत्रो मैत्रम् इति प्रयोगः प्रामाणिकः। मैत्रः ग्रामं गच्छति। तं गमने प्रेरयति चैत्रः। तदा ग्रामं गमयति चैत्रो मैत्रम् इति प्रयोगो भवति। अत्र अण्यन्तावस्थायां कर्तुः मैत्रस्य ण्यन्तावस्थायां "गतिबुद्धि-प्रत्यवसानार्थशब्दकर्माकर्मकाणमणि कर्ता स णौ" इति सूत्रेण कर्मसंज्ञायां कर्मणि द्वितीया इति सूत्रेण मैत्रपदोत्तरं द्वितीया भवति। अत्र गमधातूत्तरं प्रेरणार्थे णिच् भवति। णिजन्तात् धातोः लटि गमयति इति रूपं भवति। णिजन्तस्यापि सनाद्यन्ता धातवः इति धातुसंज्ञा भवति। अत्र गम्-धातोः संयोगानुकूलव्यापारः अर्थः। णिचः तादृशव्यापारानुकूलव्यापारोऽर्थः। ग्रामः गम्-धात्वर्थकर्म। मैत्रः णिजन्तधात्वर्थकर्म। तत्र कर्मत्वलक्षणस्याव्याप्तिः। गम्-धात्वर्थव्यापाराधिकरण-त्वात् मैत्रस्य धात्वर्थव्यापारानधिकरणत्वस्य प्रवेशात् इति शङ्का। तत्र समाधानं शङ्कते — **न चेति।** सनाद्यन्ता धातवः इति सूत्रेण णिजन्तस्यापि धातुत्वात् णिजन्तधात्वर्थगमनानुकूलव्यापारस्य चैत्रे एव सत्त्वेन मैत्रे असत्त्वेन मैत्रस्य णिजन्तधात्वर्थव्यापारानधिकरणत्वात् कर्मत्वमुपपद्यते। एवं मैत्रस्य णिजन्त-धात्वर्थतावच्छेदकगमनरूपफलाश्रयत्वमप्यस्तीति कर्मत्वमुपपद्यते। एवं च धात्वर्थानधिकरणत्वरूपविशेषणस्य धात्वर्थतावच्छेदकफलशालित्वरूपविशेष्यस्य च सत्त्वात् मैत्रस्य कर्मत्वमुपपद्यते इति न चेत्यादिग्रन्थस्य आशयः। **तदर्थ-तावच्छेदकस्येति।** णिजन्तधात्वर्थतावच्छेदकस्य इत्यर्थः।

समाधत्ते — **तथात्वे ग्रामस्य कर्मत्वानुपपत्तेः**। णिजन्तधात्वर्थतावच्छेदकगमनरूपफलाश्रयत्वेन मैत्रस्य कर्मत्वोपपादने ग्रामस्य तादृशफलाश्रत्वाभावात् कर्मत्वानुपपत्तिः। तथा च चैत्रो ग्रामं गमयति मैत्रम् इत्यत्र ग्रामपदोत्तरं कर्मणि द्वितीया न स्यात् इति भावः।

तत्र ग्रामस्य कर्मत्वं भवितुमर्हतीति शङ्कते — **न च णिजन्तस्येति**। चैत्रो ग्रामं गमयति मैत्रम् इत्यत्र गम् इत्यस्यापि भूवादयो धातवः इति धातुसंज्ञा अस्ति। तथा च गम्-धात्वर्थतावच्छेदकसंयोगरूपफलशालित्वात् ग्रामस्यापि कर्मत्वमुपपद्यते इति भावः। अत्र समाधानमाह — **तथात्वे इति**। यदि ग्रामं गमयति चैत्र इत्यत्र ग्रामस्य गम्-धात्वर्थतावच्छेदकसंयोगरूपफलाश्रयतया कर्मत्वम्, मैत्रस्य णिजन्तार्थव्यापारजन्यसंयोगानुकूलव्यापाराश्रयतया कर्मत्वम् इति उपपाद्यते, तदा चैत्रो मैत्रेण पाचयति इति प्रयोगानुपपत्तिः। उक्तरूपकर्मत्वस्य मैत्रेऽपि सत्त्वेन चैत्रो मैत्रं पाचयति इति प्रयोगस्यैव प्रसक्तेः। "गतिबुद्धिप्रत्यवसानार्थशब्दकर्माकर्मकाणामणि कर्ता स णौ" (पा.सू. 1.4.52) इति सूत्रेण गम्यादीनां धातूनामण्यन्तावस्थायां कर्तुरेव ण्यन्तावस्थायां कर्मत्वविधानेन तत्रापरिगणितपचधातोः अण्यन्तावस्थायां कर्तुः कर्मसंज्ञानिषेधेन मैत्रस्य कर्मसंज्ञायाः अभावात् मैत्रपदोत्तरं न द्वितीयायाः प्रसङ्ग इति भावः। अतः मैत्रपदोत्तरं कर्तरि तृतीया। तथा च मैत्रकर्तृकव्यापारजन्यपाकानुकूला चैत्रकर्तृकव्यापारजन्या कृतिः इति बोध इति भावः। **तत्रापीति**। मैत्रपदस्य द्वितीयान्ततापत्तावित्यर्थः।

**'हृक्रोरन्यतरस्याम्' (पा.सू 1.4.53) इति सूत्रेण हारयतिकारयतिधातुयोगे विकल्पेन कर्मसंज्ञाविधानात् हारयति कारयति कटं भृत्येन, हारयति कारयति कटं भृत्यमिति प्रयोगद्वयावगतेः, तत्र भृत्ये धात्वार्थतावच्छेदकीभूतप्रयोज्यव्यापाररूप-**

**फलाश्रयत्वस्य सर्वदा सत्त्वेन कर्मत्वतदभावयोर्वक्तुमशक्यत्वात्। एतेन स्वप्रकृत्यर्थभिन्नसमवेतक्रियाजन्यधात्वर्थतावच्छेदकफलशालित्वं कर्मत्वमित्यप्यपास्तम्। पाचयति चैत्रो मैत्रेणेत्यादावतिव्याप्तेरिति चेत्।**

---

नवीनतार्किकमते शङ्कान्तरमनुवदति — **हृक्रोरन्यतरस्यामित्यादिना।** "हृक्रोरन्यतरस्याम्" (पा.सू 1.4.53) इति सूत्रेण हृधातोः कृधातोश्च णिजन्तयोः योगे अण्यन्तावस्थायां कर्तुः ण्यन्तावस्थायां विकल्पेन कर्मसंज्ञा विधीयते। कर्मसंज्ञापक्षे द्वितीया तदभावपक्षे तृतीया। हारयति कारयति कटं भृत्यम् हारयति कारयति कटं भृत्येन इति प्रयोगद्वयं साधु। भृत्यः कटं हरति, अथ वा करोति, तं चैत्रः प्रेरयति इत्यर्थे चैत्रः हारयति कारयति कटं भृत्यं भृत्येन इत्यर्थः। अत्र भृत्ये णिजन्तधात्वर्थतावच्छेदकः यः प्रयोज्यगतो व्यापारः तदाश्रयत्वस्य प्रयोज्ये सर्वदा सत्त्वेन सर्वदा द्वितीयैव स्यात् तृतीया न स्यादिति भावः।

**एतेनेत्यादि।** चैत्रः स्वं गच्छति इति प्रयोगवारणाय परसमवेतक्रियाजन्यधात्वर्थतावच्छेदकफलाश्रयत्वं कर्मत्वमिति नैयायिकोक्तमपास्तम्। पाचयति चैत्रो मैत्रेणेत्यादौ मैत्रान्यचैत्रसमवेतण्यर्थक्रियाजन्यणिच्-प्रकृतिधात्वर्थव्यापाररूपफलाश्रयत्वस्य मैत्रे सत्त्वेन तस्य कर्मत्वापत्त्या मैत्रपदोत्तरं द्वितीयायाः प्रसक्त्या तृतीयायाः असाधुत्वापत्तेरिति भावः। स्वं आपाद्यमाना द्वितीया विभक्तिः। स्वप्रकृतिः मैत्रपदम्। तदर्थः मैत्रः तद्भिन्नः चैत्रः तत्समवेता पाकक्रियानुकूला क्रिया प्रेरणारूपा तज्जन्या पाकक्रिया तदाश्रयत्वरूपस्य कर्मत्वस्य मैत्रे सत्त्वात् मैत्रपदोत्तरं द्वितीयैव स्यात् न तृतीयेति तात्पर्यम्। सूक्ष्मोऽयमर्थः व्याख्यानान्तरे अन्यथा गृहीतः। सावधानं ज्ञातव्यो जिज्ञासुभिः।

चैत्रः स्वं गच्छतीत्यत्र क्रियायाः स्वपदार्थचैत्रसमवेतत्वात् परसमवेतत्वं नास्तीति परसमवेतक्रियाजन्यसंयोगाश्रयत्वाभावात् न स्वपदार्थस्य कर्मत्वम्। अतः स्वपदोत्तरं न द्वितीयेति।

## उक्तशङ्कापरिहारः

**तत्तत्क्रियाव्यक्तिभेदेन कर्मत्वानां भेदात्। इतरथा उभयकर्मजसंयोगस्थले चैत्रस्य स्वभिन्नमैत्रसमवेतकर्मजन्यसंयोगाश्रयत्वा 'चैत्रो मैत्रं गच्छती'त्यत्र चैत्रस्य कर्मत्वापत्तेः। अन्यथा मैत्रस्यापि क्रियासमानाधिकरणफलाश्रयत्वात् कर्मत्वानापत्तेः। अतस्तत्तत्क्रियान्तर्भावेनैव लक्षणं निर्वाच्यम्। तथात्वे चैत्रनिष्ठक्रियायाः परसमवेतत्वाभावादेव तत्र नातिव्याप्तिः। ततश्च यत्क्रियाजन्यधात्वर्थतावच्छेदकफलशालि सत् यत् यत्क्रियानधिकरणम्, तत् तत्क्रियाकर्मेति विशिष्यैव कर्मत्वनिरुक्तिः, परसमवेतयत्क्रियाजन्यधात्वर्थतावच्छेदकफलशालि यत्, तत् तत्तत्क्रियाकर्म इति वा निरुक्तिः। पच्यादिक्रियामादायैव लक्षणसमन्वयः स्पष्ट एव। 'चैत्रो मैत्रं गच्छति, मैत्रश्चैत्रमि'त्यत्र तत्तत्कर्तृनिष्ठक्रियामादाय, गमयतीत्यादौ च गमिक्रियामादाय ग्रामस्य, तदनुकूलव्यापाररूपणिजर्थमादाय मैत्रस्य कर्मत्वं निर्वाच्यम्। 'घटं भावयती'त्यादौ तु णिजर्थमादायैव, भूधातोरकर्मकत्वात्। पाचयतीत्यादौ च पच्यर्थमादायैव ओदनस्य, नत्वनुकूलव्यापारमादाय मैत्रस्य, उक्तसूत्रानुरोधात्। अत एव तत्र णिजर्थोऽकर्मक एव।**

---

उक्तशङ्कानां क्रमशः समाधानमाह — **तत्तत्क्रियाव्यक्तिभेदेनेति**। गमनपाकादिक्रियाव्यक्तिभेदेन कर्मत्वानां भेदोऽङ्गीकरणीयः। अन्यथा चैत्रमैत्रयोरुभयोः कर्मभ्यां चैत्रमैत्रयोः संयोगस्थले चैत्रस्य मैत्रं प्रति गमनं यदा विवक्षितं

तदा मैत्रस्य स्वभिन्नचैत्रसमवेतक्रियाजन्यसंयोगाश्रयत्वात् मैत्रस्य कर्मत्वं चैत्रो मैत्रं गच्छतीति प्रयोगः। यदा मैत्रस्य चैत्रं प्रति गमनं तदा चैत्रस्य स्वभिन्नमैत्र-समवेतक्रियाजन्यसंयोगाश्रयत्वात् कर्मत्वमिति मैत्रश्चैत्रं गच्छतीति प्रयोगः। उभयोरेकदा कर्मत्वविवक्षायां तु चैत्रमैत्रौ परस्परं गच्छतः इति प्रयोगः इति भावः। यदि तु तत्तत्क्रियाभेदेन कर्मत्वभेदो नाङ्गीक्रियते, तदा युगपदुभयकर्म-जोभयसंयोगस्थले चैत्रमैत्रयोः संयोगस्य स्वस्वभिन्नसमवेतक्रियाजन्यसंयोगा-श्रयत्वरूपकर्मत्वैक्यात् उभयोरपि कर्मत्वापत्त्या चैत्रं मैत्रं गच्छति इति प्रयोगा-पत्तिः। एवं ग्रामं गमयति चैत्रं मैत्रः इत्यत्र गम्-धात्वर्थजन्यसंयोगाश्रयत्वात् ग्रामस्य कर्मत्वम्। णिजर्थव्यापारजन्यगमनाश्रयत्वात् चैत्रस्य कर्मत्वमिति बोध्यम्। तदेतत् सर्वं मनसिकृत्याह — **ततश्चेत्यादिना**।

तत्रैव प्रकारान्तरमाह — **परसमवेतेत्यादिना**। अयमाशयः। क्रियाभेदेन कर्मत्वं भिद्यते। परसमवेतया कर्मत्वाश्रयापेक्षया भिन्ने समवेतया क्रियया जन्यं यत् धात्वर्थतावच्छेदकं फलं तदाश्रयो यः सः तत्क्रियायाः कर्म। यथा तण्डुलं पचतीत्यत्र पचधात्वर्थः विक्लित्त्यनुकूलव्यापारः पाकक्रिया। सा च कर्मभूत-तण्डुलभिन्नपुरुषसमवेता तज्जन्यं धात्वर्थतावच्छेदकं फलं विक्लित्तिः तदाश्रयतया तण्डुलस्य कर्मत्वम्। अतः तण्डुलपदोत्तरं कर्मत्वार्थिका द्वितीया। उभयकर्म-स्थले — चैत्रो मैत्रं गच्छति मैत्रश्चैत्रम् इत्यत्र मैत्रान्यचैत्रसमवेतक्रियाजन्य-संयोगाश्रयतया मैत्रस्य चैत्रान्यमैत्रसमवेतक्रियाजन्यसंयोगाश्रयतया चैत्रस्य कर्मत्वम्। अतः चैत्रो मैत्रं गच्छति, मैत्रश्चैत्रं गच्छतीति प्रयोगस्य साधुत्वम् इति भावः। ननु घटं भावयतीत्यत्र घटस्य कथं कर्मत्वम्, भूधातोः अकर्मकत्वात् इत्याशङ्कायामाह — **घटं भावयतीत्यत्रेति**। तत्र भूधातोः भवनं उत्पत्तिरर्थः। णिचः तदनुकूलव्यापारोऽर्थः। भूधातोः अकर्मकत्वात् क्रियाजन्यं फलमप्रसिद्धम्।

तथापि णिचः अनुकूलव्यापारार्थकतया णिजन्तधात्वर्थतावच्छेदकं फलम् उत्पत्तिः, सा णिजर्थव्यापारजन्या। ततश्च णिजन्तधात्वर्थतावच्छेदकणिजर्थ-व्यापारजन्योत्पत्तिरूपफलाश्रयत्वात् घटस्य कर्मत्वम्। अतः घटपदोत्तरं कर्मत्वे द्वितीया। तथा च घटकर्मकव्यापारानुकूला भावनेति तत्र शाब्दबोधः। घटनिष्ठो-त्पत्त्यनुकूलव्यापारानुकूला चैत्रवृत्तिर्भावनेति शाब्दबोध इति भावः। **पाचयतीत्यादौ चेति**। चैत्रो मैत्रेण तण्डुलं पाचयतीत्यत्र मैत्रस्य णिजर्थतावच्छेदक-व्यापाराश्रयत्वेऽपि न कर्मत्वम्। तण्डुलस्य पच्यर्थतावच्छेदकफलाश्रयत्वात् कर्मत्वम्। णिजन्तपचधातोः द्विकर्मकत्वानुशासनविरहात्। गतिबुद्ध्यादिसूत्रे पच-धातोः अपरिगणनादिति भावः। पच्यर्थमादायैव इत्यत्र एवकारेण णिजर्थव्यापार-व्यवच्छेदः। **उक्तसूत्रानुरोधात्** गतिबुद्ध्यादिसूत्रानुसारात् इत्यर्थः। **अत एवेति**। णिजन्तपचधातोः अण्यन्तावस्थायां कर्तुः ण्यन्तावस्थायां कर्मत्वानुशासनविरहा-देवेत्यर्थः। **तत्र** चैत्रो मैत्रेण पाचयतीत्यत्र। तत्रैव परिहारान्तरमाह — **अथवेत्यादिना**। पूर्वं चैत्रः ओदनं मैत्रेण पाचयति इत्यत्र ओदनस्य पच्-धात्वर्थ-कर्मत्वम्। अतः ओदनपदोत्तरं कर्मणि द्वितीया। मैत्रस्य णिजर्थकर्मत्वेऽपि अनुशासनविरहात् मैत्रपदोत्तरं न द्वितीया। ततश्च मैत्रपदोत्तरतृतीयायाः कर्तृत्व-मर्थः। तस्य निरूपकत्वसंबन्धेन पचधात्वर्थव्यापारेऽन्वयः। ओदनपदोत्तरद्विती-यायाः कर्मत्वमर्थः। तस्य निरूपकत्वसंबन्धेन पच्-धात्वर्थतावच्छेदकफले विक्लित्तावन्वयः। णिजर्थव्यापारस्य अनुकूलतासंबन्धेन आख्यातार्थभावनाया-मन्वयः। तथा च ओदनकर्मकमैत्रकर्तृकपाकानुकूला चैत्रकर्तृकभावना इति बोधः इत्युक्तम्। (नैयायिकरीत्या तु ओदनकर्मकमैत्रकर्तृकव्यापारानुकूलव्यापाराश्रयः चैत्र इति बोधः।)

## अत्रैव परिहारान्तरम्

**अथवा तस्यापि ओदन एव कर्म, विक्लित्त्यनुकूलत्वाविशेषात्। एवञ्च हारयति-कारयतिनिरूपितकर्मत्वनिरुक्तौ तृतीयान्तपदानभिधेयत्वमपि देयम्। तेन हरणादिकर्तुः पाक्षिककर्मत्वाविघातः। एवं गमिपतत्यादौ विवक्षा, सप्तम्यन्तपदानभिधेयत्वं वा देयम्। तेन 'ग्रामे गच्छति, नरके पततीत्यादिप्रयोगस्याप्युपपत्तिः।**

---

इदानीम् **अथवेति** पक्षे ओदनस्य न पच्यर्थकर्मत्वम्। अपि तु णिजर्थकर्मत्वम्। णिजर्थस्य प्रेरकव्यापारस्यापि विक्लित्त्यनुकूलव्यापाररूपपाकानुकूलस्य परम्परया विक्लित्त्यनुकूलत्वात् परम्परया णिजर्यव्यापारजन्यविक्लित्त्याश्रयत्वात् ओदनस्य णिजर्थकर्मत्वम्। मैत्रेणेति तृतीया तु कर्तरि। पच्-धात्वर्थव्यापारेऽन्वेति। ततश्च ओदनकर्मकः मैत्रकर्तृकश्च यः पाकः तदनुकूलव्यापाराश्रयश्चैत्र इति बोध इति भावः।

**एवं चेत्यादि।** हृक्रोरन्यतरस्याम् (पा.सू 1.4.53) इति सूत्रेण हृ कृ इति धात्वोः अण्यन्तावस्थायां यः कर्ता तस्य ण्यन्तावस्थायां कर्मसंज्ञा विकल्पेन भवतीत्युच्यते। तदनुसारेण कर्मत्वलक्षणे तृतीयान्तपदानभिधेयत्वमपि विशेषणतया देयम्। तथा च क्रियाजन्यफलशालित्वे सति तृतीयान्तपदानभिधेयत्वं कर्मत्वम्। तेन कटं कारयति हारयति वा भृत्येन इत्यत्र भृत्यस्य तृतीयान्तपदाभिधेयत्वात् भृत्यस्य क्रियाजन्यफलशालित्वे सत्यपि कर्मत्वं न भवति। तृतीयान्तपदानभिधेयत्वे तु कर्मत्वस्य प्रसक्तिर्जायते। एवं च हृक्रोरन्यतरस्यामिति विकल्पेन कर्मत्वविधानमपि संगच्छते।

एवमेव परसमवेतक्रियाजन्यफलशालित्वमात्रमेव न कर्मत्वप्रयोजकम्। अपि तु तत्र कर्मत्वेन विवक्षापि अपरिहार्या। तेन ग्रामं गच्छति नरकं पतति इत्यादौ

कर्मत्वविवक्षायां सत्यां द्वितीया प्रसक्ता। तदभावे तु अधिकरणत्वविवक्षायां सप्तमी भवति। अथ वा तृतीयान्तपदानभिधेयत्वमिव सप्तम्यन्तपदानभिधेयत्वमपि कर्मत्वलक्षणे प्रवेशनीयम्। तेन नरकं पतति नरके पतति ग्रामं गच्छति, ग्रामे गच्छति इति प्रयोगद्वयमपि उपपद्यते इति भावः।

## द्वितीयान्तस्थले शाब्दबोधप्रकारः

**न चैवं तत्तत्कर्मत्वानां भेदात् द्वितीयायाश्शक्तिग्रहानुपपत्तिः, लाघवेन वृत्तित्वे, अभावे च द्वितीयायाश्शक्तेः, पदार्थान्तराणामन्यलभ्यत्वेन तत्र शक्तिकल्पनायां गौरवात्। तथा हि — ग्रामं गच्छतीत्यत्र द्वितीयार्थो वृत्तित्वम् धात्वर्थतावच्छेदके संयोगेऽन्वेति। तज्जनकं गमनं धात्वर्थ एव। एवं द्वितीयार्थोऽभावोऽपि प्रतियोगिता-सम्बन्धेन धात्वर्थ एव। ग्रामादिश्च प्रकृत्यर्थो द्विविधेऽपि द्वितीयार्थे। एवञ्च ग्राम-निष्ठाभावप्रतियोगि ग्रामवृत्तिसंयोगजनकगमनानुकूलकृतिमानित्यादिः शाब्दबोधः।**

**यदि तु गमनात्यन्ताभावोऽपि चैत्रे कालिकाव्याप्यवृत्तित्वादाशंक्यते, तदा परसमवेतेत्याद्यन्योन्याभावघटितलक्षणमादाय भेदो द्वितीयार्थः, स च प्रतियोगि-तासमवायोभयघटितसामानाधिकरण्यसम्बन्धेन गमनान्वयी। ततश्च ग्रामनिष्ठभेद-प्रतियोगिसमवेतग्रामवृत्तिसंयोगजनकगमनवानित्यादिश्शाब्दबोधः।**

---

ननु तत्तत्क्रियाव्यक्तिभेदेन कर्मत्वानां भेदाङ्गीकारे क्रियाणामानन्त्यात् तत्प्रयुक्तकर्मत्वानां चानन्तत्वात् असर्वज्ञस्य कर्मत्वेषु शक्तिग्रहः कथं संभवेदिति शङ्कते — **न चैवमिति**। एवं = पूर्वोक्तरीत्या। समाधत्ते — **लाघवेनेत्यादिना**। परसमवेतक्रियाजन्यफलशालित्वं कर्मत्वम्। तत्र वृत्तित्वं परत्वं (भेदश्च) घटके। तयोः द्वितीयायाः शक्तिः। अन्यानि क्रियाजन्यत्वफलानि अन्यलभ्यानि। क्रिया

फलं च धात्वर्थः। जन्यत्वं संसर्गमर्यादालभ्यम्। अवशिष्टे वृत्तित्वे (आधेयत्वे) अभावे च द्वितीयायाः शक्तिः। तथा हि — चैत्रो ग्रामं गच्छति इत्यत्र ग्राम-पदोत्तरद्वितीयायाः आधेयत्वम्, अभावश्चार्थः। तत्रोभयत्र प्रकृत्यर्थस्य अन्वयः। आधेयत्वे प्रकृत्यर्थस्य ग्रामस्य निरूपितत्वसंबन्धेन, अभावे आधेयत्वसंबन्धेन अन्वयः। संयोगावच्छिन्नव्यापारः गम्-धात्वर्थः तद्घटकसंयोगे द्वितीयार्थस्य वृत्तित्वस्य आश्रयत्वसंबन्धेन अन्वयः। द्वितीयार्थस्य अभावस्य प्रतियोगित्व-संबन्धेन धात्वर्थव्यापारेऽन्वयः। धात्वर्थस्य आख्यातार्थकृतावनुकूलत्वसंबन्धे-नान्वयः। कृतेः प्रथमान्तार्थे आश्रयत्वसंबन्धेन अन्वयः। तथा च ग्रामवृत्त्य-भावप्रतियोगी यः ग्रामवृत्तिसंयोगजनको व्यापारः तदनुकूलकृत्तिमांश्चैत्रः इति बोधः इति भावः। **द्विविधेऽपि** वृत्तित्वे अभावे चेत्यर्थः।

अयं तार्किकरीत्या बोधः। स्वमते तु ग्रामवृत्तिसंयोगजनकग्रामवृत्त्यभाव-प्रतियोगिव्यापारानुकूला भावनेति बोधः। अभावः अत्यन्ताभावः।

ननु गमनक्रिया कालिकाव्याप्यवृत्तिः। चैत्रस्य कदाचित् गमनं कदाचित् गमनाभावश्च। न हि सर्वदा गच्छति। तथा च चैत्रः यदा ग्रामं गच्छति तदा चैत्रकर्तृकगमने स्वनिष्ठकालान्तरावच्छिन्नात्यन्ताभावप्रतियोगित्वं वर्तत इति चैत्रः स्वं गच्छतीति प्रयोगापत्तिः इत्याशङ्क्य तर्हि अभावस्थले भेदो द्वितीयार्थः। चैत्रो ग्रामं गच्छतीत्यत्र द्वितीयायाः भेदः अर्थः। तत्राधेयतासंबन्धेन प्रकृत्यर्थस्य ग्रामस्यान्वयः। द्वितीयार्थभेदस्य प्रतियोगितासमवायोभयघटितसामानाधिकरण्य-संबन्धेन स्वप्रतियोगित्वाधिकरणनिरूपितसमवायसंबन्धावच्छिन्नाधेयत्वसंबन्धेन स्वप्रतियोगिनिरूपितसमवायसंबन्धावच्छिन्नाधेयत्वसंबन्धेन स्वप्रतियोगिसमवे-तत्वसंबन्धेनेति यावत् धात्वर्थे गमनेऽन्वयः। समन्वयः इत्थम् — ग्रामनिष्ठो यो भेदः गमनवद्भेदः तत्प्रतियोगी गमनवान् चैत्रः तत्समवेतत्वं गमनक्रियाया-

मस्तीति चैत्रो ग्रामं गच्छतीति प्रयोगः उपपद्यते। तत्रैव स्वं गच्छति चैत्र इति प्रयोगः नापादयितुं शक्यते। स्वस्मिन् चैत्रे गमनवद्भेदस्यासत्त्वात् स्वनिष्ठभेद-प्रतियोगिसमवेतत्वस्य गमनक्रियायामभावात् चैत्रः स्वं गच्छतीति प्रयोगस्य नापत्तिः इति भावः। अत्र सूक्ष्मदृष्टिः कार्या। स्वनिष्ठप्रतियोगितासंवन्धावच्छ-न्नाधेयतानिरूपिताधिकरणतावन्निरूपितसमवायसंवन्धावच्छिन्नाधेयत्वं प्रतियोगि-तासमवायोभयघटितसामानाधिकरण्यमित्यस्यार्थः। ततश्च चैत्रो ग्रामं गच्छतीति वाक्यात् ग्रामनिष्ठभेदप्रतियोगिचैत्रसमवेतग्रामवृत्तिसंयोगजनकव्यापारवांश्चैत्रः इति बोध इति भावः।

## भेदाव्याप्यवृत्तित्वमते बोधे विशेषः

**वस्तुतस्तु भेदाव्याप्यवृत्तित्वमते चैत्रे गमनवद्भेदस्य तुल्यत्वात्तद्वारणाय प्रकृत्यर्थो ग्रामो भेदे प्रतियोगितासंबन्धेनान्वेति। भेदश्चाभावीयविशेषणता-समवायोभयघटितसामानाधिकरण्यसम्बन्धेन गमनेऽन्वेति। ततश्च ग्रामप्रति-योगिकभेदवत्समवेतग्रामवृत्तीत्यादिशाब्दबोधः। अत एवाधेयत्वापरपर्यायवृत्ति-त्वार्थकसप्तमीतो वृत्तित्वार्थकद्वितीयाया भेदः, भेदाद्यर्थस्याधिकत्वात्। अयञ्चापरो विशेषः, यद्द्वितीयार्थो वृत्तित्वं धात्वर्थतावच्छेदके फल एवान्वेति, सप्तम्यर्थस्तु वृत्तित्वं धात्वर्थे, नामार्थे वेति। एवं 'ग्रामस्य गन्ते'त्यादौ कर्मणिषष्ठीस्थलेऽपि बोध्यम्।**

---

**वस्तुतस्त्वित्यादि।** एतावता भेदः व्याप्यवृत्तिः इति स्वीकृत्य शाब्दबोधो वर्णितः। अथ भेदः अव्याप्यवृत्तिः इति मतमवलम्ब्य चैत्रो ग्रामं गच्छतीति प्रयोगस्य संभवं चैत्रः स्वं गच्छतीति प्रयोगस्य असंभवं चोपपादयति —

**वस्तुतस्तु इत्यादिना।** अग्रे वृक्षे कपिसंयोगः न तु मूले इति प्रतीतिबलात् कपिसंयोगाभावः अव्याप्यवृत्तिः इति स्वीक्रियते। तथा अग्रे वृक्षः कपिसंयोगवान् न तु मूले इति प्रतीतिबलात् कपिसंयोगवद्भेदोऽपि अव्याप्यवृत्तिः इति स्वीकरणीयम्। अव्याप्यवृत्तिप्रतियोगिकात्यन्ताभावस्येव अव्याप्यवृत्तिप्रतियोगिमद्भेदस्याप्यव्याप्यवृत्तित्वमिति चिन्तामणावुक्तत्वात्। अयं देशावच्छेदेन अव्याप्यवृत्तित्वप्रकारः। अयं दैशिकाव्याप्यवृत्तिः इत्युच्यते। एवं पूर्वस्मिन् दिने वृक्षः कपिसंयोगवान् अस्मिन् दिने वृक्षः संयोगाभाववान् इति कालिकाव्याप्यवृत्तिः इत्युच्यते। एवं गमनवति चैत्रे कालविशेषावच्छेदेन गमनं तदत्यन्ताभावः गमनं गमनवद्भेदश्च भवितुमर्हति। तथा च स्ववृत्तिभेदप्रतियोगिस्ववृत्तिगमनवत्वस्य स्वस्मिन् संभवात् चैत्रः स्वं गच्छतीति प्रयोगो दुर्वार इति शङ्का। समाधानं तु चैत्रो ग्रामं गच्छतीत्यत्र ग्रामपदोत्तरद्वितीयायाः भेदः अर्थः। तत्र प्रकृत्यर्थस्य ग्रामस्य स्वप्रतियोगिकत्वसंबन्धेनान्वयः। **भेदस्य** = ग्रामप्रतियोगिकभेदस्य धात्वर्थे गमने **स्वरूपसमवायोभयघटितसामानाधिकरण्यसंबन्धेन** = स्वनिष्ठस्वरूपसंबन्धावच्छिन्नाधेयतानिरूपिताधिकरणतावन्निरूपितसमवायसंबन्धावच्छिन्नाधेयतासंबन्धेन अन्वयः। ग्रामप्रतियोगिकभेदाधिकरणचैत्रसमवेतग्रामवृत्तिसंयोगजनकगमनानुकूलकृतिमांश्चैत्रः इति बोधः। चैत्रः स्वं गच्छतीति वाक्यात् स्वप्रतियोगिकभेदवच्चैत्रसमवेतगमनवान् इति बोधो वक्तव्यः। स च बाधितविषयकः। चैत्रे चैत्रप्रतियोगिकभेदस्य कदाप्यभावात्। गमनवत्प्रतियोगिकभेदस्तु भवितुमर्हति। गमनस्य कालिकाव्याप्यवृत्तित्वात्। अत एव द्वितीयायाः वृत्तित्वं भेदश्चार्थः इति पूर्वोक्तप्रथमपक्षः परित्यक्त इति भावः। **अभावीयविशेषणता** = स्वरूपसंबन्धः। तत्सामानाधिकरण्यं नाम तदधिकरणवृत्तित्वम्। अधिकरणत्वं स्वरूपसंबन्धेन। वृत्तित्वं समवायसंबन्धेनेति विवेकः।

**अत एवेति।** वृत्तित्वम् अभावश्च द्वितीयार्थ इति प्रथमपक्षपरित्यागेन भेदो द्वितीयार्थ इति द्वितीयपक्षकथनादेव आधेयत्वापरपर्यायवृत्तित्वार्थकसप्तमीतो द्वितीयायाः वैलक्षण्यम्। भेदाद्यर्थस्येत्यत्र आदिपदेन अत्यन्ताभावपरिग्रहः। **अयं चापरो विशेष इति।** आधेयत्वार्थकसप्तमीतः इति शेषः। द्वितीयार्थो वृत्तित्वं धात्वर्थतावच्छेदके संयोगादिरूपे फलेऽन्वेति। सप्तम्यर्थो वृत्तित्वं तु धात्वर्थे अन्वेति, यथा ग्रामे गच्छति, भूमौ पतति इत्यादौ नामार्थे वा भूतले घटः इत्यादौ इति भावः। **ग्रामस्य गन्ता इति।** ग्रामवृत्तिसंयोगजनकग्रामभिन्नसमवेतगमनाश्रय इति बोधः।

## कर्मणि प्रयोगे शाब्दबोधप्रकारः

**एवं 'चैत्रेण ग्रामो गम्यते' इत्यात्मनेपदेन फलम्, भेदश्चाभिधीयते। तत्र प्रथमान्तपदोपस्थाप्यो ग्रामः प्रतियोगिताकत्वसंसर्गेण भेदान्वयी, स च धात्वर्थ-गमने सामानाधिकरण्यसम्बन्धेन, स च धात्वर्थो गमनं पुनरात्मनेपदार्थे फले जन्यत्वसम्बन्धेन, तच्चाश्रयत्वेन नामार्थे ग्रामे। ततश्च चैत्रकर्तृकग्रामभिन्नसमवेत-संयोगजनकगमनजन्यसंयोगाश्रयो ग्राम इत्येवं शाब्दबोधः।**

---

अथ कर्मणि प्रयोगस्थले शाब्दबोधमाह — **एवं चैत्रेणेत्यादिना।** चैत्रेण गम्यते ग्रामः इत्यत्र आत्मनेपदस्य तेप्रत्ययस्य संयोगरूपं फलं भेदश्चार्थः। भेदे प्रथमान्तग्रामपदोपस्थापितस्य ग्रामस्य स्वनिष्ठप्रतियोगितानिरूपकत्वसंबन्धेना-न्वयः। भेदस्य धात्वर्थे व्यापारे स्वाधिकरणवृत्तित्वसंबन्धेनान्वयः। संयोगरूपे फले धात्वर्थव्यापारस्य जन्यत्वसंबन्धेनान्वयः। फलस्य संयोगस्य आश्रयता-संबन्धेन प्रथमान्तार्थचैत्रेऽन्वयः। तथा च चैत्रकर्तृकग्रामप्रतियोगिकभेदाधिकरण-

वृत्तिव्यापारजन्यसंयोगाश्रयो ग्राम इति बोधः इति भावः। **तत्र** = तयोर्मध्ये फल-भेदयोर्मध्ये भेदान्वयी ग्रामः। **प्रतियोगिताकत्वसंबन्धेन** = स्वनिष्ठप्रतियोगिता-निरूपकत्वसंबन्धेन। **धात्वर्थो गमनम्** धात्वर्थरूपं गमनम्। **चैत्रकर्तृकेत्यादि।** चैत्रकर्तृकं ग्रामभिन्नसमवेतं यत् संयोगजनकं गमनं व्यापारः तज्जन्यसंयोगाश्रयो ग्राम इत्यर्थः।

**एवं 'पक्व ओदनः' इत्यत्र कर्मकृत्प्रत्ययस्थलेऽपि। तत्र त्वयं विशेषः — कृदर्थः प्रतियोगि भेदः, वृत्तित्वम्, आश्रयश्च, ओदनोऽभेदेन प्रतियोगिनि, स च भेदे, स च क्रियायाम्, सा च फलद्वारा वृत्तित्वे तच्चाश्रये, स चाभेदेनौदने इति, अनुभवा-नुसारेण व्युत्पत्तिवैचित्र्यस्यादोषत्वात्।**

---

**एवं पक्व ओदन इति।** चैत्रेण पक्वः ओदनः इत्यत्र कर्मकृत्प्रत्ययस्य कर्मार्थकस्य कृत्संज्ञकस्य क्तप्रत्ययस्य प्रतियोगितावान् (प्रतियोगी) भेदः वृत्तित्वम् आश्रयश्च अर्थः। ओदनः अभेदसंबन्धेन प्रतियोगिन्यन्वेति। प्रतियोगिनः स्वप्रतियोगि-कत्वसंबन्धेन भेदेऽन्वयः। भेदस्य स्वाधिकरणवृत्तित्वसंबन्धेन वृत्तित्वेऽन्वयः। वृत्तित्वस्य निरूपकत्वसंबन्धेन आश्रयेऽन्वयः। आश्रयस्याभेदसंबन्धेन ओदने अन्वयः। तथा च ओदनाभिन्नप्रतियोगिप्रतियोगिकभेदाधिकरणवृत्तिचैत्रकर्तृक-व्यापारजन्यफलवृत्तिवृत्तित्वनिरूपकाश्रयाभिन्न ओदन इति बोधः। अनुभवानु-सारेण कार्यकारणभावबाहुल्यस्य अदोषत्वादिति भावः।

## भेदप्रतियोगिनोऽन्वये संबन्धविशेषप्रश्नः, समाधिश्च

नन्वेवं भेदे प्रतियोगिनः प्रतियोगितामात्रेण वाऽन्वयः, अन्वयितावच्छेद-कावच्छिन्नप्रतियोगिताकत्वेन वा। नाद्यः — वैशिष्ट्यव्यासज्यवृत्तिधर्मावच्छिन्न-

**प्रतियोगिताकभेदस्य चैत्रेऽपि सत्त्वेन 'स्वं गच्छति चैत्रः' इति प्रयोगापत्तेः। अन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वव्युत्पत्तिभङ्गापत्तेश्च। नान्त्यः — 'जलं गच्छति जलमि'त्यत्र जलत्वावच्छिन्नप्रतियोगिताकभेदस्य जलेऽभावादिति चेत्, धात्वर्थतावच्छेदकफलाश्रयत्वं यद्व्यक्तेः, तद्व्यक्तित्वावच्छिन्नप्रतियोग्यन्वयस्य वाच्यत्वात्। एवञ्च व्युत्पत्तिभङ्गभिया जलपदं जलविशेषे लाक्षणिकम्। तत्सिद्धं वृत्तित्वं भेदश्च द्वितीयार्थः — इति।**

---

उक्तरीत्या पक्व ओदनः इत्यत्र बोधवर्णने विकल्पपूर्वकमाक्षिपति — **नन्वेवमित्यादिना।** पक्व ओदन इत्यत्र पचधातूत्तरक्तप्रत्ययस्य प्रतियोगि भेदः वृत्तित्वम् आश्रयश्चार्थः। तत्र ओदनस्य प्रतियोगिनि अभेदसंबन्धेनान्वयः। प्रतियोगिनः भेदे अन्वय इत्युक्तम्। तत्र पृच्छामः — ओदनरूपस्य प्रतियोगिनः भेदे स्वनिष्ठप्रतियोगिताकत्वसंबन्धेन अन्वयो वा, अन्वयितावच्छेदकीभूतं यत् ओदनत्वं तदवच्छिन्नप्रतियोगिताकत्वसंबन्धेन अन्वयो वेति। नाद्यः — चैत्रः स्वं गच्छतीति प्रयोगापत्तेः। स्वपदार्थचैत्रनिष्ठप्रतियोगिताकस्य पूर्वक्षणवृत्तित्वविशिष्टचैत्रभेदस्य चैत्रे इदानीं सत्त्वेन तदाश्रयचैत्रवृत्तिगमनाश्रयत्वस्य चैत्रेऽबाधात् चैत्रः स्वं गच्छतीति प्रयोगापत्तेः। एवं चैत्रनिष्ठप्रतियोगिताकभेद इत्यनेन चैत्रघटोभयभेदस्यापि ग्रहीतुं शक्यतया तदाश्रयचैत्रवृत्तिगमनाश्रयत्वस्य चैत्रे सत्त्वेन चैत्रः स्वं गच्छतीति प्रयोगस्य दुर्वारत्वात्। प्रतियोगितामात्रेण द्वितीयाप्रकृत्यर्थस्य भेदेऽन्वये प्रतियोगिनः अभावे अन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वसंबन्धेनैव अन्वय इति व्युत्पत्तिभङ्गापत्तिश्च।

द्वितीयार्थस्य प्रतियोगिनः द्वितीयार्थे भेदे अन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वसंबन्धेनान्वयः इति द्वितीयपक्षोऽपि न युक्तः। जलं गच्छति

जलम् इति प्रयोगः एकस्य जलस्य अन्यजलं प्रति प्रवाहरूपेण गमनस्थले इष्यते। स न स्यात्। जलत्वावच्छिन्नप्रतियोगिताकभेदवज्जलवृत्तिगमनाश्रय इति हि बोधस्तत्र वक्तव्यः। स च बाधितविषयकः। एकस्मिन् जले अन्यजलप्रतियोगिकभेदसत्त्वेऽपि जलत्वावच्छिन्नप्रतियोगिताकभेदविरहात् इति शङ्का — अत्र पङ्क्त्यर्थः। **प्रतियोगितामात्रेणेति**। मात्रशब्देन अन्वयितावच्छेदकावच्छिन्नत्वस्य व्यवच्छेदः। यः अन्वेति सः अन्वयी। **वैशिष्ट्येत्यादि**। पूर्वक्षणवृत्तित्ववैशिष्ट्यावच्छिन्नस्वनिष्ठप्रतियोगिताकभेदस्य स्वस्मिन् सत्त्वात् तथा चैत्रघटोभयत्वरूपो यो व्यासज्यवृत्तिधर्मः तदवच्छिन्नप्रतियोगिकभेदस्य चैत्रः चैत्रघटोभयं न इति प्रतीतिसिद्धस्य चैत्रेऽपि सत्त्वात् इति भावः। **अन्वयितावच्छेदकावच्छिन्नेति**। प्रतियोगितावच्छेदकावच्छिन्नेत्यर्थः।

उक्तशङ्कासमाधानमाह — **धात्वर्थतावच्छेदकेति**। धात्वर्थतावच्छेदकफलाश्रयत्वं यस्याः व्यक्तेः भवति तद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेन प्रतियोगिनः भेदेऽन्वयः स्वीक्रियते। तथा च चैत्रो ग्रामं गच्छति इत्यत्र धात्वर्थतावच्छेदकसंयोगरूपफलाश्रयत्वं ग्रामस्य विवक्षितमिति ग्रामव्यक्तित्वावच्छिन्नप्रतियोगिताकभेदः द्वितीयया विवक्षितः, तादृशभेदाश्रयः चैत्रः तद्वृत्ति यत् गमनं तदाश्रयत्वं चैत्रे वर्तते इति चैत्रो ग्रामं गच्छति प्रयोगस्योपपत्तिः। चैत्रः स्वं गच्छति इत्यत्र स्वपदार्थस्य चैत्रस्य धात्वर्थगमनजन्यसंयोगरूपफलाश्रयत्वविवक्षायां तादृशफलाश्रयचैत्रव्यक्तिभेदस्य चैत्रेऽभावात् न चैत्रः स्वं गच्छतीति प्रयोगापत्तिरिति भावः।

**एवं चेति**। व्यक्तिविशेषभेदस्यैव विवक्षणे च जलं गच्छति जलमित्यत्र प्रथमान्तजलपदेन विवक्षितं यत् जलं तद्व्यक्तिभिन्नमेव जलं द्वितीयान्तजलपदेन विवक्षितम्। तादृशजलव्यक्तिभिन्नं जलं प्रथमान्तपदविवक्षितं तद्वृत्तिगमनाश्रयत्वं

तादृशजलेऽस्तीति जलं गच्छति जलमिति प्रयोगस्योपपत्तिरिति भावः। **व्युत्पत्तिभङ्गभियेति।** भेदे प्रतियोगिनः अन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वसंबन्धेनान्वयः इति व्युत्पत्तिभङ्गः स्यादिति भयेनेत्यर्थः। **जलपदमिति।** द्वितीयान्तजलपदं प्रथमान्तजलपदवाच्यजलापेक्षया भिन्नं यत् जलं तत्र लाक्षणिकमित्यर्थः।

**न चैवं तृतीयान्तपदानभिधेयत्वादेरपि वाच्यत्वापत्तिः, तस्यान्यलभ्यत्वेन वाच्यत्वे गौरवात्। 'कारयति कटं मैत्रमि'त्यादिप्रयोगस्येष्टत्वेन वाच्यतया प्रवेशे प्रयोजनविरहात्। भेदस्यावाच्यत्वे 'स्वं गच्छती'ति प्रयोगापत्तिर्बाधिका, नत्वत्र तथा किञ्चिद्बाधकम्, अतो न तस्य वाच्यत्वमिति दिक्।**

---

**न चैवमिति।** आधेयत्वं भेदश्च द्वितीयार्थ इति स्वीकृत्य चैत्रः स्वं गच्छतीत्यादिवाक्यस्य अबाधितार्थबोधकत्वसमर्थनेऽपि इत्यर्थः। अयं भावः — परसमवेतक्रियाजन्यफलाश्रयत्वं कर्मत्वमिति परिष्कारे कृतेऽपि चैत्रो मैत्रेण कटं कारयतीत्यत्र मैत्रस्य स्वभिन्नचैत्रसमवेतणयर्थव्यापारजन्यकृञर्थकृत्याश्रयत्वात् कर्मत्वापत्त्या मैत्रपदोत्तरं द्वितीया प्राप्नोति। तद्वारणाय तृतीयान्तपदानभिधेयत्वमपि कर्मत्वलक्षणे प्रवेशनीयम्। मैत्रस्य तृतीयान्तपदाभिधेयत्वात् तदनभिधेयत्वं नास्तीति न कर्मत्वापत्तिः। ततश्च तृतीयान्तानभिधेयत्वेऽपि द्वितीयायाः शक्तिर्वक्तव्येति शङ्का। समाधानं तु तृतीयान्तपदानभिधेयत्वस्यान्यलभ्यत्वात् द्वितीयायाः तत्र शक्तिर्नाङ्गीक्रियते। अनन्यलभ्यः शब्दार्थः इति न्यायादिति भावः। नन्वेवं सति चैत्रः कारयति कटं मैत्रम् इति प्रयोगापत्तिरित्याशङ्क्य इष्टापत्त्या परिहरति — **कारयतीति।** नन्वेवं भेदस्यापि वाच्यत्वं मास्तु इत्याशङ्क्य तथात्वे चैत्रः स्वं गच्छतीति प्रयोगः स्यात्। तद्वारणाय भेदस्य

द्वितीयावाच्यत्वमावश्यकमित्याह — **भेदस्यावाच्यत्वे इति।** एतदुक्तं भवति — चैत्रः कटं कारयति मैत्रम् हारयति मैत्रम् इत्यत्र हृक्रोरन्यतरस्याम् (पा.सू 1.4.53) इति सूत्रेण प्रयोज्यकर्तुः कर्मत्वस्य विकल्पेन विधानात् कर्मत्वपक्षे द्वितीयाभिधानात् तेन तृतीयानभिधेयत्वं स्वतःसिद्धमिति तस्य द्वितीया-वाच्यत्वे किमपि प्रयोजनं नास्ति इति। **नन्वत्रेति।** अत्र तृतीयानभिधेयत्वस्य द्वितीया-वाच्यत्वाभावे किंचित् बाधकं नास्ति। अतः तस्य तृतीयान्तानभिधेयत्वस्य **न वाच्यत्वम्** न द्वितीयावाच्यत्वम्।

## घटं जानातीत्यादौ बोधप्रकारः

**एवञ्च यत्र एतादृशकर्मत्वबाधः, तत्र 'घटं जानाति, मैत्र इच्छति, कुरुते, घटस्य ज्ञाता इत्यादौ सविषयपदार्थाभिधायिधातुयोगे द्वितीया-षष्ठ्योर्विषयत्वे लक्षणा। घटविषयकज्ञानाश्रयो मैत्र इति शाब्दबोधः। 'मैत्रेण ज्ञायते' इत्यादौ तु कर्मप्रत्ययेन विषयत्वं लक्ष्यते, मैत्राश्रितज्ञानविषयो घट इति च बोधः। 'ज्ञातो' घटः इत्यादिकर्मकृत्सु तु विषये लक्षणा, तस्य च घटेऽभेदान्वय इति द्रष्टव्यम्। नष्ट इत्यादौ प्रतियोगिनि, न त्वत्र परसमवेतत्वप्रवेशः, वैयर्थ्यात्। 'स्वात्मानं जानामि, आत्मानमात्मना वेत्सि' इत्यादिप्रयोगाच्च। एवम्, अकथितकर्मादौ, कर्मप्रवचनीय-योगनिमित्तकद्वितीयायाञ्च लक्षणैवेत्याहुः।**

---

यत्र **एतादृशकर्मत्वबाधः** = परसमवेतक्रियाजन्यफलाश्रयत्वरूपस्य कर्मत्वस्य बाधः, सविषयकधातुसमभिहारस्थले तत्र द्वितीयार्थं निरूपयति — **एवं चेत्यादिना।** घटं जानाति इत्यत्र घटपदोत्तरद्वितीयायाः लक्षणया विषयत्वमर्थः। तत्र आधेयतासंबन्धेन प्रकृत्यर्थस्य घटस्यान्वयः। विषयत्वस्य निरूपकत्व-

संबन्धेन धात्वर्थज्ञानेऽन्वयः। ज्ञाधातोः ज्ञनमर्थः। तस्य निरूपितत्वसंबन्धेन आख्यातार्थे आश्रयत्वेऽन्वयः। आश्रयत्वस्य स्वरूपसंबन्धेन प्रथमान्तपदार्थे चैत्रेऽन्वयः। एवं च घटनिष्ठविषयतानिरूपकज्ञाननिरूपपिताश्रयतावांश्चैत्र इति चैत्रो घटं जानातीति वाक्याच्छाब्दबोधः। मैत्रः सुखमिच्छति इति वाक्यात् सुखनिष्ठविषयतानिरूपकेच्छाश्रयश्चैत्र इति बोधः। चैत्रः घटं कुरुते इति वाक्यात् घटनिष्ठविषयतानिरूपककृत्याश्रयः चैत्र इति बोधः। घटं करोति इति वाक्यात् घटविषयककृतिमांश्चैत्र इति बोधः।घटस्य ज्ञाता इति वाक्यात् घटनिष्ठ-विषयतानिरूपकज्ञानाश्रयश्चैत्र इति बोधः।

मैत्रेण ज्ञायते घट इत्यादौ कर्मणि प्रयोगस्थले कर्मार्थकतेप्रत्ययस्य लक्षणया विषयत्वमर्थः। मैत्रेणेति तृतीयायाः आश्रितत्वम् — आधेयत्वमर्थः। तत्र निरूपितत्वसंबन्धेन प्रकृत्यर्थस्य मैत्रस्यान्वयः। आश्रयतासंबन्धेन आधेयत्वस्य धात्वर्थज्ञानेऽन्वयः। ज्ञानस्य निरूपितत्वसंबन्धेनाख्यातार्थविषयतायामन्वयः। विषयतायाः आश्रयतासंबन्धेन घटेऽन्वयः। तथा च मैत्राश्रितज्ञाननिरूपित-विषयतावान् घट इति बोधः।

ज्ञातो घट इत्यत्र कर्मार्थककृत्संज्ञकक्तप्रत्ययस्य विषयताश्रये (विषये) लक्षणा। तस्य घटेऽभेदेनान्वयः। ज्ञाननिरूपितविषयताश्रयाभिन्नो घट इति बोधः।

घटो नष्ट इत्यादौ क्तप्रत्ययस्य प्रतियोगि लक्षणया अर्थः। तदेकदेशप्रति-योगितायां धात्वर्थस्य नाशस्य निरूपितत्वसंबन्धेनान्वयः। नाशनिरूपितप्रति-योगिताश्रयो घट इति बोधः।

एवं च पूर्वोदाहृतस्थलेषु भाक्तकर्मत्वे विषयत्वादौ परसमवेतत्वस्य न प्रवेशः। प्रयोजनाभावात्।

तत्प्रवेशेऽनुपपत्तिरप्यस्ति। तथाहि — आत्मानमहं जानामि इत्यत्र कर्तृकर्मणोरैक्यात् स्वात्मसमवेतस्वविषयकज्ञानाश्रयतया स्वस्य स्वात्मविषयक, स्वभिन्नसमवेतज्ञानाश्रयत्वस्य बाधितत्वात्। अतः परसमवेतत्वं नात्र द्वितीयार्थे प्रविष्टम्। अहं स्वविषयकज्ञानवानित्येव आत्मानमहं जानामीति वाक्यात् बोधः। एवमेव "अकथितं च" (पा.सू. 1.4.51) इति सूत्राभिप्रेतद्विकर्मकधातुस्थले अप्रधानकर्मवाचकपदोत्तरद्वितीयायाः कर्मत्वं नार्थः। अपि तु कर्मत्वादन्यः लक्षणया अर्थः। यथा गां दोग्धि पयः इत्यत्र पयः प्रधानकर्म। तत्र द्वितीयायाः कर्मत्वमर्थः। तत्र गौःअप्रधानकर्म। गोपदोत्तरद्वितीयायाः लक्षणया विभागो अर्थः। क्षरणानुकूलव्यापारो दुहधात्वर्थः। गोः अवधिकत्वसंबन्धेन विभागेऽन्वयः। पयः कर्मकत्वं क्षरणेऽन्वेति। गवावधिकविभागजनकं यत् पयःकर्मकं क्षरणं तदनुकूलकृतिमांश्चैत्र इति तत्र बोधः इति भावः। एवं जपमनु प्रावर्षत् इत्यादौ कर्मप्रवचनीयसंज्ञकस्य अनु इत्यादेर्योगे विहितायाः द्वितीयाया अपि न कर्मत्वमर्थः। अपि तु हेतुत्वमर्थः। जपहेतुकवृष्ट्याश्रयः इति बोधः इति।

## कर्मत्वस्य निरुक्तस्य खण्डनम्, अखण्डोपाधिरूपत्वसाधनञ्च

**अत्रेदमवधेयम् — यदि फलावच्छिन्नो व्यापारो धात्वर्थः, तदा द्वितीयाद्यर्थवृत्तित्वस्य पदार्थैकदेशे संयोगादौ फलेऽन्वयादेकदेशान्वयनिबन्धनो व्युत्पत्तिभङ्गः, न च 'चैत्रस्य नप्ता चैत्रादन्यः' इत्यादावपि तदाश्रयणम्। षष्ठ्याद्यर्थस्य परम्परासम्बन्धस्य विशेष्य एवान्वयोपपत्तेः, पञ्चम्यर्थस्यापि प्रतियोगित्वादेः परम्परासम्बन्धेनान्वयाङ्गीकाराच्च।**

---

एवमेतावता अनूदितं तार्किकमतं खण्डयितुमारभते — **अत्रेदमवधेयमित्यदिना**। ग्रामं गच्छति इत्यादौ यदि संयोगादिरूपफलावच्छिन्नव्यापारो धात्वर्थः

द्वितीयायाश्च संयोगादिरूपफलान्वयि आधेयत्वमर्थः। तदा द्वितीयार्थस्याधेयत्वस्य धातुरूपपदार्थैकदेशे संयोगादिफलेन्वयात् पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन इति व्युत्पत्तेः भङ्गः प्रसजति।

यदि तु स नियमो न सार्वत्रिकः क्वचित् एकदेशान्वयदर्शनात्,यथा चैत्रस्य नप्ता इत्यत्र नप्तृपदस्य पुत्रपुत्रपुत्रोऽर्थः। तदेकदेशे प्रथमपुत्रे षष्ठ्यर्थस्य संबन्धस्य अन्वय इति वक्तव्यम्। तथा च तत्र एकदेशान्ववत् ग्रामं गच्छतीत्यत्र गमधात्वर्थसंयोगावच्छिन्नव्यापारैकदेशे संयोगे द्वितीयार्थाधेयत्वान्वयोऽस्तु। एवमेव चैत्रादन्यो मैत्र इत्यत्र अन्य इति पदस्य भेदवान् अर्थः तदेकदेशं भेदे चैत्रपदोत्तरपञ्चम्यर्थस्य प्रतियोगित्वस्य अन्वयः इष्यते — चैत्रप्रतियोगिकभेदवान् मैत्र इति बोधः। एवं व्युत्पत्तिभङ्गेन क्वचित् एकदेशान्वयस्य स्वीकारात् न दोषः इति नाशङ्कनीयम्। चैत्रस्य नप्ता इत्यत्रापि एकदेशान्वयो न स्वीक्रियते। तत्र षष्ठ्याः संबन्धः अर्थः। स च परंपरासंबव्धरूपः स्वपुत्रपुत्रपुत्रत्वरूपः नप्तरि अन्वेति।

एवं चैत्रादन्य इत्यत्र अन्यपदस्य भेदवान् मैत्रोऽर्थः। तस्मिन् षष्ठ्यर्थस्य स्वप्रतियोगिकभेदवत्त्वरूपस्य संबन्धस्यान्वयः। तथा चात्रापि नैकदेशान्वयः। अतः एतत्प्रयोगद्वयं दृष्टान्तीकृत्य ग्रामं गच्छतीत्यत्र धात्वर्थैकदेशे द्वितीयार्थाधेयत्वान्वयः न समर्थयितुं शक्यः इति भावः।

अथवा चैत्रस्य नप्ता मैत्र इत्यत्र षष्ठ्यर्थः स्वनिरूपितनप्तृत्वाश्रयत्वरूपः संबन्धः स पदार्थे नप्तर्यन्वेति। एवं चैत्रादन्यः इत्यत्र पदार्थेऽन्यस्मिन् (मैत्रे) स्वप्रतियोगिकभेदाश्रयत्वरूपः संबन्धः पञ्चम्यर्थोऽन्वेति। अतो नोभयत्रापि एकदेशान्वयः।

एतदुक्तं भवति — नप्ता नाम प्रपौत्रः स्वजन्यशरीरजन्यशरीरजन्यशरीरावच्छिन्नः आत्मा। चैत्रपदोत्तरषष्ठ्यर्थः निरूपितत्वम्। तस्य नप्तृपदार्थतावच्छेदके जन्यत्वे न अन्वयः। अपि तु पदार्थे नप्तर्यन्वयः। अतो नैकदेशान्वयः इति।

**किञ्च किमिदं फलस्यावच्छेदकत्वम्। न तावत्तत्तद्धातुशक्यतावच्छेदकत्वम्, विशिष्टशक्तौ प्रमाणाभावात्। 'चैत्रो ग्रामं गमयति मैत्रमि'त्यादिणिजर्थरूपधात्वर्थस्यावच्छेदकीभूते गमनरूपे फलेऽव्याप्तेः। अथ फले पृथगेव धातोश्शक्तिः, तस्य च व्यापारे प्रकारत्वमेवाच्छेदकत्वमिति चेत्, न। तृतीयाद्यर्थकरणत्वादौ पाचयतीत्यत्र णिजर्थविशेषणीभूते पाके चातिव्याप्तेः। अतस्स्वरूपसम्बन्धात्मकमवच्छेदकत्वम्, पदार्थान्तरमेव वा कल्प्यम्। तच्च धर्मिग्राहकप्रमाणेन यदाश्रये द्वितीया प्रामाणिकी, तत्रैव कल्प्यते, नान्यत्रेति वाच्यम्। न च तत्र शाब्दव्यवहारातिरिक्तं किञ्चित्प्रमाणमिति। तद्वदेव वक्ष्यमाणविधया कर्मत्वादिकारकाणामखण्डोपाधिरूपाणां द्वितीयादिवाच्यत्वकल्पनोपपत्तेः, नाधेयत्वादेरनेकव्युत्पत्तिकल्पनापादिका वाच्यत्वकल्पना युक्ता समाश्रयितुम्। तथा हि — द्वितीयायाः तावद्वृत्तित्वे, भेदे च शक्तिरित्यनेकशक्तिकल्पना, धातोश्च फलावच्छिन्नव्यापारे एका, फले व्यापारे च नानाशक्तिरिति कल्पना। अस्मन्मते तु पूर्वोक्तविधया तत्तत्फलावच्छिन्नव्यापारवृत्तिपाकत्वगमनत्वादिकमेव तत्तद्धातुशक्यतावच्छेदकमिति, नानेकशक्तिकल्पना।**

---

दूषणान्तरमाह — किं चेत्यादिना। फलावच्छिन्नव्यापारो धात्वर्थ इत्युच्यते भवद्भिः। तत्र फलस्यावच्छेदकत्वं किंरूपम्। न तावत् धातुशक्यतावच्छेदकत्वम्। फलविशिष्टव्यापारे धातोः शक्तौ प्रमाणाभावेन फलस्य धातुशक्यतावच्छेदकत्वाभावात्।

किं च चैत्रो ग्रामं गमयति मैत्रम् इत्यत्र णिजर्थतावच्छेदकस्य गमनरूप-व्यापारस्य प्रयोज्यमैत्रनिष्ठस्य फलत्वेन तदाश्रयत्वेन मैत्रस्य कर्मत्वमिष्टं न सिध्येत्। शुद्धधातोः विशिष्टे शक्तिस्वीकारेऽपि ण्यन्ते तत्स्वीकारायोगात् मैत्र-निष्ठस्य गमनस्य णिजर्थतावच्छेदकत्वाभावात्।

अथ फले व्यापारे च पृथगेव धातोः शक्तिः। फलस्य व्यापारे प्रकारत्व-मेवावच्छेदकत्वम्। तथा च द्वितीयार्थस्य वृत्तित्वस्य फलेऽन्वये पूर्वोक्ता एक-देशान्वयापत्तिरिति दोषस्य नावकाशः। गमयतीत्यत्र व्यापारमात्रस्य णिजर्थत्वे-ऽपि गम्यर्थस्य गमनस्य तत्र प्रकरतया अवच्छेदकत्वात् गमनरूपफलाश्रयत्वेन प्रयोज्यस्य मैत्रस्य कर्मत्वसिद्धिरिति चेत् — तत्र समाधत्ते — **तृतीयार्थकरण-त्वादाविति।** चैत्रो मैत्रेण पाचयति इत्यत्र विक्लित्तौ व्यापारे च पचधातोः, णिचः व्यापारे शक्तिस्वीकारेण पच्यर्थव्यापारे प्रकारत्वात् विक्लित्तेरिव, णिजर्थव्यापारे प्रकारत्वात् प्रयोज्यमैत्रनिष्ठव्यापारस्यापि फलत्वापत्त्या तदाश्रयस्य मैत्रस्य कर्म-त्वापत्त्या मैत्रं पाचयति चैत्रः इति प्रयोगापत्तिरिति भावः। **तृतीयार्थकरण-त्वादाविति।**

रामेण बाणेन हतो वाली इत्यत्र तृतीयायाः कर्तृत्वं करणत्वं चार्थः। तयोः धात्वर्थे व्यापारे विशेषणत्वेन फलत्वापत्त्या तदाश्रयस्य रामस्य बाणस्य च कर्मत्वं स्यादिति भावः।

तर्हि किं कर्तव्यमिति शङ्कायामाह — **अत इत्यादिना।** सखण्डस्यावच्छेद-कत्वस्य निर्वक्तुमशक्यतया स्वरूपसंबन्धरूपं पदार्थान्तरं वा अवच्छेदकत्वं कल्पनीयम्। तच्च अवच्छेदकत्वधर्मिग्राहकप्रमाणेन यदाश्रये द्वितीया प्रामाणिकी तत्रैव कल्प्यते नान्यत्रेति वक्तव्यम्। अवच्छेदकत्वरूपस्य धर्मिणः ग्राहकं प्रमाणं

तावत् संयोगावच्छिन्नः विक्लित्त्यवच्छिन्नो व्यापार इति शब्दप्रयोगात्मकं, अथवा व्याकरणम्। तेन प्रमाणेन संयोगादौ कल्प्यमानमवच्छेदकत्वं यदाश्रये (संयोगाद्याश्रये) द्वितीया प्रमाणसिद्धा,यदाश्रयवाचकात् द्वितीया प्रमाणसिद्धेति यावत्, तादृशफले एवावच्छेदकत्वं कल्प्यते। चैत्रो ग्रामं गच्छति इत्यत्र संयोगाश्रयग्रामवाचकात् द्वितीया "कर्मणि द्वितीया" इति प्रमाणसिद्धेति संयोगस्यावच्छेदकत्वम्। चैत्रो मैत्रं ग्रामं गमयति इत्यत्र गमनाश्रयवाचकात् मैत्रपदात् द्वितीया गतिबुद्धि इत्यादि सूत्रात्मकप्रमाणसिद्धेति गमनेऽवच्छेदकत्वं कल्प्यते। चैत्रो मैत्रेण पाचयति इत्यत्र विक्लित्त्यनुकूलव्यापारात्मकपाकाश्रयमैत्रवाचकात् मैत्रपदात् द्वितीया न प्रमाणसिद्धेति तादृशव्यापारे अवच्छेदकत्वं न कल्प्यते इति वक्तव्यम्।

तद्वत् कर्मत्वादिकारकाणां अखण्डोपाधिरूपाणां द्वितीयादिवाच्यत्वकल्पनोपपत्तेः न आधेयत्वादेः द्वितीयादिवच्यत्वकल्पनं युक्तम्। अनेकव्युत्पत्तिकल्पनापत्तेरिति ।

तथा हि — द्वितीयायाः आधेयत्वे भेदे च शक्तिः इत्यनेकशक्तिकल्फना धातोः फलावच्छिन्नव्यापारे एका शक्तिः, फले व्यापारे च नाना शक्तिरिति वा कल्पना। अस्मन्मते तु तत्तत्फलावच्छिन्नव्यापारवृत्तिपाकत्वगमनत्वादिकमेव तत्तद्धातुशक्यतावच्छेदकम् इति नानेकशक्तिकल्पना। पाकत्वगमनत्वादिश्च अखण्डोपाधिः।

## कर्मत्वस्य सखण्डोपाधिरूपत्वे गौरवप्रदर्शनम्

पुनश्च भवन्मते फलस्य तत्त्वेन बोधे पूर्वदेशविभागस्यापि क्रियाजन्यत्वाविशेषात् 'पूर्वदेशं गच्छती'ति प्रयोगापत्तिः, संयोगत्वादिना बोधे वृक्षस्थितस्यैव सर्पस्य

**मूलदेशादग्रदेशं गच्छतो वृक्षं गच्छतीति प्रयोगापत्तिः, तत्तदवयवसंयोगनाशेनावयविसंयोगानां नाशात् तया क्रियया जनिताग्रसंयोगेनाभिनवस्यैवावयविसंयोगस्य उत्पत्तेः। नह्यवयविसंयोगो न धात्वर्थतावच्छेदकः, 'ग्रामं गच्छती'ति प्रयोगानापत्तेः, अतस्तदुत्तरदेशसंयोगस्यैव फलत्वम् वाच्यम्। उत्तरत्वञ्च तत्तत्क्रियापूर्वदेशघटितमिति, अनन्तशक्तिकल्पना, लक्षणा वा। न च ततत्फलानुभवबलादेव सा न दोषः, अनुभवस्यानुमानादिनापि सम्भवेन शाब्दत्व एव विप्रतिपत्तौ धातुजन्यत्वे सुतरां प्रमाणाभावात्। इतरथा फलस्य धातुवाच्यत्वम्, द्वितीयावाच्यत्वं वेति भवद्ग्रन्थे नानापक्षप्रतिपादनानुपपत्तेः। न हि घटमानयेत्यत्र घटो धातुवाच्यः, नामपदवाच्यो वेति पक्षान् कश्चित् प्रतिपादयति। अत एव गमनत्वादिनैव क्रियाया धातुतोऽनुभवाद्वस्तुतस्तत्फलावच्छिन्नक्रियावृत्तिगमनत्वादिकमेव तत्तद्धातुशक्यतावच्छेदकमित्युक्तं प्राक्। तदेवं भवन्मते शक्त्यानन्त्यं तावत् स्फुटमेव।**

---

अपि च नैयायिकमते दोषान्तराण्याह — **पुनश्चेत्यादिना।** तन्मते सकर्मकधातोः गम्यादेः संयोगादिफले व्यापारे च पृथक् शक्तिः अङ्गीक्रियते। तत्रेदं विचारणीयम् — संयोगादिरूपस्य फलस्य फलत्वेन सामान्यरूपेण यदि बोधः, तदा ग्रामं गच्छतीत्यत्र गमनक्रियाजन्यं फलम् उत्तरदेशसंयोगः पूर्वदेशविभागश्चेति पूर्वदेशविभागरूपफलाश्रयस्य पूर्वदेशस्यापि कर्मत्वापत्त्या पूर्वदेशं गच्छतीति प्रयोगापत्तिः। यदि संयोगत्वादिना विशेषरूपेण बोधः तदा पूर्वदेशस्य गमनजन्यविभागाश्रयत्वेऽपि तज्जन्यसंयोगाश्रयत्वाभावेन कर्मत्ववारणेऽपि दोषान्तरं प्रसजति। तथाहि — यदा कश्चन सर्पः वृक्षस्य मूलदेशात् वृक्षसंयुक्तः सन्नेव अग्रदेशं यावत् गच्छति, तदा सर्पो वृक्षं गच्छति इति प्रयोगापत्तिः।

वृक्षरूपस्यावयविनः सर्पसंयोगवत्त्वात्। तदाह — तत्र सर्पस्य चलनक्रियासमूहो भवति एकैकया क्रियया तत्तद्वृक्षावयवसंयोगजनकक्रियाभेदात् तत्तदवयवसंयोग-नाशक्रमेण अवयविसंयोगानां नाशात् अन्तिमक्रियाजनिताग्रसंयोगेन अभिनव-स्यावयविसंयोगस्योत्पत्तेः। न चेष्टापत्तिः। वृक्षातिरिक्तप्रदेशात् आगत्य वृक्षा-रोहणकाले वृक्षमारोहति सर्प इति प्रयोगसत्त्वेऽपि वृक्षमूलात् अग्रं प्रति आरोहणदशायां अग्रसंयोगानन्तरं वृक्षमारोहतीति प्रयोगस्यानिष्ठत्वात्। **न हीति।** यदि चावयविसंयोगः न धात्वर्थतावच्छेदकः तदा ग्रामं गच्छति चैत्रः इति प्रयोगस्यानुपपत्तिः। ग्रामरूपावयविसंयोगस्यैव तत्र धात्वर्थतावच्छेदकफल-त्वात्। **अत इत्यादि।** पूर्वोक्तदोषप्रसक्त्या सामान्यत उत्तरदेशसंयोगस्य फलत्वं न संभवतीति तत्तदुत्तरदेशसंयोगस्यैव तत्र तत्र फलत्वं वाच्यम्। उत्तरत्वं च किमपेक्षयेति जिज्ञासायां तत्तत्क्रियापूर्वदेशापेक्षयेति वक्तव्यम् इति तत्तत्क्रिया-भेदात् तत्तद्देशभेदाच्च भिन्नोत्तरदेशघटितसंयोगेषु अनन्तशक्तिकल्पनया गौरवम्। अथ वा लक्षणायाः कल्पनया गौरवम्। **न चेति।** तत्तत्फलानामनुभवादेव गौरवं न दोष इति न च वाच्यम्। अनुभवस्यानुमानादिनापि संभवेन शाब्दत्व एव विप्रतिपत्तौ सत्यां सुतरां धातुजन्यत्वे प्रमाणाभावात्। अपि च भवद्ग्रन्थे फलस्य द्वितीयार्थत्वम् धात्वर्थत्वं वेति नानापक्षप्रतिपादनं नोपपद्यते। तस्मात् गमनत्वा-दिना अखण्डरूपेणैव क्रियायाः धातुतोऽनुभवात् गमनत्वादिकमेव धातुशक्यताव-च्छेदकम्। तच्च तत्तत्फलावच्छिन्नक्रियावृत्ति इति भावः।

एतत् सर्वं सुबोधाय पुनःस्पष्टीक्रियते। भवन्मते संयोगस्य फलत्वेन सामा-न्यरूपेण बोधे पूर्वदेशविभागस्यापि गमनक्रियाजन्यत्वेन फलतया तदश्रयस्य पूर्वदेशस्य कर्मतापत्त्या पूर्वदेशं गच्छतीति प्रयोगापत्तिः। संयोगत्वविभाग-त्वादिना विशिष्य फलस्य बोध इति स्वीकारे उक्तदोषवारणेऽपि वृक्षस्थितस्यैव

सर्पस्य मूलदेशादग्रदेशं गच्छतः वृक्षं गच्छतीति प्रयोगापत्तिः। प्रदेशान्तरादागत्य सर्पस्य वृक्षारोहणे सर्पो वृक्षं गच्छति इति प्रयोग इष्ट एव। परं तु आरोहणप्रारम्भानन्तरं मूलदेशात् अग्रदेशं गच्छति सर्पे वृक्षं गच्छति इति प्रयोगापत्तिः। संयोगत्वेन रूपेण भासमानसंयोगाश्रयत्वात् वृक्षस्य ।

न च नेयमापत्तिः संभवति, सर्पस्य वृक्षारोहणे अग्रदेशगमनसमयेऽपि संयोगस्य तत्र सत्त्वेन नूतनस्य संयोगान्तरस्य तत्राजननादिति वाच्यम्। अग्रदेशं प्रति सर्पस्य गमने पूर्वपूर्वा अवयवसंयोगाः नश्यन्ति। तन्नाशेन अवयविसंयोगा अपि नश्यन्ति। अपसर्पणक्रियया अभिनवा एवावयवसंयोगा जायन्ते। तैश्चाभिनवा एव अवयविसंयोगा जायन्ते। तादृशावयविसंयोगाश्रयत्वेन वृक्षस्य कर्मत्वापत्तेर्दुर्वारत्वात्।

उक्तदोषवारणाय संयोगत्वादिना फलस्य धात्वर्थतावच्छेदकत्वं त्यक्त्वा संयोगाश्रयस्य यस्य कर्मत्वमिष्टं तद्व्यक्त्यात्मकोत्तरदेशसंयोगत्वेन फलस्य भानं स्वीकार्यम्। सर्पो मूलदेशादग्रदेशं गच्छति इति प्रयोगदर्शनात् अग्रदेशसंयोगस्य फलत्वम्। वृक्षं गच्छति इति प्रयोगविरहात् वृक्षसंयोगस्य न फलत्वमिति वक्तव्यम्। उत्तरत्वं च यया क्रियया पूर्वदेशस्त्यज्यते तत्क्रियाजन्यतद्देशावधिकोत्तरत्वरूपमिति तत्तत्क्रियातत्तद्देशघटितोत्तरत्वाश्रयसंयोगस्य फलत्वे क्रियादेशादि भेदेनानन्तशक्तिकल्पना लक्षणा वा आश्रयणीयेति गौरवम्।

न च तत्तत्फलानुभवबलादेव लक्षणा न दोषाय इति वाच्यम्। अनुभवस्यानुमानादिनापि संभवेन शाब्दत्वे एव विप्रतिपत्तौ धातुजन्यत्वे सुतरां प्रमाणाभावात्। अन्यथा धातुजन्यज्ञानविषयत्वस्य प्रामाणिकत्वे फलस्य धातुवाच्यत्वं द्वितीयावाच्यत्वं वेति भवद्ग्रन्थेऽपि नानापक्षप्रतिपादनानुपपत्तेः।

न हि घटमानयेत्यत्र घटो धातुवाच्यो नामपदवाच्यो वेति पक्षान् कश्चित् प्रतिपादयति। घटस्य तत्र शाब्दत्वनामवाच्यत्वयोः निश्चितत्वेन संदेहाभावात् तद्विषये नानापक्षा नोपन्यस्यन्ते। फलविषये तु नानापक्षोपन्यासात् तस्य शाब्दत्वं तत्रापि धातुवाच्यत्वं च विचिकित्सितमेव।

अत एव — फलस्य धातुवाच्यत्वे शक्त्यानन्त्यादेव धातुतो गमनत्वादिनैव क्रियायाः अनुभवात् वस्तुगत्या तत्तत्फलावच्छिन्नक्रियावृत्तिगमनत्वादिकमेव तत्तद्धातुशक्यतावच्छेदकमित्युक्तं प्राक् धात्वर्थनिरूपणावसरे। तदेवं भवन्मते शक्त्यानन्त्यं तावत् स्फुटमेव। — इति।

## तत्रैव व्युत्पत्त्यानन्त्यप्रदर्शनम्

**व्युत्पत्त्यानन्त्यमपि। 'ग्रामं गच्छती'त्यत्र तावत् प्रातिपदिकार्थस्य ग्रामस्य तत्तत्संसर्गभेदेन वृत्तित्वे, भेदे चान्वयाद्व्युत्पत्तिद्वयम्, पुनश्चान्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वव्युत्पत्तिभङ्गः, तदभङ्गाय वा ग्रामप्रातिपदिकेन ग्रामविशेषलक्षणेति दोषः, द्वितीयार्थस्य च भेदस्य निरुक्तसामानाधिकरण्यसम्बन्धेन क्रियायाम्, वृत्तित्वस्य च साक्षात्सम्बन्धेन फल इति व्युत्पत्तिद्वयम्। स्वं गच्छतीति प्रयोगवारणार्थं भेदो वा द्वितीयार्थः, समवायो वा, ग्रामस्य तस्मिन्समवाये स्वप्रतियोगिकभेदवद्वृत्तित्वं संसर्गः। समवायस्य च साक्षात्सम्बन्धेन क्रियायामन्वय इत्यस्यापि सुवचत्वेन विनिगमनाविरहश्च।**

---

तथा कार्यकारणभावानन्त्यमपि दुर्वारमित्याह — **व्युत्पत्त्यानन्त्यमिति।** कार्यकारणभावानन्त्यमित्यर्थः। तदुपपादयति — **ग्रामं गच्छतीत्यत्रेति** । तत्र प्रातिपदिकार्थस्य ग्रामस्य द्वितीयार्थे वृत्तित्वे भेदे च यथाक्रमं निरूपितत्व —

प्रतियोगित्वात्मकसंबन्धभेदेनान्वयस्वीकारात् ग्रामनिष्ठनिरूपितत्वसंबन्धावच्छिन्न-प्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबोधं प्रति वृत्तित्वनिष्ठविशेष्यतासंबन्धेन द्वितीयाधीनोपस्थितिः कारणम्, ग्रामनिष्ठप्रतियोगितासंबन्धावच्छिन्नप्रकारतानि-रूपितविशेष्यतासंबन्धेन शाब्दबोधं प्रति भेदनिष्ठविशेष्यतासंबन्धेन द्वितीयाधी-नोपस्थितिः कारणम् इति कार्यकारणभावद्वयं कल्पनीयम्। पुनश्च पूर्वोक्तरीत्या अन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वव्युत्पत्तिभङ्गः। एतदुक्तं भवति — द्वितीयार्थभेदे प्रकृत्यर्थस्य प्रतियोगितासंबन्धेनान्वयस्वीकारे चैत्रः स्वं गच्छ-तीतिप्रयोगापत्तिः, चैत्रप्रतियोगिकचैत्रमैत्रोभयभेदवत्त्वस्य चैत्रेऽपि सत्त्वात्। अन्वयितावच्छेदकावच्छिन्नप्रतियोगिताकत्वसंबन्धेन भेदे प्रकृत्यर्थस्य अन्वये जलं गच्छति जलम् इत्यत्र अनुपपत्तिः। तद्वारणाय जलप्रातिपदिकस्य जल-विशेषे लक्षणा वक्तव्या स्यात्।

एवं द्वितीयार्थस्य वृत्तित्वस्य आश्रयतासंबन्धेन फले भेदस्य च स्वरूपसम-वायोभयघटितसामानाधिकरण्यसंबन्धेन स्वाश्रयसमवेतत्वसंबन्धेन क्रियाया-मन्वय इति स्वीकारात् तदनुसारेण द्वितीयार्थवृत्तित्वनिष्ठाश्रयत्वसंबन्धाव-च्छिन्नप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबोधं प्रति फलनिष्ठविशेष्यता-संबन्धेन धातुजन्योपस्थितिः कारणम्, द्वितीयार्थभेदनिष्ठसामानाधिकरण्यसंबन्धा-वच्छिन्नप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबोधं प्रति धातुजन्योपस्थितिः व्यापारनिष्ठविशेष्यतासंबन्धेन कारणमिति कार्यकारणभावद्वयं कल्पनीयम्।

अपि च स्वं गच्छति चैत्र इति प्रयोगवारणाय भेदस्य फलस्य च द्वतीयार्थ-त्वमिति प्राचीनमतमपि न युक्तम्। अनेककार्यकारणभावकल्पनागौरवादेव। भेदो वा द्वितीयार्थः, समवायो वा इत्यत्र विनिगमनाविरहात्। समवायस्य द्वितीयार्थत्वे तत्र प्रकृत्यर्थस्य ग्रामस्य स्वप्रतियोगिकभेदवद्वृत्तित्वसंबन्धेनान्वयः। समवायस्य

स्वरूपसंबन्धेन क्रियायामन्वयः। ग्रामप्रतियोगिकभेदवद्वृत्तिसमवायवद्गमनवांश्चैत्र इति बोधसंभवात् इति भावः।

## फलम्, भेदश्च द्वितीयार्थ इति नव्यमतनिरासः

**एतेन फलम्, भेदश्च द्वितीयार्थः। आधेयत्वं फले प्रकृत्यर्थसंसर्गः, फलस्य च जनकत्वेन, अवच्छेद्यत्वेन वा व्यापारेऽन्वयः, व्यापारमात्रं धात्वर्थः। तत्तद्धातुसमभिन्याहाराच्च द्वितीयायाः फलविशेषबोधकत्वमित्यपि अपास्तम्, अनेकशक्तिकल्पनादेस्तदवस्थत्वात्।**

**एवं 'ग्रामस्य गन्ते'त्यादिकर्मणि षष्ठीस्थले शक्त्यनेकत्वम्, व्युत्पत्त्यनेकत्वम्, विनिगमनाविरहश्चेति बोध्यम्।**

---

नव्यनैयायिकमतमनूद्य निरस्यति — **एतेनेत्यादिना।** अनेकशक्त्यादिकल्पनगौरवेणेत्यर्थः। अस्य अपास्तमित्यनेनान्वयः। द्वितीयायाः भेदः फलं चार्थः। अर्थात् ग्रामं गच्छति चैत्र इत्यत्र ग्रामपदोत्तरद्वितीयायाः संयोगः भेदश्चार्थः। ग्रामस्य प्रकृत्यर्थस्य संयोगे आधेयत्वसंबन्धेनान्वयः। भेदे च स्वप्रतियोगिकत्वसंबन्धेनान्वयः।संयोगस्य धात्वर्थे व्यापारे जनकत्वसंबन्धेन अवच्छिन्नत्वसंबन्धेन वा अन्वयः। भेदस्य च स्वाश्रयसमवेत्वसंबन्धेनान्वयः। व्यापारस्य आख्यातार्थकृतौ अनुकूलत्वसंबन्धेनान्वयः। कृतेः प्रथमान्तपदार्थे चैत्रे आश्रयत्वसंबन्धेनान्वयः। तथा च ग्रामनिष्ठसंयोगजनकः संयोगावच्छिन्नो वा ग्रामप्रतियोगिकभेदवत्समवेतो यो व्यापारः तदनुकूलकृतिमान् चैत्र इत्यन्वयबोधः। **व्यापारमात्रमिति।** मात्रपदेन फलस्य व्यवच्छेदः। **तत्तद्धातुसमभिव्याहारादिति।** गम्धातुसमभिव्याहारे संयोगः, त्यजधातुसमभिव्याहारे विभागो द्वितीयार्थ इति

भावः। **अनेकशक्तिकल्पनादिति।** अनेकेषु अर्थेषु अनेकासां शक्तीनां कल्पनात् गौरवमित्यर्थ।

**एवं ग्रामस्य गन्तेत्यादाविति।** द्वितीयाया इव कर्मणि षष्ठ्याः विधानात् षष्ठ्याः फलं भेदश्चार्थः। फलस्य जनकतया, भेदस्य स्वाश्रयसमवेतत्वेन गमने अन्वयः। तस्य तृजर्थे कर्तर्यन्वयः। ग्रामनिष्ठसंयोगजनकग्रामभिन्नसमवेतक्रियाश्रयश्चैत्र इति बोधः। **विनिगमनविरह इति।** भेदो वा द्वितीयार्थः समवायो वा द्वितीयार्थ इत्यत्र विनिगमकाभाव इत्यर्थः।

## तत्रैव कर्माख्यातस्य तदर्थकत्वनिरासः

**'ग्रामो गम्यते' इति कर्माख्याते चात्मनेपदस्य फले, भेदे च शक्यन्तरकल्पनम्, ग्रामस्य प्रथमान्तपदोपस्थाप्यस्यापि आख्यातार्थे भेदेऽन्वयकल्पनम्, तस्य च व्यापारस्य धातूपस्थापितफलं प्रति विशेष्यभूतस्यापि पुनर्जन्यत्वसम्बन्धेनात्मनेपदार्थे फलेऽन्वयकल्पनम्, तस्य फलस्य चाश्रयतासम्बन्धेन प्रथमान्तपदोपस्थाप्ये ग्रामेऽन्वयकल्पनमिति दोषाः।**

---

कर्माख्यातस्थले नैयायिकोक्तबोधप्रकारं तत्र दोषांश्च प्रदर्शयति — **ग्रामो गम्यत इति।** ग्रामो गम्यते इत्यत्र ते इति आख्यातस्य संयोगरूपं फलं भेदश्चार्थः। प्रथमान्तपदोपस्थाप्यस्य ग्रामस्य भेदे स्वप्रतियोगिकत्वसंबन्धेनान्वयः भेदस्य धात्वर्थव्यापारे स्वाश्रयसमवेतत्वसंबन्धेनान्वयः। व्यापारस्य फले संयोगे जन्यत्वसंबन्धेनान्वयः। संयोगस्य ग्रामेऽन्वयः। चैत्रेणेत्यध्याहार्यम्। चैत्रकर्तृकत्वं तदर्थः। तस्य धात्वर्थव्यापारेऽन्वयः। ततश्च चैत्रकर्तृकग्रामभिन्नसमवेतव्यापारजन्यसंयोगाश्रयो ग्राम इति बोधः। **प्रथमान्तपदोपस्थाप्यस्यापीत्यपिना** प्रथमान्त-

पदार्थस्य विशेष्यत्वमेवेति स्वाभ्युपगतनियमभङ्गरूपो विरोधःसूच्यते। प्रत्ययार्थस्य अपीत्यपिना प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्य प्राधान्यमिति नियमभङ्गः सूच्यते। विशेष्यभूतस्यापीत्यपिना प्रकारत्वकल्पनरूपो विरोधः सूच्यते।

**किञ्च ग्रामपदस्य, आत्मनेपदस्य च न तावद्युगपदेव प्रकारतया, विशेष्यतया च बोधजनकत्वम्, विरोधात्। विशेषणतावच्छेदकप्रकारकविशेषणनिश्चयस्यानुदयेन विशिष्टवैशिष्ट्यबोधात्मकस्यानुभूयमानस्यापलापापत्तेश्च। नापि क्रमिकबोधद्वयजनकत्वम्। जनितान्वयबोधे नैराकांक्ष्यात्। एकतरशाब्दबोधवेलायामितरशाब्दबोधानुत्पत्तौ प्रतिबन्धकान्तरकल्पनापत्तेश्च। एवं 'पक्वः ओदनः' इत्यत्र कर्मकृत्स्थलेऽपि द्रष्टव्यम्।**

---

किं चेत्यादि। ग्रामपदार्थस्य कर्माख्यातार्थयोः भेदफलयोः मध्ये भेदं प्रति विशेषणतया फलं प्रति विशेष्यतया च युगपत् बोधः तज्जनकत्वं च ग्रामपदाख्यातपदयोः विरूद्धम्। सकृदुच्चारितः शब्दः सकृदेवार्थं गमयतीति व्युत्पत्तिविरोधात्। किं च भेदफलव्यापारादीनां विशकलिततया युगपत् बोधस्वीकारे विशेषणतावच्छेदकप्रकारकविशेषणविषयकनिश्चयस्य पूर्वमनुदयेन अनुभूयमानस्य विशिष्टवैशिष्ट्यावगाहिबोधस्यापलापापत्तिश्च।

ननु ग्रामपदेन आख्यातपदेन च युगपदेव विशेषणतया विशेष्यतया च न स्वार्थबोधजनकत्वम्, येनोक्तदोषः स्यात्। किं तु विशेषणतया स्वार्थबोधानन्तरं विशेष्यतया स्वार्थबोधनमिति तयोः क्रमिकबोधजनकत्वस्वीकारान्न दोष इति चेत्— मैवम्। एकवारं जनितबोधस्य द्वितीयबोधे आकाङ्क्षाविरहात्। किं च एकतरबोधजननकाले सामग्रीवशात् द्वितीयबोधेनावश्यमुत्पत्तव्यम्। तदनुपपत्तौ प्रतिबन्धकान्तरं कल्प्यमिति गौरवान्तरम्। एवं पक्व ओदन इत्यत्र कर्मकृत्स्थले-

ऽपि युगपदेव विशेषणतया विशेष्यतया च बोधजनकत्वे दोषद्वयम्, क्रमिकबोध-जनकत्वे दोषद्वयं द्रष्टव्यम्।

## भेदाद्यर्थकत्वं विनैव स्वं गच्छतीति प्रयोगवारणप्रकारः

**यत्तु — भेदो न द्वियीयार्थः अपित्वाधेयत्वादिकमेव 'आकडारादेका संज्ञा' (पा.सू 1.4.1) इति सूत्रेणैकसंज्ञाप्रयुक्तकार्यसत्त्वे संज्ञान्तरप्रयुक्तकार्यनिषेधात्। प्रकृते च परत्वात् कर्तृसंज्ञाप्रयुक्तकार्यस्यावश्यकत्वेन कर्मसंज्ञाप्रयुक्तद्वितीया-द्यनापत्तेः। अतो न तत्प्रयुक्तशक्त्यन्तरकल्पनाद्यापत्तिरिति।**

---

अथ द्वितीयायाः भेदार्थकत्वं विनैव चैत्रः स्वं गच्छति इति प्रयोगवारण-प्रकारमनुवदति — **यत्तु इत्यादिना**। अयं भावः — चैत्रो ग्रामं गच्छतीत्यादौ भेदो न द्वितीयार्थः। अपि तु आधेयत्वमेव। न चैवं चैत्रः स्वं गच्छति इति प्रयोगापत्तिः गमनजन्यसंयोगाश्रयत्वस्य ग्रामे इव चैत्रेऽपि सत्त्वात् तस्य कर्मत्वलक्षणा-श्रयत्वात् इति वाच्यम्। "आकडारादेका संज्ञा" (पा.सू 1.4.1) इति पाणिनिसूत्रेण एकसंज्ञाप्रयुक्तकार्यसत्त्वे संज्ञान्तरप्रयुक्तकार्यनिषेधात्। तथा हि — तेन सूत्रेण इत आरभ्य "कडाराः कर्मधारये" (पा.सू 2.2.38) इत्यतः प्राक् एकस्यैव एकैव संज्ञा, न तु संज्ञाद्वयमिति नियम्यते। तत्र या संज्ञा प्रवर्तते तन्निमित्तकमेव कार्यं भवति। तत्रापि या परा अनवकाशा च सा संज्ञान्तरं बाधित्वा प्रवर्तते। यथा वैकुण्ठमधिशेते हरिः इत्यत्र वैकुण्ठस्य "आधारोऽधिकरणम्" (पा.सू 1.4.45) इति सूत्रेणाधिकरणसंज्ञा "अधिशीङ्स्थासां कर्म" (पा.सू 1.4.46) इति सूत्रेण कर्मसंज्ञा च प्राप्ता । तयोर्मध्ये अधिकरणसंज्ञां बाधित्वा परत्वात् कर्मसंज्ञैव प्रवर्तते, तेन तन्निमित्तिका द्वितीयैव भवति। न तु अधिकरणसंज्ञानिमित्तिका सप्तमी। तद्वत् प्रकृतेऽपि चैत्रश्चैत्रं गच्छति इत्यत्र धात्वर्थतावच्छेदकसंयोग-

रूपफलाश्रयत्वात् "कर्तुरीप्सिततमं कर्म" इति सूत्रेण चैत्रस्य कर्मसंज्ञा, धात्वर्थ-व्यापाराश्रयत्वेन "स्वतन्त्रः कर्ता" (पा.सू 1.4.54) इति सूत्रेण कर्तृसंज्ञा च प्राप्ता। तत्र परसूत्रविहितत्वात् कर्तृसंज्ञैव प्रवर्तते। तया कर्मसंज्ञायाः बाधनात् तत्प्रयुक्ता द्वितीया न प्रवर्तते। कर्तृसंज्ञायाः सत्त्वात् तिङा कर्तुरुक्तत्वात् अभिहिते तु प्रथमैव इत्युक्त्या प्रथमैव भवति। एवं च भेदे द्वितीयायाः न शक्त्यन्तरम्। न वा व्युत्पत्त्य-नेकत्वम् इति। **न तत्प्रयुक्तेति।** कर्मसंज्ञाप्रयुक्तस्य भेदे शक्त्यन्तरस्य कल्पनं तत्प्रयुक्तकार्यकारणभावान्तरस्य च न कल्पनमित्यर्थः।

## तन्निरासः

**तन्न। 'स्वं जानामि, चैत्रोऽहं स्वात्मानं जानामि, आत्मानमात्मना वेत्सी' त्यादावेकसंज्ञावरोधेऽपि संज्ञान्तरप्रयुक्तकार्यदर्शनात्। न च शरीरमनोरूपावच्छेद-कभेदमादाय तत्रासाङ्कर्योपपादनम्, तथात्वे स्वपदप्रयोगानुपपत्तेः। 'चैत्रश्चैत्रं गच्छती'ति प्रयोगेऽपि शरीरप्रदेशान्तरावच्छिन्नात्मादिभेदकल्पनोपपत्तेश्च। इतरथा चैत्रो मैत्रं गच्छतीति प्रयोगस्यानापत्तेः। वस्तुतः फलाश्रयत्वसत्त्वे चैत्रेऽपि द्वितीयाप्रसक्तौ सूत्रवशेनापि संज्ञान्तरप्रयुक्तकार्योपस्थितेः तत्प्रतिबन्धकत्वकल्पने तवापि गौरवस्य सत्त्वाच्च। मम त्वखण्डोपाधिरूपस्य कर्मत्वस्य परसमवेतक्रिया-जन्यफलशालित्वसमनियतस्यैव कल्पनात्, चैत्रे तस्याप्रसक्तत्वादेव, न प्रतिबध्य-प्रतिबन्धकभावकल्पनेति विशेषः। अत उक्तयुक्त्या लाघवात् कर्मत्वमखण्डोपाधि-रूपमेव द्वितीयार्थः।**

---

तन्मतं खण्डयति — **तन्नेत्यादिना।** "आकडारादेका संज्ञा" (पा.सू 1.4.1) इति वैयाकरणानां या परिभाषा सा न युक्ता । लोके चैत्रोऽहं स्वात्मानं जानामि

इति आत्मानमात्मना वेत्सि इति च एकस्यैव अनेकसंज्ञाप्रयुक्तानेकविभक्ति-प्रयोगदर्शनात्।

ननु तत्र शरीरमनोरूपावच्छेदकभेदमादाय आत्मभेदं परिकल्प्य संज्ञाभेद-प्रयुक्तः विभक्तिभेदः उपपादनीयः। तदुक्तं "णेरणौ" (पा.सू 1.3.67) इत्यादिसूत्रे भाष्ये — यदा एकमेव वस्तु बुद्ध्या विभज्य कर्मत्वेन कर्तृत्वेन च विवक्ष्यते तदा आत्मनेपदं प्राप्नोति अन्तरात्मा तत् कर्म करोति, येन शरीरात्मा सुखदुःखे अनुभवति इत्युक्तम्। वस्तुत एवात्रात्मभेदः, न तु एकस्यैव कर्तृत्वं कर्मत्वं च इति कैयटः।

एवं च आत्मनः एकस्यापि अवच्छेदकभेदेन भिन्नतया नैकस्य संज्ञाद्वय-कार्यप्रवृत्तिः इत्याशङ्क्याह — **तथात्वे स्वपदप्रयोगानुपपत्तेः इति।** चैत्रः स्वं जानाति इति स्वपदप्रयोगानुपपत्तेः। स्वपदस्य हि पूर्वप्रकृतपरामर्शित्वात् चैत्र-पदार्थस्वपदार्थयोरैक्यमावश्यकम्। न च तत्रापि अवच्छेदकभेदप्रयुक्तभेदमाश्रित्य तत्प्रयुक्तसंज्ञाभेदात् विभक्तिभेदः इति वाच्यम्। एवमपि चैत्रश्चैत्रं गच्छतीति प्रयोगापत्तेः। हस्तपादादिशरीरावयवावच्छिन्नात्मभेदकल्पनसंभवात्। इतरथा शरीरतदवयवाद्यवच्छेदकभेदप्रयुक्तभेदकल्पनानङ्गीकारे चैत्रो मैत्रं गच्तीति प्रयोगस्यानुपपत्तिः। शुद्धस्यात्मनः चैत्रमैत्रपदार्थत्वे तस्य गमनकर्तृत्वतत्कर्मत्व-योरसंभवात्। तस्मात् अवच्छिन्न आत्मैव चैत्रादिपदार्थ इति वक्तव्यम्। ततश्च उक्तापत्त्यनुपपत्त्यादिपर्यालोचने भेदाधेयत्वादेः द्वितीयाविभक्त्यर्थत्वं न संभवतीति भावः।

**वस्तुत इत्यादि।** वस्तुस्थितिपर्यालोचने चैत्रस्य ग्रामं प्रति गमनकाले गमन-क्रियाजन्यसंयोगरूपफलाश्रयत्वस्य चैत्रेऽपि सत्त्वात् तद्रूपकर्मत्वप्रयुक्तद्विती-

यायाः प्रसक्तौ आकडारसूत्रप्रामाण्येन कर्तृसंज्ञाप्रयुक्तकार्यं प्रथमाविभक्तिरूपं कर्मसंज्ञाप्रयुक्तकार्यं द्वितीयाविभक्तिं प्रति प्रतिबन्धकमिति कल्पनीयं भवति। तच्च गौरवावहमिति भावः।

भवन्मते कथं चैत्रश्चैत्रं गच्छतीत्यादिप्रयोगवारणमिति शङ्कायामाह — मम तु इत्यादिना। मीमांसकस्य मम मते तु कर्मत्वमखण्डोपाधिरूपम्। तच्च परसमवेतक्रियाजन्यफलशालित्वं यत्र तत्रैव वर्तते इति स्वीक्रियते। इदं कर्मत्वस्य व्यञ्जकमिति यावत्। एतदभावात् चैत्रस्य न कर्मत्वम्। अतः कर्मत्वार्थिका द्वितीया न भवति। यथा हि अखण्डायाः गोत्वरूपजातेः सास्नाद्यवयवसमुदाय-व्यङ्ग्यत्वात् तत्समनियततया तच्छून्ये अश्वादौ तद्व्यङ्ग्यं गोत्वमपि न भवति, तथेति भावः। अतो मम मते प्रतिबध्यप्रतिबन्धकभावादिकल्पनरूपो दोषो न प्रसजतीति।

कर्मत्वस्य अखण्डोपाधिरूपत्वं सयुक्तिकं स्थापयति — **अत उक्तयुक्त्येति।** गोकर्मकमानयनम् ओदनकर्मकः पाकः, ग्रामकर्मकं गमनम् इत्येवं द्वितीयार्थस्य कर्मपदेन प्रदर्शनात् तस्य कर्मत्वरूपाखण्डोपाधिविशिष्टार्थकत्वात् लाघवात् कर्मत्वमेव द्वितीयार्थः।

## धात्वर्थस्यापि अखण्डत्वसमर्थनम्

**तच्च उक्तकर्मत्वलक्षणसमनियतमेव। तत्रैव 'गोकर्मकमानयनम्, ओदनकर्मकः पाकः, ग्रामकर्मकं गमनमि'ति व्यवहारात्। तच्च धर्मिग्राहकप्रमाणेन संसम्बन्धि-कमेव कल्प्यत इति तस्य तत्तद्धात्वर्थनिरूपितत्वसिद्धिः। तत्तद्धात्वर्थस्तु तत्त-त्फलावच्छिन्नव्यापारविशेषत्वसमनियताखण्डोपाधिरूपपाकत्वगमनत्वरूपशक्य-तावच्छेदकधर्मावच्छिन्नो व्यापारविशेष इत्युक्तमेव। तत्तद्धात्वर्थनिरूपिततत्तत्कर्म-**

**त्वानां भेदेऽपि च भवन्मते आधेयत्वत्वस्येव कर्मत्वत्वस्याप्यखण्डस्य स्वीकारात्तस्यैव शक्यतावच्छेदकत्वेन, नानेकशक्तिकल्पना। निरूपकीभूतधात्वर्थतावच्छेदकावच्छिन्नगमनाद्यन्वयवशाच्च चैत्रस्य घटः इतिवत् कर्मत्वविशेषलाभः। अतश्च 'चैत्रः चैत्रं गच्छति, चैत्रः पाचयति मैत्रमि'त्यादिप्रयोगापत्तिशङ्कैव दुर्लभा। 'ग्रामे गच्छति, कारयति चैत्रो मैत्रमि'त्यादौ तु कर्मत्वाविवक्षायाम्, अधिकरणत्वादिविवक्षया सप्तम्यादिप्रयोगोऽप्यविरुद्धः। एवञ्च द्वितीयायामेकैव शक्तिः। प्रातिपदिकार्थस्य च तृतीयादिसाधारण्येन सुबर्थे कर्मत्वादावन्वयात् एकैव व्युत्पत्तिः। तस्य उद्देश्यत्वेन वा स्वनिरूपकधात्वर्थजनकत्वेनैव वाख्यातार्थकृतौ अन्वयादपरेति लाघवम्। एवं कर्मणिषष्ठीस्थलेऽपि।**

---

तच्च कर्मत्वमुक्तव्यवहाररूपधर्मिग्राहकप्रमाणेन ससंबन्धिकमेव कल्प्यत इति तस्य तत्तद्धात्वर्थनिरूपितत्वसिद्धिः।

एतेन कर्मत्वस्य अखण्डत्वे तस्य एकत्वेन सर्वक्रियां प्रति सर्वस्य कर्मत्वापत्तिरिति शङ्कायाः नावसरः। तत्तद्धात्वर्थस्तु तत्तत्फलावच्छिन्नव्यापारविशेषत्वसमनियताखण्डोपाधिरूपपाकत्वगमनत्वादिरूपशक्यतावच्छेदकधर्मावच्छिन्नो व्यापारविशेषः।

निरूपकस्य — तत्तद्धात्वर्थस्य भेदेन तन्निरूपितानां तत्तत्कर्मतानां भेदेऽपि नैयायिकमते आधेयत्वस्य भेदेऽपि शक्यतावच्छेदकस्य आधेयतात्वस्य एकत्वात् यथा नानेकशक्तिकल्पना तथा कर्मतात्वस्य शक्यतावच्छेदकस्यैकत्वात् नानेकशक्तिकल्पना तत्तद्धात्वर्थतावच्छेदकावच्छिन्नगमनादावन्वयवशाच्च चैत्रस्य घट इत्यत्रेव कर्मत्वविशेषस्य लाभः।

अतः चैत्रश्चैत्रं गच्छति, चैत्रः पाचयति मैत्रम् इत्यादिप्रयोगापत्तिशङ्कैव नावसरं लभते। कर्मत्वस्य सखण्डत्वे हि मैत्रे चैत्रप्रतियोगिकभेदस्य सत्त्वात् तस्य कर्मत्वमापद्यते। तद्वारणाय यत्नान्तरमास्थेयम्, न त्वखण्डत्वे।

ग्रामे गच्छति कारयति चैत्रो मैत्रेण इत्यादौ तु कर्मत्वाविवक्षायामपि अधिकरणत्वकर्तृत्वविवक्षायां सप्तमीतृतीयाप्रयोगोऽपि साधुः।

एवं च द्वितीयायाः कर्मत्वे एकैव शक्तिः। प्रातिपदिकार्थस्य च तृतीयादि-विभक्तिसाधारण्येन सुबर्थे कर्मत्वादावन्वयात् एकैव व्युत्पत्तिः। सुबर्थस्य कर्मत्वादेः निरूपकत्वसंबन्धेन वा स्वनिरूपकधात्वर्थजनकत्वसंबन्धेन वा आख्यातार्थकृतावन्वयः। ग्रामनिष्ठकर्मत्वनिरूपकगमनजनिका चैत्रकर्तृकभावना इति शाब्दबोधः।

## कर्माख्यातस्थले सिद्धान्तेऽन्वयप्रकारः

**कर्माख्यातस्थले तु पूर्वोक्तरीत्याऽऽख्यातेन कर्मत्वलक्षणायामपि प्रथमार्थस्य पूर्वोक्तविधया प्रातिपदिकार्थस्य स्ववृत्तिकर्मत्वनिरूपकधात्वर्थजनकत्वसंसर्गेण कृतावन्वयः। कर्मत्वस्य प्रथमार्थत्वे तु स्वनिरूपकधात्वर्थजनकत्वसंसर्गेणैव। कर्मकृत्स्थले तु पक्व ओदनः इत्यादौ पाकस्य कृत्प्रत्ययलक्ष्यायां कृत्तौ, तस्याश्च निरुप्यत्वसंसर्गेण तल्लक्ष्य एव कर्मणि, तस्य चास्तीत्याख्यातार्थे इति वक्ष्यते। कर्मकृत्स्वपि पाककर्मीकृत इति विवरणानुरोधेन, कारकान्वयानुरोधेन च कृति-लक्षणाया वक्ष्यमाणत्वाच्च। अतश्च लाघवात् द्वितीयार्थकर्मत्वस्योक्तसम्बन्धेन कृतावेवान्वयः — इति सिद्धम्।**

---

**कर्माख्यातस्थले तु इत्यादि।** चैत्रेण ग्रामो गम्यते इत्यादौ आख्यातस्य कर्तरीव कर्मणि लक्षणा। प्रथमायाः प्रातिपदिकार्थ एवार्थः। प्रातिपदिकं तात्पर्यग्राहकमितिमतानुसारेण प्रथमार्थस्य ग्रामस्य स्ववृत्तिकर्मत्वनिरूपकगमनजनकत्वसंबन्धेन आख्यतार्थकृतावन्वयः। अभिहितकारकवाचिनी प्रथमेति मतानुसारेण तु प्रथमार्थस्य कर्मत्वस्य स्वनिरूपकधात्वर्थजनकत्वसंबन्धेन आख्यातार्थभावनायामन्वयः। ग्रामनिष्ठकर्मत्वनिरूपकगमनजनिका चैत्रकर्तृकभावनेति बोधः इति भावः।

**कर्मकृत्स्थले तु इत्यादि।** पक्व ओदनः अस्ति इत्यादौ धात्वर्थस्य पाकस्य क्तप्रत्ययलक्ष्यायां कृतावनुकूलत्वसंबन्धेनान्वयः। क्तप्रयत्ययस्य कर्मत्वेऽपि लक्षणा। कर्मणि शक्तिः। कृतेः निरूपितत्वसंबन्धेन कर्मत्वेऽन्वयः। कर्मणः स्ववृत्तिसत्तानिरूपितत्वसंबन्धेन अस्तीत्याख्यातार्थे आश्रयत्वेऽन्वयः। असधातोः सत्ता अर्थः। तस्याः निरूपितत्वसंबन्धेन आश्रयत्वेऽन्वयः। तथा च पाकानुकूलकृतिनिरूपितकर्मत्वाश्रयकर्मवृत्तिसत्तानिरूपितम् ओदनवृत्तिसत्तानिरूपितं चाश्रयत्वमिति शाब्दबोधः। क्तप्रत्ययार्थस्य कर्मणः ओदनस्य चाभेदान्वबोधस्तु पार्ष्टिकः मानसः — इति भावः।

ननु कृतेः कृत्प्रत्ययार्थतया असधातूत्तराख्यातार्थतया च द्वेधा भाने किं प्रमाणमिति शङ्कायामाह — **कर्मकृत्स्वपीति।** पाककर्मीकृतः इति विवरणमेव तत्र प्रमाणम् इति भावः। अतश्च चैत्रो ग्रामं गच्छति इत्यादौ द्वितीयार्थकर्मत्वस्य स्वनिरूपकधात्वर्थगमनजनकत्वसंबन्धेन आख्यातार्थकृतावेवान्वय इति सिद्धम्।

न च द्वितीयार्थकर्मत्वस्य निरूपकतासम्बन्धेन धात्वर्थ एवान्वयोऽस्त्विति वाच्यम्। धात्वर्थस्यापि कारकत्वेन भावनान्वयस्योपपादितत्वात्, तत्साधारण्येन

**कारकत्वप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति भावनाविशेष्यतासम्बन्धेन लिङ्गा-नन्वयिपदजन्योपस्थितिः कारणमित्येकेनैव कार्यकारणभावेन कर्मत्वादीनामपि अन्वयोपपत्तौ, तदनेकत्वे गौरवात्। धात्वर्थान्वयार्थमुपस्थितस्य भावनाविशेष्य-त्वस्यैव, कर्मत्ववृत्तिप्रकारतानिरूपकत्वकल्पनोपपत्तौ अनुपस्थितस्य धात्वर्थ-विशेष्यत्वस्य तत्कल्पनानुपपत्तेश्च। 'काष्ठैरोदनं पचती'त्यस्य काष्ठैः पाकैरोदनं करोतीति विवरणात्, विवरणवाक्ये च काष्ठादीनां कृञर्थे अन्वयाऽवश्यकत्वेन, पचतीत्यत्रापि तत्रैवान्वयप्रतीतेश्च। तत्सिद्धं कर्मत्वाद्यखण्डमेव द्वितीयार्थो भावनान्वयी — इति।**

---

तत्र शङ्कते — **न चेत्यादिना**। द्वितीयार्थकर्मत्वस्य निरूपकतासंबन्धेन धात्वर्थ एवान्वयोऽस्तु, कुतः आख्यातार्थभावनायामन्वयः स्वीकृत इति शङ्का। समा-धत्ते — **धात्वर्थस्यापीत्यादिना**। धात्वर्थस्यापि कर्मत्वकरणत्वान्यतरकारकत्वात् "गुणानां च परार्थत्वादसंबन्धः समत्वात् स्यात्" इति न्यायेन कर्मत्वस्य तत्रान्वयायोगात्। अतः धात्वर्थसाधारण्येन विशेष्यतासंबन्धेन कारकप्रकारक-शाब्दबुद्धित्वावच्छिन्नं प्रति भावनानिष्ठविशेष्यतासंबन्धेन लिङ्गानन्वयिपदजन्यो-पस्थितिः कारणमिति एकेनैव कार्यकारणभावेन उपपत्तौ द्वितीयार्थप्रकारक-शाब्दबुद्धौ धात्वर्थनिष्ठविशेष्यतासंबन्धेन धातुजन्योपस्थितिः कारणम्, धात्वर्थ-प्रकारकशाब्दबुद्धौ भावनानिष्ठविशेष्यतासंबन्धेन आख्यातजन्योपस्थितिः कारण-मिति अनेककार्यकारणभावकल्पने गौरवादिति भावः। युक्त्यन्तरमप्याह — **धात्वर्थान्वयार्थमिति**। धात्वर्थस्य प्रकारतया आख्यातार्थभावनायामेवान्वयस्य तार्किकैरपि स्वीकारात् धात्वर्थान्वयार्थमुपस्थितस्य भावनानिष्ठविशेष्यत्वस्यैव

कर्मत्ववृत्तिप्रकारतानिरूपकत्वकल्पनेनैवोपपत्तौ अनुपस्थितस्य धात्वर्थनिष्ठविशेष्यत्वस्य कर्मत्ववृत्तिप्रकारतानिरूपकत्वकल्पनायाः अनुपपत्तेश्चेति भावः।

युक्त्यन्तरमाह — **काष्ठैरिति**। काष्ठैरोदनं पचति इत्यस्य काष्ठैः पाकेन ओदनं करोति इति विवरणात् विवरणवाक्ये च काष्ठादीनां कृञ्धात्वर्थे कृतौ अन्वयस्य आवश्यकत्वेन पचति इत्यत्रापि धात्वर्थस्य कृतावेवान्वयः स्वरसः। विवरणविवरणीयवाक्ययोः समानार्थकत्वात् इति भावः। निगमयति — **तत् सिद्धमिति**। अखण्डोपाधिरूपं कर्मत्वं द्वितीयार्थः। तस्य पूर्वोक्तसंबन्धेन आख्यातार्थकृतावन्वय इति।

अत्राहुः — नैयायिकप्रवराः वच्चाझाशर्माणः — वस्तुतस्तु क्लृप्तपदार्थेष्वन्तर्भावासंभवात् कस्यचित् अखण्डोपाधेः अभ्युपगमः नान्यथा। अत्र तु प्रकृतधात्वर्थक्रियाजन्यस्य प्रकृतधात्वर्थतावच्छेदकस्य वा फलस्य आश्रयत्वेन क्लृप्तेनैव कर्मत्वव्यवहारोपपत्तेः अखण्डोपाधौ तत्र मानाभावः।

न च यत्र मते धातूनां व्यापारमात्रे शक्तिः तत्र नोक्तकर्मत्वस्य संभव इति वाच्यम्। प्रकृतधातुप्रयोज्यविषयताविशिष्ठतात्पर्यीयविषयतानिरूपितविषयताश्रयफलाश्रयत्वस्य प्रकृतधातुकर्मत्वरूपतायाः वक्तुं शक्यत्वात्।

इदं द्वितीयादिकं गम्यादिधात्वर्थव्यापारनिष्ठविषयतानिरूपितसंयोगादिनिष्ठविषयताकबोधं जनयतु गम्यादिधातुर्वा संयोगादिनिष्ठविषयतानिरूपितव्यापारनिष्ठविषयताकबोधं जनयतु इतीच्छायाः तात्पर्यात्मिकायाः सत्त्वात्। एतेन क्रियाजन्यफलाश्रयत्वस्य कर्मत्वे विभागरूपफलमादाय पूर्वदेशस्य कर्मत्वापत्तिरिति निरस्तम्।

तात्पर्यस्य अहेतुत्वे प्रकृतधातुप्रयोज्यविशेष्यतानिरूपितद्वितीयाप्रयोज्यप्रकारताश्रयफलवत्वं कर्मत्वं वाच्यम्। तथा च तदादिवत् प्रकृतधात्वर्थतावच्छेदकत्वोपलक्षितधर्मावच्छिन्ने एकैव शक्तिः — इति।

यत्तु — द्वितीयायाः धातोश्च अनेकेष्वर्थेषु शक्तिस्वीकारे शक्त्यानन्त्यम्, तत्तदर्थस्य अन्यान्यसंबन्धेन तत्तदर्थेऽन्वयस्वीकारात् कार्यकारणभावानन्त्यम् इत्यादिकमुक्तम् —

तत्र ब्रूमः। भवद्भिरपि सर्वत्र संबन्धसामान्यसंसर्गकशाब्दबोधानन्तरं प्रवृत्त्यादिनिर्वाहाय पार्ष्टिकस्य संसर्गविशेषावगाहिमानसबोधस्य स्वीकरात् सर्वत्र प्रवृत्तिः विलम्बेनेति कल्पनम्, सकलविभक्त्यन्तपदघटितवाक्यस्थले सर्वेषां विभक्त्यर्थानां कर्मत्वादीनां स्वनिरूपकधात्वर्थघटितपरंपरासंबन्धेन भावनायामन्वयात् धातूपस्थापितस्यैवार्थस्य अनेकधा परंपरासंबन्धघटकतया भानकल्पनम्, सुबर्थसंख्यायाः सुबर्थे परंपरासंबन्धेनान्वयः इत्येवंरीत्या बोधस्य गुरुभूतपरंपरासंबन्धविषयकत्वकल्पनम्, चैत्रः सुन्दरः इत्यादौ प्रतिपिपादयिषिताभेदस्य मानसबोधविषयत्वस्वीकारात् शाब्दबोधानन्तरक्षणे विषयान्तरसंचारानुभवविरोधः इत्यादि बह्वसामञ्जस्यमस्ति। अतस्तत्तदर्थे तत्तदर्थस्य साक्षात्संबन्धबोध एव श्रेयान्।

अपि च — संबन्धत्वेन संबन्धसंसर्गकशाब्दबोधानन्तरं जायमाने संसर्गविशेषावगाहिमानसबोधे संसर्गविशेषभाननिर्वाहाय तादृशसमभिव्याहारज्ञानस्य तादृशवाक्यजन्यबोधस्य वा कारणत्वमवश्यकल्पनीयम्। अतश्च अनिच्छतोऽपि कार्यकारणभावानन्त्यमापतति। न हि शाब्दबोधकारणतानन्त्यमेव दोषः, न तु मानसबोधकारणतानन्त्यमित्यत्र नियामकमस्ति।

न च कार्यकारणभावकल्पनालाघवेन भावनामुख्यविशेष्यके बोधे सिद्धे तदनुरोधिमानसबोधकारणतानन्त्यं न दोषः, फलमुखत्वादिति वाच्यम्। प्रयोगातिप्रसङ्गाप्रसङ्गाप्रयोजकस्य साक्षात्संबन्धेन तत्र तत्र पदार्थान्वयावगाहिनः शाद्बबोधस्यानुभवसिद्धत्वात् तद्बलायातकार्यकारणभावानन्त्यस्यापि फलमुखत्वेन दोषविरहात्। अनुभवसिद्धबोधानुसारेण व्युत्पत्तयः कल्प्यन्ते न तु व्युत्पत्त्यनुसारेण बोधः शिक्ष्यते। अभिहितं च नागेशभट्टेन लघुमञ्जूषायां तिङर्थनिरूपणे — तत्तद्व्युत्पत्त्यनुसारेण तथा तथा बोधस्य तेषां तेषां जायमानत्वेन तथा तथा कार्यकारणभावानां सर्वेषामावश्यकत्वेन तल्लाघवगौरवविचारस्य अयुक्तत्वादिति।

यत्तु — काष्ठैः ओदनं पचति इति वाक्यस्य काष्ठैः पाकेन ओदनं करोति इति विवरणात् विवरणवाक्ये काष्ठादीनां करोत्यर्थेऽन्वयात् विव्रियमाणवाक्येऽपि तेषां कृतावेवान्वयो युक्त इति,

तदपि न। न हि विवरणवाक्यात् यद्विशेष्यकः यत्संसर्गकः यत्प्रकारकः बोधो जायते तादृश एव बोधो विव्रियमाणवाक्यात् जायत इति मीमांसकैरपि वक्तुं शक्यते। पाकेन ओदनं करोति इत्यत्र आख्यातार्थाश्रयत्वरूपभावनायामेव ओदनमिति द्वितीयान्तार्थस्य प्रकारतया भानात्। ओदनं पचति इत्यत्र आख्यातार्थकृतिरूपभावनायां तस्य प्रकारतया भानाच्च। तस्मात् निरुक्तविवरणं कर्मत्वादीनां नाख्यातार्थभावनान्वयित्वसाधकम्। तत्त्वं तु ईश्वरो वेत्ति।

## द्वितीयादेः कर्मादिकमेवार्थः, न कर्मत्वादिकमिति प्राचीनवैयाकरणमतखण्डनम्

यत्तु न कर्मत्वम्, आश्रयत्वं वा द्वितीयार्थः। तथात्वे आश्रयत्वत्वादेः गुरुभूतस्य शक्यतावच्छेदकत्वापत्तेः, कर्मत्वादिरूपाखण्डोपाधिसत्त्वे प्रमाणाभावाच्च। अपि

**त्वाश्रयस्यैव द्वितीयार्थत्वम्। तस्य च धातूपात्ते फलेऽन्वयः। एवं करणादिरेव तृतीयाद्यर्थः, एवञ्च 'कर्तृकरणयोस्तृतीया' (पा.सू 2.3.18), कर्मणि द्वितीया (पा.सू 2.3.2) इत्याद्यनुशासनमपि सङ्गच्छत इति कैश्चिदुक्तम्। तन्न। सम्बन्धवाचि-षष्ठीस्थले प्रातिपदिकार्थस्य प्रत्ययार्थसम्बन्धे भेदेनान्वयाङ्गीकारादिहापि व्युत्पत्त्य-न्तरकल्पनागौरवपरिहारार्थं भेदसम्बन्धबोधाय कर्मत्वादावेव द्वितीयादेः शक्ति-कल्पनात्।**

---

अथ प्रचीनवैयाकरणमतमनुवदति — **यत्तु न कर्मत्वम् इत्यादिना।** भूषणसारे स्थिता इमे विषयाः। द्वितीयायाः कर्मत्वम् आश्रयत्वं वा नार्थः। तथा सति आश्रयत्वत्वं शक्यतावच्छेदकम्। तच्च आश्रयेतरावृत्तित्वे सति सकलाश्रय-वृत्तित्वरूपं वक्तव्यम्। तत्र बहुपदार्थघटकत्वात् गौरवम्। एवं कर्मत्वस्य अखण्डोपाधिरूपत्वे प्रमाणाभावात् तदपि न द्वितीयार्थः। अपि तु आश्रयो द्वितीयार्थः। फलाश्रयःकर्म। फलस्य धातुलभ्यत्वात् आश्रय एव द्वितीयार्थः। द्वितीयार्थे आश्रये प्रकृत्यर्थस्य अभेदसंबन्धेनान्वयः। आश्रयस्य आधेयत्वसंबन्धेन धात्वर्थसंयोगादिरूपफलेऽन्वः। फलस्य व्यापारे अन्वयः। देवदत्तकर्तृकः ग्राम-रूपाश्रयवृत्तिसंयोगजनको व्यापार इति बोधः। एवं करणादिरेव तृतीयार्थः न तु करणत्वादिकम्। कर्तृकरणयोस्तृतीया कर्मणि द्वितीया इत्येव सूत्रात्। न हि कर्तृत्वकरणत्वयोः तृतीया इत्युक्तम्। इति।

तन्मतं खण्डयति — **तन्नेत्यादिना।** आश्रयस्य द्वितीयाद्यर्थत्वे तत्र प्रातिपदि-कार्थस्य अभेदेनान्वयो वक्तव्यः। तत्रेदमालोचनीयम्। चैत्रस्य धनमित्यादि-संबन्धवाचिषष्ठीस्थले संबन्धे प्रकृत्यर्थस्य चैत्रस्य प्रतियोगिकत्वसंबन्धेनान्वयं स्वीकृत्य चैत्रप्रतियोगिकत्वसंबन्धवत् धनमिति बोधो वक्तव्यः। एवमेव द्विती-

यार्थकर्मत्वे प्रकृत्यर्थस्य आधेयत्वेनान्वयो वक्तव्यः। अन्यथा क्वचित् भेदसंबन्धेन क्वचित् अभेदेनेति कार्यकारणभावानेकत्वप्रसङ्गः। तथा हि — प्रकृत्यर्थनिष्ठ-भेदसंबन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबोधे षष्ठीविभक्ति-जन्योपस्थितिः कारणम्। प्रकृत्यर्थनिष्ठाभेदसंबन्धावच्छिन्नप्रकारतानिरूपितविशे-ष्यतासंबन्धेन शाब्धबोधं प्रति द्वितीयादिजन्योपस्थितिः कारणम्। तदपेक्षया कर्मत्वं करणत्वं चाखण्डोपाधिः तत्र प्रकृत्यर्थस्य आधेयत्वरूपभेदसंबन्धेनान्वयः इति स्वीकारे प्रकृत्यर्थनिष्ठभेदसंबन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबोधं प्रति प्रत्ययजन्योपस्थितिः कारणमिति एक एव कार्यकारणभाव इति लाघवम्।

**न चैवं 'ऐन्द्रं दधी'त्यादौ तद्धितस्य देवताविशिष्टद्रव्यवाचिनोऽर्थे देवताया-मिन्द्रप्रातिपदिकार्थस्येन्द्रस्याभेदेनाप्यन्वयदर्शनात् व्युत्पत्त्यन्तरस्याप्यावश्यक-त्वम्, तद्धितस्यापि देवतात्वविशिष्टद्रव्य एव शक्त्यङ्गीकारेण तत्रापीन्द्रस्याधेयता-सम्बन्धेनैवान्वयाङ्गीकारात्।**

---

**न चैवमिति।** वैयाकरणस्य मीमांसकं प्रति आक्षेपः — ऐन्द्रं दधि इत्यत्र इन्द्रो देवता अस्येत्यर्थे इन्द्रशब्दात् 'सास्य देवता' (पा.सू. 4.2.24) इति सूत्रेण विहितस्य अणप्रत्ययस्य देवताविशिष्टद्रव्यमर्थः। तदेकदेशदेवतायां प्रातिपदि-कार्थस्य इन्द्रस्य अभेदसंबन्धेन अन्वयः। इन्द्राभिन्ना या देवता तद्विशिष्टं तदुद्देश्यकं द्रव्यं दधीति बोधो जायते। इत्थं च तद्धितार्थदेवतायां प्रकृत्यर्थस्य इन्द्रस्याभेदसंबन्धेनापि अन्वयदर्शनात् व्युत्पत्त्यन्तरं कल्पनीयं भवति। अतः सर्वत्र नैका व्युत्पत्तिरिति भावः। तत्र समाधानमाह — **तद्धितस्यापीति।** ऐन्द्रम् इत्यत्र अणप्रत्ययस्य देवताविशिष्टद्रव्यं नार्थ — अपि तु देवतात्वविशिष्टं द्रव्य-

मर्थः। तत्र देवतात्वे प्रकृत्यर्थस्य इन्द्रस्याधेयतासंबन्धेनान्वयः। देवतात्वस्य निरूपकत्वसंबन्धेन दधिरूपद्रव्येऽन्वयः। इन्द्रनिष्ठदेवतात्वनिरूपकं दधीति बोधः।

## सर्वत्रैव विभक्तेः धर्मिणि शक्तिरस्तु इति शङ्का, तत्परिहारश्च

**न चैवं षष्ठ्यादौ सर्वत्र लाघवात् धर्मिण्येव शक्तिकल्पनादभेदान्वयेनैव सर्वत्र प्रकृत्यर्थप्रकारताऽस्त्विति वाच्यम्, तथात्वे ग्रामाभिन्नो य आश्रयत्ववान्, तदाधेय-संयोगजनकं गमनमित्यादिशाब्दबोधोपपत्तेः, आश्रयत्वादिकं किन्निरूपितमिति जिज्ञासाया अपरिहार्यत्वात्। अतो न धर्मी द्वितीयार्थः अपितु आधेयत्वम्, कर्मत्वमेव वाखण्डम्। उभयथाऽपि फलस्य, व्यापारस्यैव वा निरूपकस्य शाब्दबोध एव लब्धत्वान्न निरूपकजिज्ञासापत्तिः, कर्मत्वस्यापि चाखण्डस्यैकस्यैव शक्यतावच्छेदकत्वाङ्गीकारान्न गौरवम्। आश्रयत्वमेव च तत्तन्निरूपकभेदेन भिन्नमिति तवैव गौरवमिति दिक्। अत एव 'समर्थः पदविधिः' (पा.सू 2.1.1) इति सूत्रे 'क्रियाकारकयोः सम्बन्धस्य द्वितीया वाचिका भवति' इति महाभाष्यं सङ्गच्छते।**

---

ननु षष्ठीस्थलेऽपि न धर्मे शक्तिः। अपि तु धर्मिण्येव शक्तिः। धर्मी नाम आश्रयः। द्वितीयायाः आश्रयोऽर्थः। अतः कर्मणि षष्ठ्या अपि आश्रय एवार्थः। तत्राभेदसंबन्धेनैव प्रकृत्यर्थस्यान्वयः, न तु भेदसंबन्धेन। एवं च ग्रामाभिन्नो य आश्रयः तन्निष्ठसंयोगजनकं गमनमिति शाब्दबोधः भवतु इति शङ्कते — **न चैवं षष्ठ्यादाविति**। समाधत्ते — **तथात्व इति**। आश्रये द्वितीयायाः शक्तिस्वीकारे ग्रामाभिन्नो यः आश्रयत्ववान् तन्निष्ठसंयोगजनकं गमनमिति बोधः स्यात्। तथा सति आश्रयत्वं किंनिष्ठम्, किंनिरूपितमिति जिज्ञासा अपरिहार्या स्यात्। अतो न

धर्मी द्वितीयार्थः। अपि तु आधेयत्वं कर्मत्वं वा द्वितीयार्थः। आधेयत्वे ग्रामस्य निरूपितत्वसंवन्धेनान्वयात् ग्रामनिरूपितमाधेयत्वमिति बोधेन उक्तशङ्कायाः निवृत्तिः। कर्मत्वस्य द्वितीयार्थत्वे तत्राधेयतया ग्रामस्यान्वयात् कर्मत्वं किंनिष्ठमिति शङ्कायाः निवृत्तिः। कर्मत्वस्य निरूपकत्वेन धात्वर्थेऽन्वयात् धात्वर्थनिरूपितमिति बोधे तुल्यवित्तिवेद्यमिति न्यायेन धात्वर्थनिरूपकत्वं कर्मत्वे बोध्यते इति किंनिरूपकमिति शङ्कायाः निवृत्तिरिति भावः।

अपि तु आधेयत्वार्थकत्वेऽपि निरूपकभेदेन आश्रयभेदेन च तद्भेदः आवश्यकः। अतः अखण्डं कर्मत्वमेव द्वितीयार्थः। न तस्याश्रयादिभेदेन भेद इति तत्पक्षे लाघवम्। कर्मत्वस्य शक्यस्य भेदेऽपि वा कर्मत्वत्वमखण्डं शक्यतावच्छेदकमिति न गौरवम्। प्रत्युत आधेयत्वस्य द्वितीयार्थत्व एव गौरवमित्याह — **आधेयत्वमेव चेति**। निरूपकभेदेन आधेयत्वनिरूपकस्य आश्रयस्यानेकत्वेनेत्यर्थः।

**अत एवेति**। 'समर्थः पदविधिः' (पा.सू. 2.1.1) इति सूत्रे क्रियाकारकयोः संबन्धस्य वाचिका षष्ठी इति भाष्ये उक्तम्। संबन्धश्च कर्मत्वमेव। यदि च आश्रयो द्वितीयार्थः स्यात् तदा आश्रयस्य संबन्धरूपत्वाभावात् संबन्धस्य वाचिकेति भाष्यासंगतिः स्पष्टैवेति भावः।

## सविषयकधातुयोगे द्वितीयार्थकथनम्

एवंविधकर्मत्वबाधे तु सविषयकधातुसमभिव्याहारे तार्किकरीत्यैव विषयत्वादिकं द्वितीयादिना लक्षयित्वा, आख्यातेन चाश्रयत्वं लक्षयित्वा, घटविषयकज्ञानाश्रयत्वं चैत्रीयमिति 'चैत्रो जानाति घटमि'त्यत्र शाब्दबोधः।

**एवं कर्मषष्ठीकर्माख्यातकर्मकृत्स्वपि बोध्यम्। न त्विह परसमवेतत्वस्य आवश्यकता। अत एव 'स्वात्मानं जानामी'त्यादिप्रयोगः। न ह्यत्र मुख्यं कर्मत्वमस्ति, क्रियाजन्यफलाभावात्। अपि तु विषयित्वे लक्षणा, साऽपि नानुशासनिकी। येन तदर्थमपि कर्मसंज्ञा प्रसज्येत। अपि तु 'गङ्गायां घोषः' इतिवत् साम्प्रतिकी। अतश्च कर्मत्वाभावेन कर्मसंज्ञाया अभावान्न 'आकडारादेका संज्ञा' (पा.सू 1.4.1) इत्यस्य बाधः।**

---

अथ सविषयकज्ञानाद्यर्थकजानात्यादिधातुयोगे द्वितीयार्थमाह — **एवंविधेति।** क्रियाजन्यफलशालित्वसमनियताखण्डोपाधिरूपं कर्मत्वं यत्र बाधितं चैत्रो घटं जानाति इत्यादौ तत्र तार्किकमते इव विषयत्वे विषयित्वे वा द्वितीयायाः लक्षणा। तस्य यथायोग्यं निरूपकत्वेन आश्रयत्वेन वा धात्वर्थेऽन्वयात् घटनिष्ठविषयता-निरूपज्ञानाश्रयश्चैत्रः घटनिरूपितविषयित्वाश्रयज्ञानाश्रयश्चैत्रः इति वा बोधः स्वीक्रियते। अथ वा तादृशज्ञानाश्रयत्वं चैत्रनिष्ठमिति बोधः।

**एवं कर्मषष्ठीति।** घटस्य ज्ञाता, घटो ज्ञायते घटो ज्ञातः इत्यादौ द्वितीयायाः विषयत्वे आख्यातस्य कृतश्च विषयत्वे लक्षणां स्वीकृत्य घटविषयकज्ञानाश्रयत्वं चैत्रनिष्ठमिति बोधो वर्णनीय इति भावः। **न त्विहेति।** सविषयकधातुस्थले परसमवेतत्वस्य द्वितीयार्थत्वमनावश्यकम्। अत एव चैत्रः स्वात्मानं जानाति इति प्रयोग उपपद्यते। कर्तुरेवात्र कर्मत्वं भवति ज्ञाधात्वर्थस्य ज्ञानस्य अहंपदार्थ एव कर्ता, स एव च कर्म। चैत्रनिष्ठं स्वविषयकं ज्ञानमिति बोधः। अत्र कर्मापेक्षया अन्यस्मिन् कर्तरि ज्ञाधात्वर्थो न समवेतः। अतः ईदृशस्थले परसमवेतत्वस्य नास्त्यावश्यकता। क्रियाजन्यफलशालित्वरूपमुख्यकर्मत्वस्थले एव ग्रामं गच्छति चैत्र इत्यादौ तदपेक्षणात्। अतः ईदृशस्थले द्वितीयायाः आख्यातस्य च

विषयत्वे न आनुशासनिकी लक्षणा, अपि तु सांप्रतिकी लक्षणा। यत्र आनुशासनेन 'तथायुक्तं चानीप्सितम्' (पा.सू 1.4.50) इत्यादिसूत्रेण कर्मसंज्ञा भवति तत्र कर्मत्वे या लक्षणा सा आनुशासनिकी लक्षणा इत्युच्यते। तत्र 'कर्तुरीप्सिततमं कर्म' (पा.सू 1.4.49) इति सूत्रविहितस्य कर्मत्वस्य गां दोग्धि पयः इत्यादौ गवादेः अभावात्। तत्र हि लक्षणया गोपदोत्तरद्वितीयायाः अपादानत्वे लक्षणा।

घटं जानाति इत्यादौ द्वितीयायाः लक्षणाग्राहकानुशासनाभावात् शक्यार्थानुपपत्तिमूलकतया विषयत्वे लक्षणा अङ्गीक्रियते इति इयं लक्षणा सांप्रतिकीति कथ्यते। गङ्गायां घोष इत्यादाविव मुख्यार्थान्वयानुपपत्तिमूलकलक्षणा सांप्रतिकलक्षणेति तत्त्वम्।

अतश्चेति। चैत्रः स्वात्मानं जानातीत्यादौ लक्षणया द्वितीयाबोध्यत्वं विषयत्वस्य। अत्र कर्तृसंज्ञया कर्मसंज्ञायाः बाधः न भवति। 'आकडारादेका संज्ञा' (पा.सू 1.4.1) इति सूत्रस्य मुख्यकर्मविषयकत्वात् इति तात्पर्यम्।

## विभक्तौ लक्षणा नास्तीति शङ्का

**ननु विभक्तौ लोके न लक्षणा,**

**'सुपां कर्मादयोऽप्यर्थाः संख्याश्चैव तथा तिङाम्।**
**प्रसिद्धो नियमस्तत्र नियमः प्रकृतेषु वा ॥**

**इति कात्यायनवार्तिकविरोधात्। अत्र हि सुपां तिङाञ्च कर्मत्वादि, संख्याश्चैकत्वादिका येन शास्त्रेणाऽर्थ इति प्रतिपाद्यते, तत्रार्थनियमः प्रसिद्धः इति तृतीयचरणस्यार्थः। स च एकत्वे एकवचनमेव, कर्मणि द्वितीयैवेत्याकारकः। चतुर्थचरणे तु प्रकृतार्थापेक्षया प्रत्ययनियमः। स च कर्मण्येव द्वितीया, एकत्व एव एकवचन-**

**मित्याकारकः, उभयथाऽपि विभक्तेरर्थान्तरे वारणान्न विभक्तौ लक्षणा। अत एव 'छन्दसि सुपां सुपो भवन्ती'ति लक्षणाप्रतिप्रसवरूपं व्यत्ययानुशासनं छन्दस्युपपद्यते। इतरथा लोकवदेव वेदेऽपि तदुपपत्तेः, व्यत्ययानुशासनवैयर्थ्यापत्तिः। एवं 'कर्मणि षष्ठी'त्यादिलक्षणानुशासनस्यापि वैयर्थ्यम्, शक्यसम्बन्धावगमस्य प्रमाणान्तरेणैव सिद्धेः। अतो न लोके विभक्तौ अनुशासनं विना क्वापि लक्षणेति चेत्।**

---

अथ विभक्तौ लक्षणा नास्तीति शङ्कते — **न विभक्तौ इत्यादिना।** घटं जानाति इत्यादौ द्वितीयाविभक्तेः विषयत्वे लक्षणा या भवता उक्ता सा न युक्ता। भगवता वार्तिककारेण कात्यायनेन विभक्तौ लक्षणा नास्तीति कथनात्। तथा हि —

सुपां कर्मादयोऽप्यर्थाः संख्याश्चैव तथा तिङाम्।
प्रसिद्धो नियमस्तत्र नियमः प्रकृतेषु वा।।

इति श्लोकरूपे वार्तिके नियमद्वयं प्रतिपाद्यते अर्थनियमः प्रत्ययनियमश्चेति। येन शास्त्रेण कर्मादयः संख्याश्च एकत्वादयः अर्थाः, एवं तिङां च कर्मादयः संख्यादयश्चार्थाः अवगम्यन्ते, तत्रार्थनियमः प्रसिद्धः। अर्थनियमो नाम अर्थमादाय विभक्तेः नियमः — एकत्वे एकवचनमेव, कर्मणि द्वितीयैव न तृतीयादिरिति प्रसिद्धः। अयमर्थनियमः प्रसिद्धो नियमस्तत्रेति तृतीयपादेनोक्तः। चतुर्थपादेन तु प्रकृतार्थापेक्षया संख्याकारकाद्यपेक्षया प्रत्ययनियमः क्रियते एकत्वे एव एकवचनम्, द्वित्वे एव द्विवचनम्, कर्मत्वे एव द्वितीया इत्यादि। तेन कर्मत्वातिरिक्तविषयत्वाद्यर्थे द्वितीया न भवतीति लभ्यते। एवमुभयत्रापि कर्मत्वाद्यतिरिक्तेऽर्थे विभक्तेः वारणात् तत्रार्थे लक्षणा न भवतीति लभ्यते। अत्र उपष्टम्भकतया पाणिनिसूत्रं दर्शयति — **अत एवेति।** सुपां सुलुक् इत्यादिसूत्रे सुपां स्थाने सु

इति विहितम्। तेन सुपां स्थाने सु इत्यतोऽन्या विभक्तयो न प्राप्यन्ते। अतो भाष्यकारेणोक्तम् — छन्दसि सुपां सुपो भवन्ति इति। अत्र लक्षणायाः निषिद्धत्वात् पुनर्विधानं संगच्छते। अन्यथा विभक्तौ लक्षणास्वीकारे लोकवत् गङ्गायां घोष इत्यत्रेव वेदेऽपि लक्षणया विभक्तेः विभक्त्यन्तरार्थप्रतीतिसंभवात् प्रतिप्रसवरूपेण एकविभक्तिस्थाने विभक्त्यन्तरानुशासनरूपं व्यत्ययानुशासनं असंगतं स्यादिति भावः। एवं चानुशासनं विना विभक्तेः विहितार्थातिरिक्तार्थे लक्षणाया असंभवात् घटं जानातीत्यादौ द्वितीयायाः विषयत्वे लक्षणा न युक्तेति शङ्कितुराशयः।

**एवं कर्मणीत्यादि**। इत्थमेव "कर्तृकर्मणोः कृति" (पा.सू 2.3.65) इति सूत्रेण कर्मणि षष्ठ्याः विधानमपि विभक्त्यर्थे लक्षणास्वीकारे व्यर्थं स्यात्। शेषे विहितायाः षष्ठ्याः कर्तृत्वकर्मत्वयोः लक्षणयैव बोधसंभवात् "कर्तृकर्मणोः" (पा.सू 2.3.65) इति सूत्रवैयर्थ्यप्रसङ्गात्।

एवं चानुशासनं विना विभक्त्यन्तरस्य विभक्त्यन्तरार्थबोधकत्वासंभवात्, विषयत्वे चानुशासनाभावात् कर्मार्थकविभक्तेः कथं विषयत्वार्थकत्वं स्यादित्या-क्षेपः स्थितः।

## विभक्तौ लक्षणोपपादनम्

**न। प्रातिपदिकादिष्विव विभक्तावपि लक्षणायां बाधकाभावात्, उक्तवार्तिकस्य लक्षणायामप्यविरोधात्। तथा हि — अर्थनियमपक्षे तावत् कर्मणि द्वितीयैव, न तु तृतीयादिविभक्त्यन्तरमिति सजातीयशब्दान्तरव्यावृत्तावपि द्वितीयाया अर्थान्तरे निवारणाभावस्य महाभाष्ये स्पष्टत्वात्। इतरथा निःसंख्येभ्यः अव्ययेभ्योऽपि सुपा-**

**मनापत्तेः। एवं करणत्वादौ तृतीयैवेत्यस्यापि नियमात् विभक्त्यन्तरार्थे विभक्त्यन्तरस्य परं न लोके लक्षणा, न तु विषयत्वादावपि।**

---

तस्याः शङ्कायाः समाधानमाह — **नेत्यादिना**। गङ्गा इत्यादिप्रातिपदिकादिषु यथा तीराद्यर्थे लक्षणा अङ्गीक्रियते, तथा विभक्तावपि अर्थविशेषे लक्षणाङ्गीकारे किमपि बाधकं नास्ति। "सुपां कर्मादयोऽप्यर्थाः" इति पूर्वोक्तवार्तिकस्यापि सुपां शक्यार्थातिरिक्तार्थे लक्षणायां बाधकत्वं न भवति। तथा हि — एकत्वे एकवचनमेव कर्मणि द्वितीयैवेत्याकारके एकत्वे एकवचनमेवेत्येवकारेण द्विवचनादिकं वार्यते, तथा कर्मणि द्वितीयातिरिक्तविभक्तिर्वार्यते, न तु द्वितीयायाः अर्थान्तरं लाक्षणिकम्। अतो द्वितीयायाः लक्षणया विषयत्वार्थकत्वं भवितुमर्हति। सजातीयस्य व्यावर्तनमिति यावत्। इतरथा विजातीयव्यावर्तने एकत्वे एव एकवचनम् इति स्वीकारे निःसंख्येभ्यः संख्यार्थशून्येभ्यः अव्ययेभ्यः एकवचनं न स्यात्। एवं करणत्वे तृतीयैवेत्यस्यापि करणत्वे तृतीयातिरिक्तविभक्तिः न भवतीत्येवंरूपः सजातीयव्यावृत्तिरूपो नियमः अर्थः। तावता न तु तृतीयायाः करणत्वातिरिक्तोऽर्थो नास्तीति। एतावता अन्यस्याः विभक्तेर्योऽर्थः, तत्र अन्यस्या विभक्तेर्लक्षणा नेति फलति। अनेन विभक्त्यन्तरार्थत्वरहितेऽर्थे विभक्त्यन्तरस्य लक्षणा नेत्येतावदेव वार्तिकाभिप्रेतम्। विषयत्वे लक्षणायां न वार्तिकविरोधः।

**प्रत्ययनियमपक्षेऽपि प्रकृतकर्मत्वैकत्वादिरूपसुप्तिङर्थापेक्षयैव तन्नियमकरणात्, अप्रकृतविषयत्वादिलक्षणायां न कोऽपि दोषः। स्पष्टञ्चैतदपि तत्रैव। अत एव जानातीत्यादौ तिङोऽप्याश्रयत्वादौ लक्षणेत्युक्तं प्राक्। एवञ्च छन्दसि व्यत्ययानुशासनमपि प्रकृतविभक्तयन्तरार्थविषये प्रतिप्रसवरूपतया नासङ्गतम्। कर्मणि षष्ठीत्यादिकञ्च लोकवेदसाधारण्येन। न 'चैवमक्षीणि मे प्रदर्शनीयानि पादा मे**

**सुकुमाराः' इत्यादिमहाभाष्योदाहृतप्रयोगेषु प्रतिप्रसवाभावात् प्रकृतद्वित्वे बहुवचनस्य प्रयोगानुपपत्तिः, तत्र अक्षित्वादिजातिविवक्षायां 'जात्याख्यायामेकस्मिन्बहुवचनमन्यतरस्याम्'** (पा.सू 1.2.58) **इति वचनेन प्रतिप्रसवात्। अतस्सिद्धं विभक्त्यन्तरार्थभिन्ने विषयत्वादौ युक्तैव लक्षणा — इति।**

---

**प्रत्ययनियमपक्षेऽपीति।** प्रकृत्यर्थापेक्षया प्रत्ययनियमः। स च कर्मण्येव द्वितीया, एकत्वे एव एकवचनम् इत्याकारकः। अयं च प्रकृतेषु संख्याकारकेष्वेव क्रियते। अतः अप्रकृतविषयत्वादिरूपो लाक्षणिकोऽर्थः न निवार्यते। **महाभाष्ये स्पष्टत्वादिति।**

"अथ वा प्रकृतानर्थानपेक्ष्य नियमः। के च प्रकृताः।
एकत्वादयः। एकस्मिन्नेवैकवचनम्, न द्वयोः,
न बहुषु। द्वयोरेव द्विवचनम्, नैकस्मिन्
न बहुषु। बहुष्वेव बहुवचनम्, न द्वयोः
नैकस्मिन्निति। अथवा आचार्यप्रवृत्तिर्ज्ञापयति
उत्पद्यन्ते अव्ययेभ्यः स्वादयः इति। यदयम्
अव्ययादाप्सुपः इत्यव्ययाल्लुकं शास्ति"

इति "बहुषु बहुवचनम्" इति सूत्रे भाष्यम्। **तत्रैवेति।** महाभाष्य एवेत्यर्थः। **एवं चेति।** सूत्रनिर्दिष्टेषु द्वितीयादेः कर्मत्वाद्यर्थेषु लक्षणया विभक्त्यन्तरं न प्रवर्तते। विभक्तौ न लक्षणेति निषेधात्। तस्य निषेधस्य प्रतिप्रसव एव छन्दसि सुपां सुपो भवन्तीति व्यत्ययानुशासनम्। कर्मणि षष्ठ्येव, कर्मण्येव षष्ठी इति नियमः लोकवेदसाधारणः।।

ननु "अक्षिणी मे प्रदर्शनीयानि", पादा मे सुकुमाराः इत्यादौ महाभाष्योदाहरणप्रयोगे द्वित्वे द्विवचनमेवेति नियमे सति प्रतिप्रसवरूपानुशासनाभावे सति

कथं बहुवचनप्रयोगः संगच्छत इत्याशङ्क्य अक्षित्वपादत्वरूपजातिविवक्षायां जातेरेकत्वात् एकवचने प्राप्ते सति "जात्याख्यायामेकस्मिन् बहुवचनमन्यतरस्याम्" (पा.सू 1.2.58) इति सूत्रेण विकल्पेन बहुवचनस्य विधानात् बहुवचनं साधु इति समाधत्ते — **न चैवं लोक इत्यादिना** । ततः विषयत्वादौ द्वितीयायाः लक्षणा युक्तैवेति भावः।।

**कात्यायनवचनस्यानुशासनं विना न शक्तिः, निरूढलक्षणा वेत्यर्थकत्वेन लक्षणायां बाधकाभावः। यदा तु 'सामान्यापेक्ष एव प्रत्ययनियमः' इति महाभाष्यकारीयं व्याख्यानान्तरमभ्युपगम्यते, तदा कात्यायनीयं नियमद्वयमपीदं शक्तिनियामकम्, निरुढलक्षणानियामकञ्च, तस्याश्शक्तितुल्यत्वात्। तथा च प्रकृतेऽप्रकृते वाऽर्थेऽनुशासनं विना न शक्तिः, निरूढलक्षणा वा। सांप्रतिकलक्षणायास्तु न क्वापि प्रकृतेऽप्रकृते वा निषेधः।**

**न चैवमव्ययेभ्योऽपि संख्याभिन्नेऽर्थे साम्प्रतिकलक्षणया सुबुत्पत्तेः 'अव्ययादाप्सुपः' (पा.सू 2.4.82) इति ज्ञापकबलादव्ययेषु सुबुत्पत्तिपक्षो महाभाष्यकारीयो न सङ्गच्छत इति वाच्यम्। तस्य लाक्षणिकार्थविवक्षायामपि शब्दसाधुत्वार्थमपि सुबुत्पत्तिरित्येवं ज्ञापनार्थत्वात्।**

---

ननु महाभाष्ये एव प्रकृतार्थापेक्षया नायं प्रत्ययनियमः। किं तु सामान्यापेक्षया नियमः। तेन कर्मण्येव द्वितीया, न तु कर्मत्वातिरिक्ते कस्मिंश्चिदप्यर्थे इत्यवगमात् विषयत्वाश्रयत्वादौ लक्षणा न संभवतीति शङ्कते — **यदा तु इति**। वार्तिककारोक्तं नियमद्वयमपि अर्थान्तरे शक्तिनियामकम् — शक्तिवारकं, निरूढलक्षणानियामकं — निरूढलक्षणायाः वारकं च। न तु सांप्रतिकलक्षणायाः वारकम्। तेन अर्थान्तरे शक्तिर्वा निरूढलक्षणा वा मा भूत्। सांप्रतिकलक्षणा तु भवितुमर्हति।

शक्तितुल्या लक्षणा निरूढलक्षणा। अन्वयाद्यनुपपत्त्या या लक्षणा सा सांप्रतिक-लक्षणेति विवेकः। तथा चानुशासनं विना शक्तिर्वा निरूढलक्षणा वा मा भूत्। सांप्रतिकलक्षणा तु भवत्येवेति भावः। **प्रकृते वा** — विषयत्वादौ।

नन्वेवमपि अव्ययेभ्यः सुबुत्पत्तिः "अव्ययादाप्सुपः" (पा.सू 2.4.82) इति ज्ञापकेन साधिता भाष्ये। अव्ययात्परस्य सुपो लुग्विधानं सुबुत्पत्तिं विना न संभवतीति तदाशयः। तथा साधनं नावश्यकम्। संख्याभिन्नेऽर्थे सांप्रतिक-लक्षणया सुबुत्पत्तेः संभवात् इति शङ्कते — **न चैवमिति**। समाधत्ते — **तस्येति**। लाक्षणिकार्थाविवक्षायामपि शब्दसाधुत्वार्थं सुबुत्पत्तिः इति ज्ञापनं लुग्विधेः प्रयोजनमिति भावः।

## व्यत्ययानुशासनसार्थक्यम्

## विभक्तिलक्षणापक्षे प्रागुक्तदोषाणां परिहारकथनञ्च

**न चैवं छन्दसि व्यत्ययानुशासनवैयर्थ्यम्, तस्य निरूढलक्षणात्वज्ञापनार्थ-त्वात्, निषिद्धलक्षणार्थत्वप्रतिप्रसवार्थत्वाच्च। तथा च साम्प्रतिकी लक्षणा क्वचिन्नैव भवति। अत एव भट्टवार्तिके यत्राप्यार्षे लाक्षणिकेऽर्थे प्रयोगानुपपत्तिस्फुरणं विनाप्यर्थस्मरणम्, तत्र निरूढलक्षणा, यत्र तत्स्फुरणपूर्वकं काव्याद्याधुनिक-प्रयोगः, तत्र साम्प्रतिकी लक्षणेति, लक्षणाभेदमुपपाद्य काश्चिन्नैवाप्रयोगतः इत्यनेन प्रयोगाभावे न लक्षणेत्युक्तम्। उदाहृतं च 'रूपं वस्त्रमिति'। इथरथा मत्वर्थलक्षणया प्रयोगः केन वार्येत। अत एव एनां निषिद्धलक्षणेत्याचक्षते। तस्याश्च वेदेऽपि प्रसक्तौ प्रतिप्रसवार्थं व्यत्ययानुशासनमिति। सर्वथा सिद्धं 'घटं जानामी'त्यादौ विषयत्वे लक्षणेति।**

पुनः शङ्कते — **न चैवमिति।** विनाप्यनुशासनं विवक्षितार्थविशेषे सांप्रतिक-लक्षणायाः स्वीकारे "व्यत्ययो बहुलम्" (पा.सू 3.1.85) इति व्यत्ययानुशासनं व्यर्थमिति शङ्कितुराशयः। तत्र समाधानमाह — **तस्य निरूढलक्षणाज्ञापनार्थत्वादिति। तस्य** = व्यत्ययानुशासनस्य। यथा लोके विभक्त्यन्तरार्थे विभक्त्यन्तरस्य अनुशासनं विना सांप्रतिकी लक्षणा भवति, तथा छन्दसि विभक्त्यन्तरार्थे विभक्त्यन्तरस्य प्रयोगोऽनुशासनं विना न भवतीति ज्ञापनार्थं व्यत्ययानुशासनम्। अपि च यत्र लक्ष्यार्थो निषिद्धः, तत्र अर्थान्तरे लक्षणा न भवतीत्येवं निषिद्धायाः लक्षणायाः प्रतिप्रसवः "व्यत्ययो बहुलम्" (पा.सू 3.1.85) इति सूत्रेण क्रियते। एतदुक्तं भवति — यत्र अनुपपत्तिस्फुरणं विनापि अर्थान्तरस्फुरणं भवति, तत्र तस्मिन्नर्थे निरूढलक्षणेत्युच्यते। यत्रार्थविशेषानुपपत्तिस्फुरणपूर्वकं अर्थान्तरबोधो भवति तत्र सांप्रतिकी लक्षणा। इयं सांप्रतिकी लक्षणा न सार्वत्रिकी, प्रयोगाभावात्। यथा रूपं वस्त्रम् इत्यत्र रूपाभेदस्य वस्त्रेऽनुपपत्तिस्फुरणेऽपि रूपपदस्य रूपवति लक्षणा न भवति। तथा प्रयोगाभावात्। नीलं वस्त्रम् इत्यत्र तु नीलवति लक्षणा भवति। प्रयोगानुसारात्। अत एव प्रयोगाभावात् रूपं वस्त्रम् इत्यत्र रूपपदस्य रूपवति लक्षणा नाङ्गीक्रियते। इयमेव लक्षणा निषिद्धलक्षणेत्युच्यते। निषिद्धलक्षणेयं लोकवत् कदाचित् वेदेऽपि न स्यादिति कृत्वा तत्र प्रतिप्रसवार्थं व्यत्ययानुशासनं प्रवृत्तम्। सर्वथा घटं जानाति इत्यादौ विषयत्वे द्वितीयायाः लक्षणायां न किञ्चित् बाधकमिति भावः।।

## ज्ञातताङ्गीकारेण घटं जानातीत्यादौ मुख्यकर्मत्वोपपादनम्

वस्तुतस्तु नात्र लक्षणा, मुख्यकर्मत्वस्यैवोपपत्तेः। तथा हि 'ज्ञातो घटः' इत्यादिप्रतीत्या ज्ञानजन्या ज्ञेयनिष्ठा ज्ञाततापरनामविषयता फलम्, तच्छालित्वञ्च

**घट इति, मुख्यकर्मत्वोपपत्तिः। न च भावकार्यस्य समवायिकारणजन्यत्वनियमात् भूतभाविस्थले च तदभावात् फलाभावः, ध्वंसस्य प्रामाणिकत्वे भावत्वस्य व्याप्यतावच्छेककोटिप्रवेशवत् विषयताया अपि प्रामाणिकत्वे लघुना समवेतत्वेनैव कार्यत्वस्य विशेषणात्। अतश्च ध्वंसवदेव विषयताया अपि निमित्तकारणमात्रजन्यत्वमेवेत्यन्यत्र विस्तरः। एवञ्च परसमवेतत्वसिद्ध्यर्थं स्वं जानामीत्यादौ शरीरमनोभेदकल्पनात् आकडारादेका संज्ञा इत्यस्याप्युपपत्तिः।**

---

**वस्तुतस्तु इत्यादि।** घटं जानाति इत्यादौ द्वितीयाया न विषयत्वे लक्षणया घटस्य अमुख्यं कर्मत्वम्, अपि तु मुख्यमेव कर्मत्वम्। तथा हि — तत्र ज्ञाधात्वर्थज्ञानरूपक्रियाजन्यं ज्ञातताख्यं फलम्, तदाश्रयत्वात् घटस्य धात्वर्थज्ञानजन्यज्ञातताख्यफलशालित्वं कर्मत्वम्। घटविषयकज्ञानानन्तरं ज्ञातो घट इति प्रतीत्या ज्ञानजन्या ज्ञेयनिष्ठा ज्ञाततापरनामकविषयता फलं, तदाश्रयत्वं घटे वर्तत इति मुख्यकर्मत्वं तस्योपपद्यते।।

ननु भावरूपं यत् कार्यं तत् सर्वं समवायिकारणजन्यम्, यथा घटः कपालरूपसमवायिकारणजन्यः। तथा ज्ञाततायाः भावरूपायाः समवायिकारणं घटादि तज्जन्यत्वमावश्यकम्। ततश्च घटादेः सत्त्वे तत्र ज्ञाततायाः उत्पत्तिः संभवति। परं तु अतीते भाविनि च घटे ज्ञायमाने तत्र ज्ञानेन ज्ञातता उत्पद्यत इति वक्तुं न शक्यते ज्ञानदशायां घटस्याभावात् इत्याशयेन शङ्कते — **न च भावकार्यस्येति। तदभावात्** = समवायिकारणस्य घटादेरभवात्। **फलाभावः** = ज्ञाततारूपस्य कार्यस्याभावः। समाधत्ते — **ध्वंसस्येत्यादिना।** अयं भावः — भावकार्यं समवायिकारणजन्यमिति नियमे भावपदं किमर्थमुपात्तम्। कार्यं समवायिकारणजन्यमित्येव नियमोऽस्तु इति शङ्कायां कार्यस्य ध्वंसस्य

समवायिकारणाजन्यत्वात् भावपदमिति वक्तव्यम्। समवायिकारणजन्यत्वाभाववति ध्वंसे कार्यत्वसत्त्वात् व्यभिचार इति तद्वारणाय भावपदमिति वाच्यम्। तथैव कार्यभूतायां ज्ञाततायां समवायिकारणजन्यत्वाभावात् व्यभिचारवारणाय यत्र समवेतत्वे सति भावत्वे सति कार्यत्वं तत्रैव समवायिकारणजन्यत्वमिति नियमः व्याप्तिः। ज्ञाततायास्तु समवेतत्वाभावात् स्वरूपसंबन्धेनैव जायमानत्वात् समवायिकारणजन्यत्वं नाङ्गीक्रियते। तथा चातीतभाविघटादौ ज्ञातता भवितुमर्हति। एवं ध्वंसस्यापि स्वरूपसंबन्धेनैव जायमानतया समवेतत्वं नास्तीति न समवायिकारणजन्यत्वम्। ततश्च लाघवात् यत्र समवेतत्वे सति कार्यत्वं तत्रैव समवायिकारणजन्यत्वमिति नियमः। ततश्च ज्ञाततायाः ध्वंसवत् निमित्तकारणमात्रजन्यत्वम्। ध्वंसस्य निमित्तकारणम् मुद्गरादिपातः। ज्ञाततायाः निमित्तकारणम् ज्ञानमिति भावः।

लघुनेति। समवेतत्वे सति भावत्वे सति कार्यत्वमित्यपेक्षया लघुना समवेतत्वे सति कार्यत्वेनेत्यर्थः। कार्यत्वं प्रति समवेतत्वविशिष्टभावत्वस्य विशेषणत्वापेक्षया समवेतत्वस्य विशेषणत्वे लाघवादिति भावः। तथा च यत्र समवेतत्वविशिष्टकार्यत्वं तत्र समवायिकारणजन्यत्वमिति व्याप्तिः। ज्ञाततायाः ध्वंसस्य च स्वरूपसंबन्धेन कार्यत्वात् समवेतत्वविशिष्टकार्यत्वं नास्तीति न तयोः समवायिकारणजन्यत्वमिति भावः। ततश्च ज्ञाततायाः पूर्वम् असतोरपि अतीतानागतघटयोः ज्ञातता भवितुमर्हति इति। एवं च ज्ञाततायाः विषयतायाश्च न समवायिकारणजन्यत्वम्, अपि तु निमित्तकारणभूतज्ञानजन्यत्वमिति सिद्धम्।

ननु यत्र यत्र मुख्यं कर्मत्वं तत्र सर्वत्र धात्वर्थस्य परसमवेतत्वं कर्मभिन्नसमवेतत्वमावश्यकम्। तत् सविषयकज्ञानाद्यर्थकधातुसमभिव्यारास्थले 'चैत्रः स्वं जानाति' इत्यादौ नास्ति। धात्वर्थस्य ज्ञानस्य स्वस्मिन् कर्मणि समवेतत्वात्।

तथा च परसमवेतत्वघटितं कर्मत्वं कथमत्र संभवतीत्याशङ्क्याह — **एवं चेति।** चैत्रः स्वं जानातीत्यत्र चैत्रपदार्थः शरीरावच्छिन्नः आत्मा। स्वपदार्थः मनोऽ-वच्छिन्न आत्मा इति अवच्छेदकभेदेन आत्मभेदं स्वीकृत्य कर्मभिन्नसमवेतत्वं ज्ञानस्य स्वीकृत्य स्वभिन्नचैत्रसमवेतज्ञानजन्यज्ञातताश्रयत्वात् स्वपदार्थस्य कर्मत्वमुपपादनीयमिति समाधानम्। 'आकडारादेका संज्ञा' इति सूत्रमपि अत्रोप-पन्नं भवति। एकस्य संज्ञाद्वयाभावात्।

## अखण्डकर्मत्वादिसद्भावे वार्तिकसम्मतिप्रदर्शनम्

**अथवा परसमवेतत्वादिघटितलक्षणसमनियताखण्डोपाधिरूपकर्मत्वे शक्तिः, तद्बाधात्तु 'स्वं जानामी'त्यादौ धात्वर्थतावच्छेदकफलशालित्वमात्रे, विषयित्वमात्रे वा लक्षणेति न विरोधः। 'चैत्रः स्वं गच्छती'त्यादौ तु न लक्षणयापि प्रयोगः, अप्रयोगेण निषिद्धलक्षणात्वादिति ध्येयम्। तत्सिद्धं 'कर्मणि द्वितीया (पा.सू 2.3.2) इति सूत्रात् कर्मत्वमखणडोपाधिरूपं द्वितीयार्थः आख्यातार्थान्वयीति। उक्तञ्च' विभक्तौ हि कारकशक्तिं निष्कृष्याभिधाय, क्रियां विशिंषन्ति इति।**

---

समाधानान्तरमाह — **अथवेत्यादिना।** कर्मत्वं तावत् अखण्डोपाधिरूपम्। तत् परसमवेतक्रियाजन्यफलशालित्वं यत्र वर्तते तत्रैव वर्तेत। यथा ग्रामं गच्छति चैत्र इत्यत्र ग्रामभिन्नचैत्रसमवेतक्रियाजन्यसंयोगाश्रये ग्रामे अखण्डोपाधिरूपं कर्मत्वमस्ति। ग्रामकर्मकं गमनमिति बोधो जायते। चैत्रः स्वं जानाति इत्यत्र परसमवेतक्रियाजन्यफलशालित्वाभावात् स्वपदार्थस्य चैत्रस्य, तत्समनियतं कर्मत्वमपि नास्ति। अतस्तत्र न कर्मत्वं द्वितीयार्थः। अपि तु तत्र ज्ञातताविशिष्टं ज्ञानं धात्वर्थः। वैशिष्ट्यं च जनकत्वसंबन्धेन। तद्घटकज्ञातत्वे द्वितीयायाः लक्षणा।

अथवा विषयित्वे लक्षणा। तथा च स्वनिष्ठज्ञातताजनकज्ञानाश्रयत्वं चैत्रनिष्ठमिति बोधः। यद्वा स्वनिरूपितविषयित्वाश्रयज्ञानाश्रयत्वं चैत्रनिष्ठमिति बोध इति भावः।

ननु संयोगमात्रे द्वितीयायाः लक्षणया चैत्रः स्वं गच्छतीति प्रयोगोऽपि स्यादित्याशङ्क्य तथा प्रामाणिकप्रयोगाभावात् लक्षणाया निषेधात् न प्रयोग इत्याह — **अप्रयोगेणेति**। प्रकृतं विचारं निगमयति — **तत् सिद्धमिति**।

## ईप्सितकर्मत्वं द्वितीयार्थ इति न्यायसुधाकारमतनिर्देशः, तत्खण्डनञ्च

**न्यायसुधाकारस्तु 'कर्तुरीप्सिततमं कर्म' (पा.सू 1.4.49) इति सूत्रादीप्सित-कर्मत्वमेव द्वितीयार्थः। तथायुक्तञ्चानीप्सितम् (पा.सू 1.4.50) इति सूत्रात् अनी-प्सितत्वे निरूढलक्षणेत्याह। तन्न। ईप्सितानीप्सितत्वरूपविशेषस्य प्रमाणान्त-लभ्यत्वेन लाघवात् कर्मत्व एव शक्तेः। यथा चैवं सति न सूत्रद्वयवैयर्थ्यं तथा कौस्तुभे विस्तरः।**

---

**न्यायसुधाकारस्तु** इति। 'कर्तुरीप्सिततमं कर्म' (पा.सू 1.4.49) इति कर्मसंज्ञा-विधायकसूत्रेण कर्तृनिष्ठव्यापारजन्यफलाश्रयत्वेन इच्छाविषयत्वस्य कर्मत्वरूप-त्वोक्त्या तदेव द्वितीयार्थः। 'तथायुक्तं चानीप्सितम्' (पा.सू 1.4.50) इति अनीप्सितस्यापि कर्मत्वोक्त्या तादृशकर्मत्वे निरूढलक्षणेति न्यायसुधाकारः भट्टसोमेश्वरः (2.1.5) संमार्गाधिकरणे प्राह — **तन्न**। एकत्र शक्तिः इतरत्र लक्षणेति न वक्तुं शक्यते। कुत्र शक्तिः कुत्र लक्षणेत्यत्र विनिगमनाविरहात्। तथा च सर्वेषां शक्यत्वप्रसक्तौ शक्यतावच्छेदकैक्याभावेन अनेकशक्तिकल्पनाप्रयुक्त-गौरवस्य प्रसङ्गात्। अत ईप्सितानीप्सितसाधारण्येन व्याप्यत्वापरपर्यायस्य

क्रियाजन्यफलाश्रयत्वरूपस्य कर्मत्वस्य तत्समनियताखण्डोपाधिरूपकर्मत्वस्य वा द्वितीयावाच्यत्वं युक्तमिति भावः।

नन्वेवमपि 'व्याप्यं कर्म' इत्येव सूत्रमस्तु। कुतः कर्तुरीप्सिततमं कर्म (पा.सू 1.4. 49), तथायुक्तं चानीप्सितम् (पा.सू 1.4.50) इति सूत्रद्वयमित्यत्राह — **यथा चेति। एवं सति** = ईप्सितत्वानीप्सितत्वयोः प्रमाणान्तरसिद्धत्वात् फलाश्रयत्वमात्रस्य द्वितीयार्थत्वे। **कौस्तुभे विस्तर इति।** अयं भावः — 'व्याप्यं कर्म' इति सूत्रे सति गम्यादियोगे कर्मत्वस्य चरितार्थत्वात् 'यवेभ्यो गां वारयति' इत्यादौ विशेष-विहितेन अपादानत्वेन कर्मत्वस्य बाधात् 'यवेभ्यो गां वारयति' इत्यत्र गोरपि अपादानत्वात् पञ्चम्यापत्तिः। अतः कर्तुरीप्सिततमं कर्म (पा.सू 1.4.49) इति सूत्रमा-वश्यकम्। ततश्च ईप्सिते वारणार्थानामीप्सितः (पा.सू 1.4.27) इत्यपादानत्वस्य चरितार्थतया ईप्सिततमे अपादानत्वबाधनेन परत्वात् गवि कर्मत्वमेव प्रवर्तते। एवमपि 'ग्रामं गच्छन् तृणं स्पृशति','विषं भुङ्क्ते' इत्यादौ द्वेष्योदासीनयोः कर्मणोरसंग्रहः स्यात्। अतः तत्संग्रहाय तथायुक्तं चानीप्सितम् (पा.सू 1.4.50) इति सूत्रमप्यावश्यकम्। एवं च एतत्सूत्रद्वयसाधारण्येन फलाश्रयत्वरूपं कर्मत्वमेव द्वितीयार्थः अकथितं च (पा.सू 1.4.51) इत्यादिसूत्रं तु अगत्या लाक्षणिकानुशासन-मेव। एतत्सर्वमभिप्रेत्याह — कौस्तुभे विस्तर इति।

## कर्मणश्चातुर्विध्यकथनम्

**तच्च कर्म चतुर्विधम् — उत्पाद्यम्, आप्यम्, विकार्यम्, संस्कार्यञ्चेति। 'घटं करोति, घटं जानाति, व्रीहीनवहन्ति, व्रीहीन्प्रोक्षती'त्युदाहरणानि।**

**पार्थसारथिस्तु साध्यत्वमेव द्वितीयार्थः। आप्यकर्मादावपि तत्फलोपहितत्वेन साध्यतेत्याह। तदपि जन्यत्वत्वस्य शक्यतावच्छेदकत्वे गौरवादुपेक्षितम्। शक्ततावच्छेदकन्तु द्वितीयात्वममादिनिष्ठो व्यापको धर्मः। एवमग्रेऽपि।**

---

अथ कर्म विभजते — **तच्च कर्म चतुर्विधमिति।** घटं करोति इत्यत्र कृधात्वर्थक्रियया घट उत्पाद्यो भवति। अतः तत्र घटः उत्पाद्यं कर्म। घटं जानाति इत्यत्र घटः ज्ञानेन प्राप्यो भवति। अतस्तत्र घटः प्राप्यं कर्म। व्रीहीन् अवहन्तीत्यत्र अवहननेन व्रीहीणामवस्थान्तररूपविकारो भवति। अतः व्रीहयः विकार्यं कर्म। व्रीहीन् प्रोक्षति इत्यत्र प्रोक्षणेन व्रीहीणां संस्कारो भवति। अतो व्रीहयः संस्कार्यकर्म।

पार्थसारथिमतमाह — **पार्थसारथिस्तु इति।** साध्यत्वं द्वितीयार्थः। ग्रामं गच्छतीत्यादौ प्राप्यकर्मणो ग्रामादेरपि संयोगादिफलविशिष्टत्वेन रूपेण साध्यत्वमस्त्येव। इदं मतं न युक्तम्। साध्यत्वं हि जन्यत्वम्। तच्च नियतोत्तरवृत्तित्वरूपं व्यापकत्वघटितमिति गुरुभूतत्वात् न शक्यतावच्छेदकम्। 'कर्मणि द्वितीया' (पा.सू. 2.3.2) इति सूत्रानुसारात् कर्मत्वं शक्यतावच्छेदकम्, द्वितीयात्वं शक्ततावच्छेदकम्। तच्च अम्त्व-औत्व-शस्त्वव्यापको धर्मः। अम् औश् शस् इति त्रितयनिष्ठो धर्मः।

## द्विकर्मकधातुयोगे द्वितीयार्थकथनम्

**यानि त्वन्यानि द्वितीयार्थानुशासनानि, तानि प्रचुरप्रयोगाभावाल्लाक्षणिकानुशासनानि। तथाहि — दुह्याच् पच् दण्ड रुधि प्रच्छ, चीङ् ब्रूञ् शासु मथि मुष् नीञ् हृञ् कृष् वहरूपधातुसमानार्थकधातूनां यत्कर्मकारकम्, तत्सम्बन्धिनः**

**अपादानादिकारकत्वाविवक्षायां सम्बन्धसामान्यवाचिषष्ठीप्राप्तौ 'अकथितञ्च' (पा.सू 1.4.51) इत्याद्यनुशासनेन भाक्तकर्मसंज्ञाकरणात् द्वितीयादि। यथा — 'गां दोग्धि पयः' इत्यादौ। अत्र च गोदोहनसम्बन्ध एव द्वितीयार्थः। स च स्वनिरूपकदोहनानुकूलत्वसंसर्गेण भावनायामेवान्वेति, न तु धात्वर्थे, व्युत्पत्त्यन्तरकल्पनापत्तेः। तद्योगप्रतिपादकानुशासनञ्च संसर्गप्रतिपादनपरम्।**

---

अथ द्विकर्मकधातुस्थले द्वितीयाविभक्त्यर्थं तदन्वयबोधं च निरूपयति — **यानि त्वन्यानि इत्यादिना।** यानि तु अन्यानि कर्तुरीप्सिततमं कर्म (पा.सू 1.4.49) इति सूत्रापेक्षया अन्यानि द्वितीयार्थविधायकसूत्राणि अकथितं च (पा.सू 1.4.51) इत्यादीनि तानि प्रचुरप्रयोगाभावात् लाक्षणिककार्यबोधकानि। दुह् याच् पच् दण्ड् रुधि प्रच्छ चिञ् ब्रूञ् शास् जि मथ् मुष् नीञ् हृ कृञ् वह् इति ये धातवः तत्समानार्थकाश्च ये धातवः तेषां यत् कर्मकारकं तत्संबन्धिनाम् अपादानादिकारकत्वाविवक्षायां द्वितीया अकथितं च (पा.सू 1.4.51) इति सूत्रेणानुशिष्टा। यथा 'न माषाणामश्नीयात्' इत्यत्र माषाणां संबन्धमात्रविवक्षा तद्वत् पूर्वनिर्दिष्टधात्वर्थसंबन्धमात्रविवक्षायां षष्ठीप्राप्तौ द्वितीया भवति। तेषां संबन्धिनां लाक्षणिकी कर्मसंज्ञा क्रियते। कर्मसंज्ञाप्रयुक्तत्वात् द्वितीयायाः।

**गोरपादानत्वविवक्षायान्तु 'गोः पयो दोग्धी'ति पञ्चम्यन्तप्रयोगः। गोः पयोरूपकर्मकारकसम्बन्धविवक्षायान्तु षष्ठ्यन्तप्रयोगोऽपि। अत्र पयसस्सम्बन्धसामान्येन धात्वर्थाद्यन्वयविवक्षायां पयसः कर्मत्वाभावात्, तत्सम्बन्धिन्या अपि गोर्न कर्मत्वमित्येतदर्थं कर्मसम्बन्धिन इति विशेषणम्। अत एव 'गां पयसो दोग्धी'ति न प्रयोगः। अतस्तदा गोः पयसो दोग्धीत्येव प्रयोगः। न च त्यजनोपसर्जनं त्याजनं दुहेरर्थः। तथा च धात्वर्थतावच्छेदकत्यजनाश्रयत्वान्मुख्यमेव गोः कर्मत्वमिति,**

**कथमत्र द्वितीयायास्सम्बन्धे लक्षणेति वाच्यम्। तथा विवक्षायां मुख्यकर्मत्वेऽपि धात्वर्थसम्बन्धसामान्यविवक्षायामानुशासनिकद्वितीयायां सम्बन्धलक्षणोपपत्तेः। अत एव नाऽकथितञ्चेत्याद्यनुशासनवैयर्थ्यम्। अत एव वस्तुतोऽत्रापादानत्वाख्य एव गोस्संबन्धः सम्बन्धत्वेन रूपेण द्वितीयार्थ इति ध्येयम्।**

**अन्ये तु "अकथितञ्च" (पा.सू 1.4.51) इति सूत्रवैयर्थ्यापत्तिभियैव पाचयतीत्यादिवत् दुहेरपि त्यजनं धात्वर्थतावच्छेदकं न भवत्येवेति, क्व मुख्यकर्मत्वप्रसक्तिः — इत्याहुः।**

---

यथा गां दोग्धि पयः इत्यत्र धात्वर्थदोहनक्रियायाः साक्षात्कर्म पयः। दोहनस्य अपादानं गौः। गोः पयसश्च संबन्धो वर्तते। कर्मसंबन्धिनो गोः दोहनक्रियां प्रति अपादनात्वमस्ति। तत्र अपादानत्वाविवक्षया संबन्धमात्रविवक्षायां षष्ठी प्राप्ता। तदपवादेन षष्ठ्यर्थे संबन्धे गोपदोत्तरं द्वितीया विधीयते। ततश्च गोपदोत्तरद्वितीयायाः संबन्धोऽर्थः। तस्य स्वनिरूपकदोहनानुकूलत्वसंबन्धेन दुहधातूत्तराख्यातार्थभावनायामन्वयः। न तु धात्वर्थदोहनेऽन्वयः। व्युत्पत्त्यन्तरकल्पनापत्तेः। व्युत्पत्त्यन्तरं नाम प्रकृते द्वितीयार्थसंबन्धप्रकारकबोधं प्रति धातुजन्योपस्थितिः विशेष्यतासंबन्धेन कारणमिति कार्यकारणभावः। यदा तु गोः अपादानत्वं विवक्ष्यते, तदा गोः पयो दोग्धि इति पञ्चम्यन्तप्रयोगोऽपि साधुः। गवापादानकं पयःकर्मकं च यत् दोहनं तदनुकूला भावना इति बोधः।

कर्मसंबन्धिनः इति विशेषणाभावे सामान्येन दुहादिभिः योगे अपादानत्वाद्यविवक्षायां द्वितीया स्यात् इत्युक्ते गां पयसो दोग्धि इति पयसः संबन्धसामान्येन धात्वर्थान्वयविवक्षायां गोपदात् द्वितीया स्यात्। तद्वारणाय कर्मसंबन्धिनः इत्युक्तम्। तथा च कर्मकारकसंबन्धी यदि गौः भवति तदानीमेव द्वितीया। पयसः

संबन्धसामान्येन धात्वर्थान्वयविवक्षायां कर्मत्वं नास्ति। अतः पयः संबन्धप्रयुक्ता गोपदात् द्वितीया न भवति। गोः पयसो दोग्धीत्येव प्रयोगः। न तु गां पयसो दोग्धीति। तदेतत् सर्वमभिप्रेत्याह — **गोरपादानत्वविवक्षायामित्यारभ्य गोः पयसो दोग्धीत्येव प्रयोग इत्यन्तेन।**

शङ्कते — **न च त्यजनोपसर्जनमिति। त्यजनं** = त्यागः विभागानुकूलव्यापारः तदुपसर्जनः तद्विशिष्टः तज्जनकः व्यापारः त्याजनरूपः दुहधातोरर्थः। धात्वर्थतावच्छेदकं फलं त्यजनं, तदाश्रयत्वात् गोः मुख्यमेव कर्मत्वं संभवतीति गोपदोत्तरद्वितीयायाः संबन्धे लक्षणां स्वीकृत्य गोः गौणकर्मत्वं किमर्थमुपपाद्यत इति शङ्का। समाधानं तु उक्तरीत्या गोः मुख्यकर्मत्वं यद्यपि संभवति, तथापि त्याजनरूपव्यापारेण गोः संबन्धसामान्यविवक्षायां षष्ठीप्राप्तौ तदपवादत्वेन अकथितं च (पा.सू 1.4.51) इति सूत्रेण द्वितीया विधीयते। एवं चापादनत्वसंभवेऽपि गोः तदविवक्षायां संबन्धसामान्ये द्वितीया अनुशिष्यते। इयं च लक्षणा आनुशासनिकी लक्षणा। अनेन अपादानत्वस्य संबन्धत्वविवक्षायां द्वितीयेति।

अत्र मतान्तरमाह — **अन्ये तु इत्यादिना।** गोः पयो दोग्धि इत्यत्र दुहधातोः त्यागानुकूलव्यापाररूपं त्याजनं नार्थः। किं तु त्याग एवार्थः। तथा च त्यागो धात्वर्थतावच्छेदको न भवति। अतः धात्वर्थतावच्छेदकफलाश्रयत्वरूपं मुख्यं कर्मत्वं गोः न संभवति। यथा चैत्रः मैत्रेण ओदनं पाचयति इत्यत्र ओदनस्य पच्यर्थं पाकमादाय कर्मत्वम्, न तु णिजर्थमनुकूलव्यापारमादाय मैत्रस्य कर्मत्वम्, तद्वत् दुहधातोरपि त्यजनमेवार्थः, न तु त्यजनोपसर्जनकं त्याजनम्। अतश्च धात्वर्थतावच्छेदकफलशालित्वाभावात् गोः कर्मत्वप्रसक्तिरेव नास्तीति तेषां भावः।

## अकर्मकधातुभिर्योग इत्यादिवार्तिकार्थः

**एवं अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञकः (वा. 1103) इत्यनुशासनात् 'कुरुन् स्वपिति, क्रोशमास्ते, मासमास्ते, गोदोहमास्ते' इत्यादौ द्वितीया। अत्र द्वितीयार्थोऽवच्छेदकत्वम्, तच्च देशस्याध्वनश्च, कालभावयोस्त्वाधेयत्वं कालिकं साक्षात् भावनान्वयि।**

---

अथ 'अकर्मकधातुभिर्योगे' (वा. 1103) इत्यादिवार्तिकतात्पर्यं वर्णयति — **एवम् इत्यादिना।** 'अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञकः' (वा. 1103) इति वार्तिकम्। कुरून् स्वपिति, मासमास्ते, गोदोहमास्ते, क्रोशमास्ते इति क्रमेणोदाहरणानि। अत्र देशवाचिशब्दोत्तरद्वितीयायाः अध्ववाचिशब्दोत्तरद्वितायायाश्च अवच्छेदकत्वमर्थः। तत्र आधेयत्वसंबन्धेन प्रकृत्यर्थस्यान्वयः। अवच्छेदकत्वस्य निरूपकत्वसंबन्धेन आख्यातार्थभावनायामन्वयः। भावना चात्र आश्रयत्वरूपा। ततश्च 'कुरून् स्वपिति' इति वाक्यात् कुरुदेशनिष्ठावच्छेदकतानिरूपकं (कुरुदेशावच्छिन्नम्) चैत्रनिष्ठं स्वापाश्रयत्वम् इति बोधः। मासमास्ते इति वाक्यात् मासनिष्ठावच्छेदकतानिरूपकं उपवेशाश्रयत्वम् इति बोधः। मासकालावच्छिन्नमुपवेशाश्रयत्वमिति यावत्। कुरून् स्वपिति इति वाक्यात् कुरुदेशनिष्ठावच्छेदकतानिरूपकं चैत्रनिष्ठं स्वापाश्रयत्वमिति बोधः। क्रोशमास्ते इति वाक्यात् अध्वनिष्ठावच्छेदकतानिरूपकं चैत्रनिष्ठम् उपवेशनाश्रयत्वमिति बोधः। एवमन्यत्रापि बोध्यम्।

## अधिशीङ्स्थासां कर्मेत्यादेर्विवरणम्

**एवम् 'अधिशीङ्स्थासां कर्म' (पा.सू 1.4.46) अभिनिविशश्च (पा.सू 1.4.47) 'उपान्वध्याङ्वसः' (पा.सू 1.4.48) इत्याद्यनुशासनात् अधिशेते, अधितिष्ठति**

**अध्यास्ते वा वैकुण्ठं हरिरिति। अत्र द्वितीयादेराधेयत्वमर्थः, अभिनिविशते सन्मार्गमित्यत्र च। क्वचिन्न, पापेऽभिनिवेशः। उपवसति, अधिवसति, अनुवसति, आवसति वा वैकुण्ठं हरिरित्यत्र च। अभुक्त्यर्थस्य न। वने उपवसति। अत्र सर्वत्राधेयत्वस्य स्वाश्रयकर्तृकत्वसम्बन्धेन भावनायामन्वयः।**

**एवं 'क्रुधद्रुहोरुपसृष्टयोः कर्म' (पा.सू 1.4.38) इति सूत्रात् शत्रुमभिक्रुध्यति, अभिद्रुह्यतीति द्वितीया। उपसृष्टयोः = उपसर्गयुक्तयोः। अत्र उद्देश्यत्वं द्वितीयार्थः। साक्षात् सम्बन्धेन भावनान्वयी। अकर्मकत्वाच्च न मुख्यकर्मत्वम्।**

---

**एवमित्यादि।** 'अधिशीङ्स्थासां कर्म' (पा.सू 1.4.46) इति सूत्रस्यायमर्थः — अधि इत्युपसर्गपूर्वकाणां शीङ् स्था आस् इति धातूनां योगे तदर्थाधारः कर्मसंज्ञकः भवतीति। अधिशेते अधितिष्ठति अध्यास्ते वा वैकुण्ठं हरिः इत्युदाहरणम्। अत्र द्वितीयायाः आधेयत्वमर्थः। तस्य स्वाश्रयकर्तृकत्वसंबन्धेन भावनायामन्वयः। हरिकर्तृकं हरिनिष्ठं वैकुण्ठाधारकं (वैकुण्ठनिष्ठं) शयनाश्रयत्वम्, स्थित्याश्रयत्वम्, उपवेशाश्रयत्वमिति शाब्दबोधः। 'अभिनिविशश्च' (पा.सू 1.4.47) इति सूत्रस्य अभि नि इत्युपसर्गद्वयपूर्वकस्य विशधातोर्योगे आधारः कर्मसंज्ञकः स्यात् इत्यर्थः। 'अभिनिविशते सन्मार्गम्' इत्युदाहरणम्। अभिनिवेशः आग्रहः। सन्मार्गाधारकाग्रहाश्रयत्वं चैत्रनिष्ठम् इति बोधः।

'उपान्वध्याङ्वसः' (पा.सू 1.4.48) इति सूत्रस्य उप अनु अधि आङ् इत्युपसर्गपूर्वकवसधातोराधारः कर्म स्यात् इत्यर्थः। उपवसति अनुवसति अधिवसति आवसति वा वैकुण्ठं हरिः इत्युदाहरणम्। वैकुण्ठाधारकं वासाश्रयत्वं हरिनिष्ठम् इति बोधः।

'अभुक्त्यर्थस्य न' (वा. 1087) इति वार्तिकम्। उपवासः समीपे वासः, अभोजनं वा। तत्र अभोजनार्थकस्य उपवसतेर्योगे आधारस्य कर्मसंज्ञा न भवतीति तदर्थः। वने उपवसति — वनाधारकमभोजनमिति वाक्यार्थः।

**एवमिति**। क्रुधद्रुहोरुपसृष्टयोः कर्म (पा.सू 1.4.38) उपसृष्टयोः — **सोपसर्गयोः क्रुध दुह इति** धात्वोः योगे कर्मसंज्ञा विहिता। तत्र उद्देश्यत्वं द्वितीयायाः अर्थः। तस्य निरूपकत्वसंबन्धेन भावनायामन्वयः। शत्रुमभिक्रुध्यति अभिद्रुह्यति इति वाक्यात् शत्रूद्देश्यकक्रोधाश्रयत्वं शत्रूद्देश्यकद्रोहाश्रयत्वम् इति बोधः। क्रोधः अमर्षणम् असहनमिति यावत्। द्रोहः अपकारः। **साक्षात्संबन्धेन** = निरूपकत्वसंबन्धेन। अनयोः अकर्मकधातुत्वात् तद्युक्तस्य न मुख्यं कर्मत्वम्।

## उपपदद्वितीयाविभक्तीनां विवरणम्

**'उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु**
**द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते'** (वा. 1444) **इति**।

**एवम् 'अभितः परितः समया निकषा हा प्रतियोगेऽपि अन्तरान्तरेण युक्ते' (पा.सू 2.3.4) इत्यनुशासनात् 'उभयतः कृष्णं गोपाः' सर्वतः कृष्णं गोपाः, धिक्कृष्णाभक्तम्, उपर्युपरि लोकं हरिः, अध्यधि लोकम्, अधोऽधो लोकम्, अभितः कृष्णम्, परितः कृष्णम्, ग्रामं समया निकषा हा कृष्णाभक्तम्, बुभुक्षितं न प्रतिभाति किञ्चित्, अन्तरा त्वां मां हरिः, अन्तरेण हरिं न सुखमित्यादौ उपपदयोगे तत्तल्लाक्षणिकार्येषु द्वितीया। तत्राद्ययोः प्रतियोगित्वं द्वितीयार्थः। स च साक्षात्सम्बन्धेनान्वेति, उपपदविभक्तित्वादिति बहवः।**

**वस्तुतस्तु व्युत्पत्त्यन्तरकल्पनापत्तेः, तत्रापि भावनायामेवाक्षिप्तायाम्, श्रुतायां वा अन्वयः। स च स्वनिरूपकोभयपार्श्वस्थितगोपवृत्तित्वेनेति। उपपदार्थस्य**

**संसर्गघटकत्वादुपपदविभक्तित्वम्, एवमभितः कृष्णम्, परितः कृष्णम् इत्यत्रापि द्रष्टव्यम्।**

---

अथोपपदयुक्तद्वितीयाविभक्तीनामर्थं शाब्दबोधप्रकारं चाह — **एवमित्यादिना।** उभसर्वतसोरिति श्लोकवार्तिकम्। तस्यायमर्थः — उभशब्दसर्वशब्दप्रकृतिकतसन्तयोर्योगे प्रयोगे सति द्वितीया भवति। तथा धिक्शब्दयोगे उपरि अधि अधः इत्येतेषु आम्रेडितान्तेषु प्रयुक्तेषु च द्वितीया भवतीत्यर्थः। द्विरूक्तस्य परं शब्दस्वरूपम् आम्रेडितमित्युच्यते। उक्तस्थलेभ्योऽन्यत्रापि द्वितीया दृश्यते इति। **अभितः परितः इति।** अभितः परितः हा प्रति इत्येतैः योगेऽपि द्वितीया भवतीत्यर्थः। एवम् अन्तरा, अन्तरेण इति शब्दाभ्यां योगेऽपि द्वितीया भवति। अत्र सर्वत्र द्वितीयायाः लाक्षणिकोऽर्थः। उभयतः कृष्णं गोपा इत्यत्र प्रतियोगित्वं द्वितीयाविभक्त्यर्थः। उभयत इत्यस्य पार्श्वद्वये इत्यर्थः। कृष्णप्रतियोगिकपार्श्वद्वयवर्तिनः गोपाः इति बोधः। वस्तुतोऽत्र सन्तीति क्रियापदमध्याहृत्य कृष्णप्रतियोगकिपार्श्वस्थितगोपवृत्ति सत्ताश्रयत्वमिति बोधः। उभयतः पदार्थपार्श्वस्थितस्य संसर्गघटकता। तथा च उपपदार्थघटितसंबन्धेन द्वितीयार्थस्य भावनायामन्वयः। यत्र उपपदार्थघटितसंबन्धेन द्वितीयार्थस्य भावनायामन्वयः सा द्वितीया उपपदविभक्तिः इत्युक्तं भवति। एवं परितः कृष्णं गोपा इत्यत्रापि द्रष्टव्यम्। परित इत्यस्य सकलपार्श्वे इत्यर्थः। कृष्णप्रतियोगिकसकलपार्श्ववर्तिनो गोपाः इति बोधः।

अधोऽधः इत्येतेषु युक्तेषु धिक्शब्दयुक्तेषु च द्वितीया कार्या। ततोऽन्यत्रापि अभितः परितः समया निकषा हा प्रति एतेषां योगे च द्वितीया कार्येति वार्तिकार्थः। तथा 'अन्तरान्तरेण युक्ते' (पा.सू 2.3.4) इति सूत्रात् अन्तरा अन्तरेण इति शब्दयोगेऽपि द्वितीया भवति।

एतेषु स्थलेषु शाब्दबोधप्रकारमाह — **तच्चाद्ययोः इत्यादिना**। उभयतः कृष्णं गोपाः, सर्वतः कृष्णं गोपाः इति उदाहरणयोः प्रतियोगित्वं द्वितीयाविभक्तेरर्थः। तस्य साक्षात्संबन्धेन निरूपकत्वसंबन्धेन नाम्न्येव अन्वयः। तथा च कृष्णनिष्ठ-प्रतियोगितानिरूपकोभयपार्श्ववर्तिनो गोपाः कृष्णनिष्ठप्रतियोगतानिरूपकसर्व-पार्श्ववर्तिनो गोपाः इति बोध इति भावः। **बहवः इति**। शाब्दिकाः नैयायिकाः मीमांसकाश्चेत्यर्थः।

तन्मतदूषणपूर्वकं स्वमतमाह — **वस्तुतस्त्विति**। **व्युत्पत्त्यन्तरेति**। उपपद-विभक्त्यर्थप्रकारकशाब्दबोधं प्रति विशेष्यतासंबन्धेन नामपदजन्योपस्थितिः कारणम् इति कार्यकारणभावान्तरकल्पनापत्तेः। तत्रापि उपपदविभक्तिस्थलेऽपि **आक्षिप्तायां** = अन्यथानुपपत्त्या कल्पितायां **श्रुतायाम्** = अध्याहृतास्त्यादि-तिङन्तार्थभावनायामन्वयः। संबन्धविशेषाकाङ्क्षायामाह — **स चेति**। अन्वय-श्चेत्यर्थः। **स्वनिरूपकेति**। **स्वं** = प्रतियोगित्वं तन्निरूपकौ यौ उभयपार्श्वौ तत्र स्थिताः ये गोपाः तद्वृत्तित्वसंबन्धेन भावनायामन्वय इत्यर्थः।

तथा च निदर्शितवाक्यात् कृष्णनिष्ठ्प्रतियोगित्वनिरूपकोभयपार्श्वस्थितगोप-वृत्ति सत्ताश्रयत्वम् इति बोधः।

**धिक्कृष्णाभक्तमित्यत्राधारत्वं तदर्थः। तस्य च स्वनिरूपकधिक्काराश्रयत्वसंसर्गेण तस्यामेवान्वयः। न चैवं 'धिङ् मूर्खे'ति प्रथमानापत्तिः। तत्र मूर्खस्य सम्बोधनद्वारा क्रियान्वयेन धिक्कारघटितसंसर्गेण क्रियान्वयविरहात्। 'उपर्युपरि लोकमि'त्यादौ च निरूपितत्वं द्वितीयार्थः। लोकनिरूपितोपरितनत्वविशिष्टदेशोपरितनत्वविशिष्टतत्त-देशस्थहरिकर्तृका क्रियेति शाब्दबोधः।**

**उपर्युपरिबुद्धीनां चरन्तीश्वरबुद्धयः इत्यादौ उपर्युपरि बुद्धीनाम् उत्तानबुद्धीनामुपरि ईश्वरबुद्धयश्चरन्तीत्यर्थकरणेन आम्रेडितत्वाभावान्न द्वितीया।**

---

धिक्शब्दयोगे द्वितीयाविभक्त्यर्थमाह — **धिक् कृष्णाभक्तमित्यत्रेति।** धिक् कृष्णाभक्तम् इत्यत्र द्वितीयायाः आधारत्वमर्थः। तत्र आधेयत्वसंबन्धेन प्रकृत्यर्थस्य अन्वयः। धिक्शब्दस्य निन्दा अर्थः। द्वितीयार्थस्याधारत्वस्य स्वनिरूपकनिन्दाश्रयत्वसंबन्धेन आक्षिप्तायां श्रुतायां वा मुख्यभाक्तसाधारणभावनायामन्वयः। तथा च कृष्णाभक्तनिष्ठाधारतानिरूपकनिन्दाश्रयः सत्ताश्रयत्वमिति बोधः इति भावः।

तत्र शङ्कते — **न चैवमिति। एवम्** = धिकशब्दयोगे द्वितीयाया विधाने। हे धिङ्मूर्ख इत्यत्र मूर्खशब्दोत्तरं संबोधनप्रथमायाः अनुपपत्तिः धिक्शब्दयोगेन द्वितीयाया एव प्रसक्तेः इति शङ्कितुराशयः। तत्र समाधत्ते — **तत्र मूर्खस्येत्यादिना।** तत्र मूर्खपदार्थस्य लुप्तप्रथमार्थसंबोधनद्वारा क्रियायामन्वयेन धिकशब्दार्थद्वारा क्रियायामन्वयाभावात् धिकशब्दार्थनिन्दाघटितसंबन्धेन क्रियायामन्वये सत्येव द्वितीयायाः साधुत्वात् न तत्र द्वितीयायाः प्रसक्तिरिति समाधातुराशयः। सर्वत्र नामार्थस्य क्रियायामन्वयेऽपि संबन्धभेदप्रयुक्तो विभक्तिभेद इति तात्पर्यम्। उपर्यादिषु त्रिषु इत्यस्योदाहरणं तत्र शाब्दबोधं चाह — **उपर्युपरीति।** 'उपर्युपरि लोकम्' इत्यत्र द्वितीयायाः निरूपितत्वमर्थः। तस्य स्वाश्रयोपरितनत्वविशिष्टदेशनिरूपितोपरितनत्वविशिष्टतत्तद्देशस्थहरिकर्तृकत्वसंबन्धेन अस्त्याख्यातार्थेऽन्वयः। लोकनिरूपितं यत् उपरितनत्वं तद्विशिष्टो यो देशः तन्निरूपितोपरितनत्वविशिष्टो यः तत्तद्देशः तत्स्थो यो हरिः तन्निष्ठं सत्ताश्रयत्वम् इति बोधः।

ननु आम्रेडितान्तस्य उपर्युपरि इत्यस्य योगे द्वितीया इति यदि अनुशिष्यते तदा 'उपर्युपरि बुद्धीनां चरन्तीश्वरबुद्धयः' इत्यत्र कथं षष्ठी इति शङ्कां समाधत्ते — **उपर्युपरीति**। नात्र उपर्युपरीति आम्रेडितान्तम्। उपरि उपरीति पृथक् पदद्वयम्। तत्र द्वितीयमुपरिपदं बुद्धिशब्देन समस्तम्। प्रथमस्य उपरिपदस्य ईश्वरबुद्धयः इत्यतः प्राक् योजनं कार्यम्। उपरिबुद्धीनामुपरि ईश्वरबुद्धयः चरन्तीत्यन्वयः। उपरिबुद्धीनामिति समस्तं पदम्। उपरि बुद्धिः येषां तेषामिति बहुव्रीहिः। उत्कृष्टबुद्धिमतामुपर्यपि ईश्वरबुद्धयश्चरन्तीत्यन्वयः — तदविषयानपि पदार्थान् विषयीकुर्वन्ति ईश्वरबुद्धयः इत्यर्थः। तथा चात्र उपरिशब्दस्य द्विर्भावविरहेण 'तस्य परमाम्रेडितम्' (पा.सू 8.1.2) इति सूत्रविहिताम्रेडितसंज्ञाया अभावात् आम्रेडितान्तोपरिशब्दविरहेण न द्वितीयायाः प्रसक्तिः इत्याशयः।

## समयानिकषादिपदयोगे द्वितीयार्थः

**एवं ग्रामं समया, ग्रामं निकषेत्यत्रापि निरूपितत्वं द्वितीयार्थः। तस्य च समयादिपदवाच्यसामीप्यद्वारकोऽन्वयः 'हा कृष्णाभक्तमि'त्यत्र विषयत्वं तदर्थः, हाशब्दार्थः — खेदास्तित्वम्, तद्विषयकखेदोऽस्तीत्यर्थः।**

**बुभुक्षितमित्यत्र चाधेयत्वं द्वितीयार्थः। विषयत्वञ्चाख्यातार्थः, स्वरूपसम्बन्धः प्रथमार्थः। तथा च किञ्चिन्निष्ठप्रतिभाविषयत्वं बुभुक्षितवृत्त्यभावप्रतियोगि प्रतिभानिष्ठविषयत्वं विषयितानिरूपितम्। किञ्चिन्निष्ठाभावप्रतियोगि वा प्रतिभाविषयत्वं बुभुक्षितवृत्तिप्रतिभानिष्ठविषयितानिरूपितमिति शाब्दबोधः।**

**अन्तराशब्दस्य मध्यवाचित्वात्, त्वां मामित्यत्र सम्बन्धित्वं द्वितीयार्थः, तव मम च मध्य इत्यर्थः। अन्तरेण हरिमित्यत्र प्रतियोगित्वं द्वितीयार्थः, तत्परं योग्यतत्त्सम्बन्धावच्छिन्नमिति ध्येयम्।**

अथ समया निकषा इत्यनयोः शब्दयोर्योगे द्वितीयायाः अर्थं तदन्वयप्रकारं च दर्शयति — **एवमति।** एवं पूर्वोक्तप्रकारेण ग्रामं समया ग्रामं निकषा इत्यत्रापि द्वितीयाविभक्तेः निरूपितत्वमर्थः। समयानिकषाशब्दयोः सामीप्यमर्थः। तद्वारा निरूपितत्वस्य असधात्वर्थेऽन्वयः। निरूपितत्वस्य स्वाश्रयसामीप्याश्रयवस्तु-निरूपितत्वसंबन्धेनान्वय इति यावत्। ग्रामसमीपस्थितवस्तुनिष्ठा सत्ता सत्ताश्रय-त्वं वा इति बोधः।

अथ हा इति शब्दप्रयोगे द्वितीयाविभक्त्यर्थमाह — **हा कृष्णाभक्तमित्यत्रेति।** तत्र द्वितीयायाः विषयत्वमर्थः। हाशब्दस्य खेदोऽर्थः। कृष्णाभक्तनिष्ठविषयता-निरूपकखेदनिष्ठा सत्ता इति वाक्यार्थः।

**बुभुक्षितमित्यादि।** 'बुभुक्षितं न प्रतिभाति किंचित्' भुजधातोः सन्नन्तात् 'मतिबुद्धिपूजार्थेभ्यश्च' (पा.सू 3.1.188) इति सूत्रेण कर्तरि क्तप्रत्ययः। सूत्रस्थ-मतिशब्देन इच्छा विवक्षिता। बुद्धेः पृथगुपादानात्। यद्वा बुभुक्षा इत्यस्य संजाता इत्यर्थे तारकादित्वात् इतच्प्रत्यये बुभुक्षितशब्दो निष्पन्नः। तेन बुभुक्षितस्य देवदत्तादेः न कोऽपि विषयः स्फुरतीति वाक्यार्थः। **तथा चेति।** अयं भावः — बुभुक्षितं पुरुषं प्रति न किंचित् प्रतिभाति इत्यन्वयः। बुभुक्षितपदोत्तरद्वितीयायाः आधेयत्वमर्थः। आख्यातस्य आश्रयत्वमर्थः। तत्र विषयत्वे धात्वर्थप्रतिभायाः स्वनिष्ठविषयितानिरूपितत्वेन संबन्धेन, किंचित्पदार्थस्य च आधेयत्वसंबन्धे-नान्वयः। द्वितीयार्थस्य आधेयत्वस्य च स्वाश्रयवृत्त्यभावप्रतियोगिप्रतिभानिष्ठ-विषयितानिरूपितत्वसंबन्धेन विषयत्वे अन्वयः। तथा च किंचिन्निष्ठं प्रतिभा-विषयत्वं बुभुत्सितपुरुषवृत्त्यभावप्रतियोगिप्रतिभानिष्ठविषयितानिरूपितम् इति शाब्दबोधः। यत् किंचित् प्रतिभाति तत् न बुभुत्सितम् इत्यन्वयाङ्गीकारे एवं बोधः।

यद्वा किंचिन्निष्ठाभावप्रतियोगि प्रतिभाविषयत्वं बुभुक्षितवृत्त्यभावप्रतियोगि-प्रतिभानिष्ठविषयितानिरूपितम् इति शाब्दबोधः। यत् बुभुक्षितं प्रतिभाति तन्न किंचित् इत्यन्वयात्। सूक्ष्मतया अवधेयम्। **बुभुक्षितेति।** बुभुक्षितो यः पुरुषः तद्वृत्तिर्योऽभावः प्रतिभाभावः तत्प्रतियोगिनी या प्रतिभा तन्निष्ठा या विषयिता तन्निरूपितमित्यर्थः।

पक्षान्तरे **किंचिन्निष्ठेति।** किंचिन्निष्ठो योऽभावः प्रतिभाविषयत्वाभावः तत्प्रति-योगि यत् प्रतिभाविषयत्वं तत् बुभुक्षितवृत्तिर्या प्रतिभा तन्निष्ठा या विषयिता तन्निरूपितमित्यर्थः।

**अन्तराशब्दस्येत्यादि।** अन्तरा त्वां मां हरिः इत्यत्र अन्तराशब्दस्य मध्य इत्यर्थः। त्वां माम् इत्यत्र द्वितीयाविभक्त्योः संबन्धित्वमर्थः। त्वत्संबन्धी मत्संबन्धी च यो मध्यभागः तद्वृत्तिः हरिः इत्यर्थः।

**अन्तरेण हरिमित्यत्रेति।** 'अन्तरेण हरिं न सुखम्' इत्यत्र हरिपदोत्तर-द्वितीयायाः प्रतियोगित्वमर्थः। तत् परं — प्रतियोगित्वं तु योग्यतत्तत्संबन्धा-वच्छिन्नमिति। प्रकृते भक्तिरूपसंबन्धावच्छिन्नम्। स्वविषयकभक्तिरूपसंबन्धा-वच्छिन्नम्। स्वं हरिः। अन्तरेणशब्दस्य अभाववद्वृत्तित्वमर्थः। अभावे निरूपक-तासंबन्धेन द्वितीयार्थप्रतियोगित्वस्यान्वयः। तथा च हरिविषयकभक्तिरूपसंबन्धा-वच्छिन्नप्रतियोगिताकाभाववद्वृत्तिः सुखाभाव इति बोधः। हरिविषयकभक्तिर्यस्य नास्ति तस्य सुखं नास्तीत्यर्थः।

## कर्मप्रवचनीययोगे द्वितीयार्थविवरणम्

एवं कर्मप्रवचनीयसंज्ञकशब्दप्रयोगेऽपि द्वितीया तत्तदर्थेषु लाक्षणिकी। तथा हि — कर्मप्रवचनीयास्तावत् 'अनु , उप, प्रति, परि, अभि, अधि, सु , अति, अपि'

**इत्यादयः। तत्र हेतुत्वसमानाधिकरणं लक्षणमनोरर्थः। यथा-जपमनु-प्रावर्षत्-जपरूपहेतूपलक्षितं वर्षणमित्यर्थः। अत्र द्वितीयार्थ आधेयत्वम्, तस्य हेतुत्वे, लक्षणत्वे चान्वयः, तयोश्च निरूपकतासंसर्गेण वर्षणे, तस्य च कृतावित्येवं संसर्गः।**

## तृतीयार्थे (पा.सू 1.4.85) इति सूत्रार्थः

**एवं तृतीयार्थश्चानोरर्थः, नदीमन्ववसिता सेना। अत्र साहित्यरूपः तृतीयार्थो ऽनोरर्थः, स्थितिर्धात्वर्थः, निरूपितत्वं द्वितीयार्थः, नद्या सह सम्बध्य स्थितेत्यर्थः।**

## हीने (पा.सू 1.4.86) इति सूत्रार्थः

**हीनत्वञ्चानोरर्थः, अनु हरिं सुराः, हरेर्हीना इत्यर्थः। अत्र प्रतियोगित्वम् द्वितीयार्थः, हीनत्वम्, अधिकत्वञ्चोपार्थः, उपहरिं सुराः। बोधः प्राग्वत्। अधिकत्वे सप्तमी वक्ष्यते।**

---

अथ कर्मप्रवचनीयसंज्ञकशब्दयोगे द्वितीयाविभक्त्यर्थं शाब्दबोधं चाह — **एवं कर्मप्रवचनीयेत्यादिना। इत्यादय इति।** आदिशब्देन अप आङ् इत्यनयोर्ग्रहणम्। जपमनु प्रावर्षत् इत्यत्र "अनुर्लक्षणे" (पा.सू 1.4.84) इति सूत्रेण अनु इत्यस्य लक्षणे द्योत्ये कर्मप्रवचनीयसंज्ञा विहिता। अनुशब्दस्य हेतुत्वसमानाधिकरणं लक्षणर्थः। लक्षणं नाम ज्ञानजनकज्ञानविषयः। द्वितीयायाः आधेयत्वमर्थः। तस्य हेतुत्वे लक्षणत्वे चान्वयः। तयोः निरूपकतासंबन्धेन धात्वर्थवर्षणेऽन्वयः। तस्याख्यातार्थकृतावन्वयः। तथा च जपनिरूपिताधेयतावद्धेतुत्वलक्षणत्वनिरूप-कवृष्ट्यनुकूला वरुणनिष्ठा कृतिरिति शाब्दबोधः।

तृतीयार्थे (पा.सू 1.4.85) इति सूत्रस्य विषयमाह — **एवं तृतीयार्थश्चेति।** सूत्रे तृतीयाशब्दः तृतीयाविभक्तिप्रयोजकशब्दपरः। स च सहशब्दः। तद्योगे

"सहयुक्तेऽप्रधाने" (पा.सू 2.3.19) इति सूत्रेण तृतीयाविधानात्। तेन तृतीयार्थे सहशब्दार्थे द्योत्ये अनुः कर्मप्रवचनीयसंज्ञकः स्यात् इति तस्य सूत्रस्यार्थः। सहशब्दार्थश्च साहित्यम् इत्याशयेनाह — **साहित्यरूपस्तृतीयार्थ इति।** ततश्च अनुशब्दस्य साहित्यमर्थः। स्थितिः अवपूर्वकषिञ्-धात्वर्थः। निरूपितत्वं द्वितीयार्थः। तथा च नदीमन्ववसिता सेना इति वाक्यात् नदीनिरूपितसाहित्याश्रय-सेनाकर्तृका स्थितिः इति शाब्दबोधः।

**हीनत्वं चानोरर्थ इति।** "हीने" (पा.सू 1.4.86) इति सूत्रम्। हीनत्वे द्योत्ये अनु इत्यव्ययं कर्मप्रवचनीयसंज्ञकमिति तत्सूत्रार्थः। अनु हरिं सुराः। प्रतियोगित्वं निरूपितत्वं वा द्वितीयार्थः। हरिप्रतियोगिकहीनत्वाश्रयाः देवा इति बोधः। हीनत्वमपकृष्टत्वम्।

**उपार्थ इति।** "उपोऽधिके च" (पा.सू 1.4.87) इति सूत्रम्। हीनत्वमधिकत्वं च उप इत्यस्यार्थः। अधिकत्वम् उत्कृष्टत्वम्। उप हरिं सुराः। हरिप्रतियोगिकाप-कर्षवन्तः सुराः इति बोधः। **अधिकत्वे सप्तमी वक्ष्यत इति।** उप परार्धे हरेः गुणाः इत्युदाहरणम्। हरेः गुणाः परार्धादधिकाः इत्यर्थः।

## प्रतिपर्यनूनां लक्षणार्थे बोधप्रकारः

**प्रतिपर्यनूनाञ्च सामान्यतो लक्षणमर्थः। वृक्षं प्रति, परि, अनु, वा विद्योतते चन्द्रमाः, अत्र द्योतकत्वं प्रत्यादेरर्थः, आधेयत्वं द्वितीयार्थः, स्वाश्रयद्योतकत्व-निरूपकद्योतनानुकूलत्वं कृतौ संसर्गः। वृक्षनिरूपितद्योतनाश्रयत्वञ्चन्द्रवृत्तीति शाब्दबोधः। पूर्वं हेतुत्वसमानाधिकरणं लक्षणमनोरर्थ इति, सामान्यतो लक्षणार्थानोः पृथग्ग्रहणम्।**

अथ "लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः" (पा.सू 1.4.90) इति सूत्रस्योदाहरणेषु शाब्दबोधं प्रदर्शयति — **प्रतिपर्यनूनां चेति**। लक्षणे इत्थंभूताख्याने भागे वीप्सायां च विषये प्रति परि अनु इत्यव्ययानि कर्मप्रवचनीयसंज्ञकानि भवन्तीति सूत्रार्थः। एषां त्रयाणामपि लक्षणाद्यर्थचतुष्टयेऽपि इयं संज्ञा भवति। तद्युक्ते द्वितीया विभक्तिर्भवतीति सूत्रार्थः। लक्षणे उदाहरणं "वृक्षं प्रति परि अनु वा विद्योतते चन्द्रः" इति। अत्र प्रति इत्यादेः द्योतकत्वमर्थः। वृक्षशब्दोत्तरद्वितीयायाः आधेयत्वमर्थः। तत्र वृक्षस्य निरूपितत्वसंबन्धेनान्वयः। आधेयत्वस्य आश्रयतासंबन्धेन प्रत्याद्यर्थद्योतकत्वेऽन्वयः। द्योतकत्वस्य निरूपकतासंबन्धेन धात्वर्थद्योतने अन्वयः। द्योतनस्य आख्यातार्थाश्रयत्वेऽन्वयः। तत्रैव चन्द्रस्य आधेयतासंबन्धेनान्वयः। वृक्षनिरूपिताधेयताश्रयः = वृक्षनिष्ठं यत् द्योतकत्वं तन्निरूपकं यत् द्योतनं तदाश्रयत्वं चन्द्रवृत्तीति शाब्दबोधः। **स्वाश्रयेति**। स्वं वृक्षः आश्रयो यस्य तत् — द्योतकत्वं, वृक्षनिष्ठं द्योतकत्वमिति यावत्।

ननु अनु इत्यस्य अनेन सूत्रेणैव लक्षणेऽर्थे कर्मप्रवचनीयसंज्ञायाः सिद्धेः "अनुर्लक्षणे" (पा.सू 1.4.84) इति सूत्रं व्यर्थमित्यत आह — **पूर्वमिति**। अनुर्लक्षणे इति सूत्रेण हेतुत्वसमानाधिकरणलक्षणत्वेऽर्थे अनोः कर्मप्रवचनीयसंज्ञा उक्ता। अत्र तु सामान्यतो लक्षणत्वे सा संज्ञा उक्ता इति भेद इति भावः।

अत्र लक्षणत्वं ज्ञानजनकज्ञानविषयत्वम्। लक्ष्यत्वं ज्ञानजन्यज्ञानविषयत्वम्। वृक्षदर्शनरूपज्ञानजन्यज्ञानविषयो विद्युद्विद्योतनम्। वृक्षे दृष्टे सति तत्समीपदेशावच्छिन्नविद्युद्विद्योतनं ज्ञायते इति भावः।

## तेषामेव इत्थंभूताख्यानाद्यर्थे बोधः

एवमित्थंभूताख्यानेऽप्येते त्रयः। भक्तोऽयं विष्णुं प्रति, परि, अनु वा इत्थंभूत इत्यर्थः। विषयत्वं प्रत्याद्यर्थः। निरूपितत्वं द्वितीयार्थः। भागेऽप्येते लक्ष्मीः हरि

प्रति, परि, अनु वा — हरेर्भाग इत्यर्थः। भागः = स्वत्वं प्रत्याद्यर्थः, निरूपितत्वं द्वितीयार्थः। वीप्सायां चैते, वृक्षं वृक्षं प्रति, परि, अनु वा सिञ्चति। अत्र मुख्यकर्मत्वं यदा जलादेः, तदा 'जलं सिञ्चती'ति प्रयोगः। यदा तु वृक्षनिरूपितसंयोगाश्रयत्वं विवक्षितम्, जलनिरूपितसंयोगाश्रयत्वमेव वृक्षेऽपि विवक्षितम्, तदा 'वृक्षं जलेन सिञ्चती'ति प्रयोगः। तदा तस्य मुख्यमेव कर्मत्वम्। यदा तु जले मुख्यकर्मत्वं विवक्षित्वा, प्रत्यादेश्च लक्षणार्थत्वमङ्गीक्रियते, तदा 'वृक्षं प्रतिजलं सिञ्चती'त्यपि प्रयोगः। न चैवं वीप्साभावेऽपि प्रत्यादेः कर्मप्रवचनीयसंज्ञात्वे 'वीप्सासु प्रति-पर्यनवः' इति अनुशासनवैयर्थ्यम्, प्रत्यादेर्लक्षणार्थकत्वाभावेऽपि आभिमुख्यादि-रूपार्थान्तरकत्वे वीप्सायां सत्यामेव कर्मप्रवचनीयसंज्ञेत्येवम्परत्वात्। अत एव वीप्साया न प्रत्याद्यर्थत्वम्, द्विर्वचनेनैव लाभात्।। अतश्च तत्राभिमुख्यादिकं प्रत्याद्यर्थः। निरूपितत्वं द्वितीयार्थः।

(ख) एवं भागभिन्नेषु लक्षणादिषु अभिरपि कर्मप्रवचनीयसंज्ञस्स्यात्। हरिमभि वर्तन्ते भक्ताः। हरिमभि देवं देवमभि सिञ्चति। एवमधि, परि, अति, सु, अपि इत्यादीनामप्युदाहरणानि बोध्यानि।

---

एवमित्थंभूतेति। प्रतिपर्यनूनां त्रयाणाम् इत्थंभूताख्यानेऽपि कर्मप्रवचनीयसंज्ञा भवति। तद्योगे द्वितीया च। कंचित् प्रकारं प्राप्तस्य आख्यानम् इत्थंभूताख्यानम्। कंचित् प्रकारं प्राप्तस्य कथनमिति यावत्। भक्तोऽयं विष्णुं प्रति परि अनु वा। भक्तिरूपं प्रकारं प्राप्तस्य भक्तशब्देन कथनात्। अत्र विषयित्वं प्रत्याद्यर्थः। विष्णुपदोत्तरद्वितीयायाः निरूपितत्वमर्थः। तस्याश्रयत्वसंबन्धेन विषयित्वे-ऽन्वयः। तस्याश्रयत्वसंबन्धेन भक्तपदार्थैकदेशभक्तावन्वयः। विष्णुनिरूपितविष-यित्वाश्रय (विष्णुविषयक) भक्तिमानयमिति बोधः।

**भागेऽप्येते इति।** एते प्रतिपर्यनवः भागेऽप्यर्थे कर्मप्रवचनीयसंज्ञका भवन्ति, तद्युक्ते द्वितीया च भवतीत्यर्थः। भागो नाम स्वत्वम्। प्रत्यादीनां स्वत्वमर्थः। निरूपितत्वं द्वितीयाविभक्त्यर्थः। लक्ष्मीः हरिं प्रति परि अनु वा इति वाक्यात् हरिनिरूपितस्वत्वाश्रयो लक्ष्मीः इति बोधः।

एवं वीप्सायां चैते प्रतिपर्यनवः कर्मप्रवचनीयसंज्ञकाः भवन्ति। तद्योगे द्वितीया। वृक्षं वृक्षं प्रति परि अनु वा सिञ्चति इति उदाहरणम्। व्याप्तुमिच्छा वीप्सा। व्यापकत्वप्रकारकेच्छेति यावत्। व्यापकत्वप्रकारकेच्छाविषयत्वं प्रति-शब्दार्थः। व्यापकत्वे वृक्षशब्दोत्तरद्वितीयाविभक्त्यर्थस्य निरूपितत्वस्य अन्वयः। वृक्षनिरूपितव्यापकत्वप्रकारकेच्छाविषयत्वाश्रयसेचनानुकूला भावनेति अन्वय-बोध इति भावः।

अथ जलं सिञ्चति, वृक्षं जलेन सिञ्चति, वृक्षं प्रति जलं सिञ्चति इति प्रयोगेषु बोधवैलक्षण्यमुपपादयति — **अत्रेत्यादिना।** यदा सिञ्चधात्वर्थसेचनक्रियाजन्य-संयोगाश्रयत्वरूपं मुख्यं कर्मत्वं जलस्य विवक्ष्यते तदा जलं सिञ्चति इति प्रयोगः सेचनक्रियाजन्यः यः वृक्षजलसंयोगः तदाश्रयत्वस्य जले सत्त्वात्। संयोगस्य द्विनिष्ठत्वात्। यदा वृक्षप्रतियोगिकसंयोगाश्रयत्वं जले न विवक्षितम्, अपि तु जलप्रतियोगिकसंयोगाश्रयत्वमेव वृक्षे विवक्षितं तदा वृक्षं जलेन सिञ्चतीति प्रयोगः। तदा वृक्षस्य मुख्यमेव कर्मत्वम्। यदा तु जले मुख्यकर्मत्वं विवक्षित्वा प्रत्यादेश्च लक्षणार्थत्वमङ्गीक्रियते, तदा वृक्षं प्रति जलं सिञ्चतीत्यपि प्रयोगः इति भावः।

ननु प्रत्यादेः लक्षणार्थत्वाङ्गीकारेण वीप्साया अभावेऽपि कर्मप्रवचनीयसंज्ञायाः सिद्धौ "लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः" (पा.सू. 1.4.90) इति

वीप्साग्रहणमानर्थकमित्यत्राह — **न चैवमित्यादिना**। प्रत्यादेः लक्षणार्थकत्वाभावेऽपि आभिमुख्यादिरूपार्थान्तरवत्वे सति वीप्सायां सत्यामेव कर्मप्रवचनीयसंज्ञेत्यर्थकत्वात् वीप्साग्रहणस्य। ततश्च वृक्षं वृक्षं प्रति जलं सिञ्चतीत्यत्र न वीप्सा द्वितीयाविभक्त्यर्थः। वीप्सायाः वृक्षं वृक्षमिति द्विर्वचनेनैव लाभात्। अत एवात्र आभिमुख्यमेव प्रत्याद्यर्थः। निरूपितत्वं द्वितीयाविभक्त्यर्थः। वृक्षाभिमुखं वृक्षव्यापकं च यत् सेचनं तदनुकूला भावनेति बोध इति भावः।

न च प्रत्यादेः वीप्साद्यर्थकत्वाभावे तत्रानेन संज्ञानापत्तिरिति वाच्यम्। अन्यद्योत्याया अपि वीप्सायाः संज्ञां प्रति निमित्तत्वे बाधकाभावात्। **अतश्चेति**। वीप्सायाः द्विः वृक्षपदप्रयोगेनैव लाभादित्यर्थः।

**एवमित्यादि**। "अभिरभागे" (पा.सू 1.4.91) इति सूत्रेण भागभिन्नेऽर्थे लक्षणादौ — अभि इत्यस्य कर्मप्रवचनीयसंज्ञा विधीयते। तद्युक्ते च द्वितीया भवति। हरिमभि वर्तन्ते भक्ताः इति उदाहरणम्। इत्थंभूताख्याने इदमुदाहरणम्। देवं देवमभिसिञ्चति इति वीप्सायामुदाहरणम्। सूत्रे अभागे इति प्रतिषेधात् "यदत्र ममाभिष्यात् तत् दीयताम्" इत्यत्र अभेः कर्मप्रवचनीयसंज्ञाविरहेण तद्युक्तात् शब्दात् न द्वितीया। अभिष्यात् इत्यत्र अभेः कर्मप्रवचनीयसंज्ञायाः निषेधेऽपि उपसर्गसंज्ञायाः सत्वात् उपसर्गप्रादुर्भ्यामित्यादिसूत्रेण सकारस्य षत्वम्। **एवम् अधीत्यादि**। "अधिरीश्वरे" (पा.सू 1.4.97) इति सूत्रेण अधेः स्वस्वामिभावेऽर्थे कर्मप्रवचनीयसंज्ञा। अधि भुवि रामः। "यस्मादधिकम्" (पा.सू 2.3.9) इति सप्तमी।

"अतिरतिक्रमणे च" (पा.सू 1.4.95) अतिक्रमणे पूजायां चार्थे अतेः कर्मप्रवचनीयसंज्ञा। अति देवान् कृष्णः। "सुः पूजायां" (पा.सू 1.4.94) इत्यनेन सु

इत्यस्य पूजायां कर्मप्रवचनीयत्वम्। सु स्तुतम् इति उदाहरणम्। उपसर्ग-संज्ञाबाधात् षत्वाभावः। पूजायाः अभावे "सुषिक्तं किं तवात्र" उपसर्गत्वात् सकारस्य षत्वम्।

"अपिः पदार्थसंभावनान्ववसर्गगर्हासमुच्चयेषु" (पा.सू. 1.4.56) इति सूत्रेण अपिशब्दस्य कर्मप्रवचनीयसंज्ञा। "सर्पिषोऽपि स्यात्" इति पदार्थद्योतने उदाहरणम्।

**संभावनम्** = शक्त्युत्कर्षमाविष्कर्तुमत्युक्तिः। अपि स्तुयाद्विष्णुम्। **अन्वव-सर्गः** = कामचारानुज्ञा। अपि स्तुहि। गर्हा = निन्दा। धिक् देवदत्तम्। अपि स्तुयाद्वृषलम्। समुच्चये अपि सिञ्च, अपि स्तुहि।

## कालाध्वनोरत्यन्तसंयोग इति सूत्रार्थः

**एवं कालाध्ववनोरत्यन्तसंयोगेऽपि द्वितीया। मासमधीते, क्रोशमास्ते। अत्र निरन्तरसन्निकर्षो द्वितीयार्थः। स च साक्षात्सम्बन्धेनैव भावनान्वयी। तदेवं तत्र तत्र लाक्षणिकानुशासनान्यपि द्रष्टव्यानि। मुख्यकर्मत्वसम्भवे तु तदेव द्वितीयार्थः। यत्र तु मुख्यस्य, अमुख्यस्य वा विशेषणम्, शुक्लमोदनं पचति, 'शुक्लां गां दोग्धि पयः' इत्यादौ, तत्र पदद्वयेन शुक्लगुणविशिष्टौदनकर्मत्वस्यैव लक्षणात्, तस्य च भावनाया-मन्वयेऽपि, गुणवचनानां शब्दनामाश्रयतो लिङ्गवचनानि भवन्तीत्यनुशासनादुप-स्थितत्वाद्विशेषणविभक्तिः शुक्लपदोत्तरद्वितीया साधुत्वमात्रार्था, न त्वरुणैकहा-यन्यादिवत् विशेषणस्य पृथगेव भावनान्वयः, तस्या एककर्म्मत्वभङ्गापत्तेः। नापि शुक्लपदार्थस्याभेदेनौदनान्वयः, नामार्थस्य स्वोत्तरविभक्त्यर्थेन क्लृप्तान्वयस्य नामा-र्थान्तरेणान्वये व्युत्पत्त्यन्तरकल्पनापत्तेः। अत एव भावनाया एककर्मकत्वभङ्गभिया द्विकर्मकधातुस्थलेऽपि एकमेव कर्मत्वेन भावनान्वयि, अपरन्तु द्वितीयालक्षित-**

**करणत्वादिनैव भावनान्वयि। पाश्चात्यधात्वर्थान्वयस्तु कर्मत्वेनैवेति, न धातोः द्विकर्मकत्वबाध इति व्यक्तं कौस्तुभे। तत्सिद्धं सर्वत्र द्वितीयार्थस्य भावनान्वयः — इति।**

---

**एवं कालाध्वनोरिति।** "कालाध्वनोरत्यन्तसंयोगे" इति सूत्रम् (पा.सू 2.3.5) अत्यन्तसंयोगो नाम व्यवधानरहितसंयोगः। **मासमधीते, क्रोशमधीते।** मास-शब्दः त्रिंशद्दिनसमूहपरः। तत्र सर्वेषु त्रिंशद्दिनेषु अध्ययनमावश्यकम्। एकदिन-मध्ययनाभावेऽपि न मासमधीते इति प्रयोगः। प्रकृतं निगमयति — **तदेवमिति।** अन्यान्यपि "दिवः कर्म च" (पा.सू 1.4.4) इत्यादीनि। **मुख्यकर्मत्वसंभवे तु** = वृक्षं जलेन सिञ्चति, वृक्षं प्रति जलं सिञ्चति इत्यादौ, **तदेव** = मुख्यकर्मत्वमेव द्वितीयाविभक्त्यर्थः।

ननु तण्डुलं पचति इत्यादौ तण्डुलादेः धात्वर्थतावच्छेदकफलशालित्वेन कर्मत्वसंभवेऽपि तण्डुलादिविशेषणस्य शुक्लादेः शुक्लं तण्डुलं पचतीत्यादौ कथं कर्मत्वम्। गुणस्य तस्य विक्लित्याद्यभावात्। न च गुणविशिष्टस्य तण्डुलस्य कर्मतया विशेषणस्यापि कर्मत्वमुपपद्यत इति वाच्यम्। तथा सति भावनायाः एककर्मकत्वसिद्धान्तभङ्गापत्तेः, भावनावादे च पूर्वं निरूपितं तस्याः एककर्मक-त्वमित्याशङ्क्याह — **यत्र मुख्यस्येति। मुख्यस्य** "कर्तुरीप्सिततमं कर्म" "तथायुक्तं चानीप्सितम्" इति सूत्रद्वयविहितस्य धात्वर्थतावच्छेदकफलाश्रय-रूपस्य कर्मणः शुक्लमोदनं पचतीत्यादौ ओदनादेः। **अमुख्यस्य** = "अकथितं च" इत्यादिसूत्रविहितस्य शुक्लां गामित्यादौ गवादिरूपकर्मणः। **तत्र** = तादृशस्थले पदद्वयेन शुक्ल ओदन इति पदद्वयेन, शुक्ल गो इति पदद्वयेन च शुक्लविशिष्टौदने शुक्लविशिष्टगवि च लक्षणां स्वीकृत्य विशिष्टस्यैव भावनायामन्वयाङ्गीकारेण

विशिष्टैककर्मकत्वोपपदानसंभवात् नानुप-पत्तिः इति भावः। **लक्षणादिति।** लक्षणया प्रतिपादनादित्यर्थः। एवकारेण विशेषणकर्मत्वव्यवच्छेदः। ननु विशेषणस्य कर्मत्वाभावे विशेषणवाचकपदोत्तरं द्वितीयायाः कथमुपपत्तिः इति शङ्कायामाह — **गुणवचनानामिति।** विशेषणा-श्रयस्य यानि लिङ्गानि वचनानि संख्याश्च तानि गुणवाचकानां शब्दानां भवन्तीत्यर्थः। लिङ्गसंख्ययोरतिदेशे तद्बोधकविभक्तिरप्यतिदिष्टा भवति।

ननु द्वितीयाया एव प्रवृत्तौ किं मानमित्यत्राह — **उपस्थितत्वादिति।** विशेष्यवाचकपदात् कर्मत्वार्थिकायाः द्वितीयाया एव अनुशिष्टत्वे विशेषणस्य तत्समानयोगक्षेमत्वात् उपस्थितविभक्तित्यागे मानाभावात् विशेषणपदादपि सैव विभक्तिः प्रवर्तते। ततश्च तस्याः साधुत्वार्थत्वात् न तदर्थस्य पृथक् भावना-यामन्वयः। **अरुणैकहायन्यादिवदिति।** "अरुणया एकहायन्या गवा सोमं क्रीणाति" इत्यत्र त्रयाणामपि क्रयभावनायां पृथगन्वयः स्वीकृतः। तद्वत् प्रकृते नेति व्यतिरेकदृष्टान्तः।

ननु समानाधिकरणनामार्थयोः नीलो घट इत्यत्र नीलघटयोः यथा अभेदे-नान्वयः, तथा शुक्लमोदनं पचतीत्यादावपि शुक्लपदार्थस्य अभेदेन ओदनपदार्थे-ऽन्वयोऽस्तु इत्यत्राह — **नापि शुक्लपदार्थस्येति।** नामार्थस्य स्वोत्तरविभक्त्यर्थे एवान्वय इति द्वितीयादिविभक्तौ दृष्टत्वात् प्रथमास्थले तदतिक्रमे व्युत्पत्त्यन्तर-कल्पनापत्तेरिति भावः। नामार्थनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबोधं प्रति विशेष्यतासंबन्धेन विभक्तिजन्योपस्थितिः कारणमिति कार्यकारणभावः क्लृप्तः। प्रथमास्थले नामार्थनिष्ठाभेदसंबन्धावच्छिन्नप्रकारतानिरूपितविशेष्यता-संबन्धेन शाब्दबोधे समानविभक्तिकनामपदजन्योपस्थितिः कारणमिति कार्य-कारणभावान्तरकल्पने गौरवमिति भावः।

अत एवेत्यादि। ननु सविशेषणस्थले उक्तरीत्या पदद्वये लक्षणाङ्गीकारेण भावनायाः एककर्मकत्वनियमस्य पालनेऽपि, द्विकर्मकस्थले गां दोग्धि पय इत्यादौ गोपयसोर्द्वयोरपि कर्मणोः भावनायामन्वयेन भावनायाः एककर्मकत्व-नियमभङ्ग आवश्यक इत्यत आह — **अत एवेति।** सविशेषणस्थल एव निरुक्तरीत्या भावनाया एककर्मकत्वनियमसंरक्षणादेव गां दोग्धि पय इत्यादि-द्विकर्मकस्थलेऽपि एकमेव कर्मत्वेन भावनायामन्वेति। अन्यत्तु द्वितीयालक्षित-करणत्वेनैव भावनायामन्वेति। एतदुक्तं भवति — द्विकर्मकस्थले एकं प्रधानकर्म पयःप्रभृतिकम्। अपरमप्रधानकर्म गवादिकम्। तत्र अप्रधानकर्मवाचकपदोत्तर-द्वितीयाविभक्त्या करणत्वं लक्ष्यते। गवा पयो दोग्धीत्यर्थः। पाश्चात्यमानसबोधे तु द्वयोः कर्मत्वेन भावनायामन्वयः विषयीक्रियते। अतो धातोः द्विकर्मकत्वोप-पत्तिरिति भावः।

**व्यक्तं कौस्तुभे इति।** द्वितीयाध्यायस्य प्रथमपादे संमार्गाधिकरणे व्यक्त-मित्यर्थः। प्रकृतमर्थमुपसंहरति — **तत्सिद्धमिति।**

## मृदु पचतीत्यादौ कथं द्वितीयेत्याक्षेपः

**नन्वेवं 'मृदुमोदनं पचति, स्तोकमोदनं पचती'त्यादौ कर्मकारकविशेषणत्वात् द्वितीयोपपत्तावपि, 'यत्र क्रियाविशेषणानां नपुंसकमि'त्यनुशासनात् 'मृदु पचति, स्तोकं पचती'त्यादिनपुंसकलिङ्गनिर्देशः, तत्र क्रियाविशेषणत्वादभेदसम्बन्धेन क्रियान्वयेऽपि द्वितीयोत्पत्तौ प्रमाणाभावः। न हि किञ्चिदनुशासनं तत्रास्ति। साधुत्वार्थं तत्र द्वितीयेति चेत्; साधुत्वार्थञ्चतुर्थ्यादेरप्यापत्तेः। प्रथमातिक्रमे कारणाभावेन प्रथमाया एवापत्तेश्च। किञ्च नामार्थस्य स्वोत्तरविभक्त्यर्थे क्लृप्तान्वय-स्याभेदसम्बन्धेनापि धात्वर्थान्वयाभ्युगमे व्युत्पत्त्यन्तरकल्पनापत्तिः। 'सुखं**

**स्वपिति, सुखमास्ते, सुखं गच्छती'त्यादौ अभेदान्वयानुपपत्तिश्च। न चात्र कर्मणि द्वितीया, धात्वर्थतावच्छेदकफलशालित्वस्य सुखे बाधात्, 'सुखमोदनं पचती'त्यादौ द्विकर्मकतापत्तेश्च। अकर्मकस्वप्यादिकर्मत्वस्यानुक्तिसहत्वाच्च। सुखादेः कर्मत्वे 'सुखमोदनः पच्यते, स्तोकमोदनः पच्यते' इत्यादौ द्वितीयानापत्तेश्च। कृद्योग ओदनस्येव षष्ठ्यापत्तौ, 'सुखमोदनस्य पक्त'त्यादौ द्वितीयानापत्तेश्च। अतः कथं क्रियाविशेषणानामन्वय इति चेत्।**

---

**नन्वेवमिति।** ओदनं पचति स्तोकमोदनं पचति इत्यादौ कर्मकारकौदन-विशेषणस्य मृदुस्तोकादेः "गुणवचनानामाश्रयतो लिङ्गवचनानि भवन्ति" इति भाष्यात् द्वितीयान्तत्वेऽपि, मृदु पचति, स्तोकं पचति इत्यादौ क्रियाविशेषणानां मृद्वादीनां "क्रियाविशेषणानां नपुंसकत्वम्" इत्यनुशासनात् नपुंसकलिङ्गत्वेऽपि च तेषाम् अभेदसंबन्धेन पाकादिक्रियायामन्वयस्वीकारेऽपि च मृद्वादिपदोत्तरं द्वितीयाविभक्त्युत्पत्तौ प्रमाणं नास्ति। न हि तत्र किंचिदनुशासनमस्ति। न च निर्विभक्तिकस्य पदस्यासाधुत्वात् साधुत्वार्थं द्वितीया स्यादिति वाच्यम्। साधु-त्वार्थं विभक्त्युत्पत्तौ चतुर्थ्यादेरप्यापत्तेः। प्रथमातिक्रमे कारणाभावेन प्रथमाया एव प्रयोक्तुं शक्यत्वाच्च। किं च नामार्थस्य स्तोकादेः अभेदसंबन्धेन धात्वर्थेऽन्व-याङ्गीकारे सुबर्थ एवान्वय इति व्युत्पत्तिभङ्गापत्तेः। अपि च स्तोकादिपदार्थ-निष्ठाभेदसंबन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबोधं प्रति धातु-जन्योपस्थितिः कारणमिति कार्यकारणभावान्तरकल्पनापत्तेश्च। अपि च तथान्व-याङ्गीकारे सुखं स्वपिति, सुखमास्ते इत्यादौ अभेदेनान्वयानुपपत्तेश्च। स्वापोप-वेशादौ धात्वर्थे सुखाभेदस्य बाधितत्वात्।

**न चात्रेति।** सुखं स्वपिति, सुखमास्ते इत्यादौ कर्मणि द्वितीयेति वक्तुं न शक्यते। सुखस्य धात्वर्थतावच्छेदकफलाश्रयत्वाभावेन कर्मत्वाभावात्। **बाधात्** = अभावात्। न च स्वास्थ्यविशिष्टः स्वापः धात्वर्थः। धात्वर्थतावच्छेदकं फलं स्वास्थ्यं, तदाश्रयत्वात् सुखस्य कर्मत्वमिति वाच्यम्। सुखस्य स्वास्थ्याश्रयत्वाभावात्। देवदत्तादेश्चेतनस्य हि स्वास्थ्याश्रयत्वम् इति भावः।

दोषान्तरमाह — **सुखमोदनं पचतीत्यादाविति।** सुखस्य स्वास्थ्याश्रयत्वे धात्वर्थतावच्छेदकस्वास्थ्यरूपफलाश्रयत्वम्, ओदनस्य विक्लित्तिरूपफलाश्रयत्वमिति उभयोः कर्मत्वे सति सुखमोदनं पचतीति द्विकर्मकधातुप्रयोगापत्तेश्चेति भावः। न चेष्टापत्तिः। पचेर्द्विकर्मकत्वाभावात्। स्वपधातोरकर्मकत्वेन तन्निरूपितकर्मत्वस्य सुखेऽसंभवाच्च। दोषान्तरमाह — **सुखादेः कर्मत्वे इति।** यदि सुखादेः पच्यादिधातुनिरूपितकर्मत्वं स्यात्, तदा कर्मणि लकारस्थले सुखमोदनः पच्यते इत्यत्र ओदनपदात् अभिहिते कर्मणि प्रथमा यथा भवति, तथा सुखस्य कर्मत्वे सति अभिहिते कर्मणि तस्मिन् वाच्ये सुखपदोत्तरं प्रथमैव स्यात् न द्वितीयेति भावः। दोषान्तरमाह — **कृद्योगे ओदनस्येवेति।**

किञ्च "कर्तृकर्मणोः कृति" (पा.सू 2.3.65) इत्यनेन कृद्योगे कर्मणि षष्ठी विहिता ओदनस्य पक्ता इति। यदि सुखस्य कर्मत्वं स्यात् तदा सुखशब्दोत्तरमपि षष्ठी स्यात् सुखस्य ओदनस्य पक्तेति। न चेष्टापत्तिः। सुखमोदनस्य पक्ता इत्येव प्रामाणिकप्रयोगस्य दर्शनात्। ततश्च सुखपदोत्तरं द्वितीयायाः कथमुपपत्तिः इति प्रश्नः।

## अत्र वैयाकरणानां समाधानम्

**अत्र वैयाकरणः — धात्वर्थीभूतफूत्कारादिव्यापारस्य फलं विक्लित्तिरपि धात्वर्थः, तद्विशेषणञ्च स्तोकादिकमिति, तस्य कर्मत्वात् तद्विशेषणस्य द्वितीयान्तत्वम्।**

न च विक्लित्त्यादिफलस्यैव क्रियाजन्यफलाश्रयत्वरूपमुख्यकर्मत्वाभावः। विक्लित्तेरिव तदुत्पत्तेरपि 'विक्लित्तिमुत्पादयन्ति' इति विवरणानुरोधेन धातुवाच्यत्वात्। क्रियाजन्योत्पत्त्याश्रयत्वेन विक्लित्तेरपि मुख्यकर्मत्वात्, तद्विशेषणे द्वितीयोपपत्तेः।

न चैवं विक्लित्तिं पचतीति प्रयोगापत्तिः, तस्या धातुनैवोक्ततया उक्तार्थानामप्रयोगात्। अकर्मकधातुस्थलेऽपि धातुवाच्यफलस्य शरीरलाघवादेः सुखसाधनत्वात् सुखपदेन सुखसाधनं लक्षयित्वा तस्य द्वितीयान्तत्वोपपत्तिः।

न चैवं तस्य धातोरकर्मकत्वानापत्तिः, स्वव्यधिकरणफलाश्रयकव्यापारवाचित्वाभावेनाकर्मकत्वोपपत्तेः। अतस्तस्य सकर्मकाकर्मसाधारण्येन उत्पत्त्याश्रयरूपकर्मसत्त्वेऽपि न क्षतिः। अतो युक्तैवैतादृशकर्मणि सर्वत्र द्वितीया। अत एव तादृशविषय एव 'क्रियाविशेषणानां नपुंसकमि'त्यादिना नपुंसकत्वम्, तच्चानियतलिङ्गविषयम्, नियतलिङ्गानान्तु तत्तल्लिङ्गत्वे सत्येव द्वितीयान्तत्वम्। अत एवादिं पचतीत्यादिप्रयोगः। आदिभूता या विक्लृत्तिः, तज्जनकः व्यापार इत्यर्थः।

---

तत्र वैयाकरणानां समाधानमनुवदति — अत्र **वैयाकरणाः** इति। धात्वर्थभूतेति। पचधात्वर्थभूतः यः फूत्कारादिः व्यापारः तस्य प्रयोजनभूता विक्लित्तिः। अयमाशयः — स्तोकं पचतीत्यत्र विक्लित्तिरूपं फलं तदनुकूलव्यापारश्च धात्वर्थः। तत्र विक्लित्तिरूपस्य फलस्य कर्मत्वात् अभेदेन तदन्वितस्य स्तोकस्यापि कर्मत्वम्। न च फलस्य फलाश्रयत्वाभावात् धात्वर्थतावच्छेदकफलाश्रयत्वरूपं कर्मत्वं कथमिति वाच्यम्। विक्लित्त्युत्पत्त्यनुकूलव्यापारस्यैव पचधात्वर्थत्वात् विक्लित्त्युत्पत्तिः धात्वर्थतावच्छेदकम् फलम्। तदाश्रयत्वात् विक्लित्तेः कर्मत्वम्। तदभिन्नत्वात् स्तोकस्य कर्मत्वम्। ततः स्तोकपदोत्तरं द्वितीया।

स्तोकाभिन्ना या विक्लित्तिः तदुत्पत्त्यनुकूलो व्यापारः इति स्तोकं पचतीति वाक्यात् बोधः इति। **न चेति।** विक्लित्तिरूपस्य फलस्य फलाश्रययत्वरूपं कर्मत्वं कथमिति शङ्का। विक्लित्तिवत् तदुत्पत्तिरपि पचति — विक्लित्तिमुत्पादयतीति विवरणानुरोधेन धातुवाच्या। सा च धात्वर्थतावच्छेदकत्वात् धात्वर्थपाकजन्यत्वाच्च फलम्। तदश्रयत्वात् विक्लित्तेः कर्मत्वम्। तदभिन्नत्वात् स्तोकस्य कर्मत्वम्। अतः स्तोकपदोत्तरं कर्मत्वार्थिका द्वितीया साधुः इति समाधातुराशयः। **मुख्यकर्मत्वादिति।** धात्वर्थतावच्छेदकफलाश्रयत्वरूपमुख्यकर्मत्वादित्यर्थः। तद्विशेषणे अभेदसंबन्धेन विक्लित्तिविशेषणे स्तोकपदार्थे कर्मत्वसद्भावात् तद्वाचकस्तोकपदोत्तरं कर्मत्वार्थकद्वितीयायाः साधुत्वमिति भावः।

**न चैवमिति।** उक्तरीत्या विक्लित्तेः पचधात्वर्थकर्मत्वस्वीकारे विक्लित्तिं पचतीति प्रयोगापत्तिः इति शङ्का। समाधत्ते — **तस्या इति।** विक्लित्तिरूपस्य फलस्य धातुनैव उक्तत्वात् पुनः तद्वाचकविक्लित्तिपदप्रयोगो न साधुः। उक्तार्थानामप्रयोग इत्यनुशासनादिति भावः।

ननु अकर्मकस्वापादिवाचकधातुसमभिव्याहारस्थले सुखं स्वपितीत्यादौ धातुवाच्यफलस्याभावात् फलाश्रयत्वरूपं कर्मत्वं सुखादेर्न संभवतीति सुखादिपदोत्तरं द्वितयीयाः कथमुपपत्तिः इत्याशङ्क्य, तत्र स्वपधातोः शरीरलाघवोत्पत्यनुकूलव्यापारोऽर्थः। उत्पत्तिः धातुवाच्यं फलम्। तदाश्रयत्वात् शरीरलाघवस्य कर्मत्वम्। सुखपदस्य सुखसाधने लक्षणा। तस्याभेदेन शरीरलाघवेऽन्वयः। सुखसाधनाभिन्नं यत् शरीरलाघवं तदुत्पत्त्यनुकूलव्यापाराश्रयत्वं चैत्रनिष्ठमिति चैत्रः सुखं स्वपितीति वाक्यात् बोधः इति भावः। शरीरलाघवं नाम आलस्यादेः प्रतिद्वन्द्वी कश्चित् धर्मः।

ननु उक्तरीत्या अकर्मकधातुस्थलेऽपि कर्मार्थकद्वितीयान्तत्वसमर्थने धातोर-कर्मकत्वानुपपत्तिरिति शङ्कते — **न चैवमिति**। तस्य धातोः क्रियाविशेषण-सहितस्य धातोः। उक्तशङ्कां समाधत्ते — **स्वव्यधिकरणेति**। स्वव्यधिकरण-फलाश्रयकव्यापारवाचकत्वं सकर्मकत्वम्। अस्यार्थः बहुवारमालोचनेऽपि न स्पष्टो भवति। अतः अत्र पाठाशुद्धिः संभाव्यते। ग्रन्थान्तरेषु फलव्यधिकरण-व्यापारवाचकत्वं सकर्मकत्वम्, फलसमानाधिकरणव्यापारवाचकत्वम् अकर्मक-त्वम् इत्येव दृश्यते। पचधातुः सकर्मकः। तदर्थो व्यापारः फूत्कारादिः पक्तृनिष्ठः। विक्लित्तिरूपं फलं तु ओदननिष्ठम्। उभयोः एकाधिकरणावृत्तित्वात् व्यधिकरण-त्वम् इति फलव्यधिकरणवाचकत्वात् पचधातुः सकर्मकः।

सुखं स्वपितीत्यत्र स्वापक्रियायाः फलं शरीरलाघवम्। तच्च शरीरधर्मः। स्वापोऽपि शरीरधर्मः। अतः फलसमाधिकरणव्यापारवाचकत्वात् स्वपधातोः अकर्मकत्वम्। क्रियाविशषणस्थले तु उत्पत्तिरूपं फलं धात्वर्थे घटयित्वा पूर्वोक्त-रीत्या सकर्मकत्वमुपपाद्य द्वितीया समर्थनीयेति सारांशः। तदेतदभिप्रेत्याह — **अतो युक्तैवेत्यादिना। अत एव तादृशविषय एवेति**। सकर्मकधातुस्थले वा अकर्मकधातुस्थले वा सर्वत्र उत्पत्तिरूपं फलं धात्वर्थेऽन्तर्भाव्य तदाश्रयस्य कर्मत्वमुपपाद्य तद्विशेषणानामपि कर्मत्वमुपपादनीयम्। एतादृशविषये एव नपुंसकत्वं द्वितीया च उपपादनीया। तच्च नपुंसकत्वं ये अनियतलिङ्गाः शब्दाः स्तोकादयः तत्र भवति। यथा स्तोकं पचतीति। यत्र नियतलिङ्गः शब्दः क्रियाविशेषणं भवति, तत्र नपुंसकत्वं न भवति, यथा आदिं पचतीत्यत्र आदिशब्दस्य नित्यपुंलिङ्गत्वात् नपुंसकलिङ्गकत्वं न भवति। आदिभूता या विक्लित्तिः तज्जनको व्यापार इति बोधः।

**न च तादृशकर्मकारकमादाय कर्मणि लकारः, कृद्योगनिमित्तिका षष्ठी वा आपद्येतेति वाच्यम्। व्यापारव्यधिकरणधातुवाच्यमुख्यफलाश्रयरूपकर्मण्येव तयोः प्रवृत्तेः, उत्पत्तेरमुख्यफलत्वेन तदाश्रये तयोरप्रवृत्तेः। कर्तृकर्मणोः कृति (पा.सू. 2.3.65) इत्यादिसूत्रेषु कर्मपदेन तादृशकर्मग्रहणस्यैव निर्णीतत्वात्, इतरथा सर्वेषामेव सकर्मकत्वेन, 'अकर्मकेभ्यः' इति पदोपादानानुपपत्तेः। अतश्च 'स्तोकमोदनः पच्यते, स्तोकमोदनस्य पक्ते'त्यादौ द्वितीयान्तत्वोपपत्तिः। यत्र तु विधिवशात् धात्वर्थस्य करणत्वम्, तत्र तद्विशेषणे तृतीया, यथा 'ज्योतिष्टोमेन यजेते'ति। 'तत्रातिसमीचीनं ज्योतिष्टोमेन यजेते'ति यद्विशेषणम् न तद्धात्वर्थस्य अपि तु भावनायाः। तत्राऽत एव सा प्रथमा, न द्वितीया — इत्याहुः।**

---

ननु क्रियाविशेषणवाचकशब्दस्य कर्मार्थकद्वितीयाविभक्त्यन्तत्वे कर्मणि लकारस्थले स्तोकं पच्यते तण्डुलः इत्यत्र आख्यातेन कर्मणः उक्तत्वात् अभिहिते प्रथमेति प्रथमैव प्राप्नोति न तु द्वितीया। किं च कृदन्तशब्दयोगे कर्मणि षष्ठ्येव स्तोकादिपदात् प्राप्नोति, न तु द्वितीया। ततश्च स्तोकमोदनस्य पक्ता इति द्वितीयान्तस्तोकपदस्य कथं साधुत्वम् इति शङ्कते — **न च तादृशेति।** समाधत्ते — **व्यापारव्यधिकरणेति।** व्यापारानधिकरणवृत्ति धातुवाच्यं यत् मुख्यं फलं विक्लित्यादि तदाश्रयरूपकर्मण्येव पूर्वोक्तषष्ठीद्वितीययोः साधुत्वम्। यथा ओदनस्य पाकः, ओदनः पच्यते इत्यादिषु। स्तोकादेः तदभावात् मुख्यफलाश्रयत्वाभावात् न तद्वाचकपदोत्तरं कर्मणि षष्ठी, कर्मणि लकारो वा भवति। अतः स्तोकस्य पक्ता, स्तोकः पच्यते इति च न प्रयोगः साधुरिति भावः। उक्तव्यवस्थायां प्रमाणमाह — **लः कर्मणि चेति। तादृशकर्मग्रहणस्येति।** धात्वर्थमुख्यफलाश्रयरूपमुख्यकर्मग्रहणस्येत्यर्थः। निर्णयमेवोपपादयति — इतरथेति।

तत्तत्कार्याणामसांकर्येण व्यवस्थया प्रवृत्तये धातवः सकर्मका अकर्मका इति द्वैराश्येन निर्दिष्टाः शास्त्रे। यदि तु उत्पत्तिरूपममुख्यफलं गृहीत्वा कर्मणि लकार उपपाद्यते तदा कर्मणि लकारविधायके सूत्रे सर्वधातूनामपि सकर्मकत्वापत्त्या "लः कर्मणि च भावे चाकर्मकेभ्यः" (पा.सू 3.4.69) इति सूत्रे अकर्मकेभ्य इति पदोपादानमनुपपन्नम्। व्यावर्त्याभावात्। सकर्मकधातवो हि तेन व्यावर्त्याः। उक्तरीत्या अकर्मकाणामपि सकर्मकत्वे कथं व्यावर्तकं भवेत् तत्पदम्। सकर्मकत्वासमानाधिकरणधर्मस्यैव सकर्मकव्यावर्तकत्वादिति भावः।

**अतश्चेति।** पूर्वोक्तरीत्या स्तोकपदोत्तरं षष्ठ्यापादनासंभवात् स्तोकमोदनस्य पक्तेत्यादौ स्तोकपदस्य द्वितीयान्तत्वोपपत्तिरिति भावः।

ननु क्रियाविशेषणानां कर्मत्वात् तद्वाचकपदोत्तरं द्वितीयेति स्वीकारे "ज्योतिष्टोमेन यजेत" इत्यत्र ज्योतिष्टोमस्य धात्वर्थक्रियाभूतयागविशेषणत्वात् तस्य कर्मत्वे सति ज्योतिष्टोममिति द्वितीयया भाव्यम्। कथं ज्योतिष्टोमेनेति तृतीया संगच्छते इत्याशङ्क्य, तस्य कर्मस्वरूपोत्पत्तिवाक्यत्वात् विधिप्रत्ययवशात् आख्यातार्थभावनायां धात्वर्थस्य यागस्य करणत्वेनान्वयात् तद्विशेषणस्य ज्योतिष्टोमस्यापि करणत्वात् तदुत्तरं तृतीयायाः साधुत्वमिति समाधत्ते — **यत्र तु विधिवशादिति।** नन्वेवमपि "समीचीनं ज्योतिष्टोमेन यजेत" इत्यत्र धात्वर्थस्य यागस्य करणत्वे तद्विशेषणवाचकसमीचीनपदोत्तरमपि तृतीयया भाव्यम्। कथं तत्र द्वितीयेत्याशङ्क्य, तत्र समीचीनपदार्थः न धात्वर्थस्य यागस्य विशेषणम्, अपि तु आख्यातार्थविशेषणं समीचीनाभिन्ना ज्योतिष्टोमयागकरणकभावनेति च शाब्दबोधः इति समाधत्ते — **समीचीनमित्यादिना।** अत एव = समीचीनपदार्थस्य भावनायामन्वयादेव समीचीनपदोत्तरं प्रथमा, न द्वितीया। धात्वर्थविशेषणत्वाभावादिति भावः।

## उक्तवैयाकरणमतखण्डनम्

**तन्न। व्यापारव्यधिकरणधातुवाच्यमुख्यफलाश्रयपरूपकर्मण्येव लकारषष्ठयोः प्रवृत्तौ 'चैत्रेणास्यते मासः, सुप्यते रात्रिरि'ति कर्मलकारानापत्तेः। न हि तत्र तादृशं फलमस्ति, तथात्वे तस्य स्वाभाविकाकर्मकत्वानापत्तेः। धातूपात्तफलसमानाधिकरणव्यापारवाचित्वं हि भवन्मतेऽकर्मकत्वम्। अतस्तत्र तादृशफलाप्रसिद्धेः, न द्वितीयाकर्मलकाराद्यापत्तिः। अत एव न परसमवेतक्रियाजन्यधात्वर्थतावच्छेदकीभूतफलशालित्वं कर्मत्वम्, नापि तत्समनियताखण्डोपाधिः कर्मत्वम्। तदभावेऽपि 'चैत्रो मासमास्ते, आस्यते मासः' इत्यादौ कर्मत्वावश्यकत्वेन व्यभिचारात्। अपि तु तद्व्यापकम्, तत्समानाधिकरणमात्रं वा।**

---

एतावता प्रबन्धेनानूदितं वैयाकरणमतं निरस्यति — **तन्नेत्यादिना**। व्यापाराधिकरणावृत्ति अथवा व्यापारनधिकरणवृत्ति यत् मुख्यं फलं तदाश्रयकर्मण्येव लकारः षष्ठी च प्रवर्तते इत्यङ्गीकारे चैत्रेण आस्यते मासः, सुप्यते रात्रिः इत्यत्र च कर्मणि लकारस्य अनुपपत्तिः। तत्र हि "अकर्मकधातुभिर्योगे देशः कालो भावो गन्तव्योऽध्वा च कर्मसंज्ञकः" इति वार्तिकेन "आस उपवेशने" इति धातोः योगे मासस्य कर्मत्वमतिदिष्टम्। तेन कर्मणा धातोः सकर्मकत्वात् तस्मिन् कर्मणि लकार इष्यते। स न सिध्येत्। तत्र धातुवाच्यस्य मुख्यस्य फलस्याभावात्। यदि तत्र धातुवाच्यं मुख्यं फलं स्यात् तदा तस्य स्वाभाविकस्य अकर्मकत्वस्यानुपपत्तिः। यतः धातूपात्तफलसमानाधिकरणव्यापारवाचकत्वं भवन्मतेऽकर्मकत्वम्। अतस्तत्र चैत्रेण मासः आस्यते इत्यादौ **तादृशफलाप्रसिद्धेः** धातुवाच्यमुख्यफलाप्रसिद्धेः न द्वितीयाकर्मलकाराद्यापत्तिः। **अत एव** = मुख्यफलाप्रसिद्धेरेव न द्वितीयाकर्मलकाराद्यापत्तिः। **अत एव** = मास आस्यते इत्यादौ

कर्मत्वानिर्वाहादेव परसमवेतक्रियाजन्यधात्वर्थतावच्छेदकफलशालित्वं वा तत्समनियताखण्डोपाधिरूपं वा न कर्मत्वम्। अपि तु तत्समानाधिकरणः तद्व्यापको वा धर्मविशेषः कर्मत्वम् इति भावः।

**अथवा किमित्याद्याकाङ्क्षापूरकत्वसमनियतमेवाखण्डोपाधिरूपं कर्मत्वम्। तच्च पचतीत्यादौ ओदनस्येव, आस्यत इत्यादौ मासादेरप्यविशिष्टमिति, युक्तमेवात्र द्वितीयादि, तच्च तत्तद्धातुसमभिव्याहारगम्यमित्युक्तं कौस्तुभे। सुखादिरूपक्रिया-विशेषणानान्तु न किमित्याकारकाकाङ्क्षापूरकत्वम्, अपि तु कथमाकाङ्क्षापूरक-त्वमेव। अत एव 'कथं पचति, स्वपिति वा सुखम्, कीदृशं पचति, स्तोकं मृदु वे'त्यादिप्रश्नोत्तरभावोऽपि संगच्छते, अतो न तत्र कर्मत्वसंभवः। नापि तदनुरोधेन उत्पत्तेः, फलस्य वा धातुवाच्यत्वकल्पनम्, अन्यलभ्यत्वात्तयोः। अत एव पाकत्व-यागत्वादिनैव धातोः शक्तिरित्युक्तं प्राक्।**

---

अथ स्वसिद्धान्तमाह — **अथवेत्यादिना**। परसमवेतक्रियाजन्यफलशालित्व-रूपकर्मत्वाभावेऽपि मासादौ कर्मत्वदर्शनात् अन्यादृशं सकलानुयायि कर्मत्वं परिष्कृत्य दर्शयति — **अथवेति**। किमित्याकाङ्क्षापूरकत्वं यस्यास्ति तत्रैव वर्तमानम् अखण्डोपाधिरूपं कर्मत्वम्। पचतीत्युक्ते किं पचतीत्याकाङ्क्षायाम् ओदनं पचतीति उत्तरदर्शनात् तेन आकाङ्क्षायाः पूरणात् ओदने तादृशं कर्मत्वमस्ति। एवम् आस्यते इत्युक्ते कः आस्यते इत्याकाङ्क्षायां मास आस्यते इत्युत्तरेण तादृशाकाङ्क्षायाः पूरणात् मासे तादृशं कर्मत्वमस्ति। अत एव तादृश-कर्मवाचकमदोत्तरं अभिधानानभिधाने पुरस्कृत्य प्रथमा द्वितीया वा भवति।

ननु किमित्याकाङ्क्षापूरकत्वं कस्य वर्तत इति कथं निश्चेतव्यमिति शङ्काया-माह— **तच्च तत्तद्धात्विति**। येन धातुना सह द्वितीयान्तं पदमुच्चार्यते तद्धात्वर्थे ज्ञाते

किमित्याकाङ्क्षायां सत्यां तद्धातुसमभिव्याहृतपदस्यैव तादृशाकाङ्क्षानिवर्तकत्वम्। **व्यक्तं कौस्तुभे इति।** द्वितीयाध्यायस्य प्रथमपादे भावार्थाधिकरणे इति शेषः। एवं च स्तोकमोदनं पचतीत्यत्र किमित्याकाङ्क्षापूरकत्वमोदनस्यैवेति तस्यैव मुख्यं कर्मत्वम्। न तु स्तोकस्य। तस्य तु कथम् इत्येवं कथमाकाङ्क्षापूरकत्वमेव। एवमेव सुखादीनां क्रियाविशेषणानां न किमित्याकाङ्क्षापूरकत्वम्, अपि तु कथमित्याकाङ्क्षापूरकत्वम्। कथं पचति, कथं स्वपिति इति प्रश्नोत्तरं सुखं पचति, सुखं स्वपिति इत्युत्तरदानात्। एवं च क्रियाविशेषणानां स्तोकादीनां मुख्यकर्मत्वासंभवात् उत्पत्तेः शरीरलाघवादेर्वा धातुवाच्यत्वं स्वीकृत्य पूर्वोक्तरीत्या कर्मत्वोपपादनपूर्वकं द्वितीयासमर्थनमनावश्यकम् इति भावः।

## मृदु पचतीत्यादौ स्वमते द्वितीयाप्राप्त्युपपादनम्

**कथं तर्हि द्वितीयानियमः**

**उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु।**
**द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते'॥ (वा. 1444)**

**इत्यनुशासनादिति गृहाण। अत्र ततोऽन्यत्रापि प्रतिपदोक्तादन्यत्र क्रियाविशेषणेऽपीत्यर्थः। अत एव अन्यत्रापि दृश्यते इत्युक्तम्। तदेतदाह — 'अभितः परितः समया निकषा हा प्रति' इत्यग्रिमप्रतिपदोक्तपरतया भाष्यानारूढम् व्याख्यानमप्यसङ्गतम्, वैयर्थ्यापत्तेः। तस्मात्सिद्धं क्रियाविशेषणेषु द्वितीयामात्रानुशासनम्।**

---

यदि क्रियाविशेषणस्थले कर्मणि द्वितीया न भवति, तर्हि कथं केन प्रमाणेन द्वितीयेत्याशङ्क्य स्वमतमाह — **कथं तर्हीत्यादिना।**

उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु।
द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते।।

इति वार्तिकस्थचतुर्थपादेन 'ततोऽन्यत्रापि दृश्यते' इत्यनेन क्रियाविशेषणानां ग्रहणम्। **ततोऽन्यत्रापि** — पादत्रयोक्तप्रतिपदोक्तादन्यत्रापि, क्रियाविशेषण-स्थलेऽपि द्वितीया दृश्यत इति तदर्थः।

## स्तोकं पचतीत्यादौ त्रेधा द्वितीयार्थान्वयप्रकारः

**अत एवात्र द्वितीयामात्रग्रहणान्न लकारषष्ठ्यौ। अतस्तेषामपि तात्पर्यानुरोधेन फलद्वारकः, धातूपात्तव्यापारद्वारकः, साक्षादेव वा भावनायामन्वयः। सर्वथैव द्वितीयान्तत्वम्। तत्र स्तोकम्, मृदु, समीचीनमित्यादौ द्वितीयाऽर्थो लक्षणया आश्रयित्वम्। स्तोकत्वादिकञ्च लक्षणया, शक्त्यैव वा प्रातिपदिकार्थः। तदाश्रयित्वञ्च यदि फलसम्बन्धे तात्पर्यम्, तदा स्वनिरूपकफलजनकव्यापारानुकूलत्वसंसर्गेण, कृतावन्वेति। यदि व्यापारसम्बन्धे, तदा साक्षादेवेति विवेकः। एतेन भावनासम्बन्धे प्रथमैवेति परास्तम्। भावनायास्सम्बन्धविवक्षया 'आदिः पचती'ति प्रयोगापत्तेश्च। न चासाविष्टः, भवद्ग्रन्थेऽप्यलेखनात्।**

---

ननु ततोऽन्यत्रापीत्यस्य अभितः परितः समया निकषाहाप्रतियोगेऽपीति कैश्चित् वैयकरणैः व्याख्यातत्वेन क्रियाविशेषणस्थले इति तस्य व्याख्यानमयुक्त-मित्याशङ्क्य तेषां तथा व्याख्यानमेवायुक्तम्। भाष्यानारूढत्वात् इत्याह — **अत एवेत्यादिना**। अन्यत्रेत्यनेनैव लब्धे सति परिगणनस्य व्यर्थत्वापत्तेरित्यर्थः। द्वितीयामात्रेति। मात्रपदेन लकारषष्ठ्यौ न भवत इति सूच्यते।

एतावता क्रियाविशेषणानां कर्मत्वं केन प्रकारेण भवतीति निरूपितम्। अथ तेषां धात्वर्थे भावनायां च संबन्धविशेषेणान्वयप्रकारं प्रतिपादयति — **अतस्तेषा-मपीति**। क्रियाविशेषणानामपि फलद्वारा भावनायामन्वयः। यथा स्तोकं पचती-

त्यत्र स्तोकपदार्थस्य अभेदसंबन्धेन विक्लित्तिरूपे फलेऽन्वयः तद्वारा च भावनाया-मन्वयः। स्तोकाभिन्ना या विक्लित्तिः तदनुकूलव्यापारानुकूला भावनेति बोधः। अथ वा व्यापारद्वारा अन्वयः। स्तोकाभिन्नव्यापारानुकूला भावनेति। अथवा साक्षात् अन्वयः — स्तोकाभिन्ना भावनेति। एवं सर्वत्र स्तोकपदस्य द्वितीया-न्तत्वम्। स्तोकं पचतीत्यत्र स्तोकपदस्य स्तोकत्वमर्थः। द्वितीयायाः आश्रय-त्वमर्थः। तत्र स्तोकत्वस्य निरूपितसंबन्धेनान्वयः। स्तोकत्वनिरूपितमाश्रय-त्वम्। तस्य स्वरूपसंबन्धेन विक्लित्तिरूपफलेऽन्वयः। स्तोकत्वनिरूपिताश्रयत्वा-श्रयस्तोकत्वाश्रयविक्लित्त्यनुकूलव्यापारानुकूला भावनेति बोधः। अयं फलद्वार-कोऽन्वयः।

अथवा स्तोकपदोत्तरद्वितीयायाः आधेयत्वमर्थः। तत्र आधेयत्वसंबन्धेन स्तोकत्वस्यान्वयः। स्तोकत्वनिष्ठमाधेयत्वम्। तस्य निरूपकतया फले विक्लित्ता-वन्वयः। स्तोकत्वनिष्ठाधेयतानिरूपकविक्लित्तिः स्तोकत्वाश्रयविक्लित्तिः तदनुकूल-व्यापारानुकूला भावनेति वा फलद्वारको बोधः।

अथ वा स्तोकत्वस्य धात्वर्थे व्यापारे आश्रयतयान्वयः। व्यापारस्यानुकूलतया भावनायामन्वयः स्तोकत्वाश्रयो यो विक्लित्त्यनुकूलो व्यापारः तदनुकूला भावनेति बोधः। अयं स्तोकत्वस्य धात्वर्थव्यापारद्वारको भावनायामन्वयः। यद्वा स्तोक-त्वस्य स्वाश्रयविक्लित्त्यनुकूलव्यापारानुकूलत्वसंबन्धेन भावनायामन्वयः। उक्त-परंपरया स्तोकत्वविशिष्टा भावनेति बोधः। अयं साक्षात् भावनायामन्वयप्रकारः। तत्र वैयाकरणमतं स्तोकत्वस्य फले व्यापारे वा अन्वय इति। भावनायां फलद्वारकसंबन्धेन व्यापारद्वारकसंबन्धेन वा अन्वय इति मीमांसकमतमिति विवेक्तव्यम्।

**ज्योतिष्टोमेनेत्यत्रापि न क्रियाविशेषणत्वम्, अपि तु धात्वर्थस्य करणत्वेन भावनान्वयवन्नामार्थस्यापि करणत्वेनैवान्वयः। नामार्थो हि यद्यपि धात्वर्थ एव, तथापि धातुना विजातीययागत्वादिना बोधात्, नाम्ना च ज्योतीरूपस्तोमकत्वादिना बोधान्न पर्यायत्वम्। अभेदबोधस्तु अरुणैकहायनीवदिति वक्ष्यते।**

**अत एव ज्योतिष्टोमेनेत्यत्राभेदार्थिका तृतीयेति तार्किकमतमपास्तम्, अभेद-लक्षणायां प्रमाणाभावात्। 'धान्येन धनी'त्यादावपि धनसम्बन्धे धान्यस्य करण-त्वोपपत्तेरभेदलक्षणायाः क्वाप्यदर्शनाच्च। करणत्वविवक्षाभाव एव च क्रिया-विशेषणत्वनिमित्तिका द्वितीया 'स्वाहाकारं यजती'तिवत् लौकिकवाक्ये न विरुध्यते। स्वाहाकारवाक्ये तु व्यत्ययानुशासनेन करणत्वलक्षणा।**

---

ननु क्रियाविशेषणेषु द्वितीयेति स्वीकारे ज्योतिष्टोमेन यजेतेति यागविशेषणस्य ज्योतिष्टोमस्य कथं करणत्वम्, तदर्थकतृतीया वेति शङ्कायामाह — **ज्योतिष्टोमे-नेत्यत्रापीति।** समाधानग्रन्थस्यायमाशयः — ज्योतिष्टोमस्य न क्रियाविशेषण-त्वम्। अपि तु धात्वर्थयागवत् तस्यापि स्वातन्त्र्येण करणत्वेनैव भावनाया-मन्वयः। तेन ज्योतिष्टोमकरणिका यागकरणिका भावनेति शाब्दबोधः। न च भावनायाः करणाकाङ्क्षायां धत्वर्थयागस्य करणत्वेन तस्यामन्वयादेव करणा-काङ्क्षायाः शान्तत्वात् पुनः नामार्थस्य ज्योतिष्टोमस्य करणत्वेनान्वयः कथमिति वाच्यम्। धात्वर्थः यागः यागत्वेन रूपेण भावनायां करणम्। ज्योतिष्टोमशब्दस्तु ज्योतिष्टोमनामकत्वेन रूपेण यागस्य करणत्वं प्रतिपादयति। तथा च करणता-वच्छेदकभेदान्न पौनरुक्त्यम्। एतदुक्तं भवति — तस्मिन् यागे ज्योतिस्संज्ञक-स्तोमकत्वं वर्तते। तद्बोधनाय ज्योतिष्टोमशब्देन निर्देशः। स्तोमः = स्तोत्र-गतनवत्वसंख्याविशेषः। नवसंख्याकज्योतिर्नामकस्तोत्रविशिष्टो यागः। ज्योति-

ष्टोमयागयोः अभेदबोधस्तु पार्ष्ठिकः। अत एव करणत्वार्थिका अत्र तृतीया, नाभेदार्थिका। अभेदे तृतीयानुशासनविरहात्, तत्र लक्षणायां प्रमाणाभावाच्च। ननु धान्येन धनवानित्यत्र अभेदार्थे तृतीया दृश्यते। अनुशासनं च प्रकृत्यादिभ्य उपसंख्यानमिति वर्तत एवेति चेन्न। तत्र धनवत्त्वं प्रति धान्यवत्त्वस्य कारणत्वात् करणे एव तृतीयायाः संभवात् धान्यकरणकधनसंबन्धवान् इति तत्र बोधः। तथा च यत्र करणत्वविवक्षा न भवति तत्रैव क्रियाविशेषणत्वे द्वितीया। स्वाहाकारं यजतीत्यत्र कथं द्वितीयेति नाशङ्कनीयम्। स्वाहाकारस्य यागविशेषवाचकत्वेऽपि छन्दसि व्यत्ययो बहुलम् इत्यनुशासनेन द्वितीयेति वदन्ति। लोके तु करणत्वविवक्षायां तृतीयैवेति।

**सुखं स्वपितीत्यादावपि जनकत्वं द्वितीयार्थः। सुखजनकस्स्वापः इत्यर्थः। यद्वा सुखपदमनायासपरम्, द्वितीयार्थः पूर्वकत्वम्, आयासाभावपूर्वकस्वापादिः इत्यर्थः। सर्वथा सिद्धं सर्वत्र द्वितीयार्थो भावनान्वयीति। भावना च लिङ्गानन्वयिपदोपस्थाप्या। तच्च तिङ्कृन्निपाताद्यपि, न तु प्रथमायामिव तिङाद्येव। अत एव 'ओदनं पचति ओदनं करिष्यन्, ओदनं भुङ्क्ते' इत्यादौ सर्वत्र द्वितीयार्थस्य भावनान्वय इति संक्षेपः।**

**इति श्रीमदाचार्यखण्डदेवविरचिते भाट्टतन्त्ररहस्ये**
**द्वितीयाविभक्त्यर्थविचारः समाप्तः**

---

**सुखं स्वपितीत्यादि।** तत्र द्वितीयायाः जनकत्वमर्थः। तत्र निरूपितत्वसंबन्धेन प्रकृत्यर्थस्य सुखस्यान्वयः। जनकत्वस्य आश्रयत्वसंबन्धेन धात्वर्थस्वापेऽन्वयः। सुखनिरूपितजनकत्वाश्रयः — सुखजनकः स्वापः इति बोधः। यद्वा सुखपदस्य अनायास इत्यर्थः। द्वितीयायाः पूर्वकत्वमर्थः। तस्य स्वापेऽन्वयः। अनायास-

पूर्वकः स्वापः इति बोधः। एवं च सर्वत्र द्वितीयार्थो भावनायामन्वेति। भावना च लिङ्गानन्वयिपदोपस्थाप्या। लिङ्गानन्वयिपदानि च तिङ्कृत् तिपातादि। तिङ् ओदनं पचति। कृत् — ओदनं पचन्। अत्र शतृप्रत्ययस्य कर्तरि शक्तिः, कृतौ (भावनायां) लक्षणा। निपातः — 'विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसांप्रतम्'। आदिना ओदनं पचेत्यादौ शबादिविकरणग्रहणम्। एवं च सर्वत्र द्वितीयार्थस्य भावनायामन्वय इति सिद्धम्।

**इति सारप्रकाशिकायां द्वितीयाविभक्त्यर्थविचारः**

# तृतीयाविभक्त्यर्थविचारः

## प्राचीनमतेन कर्तृत्वनिर्वचनम्

एवं 'कर्तृकरणयोस्तृतीया' (पा.सू 2.3.18) इति सूत्रात् कर्तृत्वम्, करणत्वञ्च तृतीयार्थः। सोऽपि तथैव भावनान्वयी। तत्र 'स्वतन्त्रः कर्ता' (पा.सू 1.4.54) इति सूत्रेण कर्तृत्वस्य निर्वचनम्। तथा हि — इतरकारकाप्रयोज्यत्वे सति कारकान्तर-प्रयोक्तृत्वं कर्तृत्वम्। कारकान्तरनिष्ठव्यापारजनकत्वम् विशेष्यदलार्थः। अस्ति चेदं कुविन्दादौ तन्त्वादिनिष्ठपटजनकसंयोगरूपव्यापारजनकत्वात्। कुठारेऽपि काष्ठ-निष्ठसंयोगजनकत्वेन कर्तृत्वापत्तौ सत्यन्तम्। तस्य पुरुषजन्यसंयोगाश्रयत्वेन तत्प्रयोज्यत्वादिति सर्वदर्शनानुयायिनः प्राञ्चः।

---

एतावता द्वितीयार्थविचारः समाप्तः। अथ तृतीयार्थं विचारयन् तस्य भावनायामन्वयं च निरूपयति — **एवमिति**। एवं — द्वितीयार्थवत् "कर्तृकरणयोस्तृतीया" (पा.सू 2.3.18) इति सूत्ररूपात् प्रमाणात् कर्तृत्वं करणत्वं च तृतीयाया अर्थः। सूत्रे कर्तृकरणपदे भावप्रधाननिर्देशरूपे। कर्तृत्वे करणत्वे चार्थे कृदाभिरनुक्ते तृतीया स्यादिति सूत्रार्थः। **सोऽपि** = कर्तृत्वकरणत्वरूपः तृतीयार्थोऽपि तथैव द्वितीयार्थवदेव धात्वर्थद्वारा वा धात्वर्थद्वारकपरंपरासंबन्धेन वा भावनायामन्वेति। तत्र "स्वतन्त्रः कर्ता" (पा.सू 1.4.54) इति सूत्रेण कर्तुः लक्षणमुच्यते। इतरकारकाप्रयोज्यत्वे सति कारकान्तरप्रयोक्तृत्वं स्वतन्त्रत्वम्। प्रयोज्यत्वं प्रेर्यत्वम्। प्रयोजकत्वं प्रेरकत्वम्। **प्रेर्यत्वम्** = तदधीनव्यापारवत्त्वम्। प्रेरकत्वम् — तन्निष्ठव्यापारजनकत्वम्। तथा च कारकान्तरनिष्ठव्यापारानधीन-

व्यापारवत्त्वं कर्तृत्वमित्युक्तं भवति। यथा कुविन्दः तन्तुभिः पटं करोति इत्यत्र कर्ता कुविन्दः। तदितरकरणकारकं तन्तवः तद्व्यापारः तत्संयोगविशेषः तज्जनकत्वं कुविन्दे वर्तते। एवं च कुविन्दस्य व्यापारः इतरकारकतन्तु निष्ठ-व्यापारप्रयोज्यो न भवति। अतः कुविन्दस्य कर्तृत्वं वर्तते। तन्तूनां तु स्वेतर-कर्तृकारकप्रयोज्यव्यापारवत्त्वात् न कर्तृत्वम् अपि तु करणत्वम्। इतरकारका-प्रयोज्यत्वमात्रोक्तौ चैत्रः कुठारेण काष्ठं छिनत्ति इत्यत्र करणकारके कुठारेऽतिव्याप्तिः। कुठारो हि काष्ठेन संयुज्य काष्ठच्छेदनरूपव्यापारं करोति। कुठार-काष्ठसंयोगस्य कुठारः काष्ठं च समवायिकारणम्। तथा च कुठारस्यापि काष्ठनिष्ट-संयोगरूपव्यापारजनकत्वमस्तीति कर्तृत्वापत्तिः। अतस्तद्वारणाय इतरकारका-प्रयोज्यत्वे सतीत्युक्तम्। तथा च कुठारस्य चैत्ररूपकर्तृकारकनिष्ठोद्यमननिपात-रूपव्यापारजन्यकाष्ठसंयोगव्यापारवत्तया तदजन्यव्यापारवत्त्वाभावात् न कर्तृत्व-मिति भावः। व्युत्पत्तिवादेऽप्युक्तम् — स्वतन्त्रत्वं च कारकान्तरव्यापारनधीन-व्यापारवत्त्वे सति कारकत्वमिति।

## तन्निरासेन नव्यवैयाकरणमतेन कर्तृत्वनिर्वचनम्

**तन्न। ईश्वरप्रयोज्यजीवेऽव्याप्तेः दण्डजन्यसंयोगाश्रयत्वेन कुलाले अव्याप्तेश्च। अतो धातूपात्तव्यापाराश्रयत्वं कर्तृत्वमिति वैयाकरणनव्याः। 'चैत्रः पचति, घटो भवति' इत्यादौ चैत्रघटादौ पाकभवनादिरूपव्यापाराश्रयत्वाल्लक्षणसमन्वयः। व्यापारपदोपादानान्न फलाश्रये कर्मण्योदनादावतिव्याप्तिः। पाचयति चैत्रो मैत्रेण इत्यादौ पाकस्य, णिजर्थस्य चोभयोर्धातूपात्तव्यापारत्वात्तदाश्रययोरुभयोरपि कर्तृत्वोपपत्तिः। परन्तु चैत्रवृत्त्येव कर्तृत्वं तिङुपात्तमिति, तस्यैव तदुपात्त-संख्यान्वयः न तु मैत्रस्य। न चैवं 'चैत्रो मैत्रं गमयती'त्यत्र मैत्रे कर्तृत्वापत्तिः।**

**तस्मिन्नपि तद्व्यवहारसत्त्वेनेष्टत्वात्। तृतीयायास्त्वनुशासनबलात् कर्मसंज्ञावरोधान्न प्रसङ्गः। एवं 'स्थाली पचती'त्यादौ स्थालीनिष्ठव्यापारस्यैव धातुनोक्तत्वात् कर्तृत्वाविरोधः — इत्याहुः।**

---

एतावता सर्वदर्शनानुयायिनां प्राचीनानां मतमुपन्यस्तम्। तत् दूषयति — **तन्नेत्यादिना।** ईश्वरं येऽङ्गीकुर्वन्ति तेषां मते सर्वोऽपि जीवः ईश्वरप्रेरणयैव तत्तत्कार्यं करोतीति वदन्ति। तन्मते चैत्रः पचतीत्यादौ ईश्वरप्रेरणाधीनपाकादिक्रियाकर्तृत्वात् इतरव्यापारानधीनव्यापारश्रयत्वरूप स्वातन्त्र्याभावात् चैत्रादेः पाकादिकर्तृत्वं न स्यात्। अपि च घटकर्तरि कुलाले दण्डसंयोगाद्यधीनघटकरणव्यापाराश्रयत्वात् कर्तृत्वानुपपत्तिः। कर्तृलक्षणस्याव्याप्तिरिति यावत्।अतो धातुवाच्यव्यापाराश्रयत्वं कर्तृत्वमिति नव्यवैयाकरणाः। चैत्रः पचतीत्यत्र पचधात्वर्थपाकरूपव्यापारश्रयत्वात् चैत्रस्य कर्तृत्वम्। घटो भवतीत्यत्र भूधात्वर्थभवनरूपव्यापाराश्रयत्वात् घटस्य कर्तृत्वम्। धात्वर्थाश्रयत्वं कर्तृत्वमित्यनुक्त्वा धात्वर्थव्यापाराश्रयत्वं कर्तृत्वमिति कथनात् पचधात्वर्थविक्लित्तिमतः ओदनस्य न कर्तृत्वम्। कर्मण्यतिव्याप्तिवारणाय व्यापारपदमिति यावत्। तदाह — **व्यापारपदोपादानाच्चेति।**

ननु पाचयति चैत्रो मैत्रेणेत्यत्र पचधात्वर्थः पाकः, णिजन्तधात्वर्थः अर्थात् णिजर्थः पाकानुकूलो व्यापारः। तत्र पचधात्वर्थव्यापाराश्रयः मैत्रः, पचधात्वर्थव्यापारानुकूलणिजर्थव्यापाराश्रयः चैत्र इति उभयोरपि धातूपात्तव्यापराश्रयत्वात् कर्तृत्वापत्तिः। तथा च चैत्रो मैत्रः पाचयतीति प्रयोगापत्तिरित्याशङ्क्याह — **पाचयति चैत्रो मैत्रेणेत्यादिना।** सत्यम् उभयोरपि कर्तृत्वमस्ति। परं तु चैत्रवृत्त्येव णिजर्थकर्तृत्वं तिङा उच्यते इति चैत्र एव तिङुपात्तसंख्यान्वयः। अत एव चैत्र-

पदोत्तरं प्रथमा। मैत्रवृत्तिसंख्यायाः तिङा अनभिधानात् मैत्रपदोत्तरं न प्रथमा, अपि तु तृतीया।

नन्वेवं मैत्रो गच्छति, तं प्रेरयति चैत्रः। तदा चैत्रो मैत्रं गमयतीति प्रयोगो भवति। तत्र पृच्छ्यते चैत्रो मैत्रेण गमयतीति कुतो न प्रयोग इति। मैत्रगत-संख्यायाः तिङा अनभिधानात्। तत्र समाधानमित्थम् — सत्यमुभयोरपि कर्तृत्वमस्ति। तथापि कर्तरि तृतीया तत्र न भवति। गतिबुद्धीत्यादिसूत्रेण गमधातोरेव अण्यन्तावस्थायां कर्तुः ण्यन्तावस्थायां कर्मत्वातिदेशात् मैत्रपदोत्तरं द्वितीया। पचधातोस्तु गतिबुद्धिसूत्रे अनुपादानात् ण्यन्तावस्थायां कर्तुः न कर्मत्वातिदेशः। अतः तत्र कर्तरि तृतीयैव। प्रथमा तु न भवति। आख्यातेन तद्गतसंख्याया अनभिधानादित्याशयः इति। **अनुशासनबलादिति।** गतिबुद्धी-त्यादिसूत्रबलादित्यर्थः।

तदुक्तं महाभाष्ये — यदा यत्कारकनिष्ठो व्यापारो धातुना विवक्ष्यते, तदा तदाश्रयत्वं तस्य कारकस्य वर्तत इति तस्य कर्तृत्वम्। अधिकरणभूताया अपि स्थाल्याः अधिश्रयणादिरूपो व्यापारो धातुना विवक्षित इति तस्याः कर्तृत्वमिति।

## नव्यवैयाकरणमतनिराकरणम्

**तन्न। 'चैत्रो न पचति, भूतले घटो नास्ती'त्यादौ धातूपात्तव्यापाराभावाश्रये चैत्रादावव्याप्तेः। न च तत्र चैत्रवृत्तिः पाकोऽभावप्रतियोगीति, भूतलवृत्तिघटनिष्ठा सत्ताभावप्रतियोगिनीत्येवं शाब्दबोधाङ्गीकारान्नाव्याप्तिः। 'ह्रदे वह्निर्नास्ती'त्यादौ प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिनोऽप्रसिद्धा अव्याप्त्यापत्तेः। न च तत्र वह्निवृत्तिसत्ता ह्रदवृत्त्यभावप्रतियोगिनी इत्येवं शाब्दबोधाङ्गीकारात्तन्निवारणम्, तथात्वेऽपि 'शुक्लो घटो भवती'त्यादौ शुक्लगुणस्यैव भवनाश्रयत्वेन तत्राति-**

**व्याप्तिप्रसङ्गात्, घटेऽव्याप्तेश्च। अथ तत्र विशेषणविशेष्ययोरुभयोर्भवनाश्रयत्वम्, तदा 'चक्रे घटो भवती'त्यादौ चक्रस्यापि तदापत्तिः। अथ यद्धात्वर्थाश्रयत्वेन यो विवक्षितः स तत्कर्तेत्युच्यते, चक्रे च विवक्षाभावान्नातिप्रसङ्गः, तदा 'पटो घटो न' इत्यादौ अन्योन्याभावप्रतियोगिनि घटादौ धात्वर्थाश्रयत्वाभावादव्याप्तिः।**

---

उक्तं वैयाकरणमतं खण्डयति — **तन्नेत्यादिना।** धातूपात्तव्यापाराश्रयत्वं कर्तृत्वमिति न वक्तुं शक्यते। चैत्रो न पचतीत्यत्र चैत्रः धातूपात्तपाकरूप-व्यापाराभाववान् इति प्रतीत्या धातूपात्तव्यापाराश्रयत्वरूपकर्तृत्वस्य चैत्रेऽनुप-पत्तिः स्यात्। ततश्च कर्तरि लकारो न स्यात्। एवं भूतले घटो नास्तीत्यत्र भूतलनिरूपितसत्ताभाववान् घट इति प्रतीत्या घटस्य धातूपात्तसत्ताश्रयत्व-रूपकर्तृत्वाभावात् कर्तरि लकारो न स्यात् इति भावः।

तत्र समाधानं शङ्कते — **न च तत्रेति।** चैत्रो न पचतीत्यत्र चैत्रस्य आधेयतासंबन्धेन धात्वर्थपाकेऽन्वयः। नञर्थस्याभावस्य प्रतियोगितासंबन्धेन पाक एवान्वयः। तथा च चैत्रवृत्तिः पाकः अभावप्रतियोगीति बोधः। एवं भूतले घटो नास्तीत्यत्र सप्तम्यर्थस्याधेयत्वस्य घटेऽन्वयः। घटस्य धात्वर्थसत्तायामा-धेयतयान्वयः। नञर्थस्याभावस्य प्रतियोगितासंबन्धेन सत्तायामन्वयः। तथा च भूतलनिष्ठो यो घटः तन्निष्ठा सत्ता अभावप्रतियोगिनी इति बोधः इति शङ्का। तत्र समाधत्ते — **ह्रदे वह्निर्नास्तीत्यादाविति।** ह्रदनिष्ठवह्नेरप्रसिध्या ह्रदनिष्ठवह्नि-निष्ठसत्ता अभावप्रतियोगिनी इति बोधः वक्तुं न शक्यते। ह्रदनिष्ठबह्नेरप्रसिद्धेरिति भावः। पुनः समाधानं शङ्कते — **न च तत्रेति।** ह्रदे इति सप्तम्यर्थाधेयत्वस्य नञर्थाभावेऽन्वयः। वह्नेः आधेयतासंबन्धेन धात्वर्थसत्तायामन्वयः। नञर्था-भावस्य प्रतियोगितासंबन्धेन सत्तायामन्वयः। तथा च वह्निनिष्ठा सत्ता

हृदवृत्त्यभावप्रतियोगिनी इति शाब्दबोधः इति भावः। तत्र दोषमापादयति — **तथात्वेऽपीत्यादिना**। घटः शुक्लो भवति इत्यत्र घटमुद्दिश्य शुक्लभवनं विधेयतया अभिमतम्। घटः शुक्लभवनाश्रयः इति शुक्लगुणस्यैव भवनाश्रयत्वात् कर्तृलक्षणस्य तत्रातिव्याप्तिः। तत्रैव घटे भवनाश्रयत्वाबोधात् कर्तृलक्षणस्याव्याप्तिश्च। न च तत्र उद्देश्यघटस्य विधेयशुक्लगुणस्य चोभयोः भवनाश्रयत्वरूपं कर्तृत्वमस्तु इति वाच्यम्। तथा सति "चक्रे घटो भवति" इत्यत्र भवनाश्रयत्वं घटस्य साक्षात् चक्रस्य घटरूपकर्तृद्वारकमाश्रयत्वमिति उभयोरपि कर्तृत्वात् प्रथमा प्रसजति। ननु यद्धात्वर्थाश्रयत्वेन यो विवक्षितः स तद्धात्वर्थकर्ता। घट एव भवनाश्रयत्वेन विवक्षित इति घटपदोत्तरं प्रथमा, चक्रे च भवनाश्रयत्वेन विवक्षा नास्तीति न कर्तृत्वम्, अतो न प्रथमा। अपि तु आधारत्वात् सप्तम्येव, चक्रपदोत्तरमित्याशङ्कते — **अथेति**। समाधत्ते — **तदेति**। 'पटो घटो न' इत्यत्र नञर्थान्योन्याभावप्रतियोगितया घटो विवक्षितः। पटः घटप्रतियोगिकभेदवानिति तत्र बोधः। तत्र घटे पटे वा धात्वर्थाश्रयत्वं न प्रतीयते। धातोरप्रयोगात्। तथा च तत्र कथं पटपदोत्तरं घटपदोत्तरं च प्रथमा धात्वर्थाश्रयत्वाभावात् घटपटयोः इति भावः।

**न च तत्र भवतिपदाध्याहारेण घटपटोभयवृत्तितादात्म्यभवनं भूधातुना लक्षयित्वा, तादृशभवनाभावप्रतियोगीति शाब्दबोधाङ्गीकारात्, अर्थाच्चान्योन्याभावबोधोपपत्तेः, तदात्मत्वेन भवनस्य चोभयवृत्तित्वादुभयकर्तृत्वोपपत्तिरिति वाच्यम्, तथात्वे उभयत्रापि तिङुपात्तसंख्याकत्वोपपत्तेः 'घटो न पटावि'ति प्रयोगानापत्तेः।**

---

पुनः शङ्कते — **न चेति**। पटो घटो न इत्यत्र भवति इति पदमध्याहर्तव्यम्। भूधातोश्च लक्षणया तादात्म्यभवनमर्थः। तच्च घटपटयोरुभयोरपि विवक्षित्वा नञा तत्र अभावप्रतियोगित्वं बोध्यते। तथा च घटपटतादात्म्यभवनम् अभावप्रतियोगीति बोधे अर्थात् घटपटतादात्म्याभावबोधः। तादात्म्येन भवनस्य उभयवृत्तितया चोभयोः कर्तृत्वोपपत्तिः इति भावः। तत्र समाधत्ते — **तथात्वे इति**। तथा सति तादात्म्यभवनरूपक्रियाश्रयत्वात् उभयोः कर्तृत्वे सति उभयोः आख्यातोपात्तैकत्वसंख्यया अन्वयात् उभयत्र एकवचनेनैव भाव्यमिति घटो न पटौ इति द्विवचनप्रयोगानुपपत्तिरिति भावः। **तादृशभवनम्** = घटपटोभयभवनम्। **अर्थाच्चेति**। अर्थापत्तिप्रमाणादित्यर्थः। घटपटोभयतादात्म्यभवनस्य अत्यन्ताभावप्रतियोगित्वं तयोः घटपटयोः भेदं विना अनुपपन्नतया तत्सामर्थ्यात्तयोः भेदबोधो भवतीत्याशयः।

अत्रेदमालोचनीयम् — प्रमाणान्तरप्रसिद्धमुद्दिश्य प्रमाणान्तराज्ञातं विधीयत इति सर्वेऽङ्गीकुर्वन्ति। यथा पर्वतो वह्निमान् इत्यादौ। घटपटतादात्म्यस्य असंभावितस्य उद्देश्यत्वं कथम्। अत एव मणिकारैः गवि शशशृङ्गं नास्तीति च शशे शृङ्गाभाव इत्यर्थ इत्युक्तम् इति। शशशृङ्गस्याप्रसिद्धतया तदुद्देशेन अभावप्रतियोगित्वं न बोधयितुं शक्यमिति हि तदाशयः।

**एतेन 'घटो न पटः' इत्यत्र घटपदं घटप्रतियोगिकान्योन्याभाववल्लक्षकम्, नञ्पदञ्च तात्पर्यग्राहकम्, अन्वयश्चोभयोरपि 'शुक्लो घटः, अघटः पटः' इतिवत् पार्ष्ठिकाभेदसम्बन्धमादाय, विशेषणविशेष्यभावेन वा अध्याहृतक्रियायामित्यपास्तम्। तथात्वे तद्वदेव घटो न पटाविति प्रयोगानापत्तेः। 'घटो नश्यती'त्यादौ कथमपि कर्तृत्वानुपपत्तेश्च। अतो यद्धात्वर्थावच्छिन्नलिङ्गानन्वयिपदोपस्थाप्यार्थाश्रयत्वं यस्य, तस्य तत्कर्तृत्वम्। अस्ति चेदं पच्यते चैत्रेण, पचति चैत्रः इत्यादौ**

चैत्रस्य धात्वर्थावच्छिन्नकृत्याश्रयत्वात्, कर्मलकारेणापि कृतेरुक्तेः। 'घटो भवती'त्यादौ आख्यातेनाश्रयत्वस्य लक्षणात्, घटो नश्यतीत्यादौ प्रतियोगित्वस्य तेन लक्षणात्, तत्रापि लक्षणसमन्वयः। अवच्छिन्नत्वञ्च स्वरूपसम्बन्धविशेषः, न तु जनकत्वाद्येव। तेन प्रतियोगित्वादेर्नाशाजनकत्वेऽपि न क्षतिः। 'चैत्रः पाचकः, पक्तेत्यादौ कृतैव पाकानुकूलकृतेर्लिङ्गानन्वयिन्या उक्तत्वात्, तस्य कर्तृत्वोपपत्तिः। चैत्रस्य पाकः इत्यादिघञन्ते घञर्थे लिङ्गान्वयेऽपि पचिधातुनोक्तस्य लक्षणया पाकावच्छिन्नव्यापारस्य लिङ्गानन्वयात्तदाश्रये चैत्रे कर्तृत्वाविरोधः। घञा वा लक्षणया कृतेः, शक्त्या पाकाख्यस्य भावस्योक्तेः पाकावच्छिन्नकृतिसाध्यः पाक इति शाब्दबोधः। कृतौ चैत्रस्यान्वयात् कर्तृत्वोपपत्तिः। शेषे षष्ठीत्वाद्वा कर्तृत्वाभावेऽपि न क्षतिः। प्रधानभूताध्याहृतक्रियायामेव च तस्यान्वयः। चैत्रस्य पाककृतिरिति इत्यादिप्रयोगोपपत्त्यर्थं चेदमावश्यकम्। 'चैत्रेण कृतः' इत्यादिकर्मकृत्स्वपि धातुना पाकानुकूलव्यापारस्यैव वस्तुत उक्तेः, तदाश्रयत्वेन चैत्रे कर्तृत्वाविघातः।

---

एतेनेत्यादि। घटो न पट इत्यत्र घटपदस्य घटप्रतियोगिकभेदवान् इत्यर्थः। नञ्पदं तात्पर्यग्राहकम्। अस्तीति क्रियापदमध्याहर्तव्यम्। तथा च घटप्रतियोगिकान्योन्याभाववान् = घटभिन्नः अस्ति, पटः अस्तीति पृथक् पृथक् शाब्दबोधो जायते। पश्चात् घटप्रतियोगिकान्योन्याभाववदभिन्नः = घटभिन्नः पट इति मानसो बोधो जायते। अथवा विशेष्यविशेषणभावानापन्नस्य घटप्रतियोगिकान्योन्याभावस्य घटपदार्थस्य पटपदार्थेऽन्वयः। घटप्रतियोगिकान्योन्याभावविशिष्टः पटः अस्तीति पार्ष्ठिको बोधः। उक्तरीत्या घटो न पटौ इत्यत्रापि विशेष्यविशेषणयोः एकविभक्तिकत्वाभावात् प्रयोगानुपपत्तिर्जायते। अपि च घटो

नश्यति इत्यत्र घटस्य कर्तृत्वं कथमपि नोपपद्यते। धातूपात्तनाशाश्रयत्वस्य घटेऽभावात्। नाशप्रतियोगित्वमेव हि घटे वर्तते। अत एवमादिदोषसद्भावात् कर्तृत्वलक्षणं पूर्वोक्तं न संभवति।

अत स्वमतेन कर्तृत्वलक्षणमाह — **अतो यद्धात्वर्थेत्यादिना**। यो धातुः यद्धातुः यः तस्यार्थः यद्धात्वर्थः तदवच्छिन्नः तद्विशिष्टः यः लिङ्गानन्वयिपदोपस्थाप्योऽर्थः तदाश्रयत्वं यस्य तस्य तद्धात्वर्थकर्तृत्वम्। चैत्रः पचति इत्यत्र यद्धात्वर्थः पचधात्वर्थः पाकः तदवच्छिन्ना अनुकूलत्वसंबनधेन तद्विशिष्टा लिङ्गानन्वयि-तिङ्पदोपस्थाप्योऽर्थः कृतिः तदाश्रयत्वं चैत्रस्य वर्तत इति चैत्रस्य कर्तृत्वम्।

चैत्रेण पच्यते इत्यत्र पच्यते इत्यस्य पाकः क्रियते इति कृत्यर्थककृधातुना विवरणात् कर्मणि प्रयोगस्थले कर्मवत् कृतिरप्याख्यातार्थः। अतः तत्र पाक-रूपधात्वर्थावच्छिन्नकृतिमादाय तदाश्रयस्य चैत्रस्य कर्तृत्वम्। अतः तत्र चैत्र-पदोत्तरं कर्तरि तृतीया।

घटो भवतीत्यादौ भूधातोः भवनमर्थः। अचेतनस्य कृत्याश्रयत्वासंभवात् आख्यातस्य न कृतिः अर्थः। अपि तु लक्षणया आश्रयत्वमर्थः। भवनावच्छिन्न-माश्रयत्वं घटनिष्ठमिति बोधः।

घटो नश्यतीत्यत्रापि आख्यातस्य प्रतियोगित्वं अर्थः। न तु आश्रयत्वं कृतिर्वा।। अचेतने घटे कृतेरभावात्। नाशाश्रयत्वस्य घटसमवायिकारण-कपालवृत्तित्वेन घटवृत्तित्वाभावात्। ततश्च घटनिष्ठं नाशप्रतियोगित्वमिति बोधः। अवच्छिन्नत्वं च न जनकत्वरूपं पचतीत्यादाविव। प्रतियोगित्वस्य नाशजनकत्वा-भावात्। किं तु वैशिष्ट्यरूपः स्वरूपसंबन्धविरोधः पचतीत्यत्र तु पाकजनकत्व-

रूपपाकावच्छिन्नत्वं तिबर्थकृतेः वर्तते। अत्र तु न तथा, इति ध्येयम्। तदाह — **तेन प्रतियोगित्वादेरिति।**

ननु कर्तृवाचककृत्प्रत्ययान्तस्थले चैत्रः पक्ता चैत्रः पाचकः इत्यादौ कथं चैत्रस्य कृतिरूपभावनायामन्वयः। न च कर्त्रेकदेशकृतावन्वय इति वाच्यम्। पुंलिङ्गान्वयिकर्तृपदोपस्थाप्यत्वात् इत्याशङ्क्य अत एव तत्र कृतौ लक्षणया उपस्थितिरङ्गीक्रियते। इदानीं पदोपस्थाप्यकर्तरि पुंलिङ्गान्वयेऽपि कृतौ तदभावात् लिङ्गानन्वयि पदोपस्थाप्या कृतिः। तत्र चैत्रस्यान्वयो युज्यते। तत्र कृतिरूपायाः भावनायाः लिङ्गानन्वयित्वसंपादनायैव लक्षणा स्वीक्रियत इति समाधत्ते — **चैत्रः पाचकः पक्तेत्यादाविति।** चैत्रनिष्ठा पाकानुकूला कृतिरिति तत्र बोधः इति भावः।

ननु चैत्रस्य पाक इति भावार्थकघञ्प्रत्ययान्तः पाकशब्दः। चैत्रकर्तृकः पाकः इति बोधस्तत्र इष्टः। घञ् इति प्रत्ययस्य पाकोऽर्थः। तत्र लिङ्गान्वयात् कथं तत्र चैत्रकर्तृकत्वान्वयः। कथं वा लिङ्गानन्वय्यर्थाश्रयत्वरूपं कर्तृत्वं चैत्रस्येत्याशङ्क्य, तत्र घञर्थे लिङ्गान्वयेऽपि पचधातुना लक्षणया उक्ते पाकावच्छिन्नव्यापारे लिङ्गानन्वयात् तदाश्रये चैत्रे कर्तृत्वसंभव इति समाधत्ते — **चैत्रस्य पाक इत्यादिघञन्त इति।** परं तु अत्र पक्षे व्यापारस्य धात्वर्थतया घञर्थतया च द्विवारं बोधो वक्तव्य इति क्लेशोऽस्ति। अतः पक्षान्तरमाह — **घञा वा लक्षणयेति।** तथा च चैत्रस्य पाकः इत्यत्र भावार्थकत्वात् घञः व्यापारः शक्त्या अर्थः। लक्षणया कृतिः अर्थः। धात्वर्थपाकस्य अवच्छिन्नत्वसंबन्धेन कृतौ, तस्याः साध्यत्वसंबन्धेन पाके अपरघञर्थेऽन्वयः। पाकावच्छिन्नकृतिसाध्यः पाक इति बोध इति भावः। कृतौ चैत्रस्यान्वयात् कर्तृत्वोपपत्तिः। अत्र लक्ष्यार्थकृतेः लिङ्गानन्वय इति आशयः। परं त्वत्र पक्षे पाकस्य धात्वर्थतया घञर्थतया च द्वेधा भानं भवति। इदं भावे घञ्स्थले अवर्जनीयमिति भावः।।

चैत्रस्य पाक इत्यत्र भावे घञन्तस्थले न कर्त्रर्थे चैत्रपदोत्तरं षष्ठी, अपि तु शेषे इति सूत्रेण संबन्धसामान्ये षष्ठी। चैत्रसंबन्धी पाक इति बोधः। तत्र अस्तीति अध्याहृतक्रियायां पाकस्यान्वयः। चैत्रसंबन्धिपाकनिष्ठं सत्ताश्रयत्वमिति बोधः। अत्र पच्धात्वर्थक्रिया असधात्वर्थक्रिया चेति क्रियाद्वयमस्ति। षष्ठ्यर्थसंबन्धस्य कस्यां क्रियायामन्वयः इति शङ्का जायते। असधात्वर्थस्य आख्यातार्थे आश्रयत्वे साक्षात्, षष्ठ्यर्थस्य संबन्धस्य स्वाश्रयधात्वर्थसत्ताद्वारा अन्वयः इति आशयः।

तस्यान्वय इत्यत्र तच्छब्देन षष्ठ्यर्थस्य संबन्धस्य परामर्शात्। घञ्लक्ष्य-कृतावन्वयस्तु न संभवति। लिङ्गान्वयिपदोपस्थाप्यत्वात्। लिङ्गानन्वयिपदोप-स्थाप्यभावनायामन्वय इति असकृदुक्तत्वात् इति ध्येयम्। तदाह — **अध्याहृत-क्रियायामेव चेति**। अपि च कृद्योगेऽपि एतादृशस्थले शेषषष्ठीं स्वीकृत्य अध्याहृतक्रियायामेवान्वयः स्वीकर्तव्यः। तथा हि — चैत्रस्य पाककृतिः इत्यत्र कृतिशब्दस्य भावनावाचित्वेऽपि स्त्रीलिङ्गान्वयित्वात् लिङ्गानन्वयिपदोपस्थाप्य-त्वाभावेन भावनायाः तदाश्रयतया चैत्रस्य कर्तृत्वोपपादनासंभवात् न चैत्रपदोत्तरं कर्तरि षष्ठी। अतः तत्र चैत्रपदात् संबन्धसामान्ये षष्ठ्येव वक्तव्या भवति। अध्याहृतास्तिक्रियायामेवान्वयः = षष्ठ्यर्थस्य संबन्धस्यान्वय इति भावः।

चैत्रेण कृत इति कर्मार्थककृत्प्रत्ययस्थलेऽपि कृधातोः पाकानुकूलव्यापारे लक्षणां स्वीकृत्य तदाश्रयत्वात् चैत्रस्य कर्तृत्वमुपपादनीयम्।

## विविधस्थलेषु उक्तकर्तृत्वोपपादनम्

एवं पाचयति चैत्रो मैत्रेण इत्यादावपि मैत्रस्य धातूक्तपाकानुकूलकृत्याश्रयत्वात् कर्तृत्वम्, चैत्रस्य त्वाख्यातोपात्तपाककृत्याश्रयत्वादेव। अत्र 'पाकं करायती'ति विवरणात्, कृत्यनुकूलव्यापारो णिजर्थ इति लक्षणसमन्वयः।

**कर्मलकारस्थले च फलस्य संसर्गविधयैव भानाङ्गीकारेण पदोपस्थाप्यत्वाभावान्न तदाश्रय ओदनेऽतिव्याप्तिः।'विक्लियन्ति तण्डुलाः' इत्यादावाख्यातेन धात्वर्थाश्रयत्वलक्षणात्, तद्वति तण्डुले नाव्याप्तिः। एवं 'स्थाली पचती'त्यादावपि धातुना स्थालीनिष्ठस्यैव व्यापारस्योक्तेर्न कर्तृत्वविघातः। कर्मकर्तृस्थले च फलस्यैवास्मिन्पक्षे आख्यातेन लक्षणान्नौदनस्य कर्तृत्वविघातः। ततश्च वस्तुपदाभिधेयभावनायाः चैत्रान्वयवारणार्थं लिङ्गानन्वयीति।**

---

एवं पाचयति चैत्रो मैत्रेण इत्यत्र पचधातोः पाकोऽर्थः। णिचः तदनुकूलकृतिरर्थः। तदाश्रयत्वात् मैत्रस्य कर्तृत्वम्। तादृशकृतेराख्यातेनानभिधानात् मैत्रपदोत्तरं तृतीया। णिजर्थकृत्यनुकूला कृतिः चैत्रनिष्ठा। सा तिप्रत्ययेन उच्यते इति तस्या अनभिधानाभावात् चैत्रपदोत्तरं तृतीया न भवति। मैत्रवृत्तेः कृतेः आख्यातेनानभिधानात् तत्प्रयुक्ता तृतीया मैत्रपदोत्तरं भवतीति भावः। एतादृशस्थले सूक्ष्मा दृष्टिः कर्तव्या। **धातूपात्तेति**। पचधातूपात्तो यः पाकः तदनुकूला णिजर्थभूता कृतिः तदाश्रयत्वात् मैत्रस्य कर्तृत्वमित्यर्थः। चैत्रस्य तु आख्यातोपात्तकृत्याश्रयत्वादेव, कर्तृत्वं, न धातूपात्तकृत्याश्रयत्वादिति भावः। अत्र णिचः कृत्यर्थकत्वमुपपादयति — **पाकं कारयतीति विवरणादिति**। कृ-धातुना णिजर्थविवरणादित्यर्थः। एवं च उक्तस्थले पचधातोः विक्लित्यनुकूलव्यापारोऽर्थः। णिचः तदनुकूलकृतिरूपव्यापारोऽर्थः। आख्यातस्य णिजर्थकृत्यनुकूलकृतिरर्थ इति विवेक्तव्यम्।

**कर्मलकारस्थले चेत्यादि**। पच्यते ओदन इत्यत्र कर्मलकारस्य विक्लित्तिरूपं फलमर्थः। तच्च पचधात्वर्थक्रियाजन्यम्, तदाश्रयत्वात् ओदनस्य कर्मत्वमिष्यते। परं तु भवदुक्तस्य धात्वर्थावच्छिन्नलिङ्गानन्वयिपदोपस्थाप्यार्थाश्रयत्वरूपस्य

कर्तृत्वस्यापि सत्त्वात् ओदनेनेति कर्तरि तृतीया स्यात् इति शङ्का भवति। तत्र समाधानमुच्यते — **कर्मलकारस्थले इति**। ओदनः पच्यते इत्यत्र फलं न आख्यातार्थः। अपि तु भावना। फलं च धात्वर्थस्य आख्यातार्थस्य च मध्ये संसर्गः। आख्यातोपात्तभावनायां ओदनस्य स्वनिष्ठविक्लित्तिजनकव्यापारानुकूलत्वसंबन्धेनान्वयः। तथा चात्र धात्वर्थावच्छिन्नफलं न प्रतीयते, अपि तु फलावच्छिन्नधात्वर्थ एवेति ओदनस्य न कर्तृत्वप्रसक्तिः। **संसर्गमर्यादयैवेति**। एवकारेण धात्वर्थत्वव्यवच्छेदः। तथा च कर्मणि लकारस्थले नैयायिकादिवत् फलमाख्यातार्थ इति खण्डदेवो नाङ्गीकरोतीति ध्येयम्।

"तण्डुलाः विक्लिद्यन्ति" इत्यत्र धातोः विक्लेदोऽर्थः। आख्यातस्य लक्षणया आश्रयत्वमर्थः। विक्लेदस्य निरूपितत्वसंबन्धेन आश्रयत्वेऽन्वयः। तण्डुलस्याधेयतासंबन्धेन आश्रयत्वेऽन्वयः। तण्डुलनिष्ठं विक्लेदनिरूपितमाश्रयत्वमिति बोधः। एवं च धात्वर्थावच्छिन्न (निरूपितत्वसंबन्धेन धात्वर्थविशिष्ट) आख्यातार्थाश्रयत्वाश्रयत्वं तण्डुलेष्वस्तीति तण्डुलानां पूर्वनिरुक्तं कर्तृत्वमस्तीति तात्पर्यम्।

एवं स्थाली पचतीत्यादौ स्थालीनिष्ठः तण्डुलमिश्रजलधारणादिरूपो व्यापारो धात्वर्थः। तदाश्रयत्वमाख्यातार्थः। तदाश्रयत्वात् स्थाल्याः कर्तृत्वम्। उक्तव्यापारनिरूपितमाश्रयत्वं स्थालीनिष्ठमिति शाब्दबोधः।

**कर्मकर्तृस्थले इति**। पच्यते ओदनः स्वयमेवेत्यत्र ओदनस्य कर्मणः कर्तृत्वं विवक्षितम्। अतः अत्र आख्यातस्य तेप्रत्ययस्य फलमेवार्थः। फले धात्वर्थस्य जन्यत्वसंबन्धेनान्वयः। धात्वर्थविशिष्टफलरूपाख्यातार्थाश्रयत्वात् ओदनस्य कर्तृत्वम्। आख्यातं च लिङ्गानन्वयि। फलमेवेत्येवकारेण आश्रयत्वरूपगौणभावनायाः व्यवच्छेदः। तथा च ओदनवृत्तिः पाकजन्या विक्लित्तिः इति बोधः।

पूर्वोक्तकर्तृत्वत्वलक्षणघटकस्य लिङ्गानन्वयि इति विशेषणस्य प्रयोजनमाह — **ततश्चेत्यादिना।** कश्चित् चैत्रः पचतीति वक्तव्ये "चैत्रः वस्तु" इति वदति। वस्तुपदेन पाकभावनां विवक्षति। तत्र चैत्रस्य आधेयतासंबन्धेन अन्वयेन चैत्रकर्तृका = चैत्रनिष्ठा पाकभावनेति बोधस्य संभवात् तद्वाक्यस्य प्रामाण्यापत्तिः। तद्वारणाय पूर्वोक्तकर्तृलक्षणे लिङ्गानन्वयिपदोपस्थाप्येति पदे विशेषणमिति भावः। तद्विशेषणे तु वस्तुपदस्य नपुंसकलिङ्गान्वयित्वान्न दोष इति भावः।

**चैत्रो न पचति, भूतले घटो नास्तीत्यादौ चैत्रवृत्तिपाकभावना, भूतलाधिकरणकघटसत्ताश्रयत्वञ्चाभावप्रतियोगीति शाब्दबोधाङ्गीकारान्न चैत्रादेः कर्तृत्वविघातः। अभावे चैत्रवृत्तित्वं समभिव्याहारात्, नञो वा चैत्रवृत्त्यभावलक्षणेति न विरोधः। 'वायौ रूपं नास्ति, जातौ समवायेन सत्ता नास्ति, ह्रदे वह्निर्नास्ती'त्यादौ चोक्तविधशाब्दबोधाङ्गीकारे प्रतियोगिप्रसिद्ध्यनापत्तेः, अगत्या रूपादिवृत्तितत्तत्सम्बन्धावच्छिन्नविद्यमानत्वाश्रयत्वं वाय्वादिनिष्ठाभावप्रतियोगीति शाब्दबोधाङ्गीकारान्न रूपादेः कर्तृत्वविघातः। प्रकारान्तरन्तु सप्तमीप्रकरणे वक्ष्यते।**

---

अथ चौत्रो न पचति इत्यादौ नञ्समभिवन्याहारस्थले चैत्रादेः कर्तृत्वमुपपादयति — **चैत्रो न पचतीति।** चैत्रो न पचतीत्यत्र धातोः पाकोऽर्थः। तस्यानुकूलत्वसंबन्धेन तिप्रत्ययार्थभावनायामन्वयः। चैत्रस्य आधेयतासंबन्धेन भावनायामन्वयः। नञर्थः अभावः। तस्य प्रतियोगित्वसंबन्धेन भावनायामन्वयः। तथा च चैत्रवृत्तिः पाकानुकूलभावना अभावप्रतियोगिनी इति शाब्दबोधः। अत्र भावनायां चैत्रकर्तृकत्वरूपचैत्रवृत्तित्वभाने सति तुल्यवित्तिवेद्यतया भावनाश्रयत्वरूपं भावनाकर्तृत्वं भासत इति चैत्रस्य कर्तृत्वमुपपद्यते इति भावः।

एवं भूतले घटो नास्तीत्यत्र सप्तम्याः अधिकरणत्वमर्थः. तत्र आधेयतासंबन्धेन भूतलस्यान्वयः। अधिकरणत्वस्य निरूपकतासंबन्धेन असधात्वर्थसत्तायामन्वयः। सत्तायाः निरूपितत्वसंबन्धेन आख्यातार्थाश्रयत्वेऽन्वयः। नञर्थस्याभावस्य प्रतियोगित्वसंबन्धेन आश्रयत्वेऽन्वयः। वर्तमानकालस्याभावे अन्वयः। तथा च भूतलाधिकरणकसत्ताश्रयत्वं वर्तमानाभावप्रतियोगीति शाब्दबोधः।

ननु सामान्यतः अभावप्रतियोगी इति बोधे किंनिष्ठाभावप्रतियोगीति जिज्ञासोदयात् निराकाङ्क्षबोधजनकत्वमुक्तवाक्यस्य न स्यादिति शङ्कायामह — **अभावे चैत्रवृत्तित्वं समभिव्याहारादिति**। चैत्रपदसमभिव्याहारात् चैत्रवृत्तित्वमभावे भासत इति भावः। एवं च चैत्रस्य द्विधाभानमिति भावः। अत्रेदमालोचनीयमस्ति — उद्देश्यविधेयभावस्थले ज्ञातमुद्देश्यम्, अज्ञातं विधेयमिति नियमात्, चैत्रवृत्तिपाकभावना पूर्वं ज्ञातव्या भवति। तादृशज्ञानेन पाकभावनायां चैत्रवृत्तित्वस्यावगतत्वात् तद्विरोधेन कथं अभावप्रतियोगित्वं ज्ञातुं शक्यते इति। वर्तमानकालस्याभावे अन्वयात् न दोष इति समाधानम्। **नञो वेति**। नञः अत्र चैत्रवृत्त्यभावे लक्षणेति। तथा च चैत्रस्य द्विधा भानम्।

नन्वेवमपि वायौ रूपं नास्तीत्यत्र कथं बोधः। न तावत् वाय्वधिकरणकरूपसत्ताश्रयत्वम् अभावप्रतियोगीति बोधः वक्तुं शक्यते। वाय्वधिकरणकरूपस्य अप्रसिद्धत्वात्। एवं जातौ सत्ता नास्तीत्यत्र जात्यधिकरणकसत्तायाः जातौ जात्यभावेन अप्रसिद्धतया कथं बोधः। एवमेव ह्रदे वह्निर्नास्तीत्यत्र ह्रदाधिकरणकवह्नेरप्यप्रसिद्ध्या तत्सत्ताया असिद्ध्या तत्राभावप्रतियोगित्वान्वयासंभवात् कथं बोधः इति शङ्कां समाधत्ते — **वायौ रूपमित्यादिना**। रूपमस्तीत्येतत् वायौ न इत्यन्वयः। रूपमस्तीत्यस्य रूपनिष्ठसमवायसंबन्धावच्छिन्नाधेयतानिरूपिताश्रयत्वं अर्थः, तत् वायुनिष्ठाभावप्रतियोगि इति बोधः। जातौ समवायेन सत्ता

नास्तीत्यस्य समवायसंबन्धावच्छिन्नसत्तानिरूपिताश्रयत्वं जातिनिष्ठाभावप्रतियोगि इत्यर्थः। ह्रदे वह्निर्नास्तीत्यस्य वह्निनिष्ठाधेयतानिरूपिताश्रयत्वं ह्रदनिष्ठाभावप्रतियोगीत्यर्थः।

एतदुक्तं भवति — "वायौ समवायेन रूपं नास्ति" इत्यत्र सप्तम्याः अधिकरणत्वमर्थः। तत्र वायोराधेयतासंबन्धेनान्वयः। अधिकरणतायाः निरूपकतासंबन्धेन नञर्थाभावेऽन्वयः। असधात्वर्थः विद्यमानत्वम्। तत्र तृतीयान्तार्थसमवायसंबन्धावच्छिन्नत्वस्यान्वयः। आख्यातार्थः आश्रयत्वम्। तत्र नञर्थाभावस्य प्रतियोगित्वसंबन्धेनान्वयः। रूपस्य आधेयतासंबन्धेन आख्यातार्थे आश्रयत्वेऽन्वयः। तथा च रूपनिष्ठं समवायसंबन्धावच्छिन्नविद्यमानत्वाश्रयत्वं वाय्वधिकरणकाभावप्रतियोगि इति बोधः। प्रतियोगितावच्छेदकसंबन्धः निरूपकत्वम्। रूपनिष्ठसमवायसंबन्धावच्छिन्नविद्यमानतायाः वायुनिरूपितत्वं नास्तीति फलितोऽर्थः।

जातौ समवायेन सत्ता नास्ति इत्यत्र सत्तानिष्ठसमवायसंबन्धावच्छिन्नविद्यमानत्वाश्रयत्वं जात्यधिकरणकाभावप्रतियोगि इति बोधः। अत्रापि प्रतियोगितावच्छेदकसंबन्धः निरूपकत्वम्। सत्तानिष्ठसमवायसंबन्धावच्छिन्नाधेयतानिरूपकत्वं जातौ नास्तीति फलितम्।

एवं ह्रदे वह्निर्नास्ति इत्यतः वह्निनिष्ठविद्यमानत्वाश्रयत्वं ह्रदनिष्ठाभावप्रतियोगि इति बोधः। प्रतियोगितावच्छेदकसंबन्धः निरूपकत्वम्। वह्निनिष्ठाधेयतानिरूपकत्वं ह्रदे नास्तीति फलितम्। अत्र सर्वत्र धात्वर्थसत्ताश्रयत्वात् रूपादेः कर्तृत्वमिति अवधेयम्।

## घटः पटो नेत्यत्र शाब्दबोधः

'घटः पटो ने'त्यादौ भवतिक्रियाध्याहारात्, घटपदेन च घटप्रतियोगिकान्योन्याभाववल्लक्षणात्, नञ्पदस्य च तात्पर्यग्राहकत्वात्, शुक्लो घटः अस्तीतिवत् षार्ष्ठिकान्वयलभ्याभेदमादायोभयोः क्रियान्वयात्, उभयोरपि कर्तृत्वोपपत्तिः।

वस्तुतस्तु 'घटो न पटौ' इत्यादौ विभिन्नसंख्याकत्वानुपपत्त्या नाभाववल्लक्षणा, अपित्वध्याहृतक्रियावाचकाख्यातेन प्रतियोगित्वाश्रयत्वयोरुभयोरपि लक्षणा, तयोश्च यथातात्पर्यं घटपटान्वयात् घटपटसम्बन्धिनी यथाक्रममन्योन्याभावीये विद्यमानत्वसम्बन्धिनी प्रतियोगित्वाश्रयत्वे इति च शाब्दबोधाङ्गीकारात्, उभयोः कर्तृत्वोपपत्तिः। परन्त्वनुयोगिवृत्तिसंख्यावचनमेवाख्याते, न तु प्रतियोगिवृत्तिसंख्यावचनमिति नियमोऽप्यनुभवानुसारेण प्रकृते कल्प्यते इति, नैतादृशोपि बोधः। अपि तु घटो भवति, पटौ न भवतः इति क्रियापदद्वयाध्याहारेणैकघटवृत्तिभवनाश्रयत्वम्, पटद्वयवृत्तिभवनाश्रयत्वप्रतियोगिकान्योभाववदित्येवं नञ्पदस्य तात्पर्यग्राहकत्वमङ्गीकृत्य द्वयोराख्यातयोः पश्य मृगो धावतीतिवत् स्वप्रतियोगिकान्योन्याभाववत्त्वसंसर्गेणान्वयः। मानसश्च भवनाश्रययोर्भेदबोधः। एवञ्च स्वस्वसंख्यान्वयः, कर्तृत्वञ्चोभयोरुपपन्नमिति ध्येयम्।

---

घटः पटो नेत्यादाविति। घटः पटो न इत्यत्र घटपदस्य घटभेदवति लक्षणा। नञ्पदं लक्षणातात्पर्यग्राहकम्। भवति इति क्रियापदमध्याहार्यम्। तत्र घटभेदवतः पटस्य चान्वयः। घटभेदवन्निष्ठं भवनाश्रयत्वं पटनिष्ठं भवनाश्रयत्वम् इति प्राथमिको बोधः। पश्चात् घटभेदवदभिन्नः पट इति मानसबोधः। ततश्च घटपटपदार्थयोः प्राथमिकं बोधमादाय धात्वर्थभवनाश्रयत्वरूपं कर्तृत्वं निर्वोढव्यमिति

भावः। तत्र दृष्टान्तः। शुक्लो घटोऽस्तीति। शुक्लपदार्थस्य घटपदार्थस्य च आदौ भावनायामन्वयात् कर्तृत्वम्। पश्चात् मानसोऽभेदान्वयबोधः। तद्वत् प्रकृतेऽपीति।

ननु "घटो न पटौ" इत्यत्र घटपदस्य घटभेदवति लक्षणायामपि भवतीति पदाध्याहारेण उभयोः कर्तृत्वमुपपादयितुं न शक्यते। उभयोः विभिन्नसंख्याकत्वात् इत्यत आह — **वस्तुतस्तु इति। नाभाववल्लक्षणेति।** घटपदस्य भेदवति न लक्षणेत्यर्थः। अपि तु घटो भवति, पटौ न भवतः इति क्रियाद्वयाध्याहारेण एकघटवृत्तिभवनाश्रयत्वम् घटद्वयवृत्तिभवनाश्रयत्वप्रतियोगिकान्योन्याभाववत् इति बोधः। नञ्पदस्य तात्पर्यग्राहकत्वमङ्गीकृत्य द्वयोः आख्यातयोः पश्य मृगो धावतीत्यत्रेव स्वप्रतियोगिकान्योन्याभाववत्त्वसंसर्गेणान्वयः। पश्चात् मानसो भवनाश्रययोर्भेदः। एवं च स्वस्वसंख्यान्वयः, कर्तृत्वं चोभयोरुपपन्नमिति। एतदुक्तं भवति — घटो भवति इति वाक्यात् एकघटवृत्तिभवनाश्रयत्वम् इति बोधः। पटौ न भवतः इति वाक्यात् पटद्वयवृत्ति यत् भवनाश्रयत्वं तद्भिन्नमित्यर्थः। अर्थात् पटद्वयवृत्तिभवनाश्रयत्वस्य स्वप्रतियोगिकान्योन्याभाववत्त्वसंबन्धेन एकघटवृत्तिभवनाश्रयत्वे अन्वयः। पश्य मृगो धावतीत्यत्रेव द्वयोरेकवाक्यत्वम्। एकवाक्यार्थस्यापरवाक्यार्थेऽन्वयात्। एवं च द्वयोः भवनाश्रयत्वयोः भेदबोधः शाब्द एव। भवनाश्रयरूपधर्मिणोः घटपटयोः भेदस्तु पार्ष्ठिको मानसः। एवं च स्वस्वसंख्यान्वयः कर्तृत्वं चोभयोरुपपन्नम् इति। **यथाक्रममिति।** अन्योन्याभावीयं प्रतियोगित्वम्, विद्यमानत्वसंबन्धि आश्रयत्वमिति अन्वय इति भावः। घटसंबन्धि पटप्रतियोगिकान्योन्याभावप्रतियोगित्वम् पटसंबन्धि विद्यमानत्वाश्रयत्वम् इति बोधात्। अत्र आश्रत्वरूपं कर्तृत्वम् घटपटयोरुभयोः निर्वहतीत्याशयः।

## सत्ता न समवायेन जातिवृत्तिरित्यत्र बोधप्रकारः

एवं 'सत्ता न समवायेन जातिवृत्तिरि'त्यादिप्रयोगा अपि लक्षणाध्याहारादिना व्याख्येयाः, अयोग्या वेत्यन्यत्र विस्तरः। अत्र चाश्रयत्वमेव तृतीयाप्रथमाति-बादीनामर्थः, अन्यत्तु सर्वं प्रमाणान्तरेण लभ्यमिति ध्येयम्।

---

एवं सत्ता न समवायेन जातिवृत्तिः इत्यत्र समवायसंबनधावच्छिन्नजाति-वृत्तित्वाप्रसिद्ध्या तदभावः न सत्तायां बोधयितुं शक्यः। अतः अत्र जातिपदस्य लक्षणया जातिनिरूपितत्वमर्थः। तस्य स्वाभाववत्त्वसंबन्धेन वृत्तिपदार्थे आधे-यत्वेऽन्वयः। नञ्पदमभाववत्त्वतात्पर्यग्राहकम्। आधेयत्वस्य सत्तायामन्वयः। जातिनिरूपितत्वाभाववत्समवायसंबन्धावच्छिन्नाधेयतावती सत्ता इति बोधः।

अत्र चेत्यादि। द्वितीयायाः अखण्डोपाधिरूपं कर्मत्वमर्थः तथा कर्तृतृतीयायाः आश्रयत्वमर्थः। तद्विशेषणीभूताः व्यापारादयः समभिव्याहृतधात्वादिपदलभ्याः। अनन्यलभ्यः शब्दार्थ इति न्यायादिति भावः।

## कर्तृत्वं कृत्याश्रयत्वमिति पक्षस्वीकारः

अथवा कृत्याश्रयत्वमेव मुख्यकर्तृत्वम्। यत्नवाचिकृञ्धातुघटितत्वात्कर्तृ-शब्दस्य, अन्यत्र कर्तृत्वव्यवहारो भाक्त एव द्रष्टव्यः।

वस्तुतस्तु — 'धर्मे चार्थे च कामे च नातिचरितव्या त्वयेयम्, (आप.गृ.सू 2.21)। पत्युर्नो यज्ञसंयोगे, (पा.सू 4.2.33) जायापती अग्नीनादधीयाताम्' इत्यादिप्रमाणान्तरानुरोधात् स्त्रिया अपि यजमानवदेव कर्तृत्वेऽवगते, 'वसन्ते ब्राह्मणोऽग्नीनादधीत, यजेत स्वर्गकामः' इत्यादौ एकत्वश्रवणं निषादस्थपत्यधि-करणन्यायेन लक्षणायां प्रमाणाभावात्, उभयोर्व्यासज्यवृत्तयेकं कर्तृत्वं गमयति।

**तच्च न सखण्डोपाधिरूपम्, बाधात्। अपि तु पूर्वोक्तसखण्डोपाधिव्यापकमखण्डोपाधिरूपं कर्तृत्वम्, तद्गतमेव चैकत्वादिकमित्युक्तं प्राक्। अस्मिंश्च पक्षे कर्मकर्तृस्थलेऽपि न लक्षणा, अपि त्वाख्यातलक्ष्यस्याखण्डोपाधिरूपस्य कर्तृत्वस्यैवाख्यातोपात्तकृतावेव स्वसमानाधिकरणफलप्रयोजकत्वसंसर्गेणान्वय इत्युक्तं कौस्तुभे। इदमेव च कर्तृत्वं तृतीयार्थः, 'तस्य च चैत्रेण पच्यते' इत्यत्र स्वनिरूपकपाकानुकूलत्वसंसर्गेण, निरूपकत्वेनैव वा लिङ्गानन्वयिभावनायामन्वयः। इदमेव च कात्यायनमते प्रथमार्थः, कर्त्राख्यातलक्ष्यम्, कृत्प्रत्ययशक्यतावच्छेदकं कृद्योगनिमित्तकषष्ठीबोध्यञ्च।**

---

अथवा यत्नाश्रयत्वमेव मुख्यं कर्तृत्वम्। कर्तृशब्दस्य यत्नवाचककृधातोः निष्पन्नत्वात्। कर्तृशब्दे कृञ्धातुः तृच्प्रत्ययश्च घटकोऽस्ति। अतः कृञ्धातुघटितत्वात् कर्तृशब्दस्येत्युक्तम्। अन्यत्र प्रयत्नशून्ये घटादौ कर्तृव्यवहारः कर्त्रर्थकशब्दप्रयोग) भाक्तः लाक्षणिकः। यथा घटो नश्यति इत्यादौ तिप्रत्ययः प्रतियोगित्वे लाक्षणिकः इति भावः।

एतावता तृतीयार्थभूतं आख्यातार्थभूतं च कर्तृत्वं मुख्यभाक्तसाधारणं निरुक्तम्। अथ अखण्डोपाधिरूपं कर्तृत्वमिति निरूपयति — **वस्तुतस्तु इत्यादिना।** "धर्मे चार्थे च नातिचरितव्या त्वयेयम्" इति आपस्तम्बगृह्यसूत्रम्। पत्नीमुद्दिश्येदं वाक्यम्। धर्मे अर्थे कामे च पत्या सह त्वया स्थेयम्, नातिक्रम्य कर्तव्यम्। अर्थात् धर्मार्थकामेषु पत्युः पत्न्याश्चोभयोः कर्तृत्वमिति भावः। "पत्युर्नो यज्ञसंयोगे" (पा.सू 4.1.33) इति पाणिनिसूत्रं पतिकर्तृके यज्ञे पत्न्याः संबन्धे सति पतिशब्दात् नकारे सति पत्नीशब्दो निष्पद्यते। अनेन पत्न्याः अपि यज्ञकर्तृत्वमवगम्यते। "जायापती अग्निमादधीयाताम्" इति वाक्येन पत्न्या अपि अग्न्याधान-

कर्तृत्वमवगम्यते। अत्र वस्तुतो यजमानः भर्ता करोति, पत्नी सह तिष्ठति। परं तु उभयवृत्तिकर्तृत्वे सत्येव एतदुपपद्यते। कर्तृशब्दस्य कृत्याश्रयार्थकत्वे कर्तृत्वं कृत्याश्रयत्वरूपं भवति। प्रयत्नरूपायाः कृतेः पतिनिष्ठायाः पत्नीनिष्ठायाश्च भेदात् उभयवृत्तित्वं नोपपद्यते। अतः अखण्डोपाधिरूपं कर्तृत्वं व्यासज्यवृत्ति — उभयवृत्ति इति सिध्यति।

अपि च "वसन्ते ब्राह्मणोऽग्नीनादधीत" "यजेत स्वर्गकामः" इत्यत्र पूर्वोक्त-प्रमाणवशात् पतिपत्न्योः आधानयज्ञादिकर्तृत्वेऽवगते द्विवचनेन भाव्यम्। एकवचनमेव श्रूयते। तेन व्यासज्यवृत्त्येककर्तृत्वस्वीकारे तादृशकर्तृत्वस्य एकत्वात् एकवचनं साधु भवति। अतः अखण्डोपाधिरूपं उभयवृत्तिकर्तृत्वं स्वीकरणीयमिति भावः। ननु एकवचनस्य द्वित्वे लक्षणां स्वीकृत्य उभयोः कर्तृत्वनिर्वाहात् अखण्डोपाधिरूपकर्तृत्वस्वीकारो मास्तु इति शङ्कायामाह — **निषादेति**। वेदे लक्षणास्वीकारे निषादस्थपत्यधिकरणविरोधो भवति। तथा हि — निषादश्चासौ स्थपतिश्च निषादस्थपतिरिति कर्मधारयो वा निषादस्य स्थपतिः निषादस्थपतिरिति तत्पुरुषसमासो वा इति संदिह्य तत्पुरुषसमासपक्षे निषाद-पदस्य निषादसंबन्धिनि लक्षणा भवतीति हेतोः कर्मधारयसमास एवेति सिद्धान्तितम्। अतो लक्षणा दोषः। अतः एकवचनस्य द्वित्वे लक्षणा न युक्ता। अखण्डोपाधिरूपं कर्तृत्वं स्वीकृत्य तदर्थकत्वमाख्यातस्य वाच्यम्। तस्यैकत्वात् एकवचनोपपत्तिरिति भावः। **अस्मिंश्च पक्षे इत्यादि**। कर्तृत्वमखण्डोपाधिरिति पक्षे कर्मकर्तृस्थले कर्मणः कर्तृत्वविवक्षास्थले — ओदनः पच्यते स्वयमेव इत्यत्र आख्यातस्य न फले लक्षणा। अपि तु कृतिरर्थः। आख्यातस्य अखण्डोपधि-रूपकर्तृत्वे लक्षणा। ओदननिष्ठं यत्कर्तृत्वं तस्य भावनायां स्वसमानाधिकरणफल-प्रयोजकत्वसंसर्गेणान्वयः। स्वं कर्तृत्वं तदधिकरणौदनवृत्तिफलं विक्लित्तिः

तत्प्रयोजिका पाकभावना पाकानुकूला कृतिः इति बोधः। इदमेव अखण्डोपाधि-रूपमेव कर्तृत्वं तृतीयाविभक्तेरर्थः। इदमेव कात्यायनमते प्रथमाविभक्त्यर्थः।। अभिहितकारकवाचिनी प्रथमेति कथनात्। चैत्रः पचति इत्यत्र चैत्रवृत्तिकर्तृत्वस्य प्रथमाविभक्त्यर्थस्य स्वनिरूपकपाकानुकूलत्वसंबन्धेन आख्यातार्थभावनायां (कृतौ) अन्वयः। चैत्रस्य पाक इत्यत्र षष्ठ्यर्थः कर्तृत्वम् — इत्यादि।

## करणत्वपरिष्करणम्

**करणत्वञ्च 'साधकतमं करणम्'** (पा.सू. 1.4.45) **इति सूत्रेण निरुक्तम्, तच्च कारकान्तरनिष्ठव्यापारद्वारा क्रियाहेतुत्वाभावे सति क्रियाहेतुत्वम्। सत्यन्तेन कर्तृ-कर्मणोः करणनिष्ठव्यापारद्वारा क्रियाहेतुत्वात्, अधिकरणकारकस्य 'गृहे स्थाल्या-मोदनं पचती'त्यादौ कर्तृकर्मान्यतरनिष्ठव्यापारद्वारा क्रियाहेतुत्वात्, संप्रदानस्य च स्वानुमतिद्वारककर्त्रिच्छोत्पादनद्वारा क्रियाहेतुत्वात्, अपादानस्यापि पतनप्रति-बन्धकसंयोगनाशकविभागद्वारा पतनहेतुत्वादतिव्याप्तिवारणम्। चरमकारणस्यैव लक्ष्यत्वेन कुठारादेरपि कर्त्रादिनिष्ठव्यापारद्वारा क्रियाहेतुत्वान्नाऽव्याप्तिरिति सर्वदर्शनानुयायिनः प्राञ्चः।**

---

करणेऽर्थेऽपि "कर्तृकरणयोस्तृतीया" (पा.सू. 2.3.18) इति सूत्रेण तृतीया विहिता। तत्र करणत्वं निर्वक्ति — **करणत्वं चेत्यादिना।** "साधकतमं करणम्" (पा.सू 1.4.42) इति सूत्रम्। साधकतमत्वं च कारकान्तरनिष्ठव्यापारद्वारा क्रिया-हेतुत्वाभावे सति क्रियाहेतुत्वम्। करणकारकातिरिक्तकारकनिष्ठो यो व्यापारः तद्द्वारा क्रियाहेतुत्वाभावे सति क्रियाहेतुत्वं यस्य वर्तते तत्करणमित्यर्थः। यथा चैत्रः कुठारेण काष्ठं छिनत्ति इत्यत्र कुठारः न स्वयं छेदनं करोति। अपि तु कर्तुः

चैत्रस्य उद्यमननिपातनरूपव्यापारद्वारा छेदनक्रियां जनयति। अतः कुठारस्य करणत्वम्। सत्यन्तम् अनुपादाय क्रियाहेतुत्वं करणत्वमित्येतावति उच्यमाने कर्तुः चैत्रस्यापि क्रियाहेतुत्वात् करणत्वापत्तिः। एवं कर्मणः काष्ठस्यापि क्रियाहेतुत्वमस्त्येव। काष्ठस्य अभावे छेदनं कथं स्यात्। अतः कर्तृकर्मणोः अतिव्याप्तिवारणाय सत्यन्तम्। चैत्रस्य काष्ठव्यापारद्वारैव हेतुत्वात् नातिव्याप्तिः। काष्ठस्यापि न साक्षात् छेदनहेतुत्वमिति नातिव्याप्तिः। **करणनिष्ठव्यापारद्वारा** = करणभूतकुठारनिष्ठोद्यमनादिक्रियाद्वारा। एवमेव "गृहे स्थाल्याम् ओदनं पचति" इत्यत्र अधिकरणकारकस्य गृहस्य कर्तृकर्मद्वारैव पाकक्रियाहेतुत्वात् नातिव्याप्तिः। एवमेव "विप्राय गां ददाति" इत्यत्र संप्रदानस्य विप्रस्य स्वानुमतिद्वारा कर्तुः इच्छोत्पादनद्वारा दानक्रियाहेतुत्वात् न करणत्वापत्तिः। वृक्षात् पर्णं पततीत्यत्र अपादानस्य वृक्षस्य पर्णपतनप्रतिबन्धकः यः संयोगः तन्नाशकविभागद्वारा पतनक्रियाहेतुत्वात् कारकान्तरव्यापारानधीनव्यापाराश्रयत्वाभावात् न करणलक्षणापत्तिः। इदं च करणलक्षणं मीमांसेतरसर्वदर्शनकारणामभिमतम्।।

## नव्यवैयाकरणैरुक्तकरणलक्षणनिरासः

**तन्न। 'कुठारेण छिनत्ती'त्यादिप्रयोगाणां भाक्तत्वे प्रमाणाभावात्। अतो यद्व्यापाराव्यवहितोत्तरं यत्क्रियानिष्पत्तिर्विवक्ष्यते, तत् तत्क्रियाकरणम्। अधिकरणादिव्यापारानन्तरमेव यदा पच्यादिक्रियानिष्पत्तिर्विवक्षिता, तदा तेषामपि करणत्वमिष्टमेव। पचिधातोश्च तदा तत्क्रियैव विवक्षिता। अत एव 'गवा दानं सम्पादयति, ब्राह्मणेन दानं साधयति, स्थाल्या पचती'त्यादयः प्रयोगा अपि सङ्गच्छन्त इति वैयाकरणनव्याः।**

उक्तं करणस्य लक्षणं न युक्तम्। करणकारके कुठारेण काष्ठं छिनत्ति इत्यत्र कुठारेऽव्याप्तेः। तथाहि कुठारो हि चैत्रादिरूपो यः कर्ता तन्निष्ठव्यापारद्वारैव छेदनं करोति। अतः कारकान्तरगतव्यापारानधीनव्यापारवत्वरूपं भवदुक्तं करणलक्षणं नास्तीत्यव्याप्तिः भाक्तोऽयं प्रयोग इत्यत्र तु प्रमाणं नास्तीति भावः।

## तन्निरासेन व्यापारवत्कारणं करणमिति पक्षः

**तदपि न । 'औषधभोजनेन परम्परया क्रमेण पुष्टिं सम्पादये'त्यादिप्रयोगाणां भाक्तत्वे प्रमाणाभावात्। अतो व्यापारवदसाधारणकारणत्वं करणत्वम्। कर्त्रादीनाञ्च करणत्वेऽपि न क्षतिः, उपाधिसाङ्कर्यस्यादोषत्वात्। विवक्षातश्च कारकविभक्तयः इत्यप्यन्ये।**

---

अत्र नव्यवैयाकरणानां मतमनुवदति — **अत इति।** यद्गतव्यापाराव्यवहितोत्तरकाले यस्याः क्रियायाः निष्पत्तिः वक्तुमिष्यते, तत् तस्याः क्रियायाः करणम्। कुठारेण काष्ठं छिनत्ति इत्यत्र कुठारनिष्ठव्यापराव्यवहितोत्तरक्षणे छेदनक्रियायाः निष्पत्तिः विवक्षितेति कुठारः छेदनस्य करणं भवति। स्थाल्या पचतीत्यत्र अधिकरणभूतस्थालीनिष्ठव्यापारानन्तरं पाकक्रियायाः निष्पत्तिर्विवक्षिता अतः स्थाल्याः करणत्वम्। पचधातुना तदा स्थालीनिष्ठक्रियैव विवक्षिता। एवं संमदानस्थलेऽपि ब्राह्मणाय गां ददाति इत्यत्र गवा दानं संपादयतीति विवक्षायां गोः कर्मणः करणत्वम्। ब्राह्मणेन दानं साधयति इति विवक्षायां ब्राह्मणस्य करणत्वम्। तदुक्तं वाक्यपदीये –

क्रियायाः परिनिष्पत्तिः यद्व्यापारादनन्तरम्।
विवक्ष्यते यदा यत्र करणं तत् तदा स्मृतम्।

यत्र येषां कारकाणां मध्ये। विवक्ष्यत इत्यनेन स्थाल्यादीनामपि वैवक्षिकं करणत्वमस्तीति ध्वनयति। आह च —

वस्तुतस्तदनिर्देश्यं न हि वस्तु व्यवस्थितम्।
स्थाल्या पच्यत इत्येषा व्यवस्था दृश्यते यतः।इति ।

वस्तुतः वस्तुनि। तत् कर्तृत्वादिकम्। अनिर्देश्यम् इदं वस्तु कर्तैवेत्यादिक्रमेण न निर्देष्टुं शक्यम्। हि यतः, वस्तु तत्तद्रूपेण न व्यवस्थितम्। तामेवाव्यवस्थां दर्शयति — **स्थाल्येत्यादिना**।

अयं भावः = कारकत्वं तद्व्याप्यं कर्तृत्वादिषट्कं च, यथा वस्तुविशेषे विशेष्यविशेषणभावो न व्यवस्थितः, तथा न व्यवस्थितम्। न हि गौः सर्वं प्रति गौरेव न तु कंचित् प्रत्यगौः इतिवत् विशेषणं विशेषणमेवेति वक्तुं शक्यम्। खञ्जकुब्जादौ अव्यवस्थायाः दर्शनात्। तण्डुलानोदनं पचतीत्यादौ करणत्वविवक्षया अकथितकर्मकारकस्यापि तण्डुलस्य "तण्डुलानामोदनं पचति" इत्यत्र ओदनपदार्थे अन्वयेन तण्डुलपदस्य षष्ठ्यन्तत्वदर्शनात्।

तथा च कयाचित् धातुव्यक्त्या उपस्थापितेऽर्थे किं कर्त्रादिकमिति प्रश्ने प्रकृतधातुव्यक्त्युपस्थितव्यापाराश्रयतया विवक्षितः कर्ता। तादृशव्यापारव्यधिकरणफलाश्रयः कर्म। कर्तृकर्मद्वारकसंबन्धेन तादृशव्यापाराश्रयोऽधिकरणम्। पच्यर्थव्यापारश्चानेकविधः। एवं च पचधातोः अधिश्रयणतण्डुलावपनैधोऽपकर्षणादितात्पर्यकत्वे तदाश्रयो देवदत्तः कर्ता।

ज्वलनतात्पर्यकत्वे काष्ठानि कर्तॄणि। तण्डुलधारणादिपरत्वे स्थाली कर्त्री। अवयवविभागादिपरत्वे तण्डुलाः कर्तारः। "स्थाल्या पचति" इत्यत्र तृतीयोपात्तव्यापराश्रयापि स्थाली करणमेव, न तु कर्त्री। देवदत्तादिव्यापारस्यैव तद्धातूपात्तत्वात्। इति।

उक्तं वैयाकरणमतं निरस्यति — **तदपि नेति।** "औषधभोजनेन क्रमेण पुष्टिं संपादयेत्" इत्यत्र क्रमेणेति प्रयोगात् औषधभोजनानन्तरं मध्ये केचन व्यापाराः सन्ति, तदनन्तरं पुष्टिर्भवतीत्यवगम्यते। यद्व्यापाराव्यवहितोत्तरमेव यत्क्रिया-निष्पत्तिः तस्यैव करणत्वमित्युक्ते उक्तस्थले औषधभोजनस्य करणत्वं न स्यात्। अतोऽत्र लाक्षणिकः प्रयोग इति वक्तव्यम्। तच्च न युज्यते, लाक्षणिकत्वे प्रमाणाभावादिति। अन्ये तु व्यापारवदसाधारणं कारणं करणमिति वदन्ति। यथा दण्डादेः चक्रभ्रमणादिद्वारा घटकारणत्वात् करणत्वम्। असाधारणकारणत्वं नाम कार्यत्वव्याप्यधर्मावच्छिन्नकार्यतानिरूपितकारणत्वम्। कार्यत्वावच्छिन्नकार्यता-निरूपितकारणत्वं साधारणकारणत्वमित्याहुः। नन्वेवं सति सर्वेषामपि कर्त्रादि-कारकाणां स्वस्वव्यापारद्वारा क्रियाहेतुत्वात् करणत्वापत्तिरित्यत्राह — **कर्त्रादीनां चेति।** इष्टापत्तिरिति समाधानम्। कर्तृत्वकरणत्वादीनां उपाधित्वाङ्गीकारेण उपाधिसांकर्यस्यादोषत्वादिति भावः। सांकर्यं नाम परस्परात्यन्ताभावसमा-नाधिकरणधर्माणामेकत्र समावेशः। ननु सर्वेषां कारकाणामेकत्र समावेशाङ्गीकारे तत्तत्कारकविभक्तीनामपि एकदा प्रयोगः स्यात् इत्याशङ्क्य विवक्षातः कारकाणि भवन्तीत्यभियुक्तोक्तेः एकदा सर्वा विभक्त्यो न प्रसजन्तीति समाधत्ते — **विवक्षातश्चेति।**

**एतन्मतखण्डनम्, स्वमतप्रकाशनञ्च**

**तदपि न। 'भ्रम्या घटं करोति, पुण्येन स्वर्गं भुङ्क्ते' इत्यादिप्रयोगाणां भाक्तत्वे प्रमाणाभावात्। अतः करणत्वम्-करणं करणमित्याद्यनुगतप्रतीत्या अखण्डोपाधि-रूपमेव कारणत्वादिवत्। तदेव च तृतीयार्थः। तस्य च कर्त्रादावतिप्रसङ्गनिरासः**

**पूर्ववत्। तस्य च स्वनिरूपकधात्वर्थावच्छिन्नत्वसंसर्गेण भावनान्वयः। पूर्ववदेव एककार्यकारणभावकल्पने लाघवात्। प्रकृत्यर्थान्वयस्त्वाधेततया तत्र बोध्यः।**

---

तन्मतं दूषयति — **तदपि नेति**। चक्रभ्रमणस्य घटकरणत्वविवक्षया **भ्रम्या** = भ्रमणेन घटं करोतीति प्रयोगोऽस्ति। तस्य व्यापारस्य व्यापारवत्त्वाभावात् करणत्वं न स्यात् इति पूर्वोक्तं करणलक्षणं न युक्तमिति भावः। एवं यागः पुण्यरूपव्यापारद्वारा स्वर्गकरणं भवति। तत्र पुण्यस्य करणत्वविवक्षया पुण्येन सर्गं भुङ्क्ते इति प्रयोग इष्यते। तच्च न स्यात्, पुण्यस्य व्यापारवत्त्वाभावात् इति भावः। न चात्र सर्वत्र तृतीयायाः हेतुत्वे लक्षणा। न करणत्वे तृतीयेति वाच्यम्। लाक्षणिकत्वे प्रमाणाभावात् इति भावः।

अथ स्वमतेन करणत्वं निर्वक्ति — **अतः करणत्वमिति**। करणत्वं नाम इदं करणम् इदं करणम् इति अनुगतप्रतीतिसिद्धः कारकान्तरनिष्ठव्यापारद्वारा क्रियाहेतुत्वाभावे सति क्रियाहेतुत्वसमनियतः कश्चन जातितुल्यः अखण्डो धर्मः। सः तृतीयाविभक्त्यर्थः। तस्य स्वनिरूपको यो धात्वर्थः तदनुकूलत्वसंबन्धेन भावनायामन्वयः। चैत्रेण पच्यते इति वाक्यात् चैत्रवृत्तिकरणत्वनिरूपकपाकानुकूला भावनेति बोध इति भावः। प्रकृत्यर्थस्य चैत्रस्य तृतीयार्थे करणत्वे आधेयत्वसंबन्धेनान्वयः।

## नव्यतार्किकरीत्या तृतीयार्थविचारः, तत्खण्डनञ्च

**नवीनतार्किकास्तु — प्रकृत्यर्थनिरूपितजन्यत्वमेव तृतीयार्थः, तस्य चाश्रयतया** धात्वर्थान्वयः — इत्याहुः।

**तन्न। अनुशासनबाधे प्रमाणाभावात्। न च 'परशुना छिनत्ति, न दात्रेण' इत्यादौ दात्रजन्यत्वाभावस्य क्रियायां बोधानापत्तिः, निरूपकतासम्बन्धेन परशुनिष्ठ-करणत्वस्य निरूपकतासम्बन्धावच्छिन्नप्रतियोगिताकदात्रनिष्ठकरणत्वाभावस्य च क्रियायां बोधेनार्थाज्जन्यत्वाभावबोधोपपत्तेः। अतः प्रचुरप्रयोगाविशेषात् कर्तृत्व-करणत्वयोरुभयोरपि तृतीयायाः शक्तिः। योग्यतादिरूपतात्पर्यग्राहकानुरोधेन च विशेषनिर्णयः।**

---

**नव्यतार्किकास्तु** — चैत्रेण पच्यते तण्डुलः इत्यत्र तृतीयायाः जन्यत्वं अर्थः। तत्र प्रकृत्यर्थस्य चैत्रस्य निरूपितत्वसंबन्धेनान्वयः। जन्यत्वस्याश्रयत्वसंबन्धेन धात्वर्थव्यापारेऽन्वयः। व्यापारस्य आख्यातार्थकर्मत्वेऽन्वयः। तस्य तण्डुले प्रथमान्तार्थेऽन्वयः। तथा च चैत्रनिरूपितजन्यत्वाश्रयपाकनिरूपितकर्मत्ववान् तण्डुल इति बोध इत्याहुः।

तन्मतं खण्डयति — **तन्नेति**। "कर्तृकरणयोस्तृतीया" इति सूत्रेण करणत्वस्यैव तृतीयार्थत्वकथनात् जन्यत्वस्य तृतीयार्थत्वे सूत्रविरोधः। सूत्रविरुद्धार्थकथने प्रमाणाभावात्। ननु परशुना छिनसि इत्यत्र जन्यत्वस्य तृतीयार्थत्वे छेदने परशुजन्यत्वसत्त्वात् परशुजन्यं छेदनम् इति बोध उपपन्नो भवति। करणत्वस्य तृतीयार्थत्वे कथमन्वयबोधोपपत्तिरिति चेन्न। करणत्वस्य तृतीयार्थत्वेऽपि तस्य निरूपकतासंबन्धेन छेदनेऽन्वयात् परशुनिष्ठकरणतानिरूपकं छेदनमिति बोधे जाते करणतानिरूपकत्वस्य जन्यत्वरूपत्वात् परशुजन्यत्वं छेदने लभ्यते एव। न चैवमपि दात्रेण न छिनत्ति इत्यत्र प्रतियोग्यभावान्वयौ तुल्ययोगक्षेमौ इति न्यायेन निरूपकतासंबन्धावच्छिन्नदारुनिष्ठकरणत्वनिष्ठप्रतियोगिताकाभाववत् छेदनमिति बोधो वक्तव्यः। स च न संभवति। निरूपकत्वस्य वृत्त्यनियामकतया प्रति-

योगितावच्छेदकसंबन्धत्वायोगादिति वाच्यम्। वृत्त्यनियामकसंबन्धस्याभावप्रतियोगितानवच्छेदकत्वे मानाभावात् इत्याशयात्। परशुनिष्ठकरणत्वस्येत्यस्य क्रियायां बोधेनेत्यनेनान्वयः। करणत्वाभावस्येत्यस्यापि क्रियायां बोधेनेत्यनेनान्वयः। **अर्थात् इति**। अर्थापत्तिप्रमाणेनेत्यर्थः। तन्निष्ठकरणत्वनिरूपकत्वस्य तज्जन्यत्वं विनानुपपत्तेरिति भावः। ततश्च कर्तृत्वे करणत्वे चार्थे तृतीयायाः प्रचुरप्रयोगात् उभयत्र शक्तिः। **योग्यतादिरूपेति**। करणत्वं किंनिरूपितमिति जिज्ञासायां समभिव्याहृतधात्वर्थे करणत्वान्वययोग्यता वर्तते तादृशधात्वर्थनिरूपितं करणत्वमिति निर्णय इति भावः। अस्मिन्नर्थे अस्य वाक्यस्य तात्पर्यमिति तात्पर्यनिर्णयः योग्यताकाङ्क्षादिवशाद् इत्याह — **योग्यतादिरूपेति**।

## लाक्षणिकतृतीयाप्रयोगेषु बोधप्रकारः

**एवं द्वितीयावदेव तृतीयाया अप्यनुशासनानुरोधेन लाक्षणिकार्था अनुसन्धेयाः। तथाहि 'प्रकृत्यादिभ्य उपसंख्यानम्' (वा. 1466) इति वार्तिकात् 'प्रकृत्या चारुः प्रायेण याज्ञिकः, गोत्रेण गार्ग्यः समेनैति, द्विद्रोणेन धान्यं क्रीणाति, सुखेन याती'त्यादौ करणत्वातिरिक्तार्थान्तरलक्षणा। प्रकृतिपदेन हि स्वाभाविकी सामग्री उच्यते, तज्जन्यचारुत्ववानित्यर्थः।**

**न चैवं कारणत्वस्यैव तृतीयार्थत्वात्पृथगनुशासनवैयर्थ्यम्, जन्यत्वस्य तत्त्वेन तृतीयार्थत्वमङ्गीकृत्य तत्सार्थक्यात्। अत एव तृतीयार्थस्य जन्यत्वस्य स्वाश्रयचारुत्वाश्रयवृत्तित्वसम्बन्धेनाक्षिप्तक्रियायामन्वयः, प्रायश्शब्दस्यावच्छेदकावच्छिन्नत्वराहित्यविशिष्टबाहुल्यमर्थः। तृतीयाया अवच्छिन्नत्वमर्थः, तथा च किञ्चिन्न्यूनबाहुल्यावच्छिन्नयज्ञविद्यासम्बन्धवानित्यर्थः। एवं गोत्रशाब्दस्य सम्बन्धविशेषवाचित्वेऽपि गोत्रत्वपरत्वमङ्गीकृत्य गोत्रत्वावच्छिन्नगर्गसम्बन्धवानित्यर्थः। तृती-**

**याया वा अभेदार्थकत्वमङ्गीकृत्य गोत्राभिन्नसम्बन्धवानित्यर्थः। अस्मिंश्च पक्षे गोत्रत्वं तृतीयार्थः, अवच्छिन्नत्वं संसर्गः गोत्रवृत्तिगोत्रत्वावच्छिन्नसम्बन्धवानित्यर्थः। अनयैव च रीत्या 'समवायेन रूपवानि'त्यादिप्रयोगा उपपादनीयाः।**

---

अथ तृतीयायाः लाक्षणिकार्थबोधकान्यनुशासनानि प्रदर्शयन् तत्र तत्र शाब्दबोधप्रकारमाह — **एवमित्यादिना।** प्रकृत्यादिभ्य उपसंख्यानम् इति वार्तिकेन प्रकृत्यादिगणपठितेभ्यः शब्देभ्यः तृतीया अनुशिष्टा। प्रकृत्या चारुः इत्यत्र प्रकृतिशब्दस्य स्वाभाविकी सामग्र्यर्थः। तदुत्तरतृतीयायाः जन्यत्वमर्थः। तस्य चारुपदार्थैकदेशे चारुत्वेऽन्वयः। तथा च स्वाभाविकसामग्रीजन्यचारुत्ववानिति बोधः। तत्र शङ्कते — **न चैवमिति।** प्रकृत्या चारुरित्यत्रापि करणत्वे एव तृतीयास्तु। किं वार्तिकेनेति शङ्का। ईदृशस्थले जन्यत्वत्वेन जन्यत्वं तृतीयार्थः विवक्षितः, न तु करणतानिरूपकत्वेनेति बोधनाय वार्तिकमिति समाधानम्।। तथा च तृतीयार्थस्य जन्यत्वस्य स्वाश्रयचारुत्वाश्रयवृत्तित्वसंबन्धेन अध्याहृतास्तिक्रियायामन्वयः। स्वाश्रयचारुत्वाश्रयवृत्तिः सत्ता इति बोधः। स्वं जन्यत्वं = स्वभावजन्यत्वम् तदाश्रयः चारुत्वं तदाश्रयः चैत्रादिः तद्वृत्तिः सत्ताश्रयत्वमिति बोधः इति भावः।

प्रायेण याज्ञिक इत्यत्र प्रायशब्दस्य अवच्छेदकावच्छिन्नत्वराहित्यविशिष्टबाहुल्यमर्थः। अवच्छेदकावच्छिन्नत्वराहित्यं नाम किंचिन्न्यूनत्वम्। याज्ञिक इत्यस्य यज्ञविद्यासंबन्धवानित्यर्थः। संबन्धे बाहुल्यस्य आश्रयतया अन्वयः। तथा च किंचिन्न्यूनबहुत्वविशिष्टयज्ञविद्यासंबन्धवान् — अथवा तादृशसंबन्धवद्वृत्ति सत्ताश्रयत्वमिति बोधः।

एवं गोत्रशब्दस्येति। गोत्रेण गार्ग्यः इत्यत्र गोत्रशब्दस्य गोत्रत्व (पौत्रत्वादि) रूपसंबन्धविशेषोऽर्थः। "अपत्यं पौत्रप्रभृति गोत्रम्" इति सूत्रात्। तृतीयायाः अवच्छिन्नत्वमर्थः। गोत्रत्वावच्छिन्नो यो गर्गसंबन्धः तद्वानिति बोधः।

अथवा गोत्रशब्दो गोत्रपरः। गार्ग्य इति तद्धितान्तस्य गर्गसंबन्धोऽर्थः। तृतीयायाः अभेदोऽर्थः। तस्य तद्धितार्थसंबन्धेऽन्वयः। तथा च गोत्राभिन्नः यः गर्गसंबन्धः तद्वान् इति गोत्रेण गार्ग्य इति वाक्यात् बोधः। गोत्राभेदो नाम गोत्रभेदाभावः स च गोत्रत्वमेव। भेदाभावस्य भेदप्रतियोगितावच्छेदकधर्म-रूपत्वात्। ततश्च गोत्रत्वरूपो यो गर्गसंबन्धः तद्वानिति बोधो भवति। गोत्रत्वं तृतीयार्थ इत्यस्यापि गोत्राभेदः तृतीयार्थ इत्येवार्थः। पूर्वस्मिन् पक्षे गोत्रत्वं गोत्रशब्दार्थः। अवच्छिन्नत्वं तृतीयार्थः। अस्मिन् पक्षे गोत्रत्वं तृतीयार्थः। अवच्छिन्नत्वं संसर्गः। सूक्ष्मतया अवधेयम्। तृतीयाया वा अभेदार्थकत्वमङ्गीकृत्य इति पूर्ववाक्यम्। अस्मिंश्च पक्षे गोत्रत्वं तृतीयार्थः इति पश्चात् वाक्यम्। अन-योरेकाभिप्रायकत्वं वक्तव्यम्। अतः अभेदः गोत्वम् इत्यनयोः भेद इति न भ्रमितव्यम्। पूर्ववाक्यविरोधात्।

एवं घटः समवायेन रूपवान् इत्यत्र समवायत्वं समवायपदार्थः। अवच्छिन्नत्वं तृतीयार्थः। अस्य मतुबर्थसंबन्धेऽन्वयः। समवायत्वावच्छिन्नो यो रूपसंबन्धः रूपसमवायः तद्वान् इति बोधः। अथ वा समवायपदस्य समवाय एवार्थः। अभेदः तृतीयार्थः स च समवायभेदाभावः समवायत्वरूपः। तस्यावच्छिन्नत्वसंबन्धेन मतुबर्थसंबन्धेऽन्वयः। तथा च समवायवृत्तिसमवायत्वावच्छिन्नः यः रूपसंबन्धः तद्वानिति बोधः।

## धान्येन धनवानित्यत्र बोधः

**धान्येन धनी इत्यादौ तु तृतीयार्थाभेदेन धान्यस्य धनेऽन्वय इति विशेषः। धनसम्बन्धं प्रति धान्यस्य करणत्वादेव वा तृतीयेति कौस्तुभे स्पष्टम्। समेनेत्यत्रावच्छिन्नत्वं तृतीयार्थः, समदेशावच्छिन्ना गमनभावनेत्यर्थः। द्वयोः द्रोणयोस्समाहारो द्विद्रोणम्, पात्रादित्वात्स्त्रीत्वाभावः। परिमितत्वं तृतीयार्थः। द्रोणद्वयपरिमितं धान्यं क्रीणातीत्यर्थः। करणत्वेनाप्यन्वयसम्भवेऽपि परिमितत्वेन बोधार्थं पृथगनुशासनम्, 'सुखेन याती'त्यादौ सुखपदं दुःखाभावपरम्, तृतीयार्थश्च प्रयोजकत्वम्, तच्च प्रतियोग्यनुत्पादकत्वरूपम्, तथा च दुःखाजनकं यानमित्यर्थः।**

---

"धान्येन धनी" इत्यत्र धान्यपदोत्तरतृतीयायाः अभेदः अर्थः। अभेदो नाम भेदाभावः धान्यत्वरूपः। तस्य धनेऽन्वयः। धान्याभिन्नं यत् धनं तद्वान् इति बोधः। अथ वा अत्र करणत्वार्थिका तृतीया। धनसंबन्धं प्रति धान्यस्य करणत्वविवक्षणात्। करणत्वस्य निरूपकत्वसंबन्धेन इन्प्रत्ययार्थसंबन्धेऽन्वयः। धान्यकरणकधनसंबन्धवान् इति बोधः।

समेन याति इत्यत्र समशब्दस्य समदेशः नीचोच्चभावरहितप्रदेशोऽर्थः। तृतीयायाः अवच्छिन्नत्वमर्थः। तस्य धात्वर्थगमनद्वारा भावनायामन्वयः। समप्रदेशावच्छिन्नगमनभावनेति बोधः।

"द्विद्रोणेन धान्यं क्रीणाति" इत्यत्र तृतीयायाः परिमितत्वमर्थः। तस्य धान्येऽन्वयः। द्रोणद्वयपरिमितं धान्यं क्रीणातीत्यर्थः। द्वयोर्द्रोणयोः समाहारो द्विद्रोणमिति समाहारद्विगुसमासः। "द्विगोः" इति सूत्रेण ङीपि प्राप्ते "पात्रादिषु प्रतिषेधः" इति वार्तिकेन निषेधात् ङीप् न भवति। अत्र करणत्वेनापि द्विद्रोणस्य क्रयणेऽन्वयः संभवति, तथापि परिमितत्वबोधार्थं पृथगनुशासनम् इत्याह।

"सुखेन याति" इत्यत्र सुखपदं दुःखाभावपरम्। तृतीयायाः प्रयोजकत्वमर्थः। प्रयोजकत्वं च प्रतियोग्यनुत्पादकत्वम्। दुःखाभावस्य प्रतियोगि दुःखं तदनुत्पादकत्वम् इति यावत्। तस्य धात्वर्थे गमनेऽन्वयः। तथा च दुःखाभावप्रतियोगिनः दुःखस्य अनुत्पादकं गमनमिति बोधः।

## दिवः कर्म च (पा.सू 1.4.43) इति सूत्रार्थः

एवं 'दिवः कर्म च' (पा.सू 1.4.43) इति सूत्रेण दिव्धात्वर्थस्य साधकतमं कर्मसंज्ञं स्यात्, लक्ष्यानुरोधेन स्वरितत्वानुगतेः, पूर्वसूत्रस्थकरणशब्दानुवृत्त्या करणसंज्ञञ्चेत्यर्थकेन साधकतमस्यैव संज्ञाद्वयकरणात्। 'अक्षैः, अक्षान् वा दीव्यतीति प्रयोगद्वयम्। अत्र पणपूर्वकाक्षसाध्यक्रियाया धात्वर्थत्वात्, तत्राक्षाणां मुख्यमेव करणत्वम्। तत्र च द्वितीया लाक्षणिकी। न च करणसंज्ञाया देवना अक्षा इत्यत्र ल्युटि सावकाशत्वात् दीव्यतीत्यत्र कर्त्राख्याते संज्ञाद्वयप्रयुक्तकार्यप्रसङ्गे संज्ञागतपरत्वाद् द्वितीयाया एवापत्तौ, तृतीयान्तस्य प्रयोगस्य कथं साधुत्वम्, विभक्तिगतपरत्वाद्वा वैपरीत्यमिति वाच्यम्। संज्ञाद्वयविधानबलादेव व्यवस्थितकार्यसिद्धौ चशब्देनैकत्र संज्ञाद्वयप्रयुक्तकार्यद्वयविधानप्रतीत्या तत्सिद्धेः। अत एव चशब्दाभावेऽपि 'मनसा देवः' इत्यादौ करणसंज्ञया तृतीयायाः, कर्मसंज्ञया च कर्मोपपदत्वलाभेन देव इत्यणप्रत्ययस्यापि सिद्धिरविकला। अतश्चशब्दस्य द्वितीयासिद्धिरेव प्रयोजनम्। न च तथापि 'दीव्यन्तेऽक्षाः' इत्यत्र कर्मत्वाभिधानेऽपि करणत्वस्यानभिधाने तृतीयापत्तिः। 'देवना अक्षा'इत्यत्र च करणत्वस्य ल्युटा अभिधानेऽपि कर्मत्वस्यानभिधानात् 'अक्षानिति' द्वितीयापत्तिरिति वाच्यम्, एकस्यैव साधकतमत्वस्य उभयसंज्ञकत्वेन उभयत्राप्युभयाभिधानोपपत्तेः।

अथ "दिवः कर्म च" (पा.सू 1.4.43) इति सूत्रार्थं तदुदाहरणे शाब्दबोधप्रकारं चाह — **एवम् इत्यादिना**। दिव् धात्वर्थं प्रति साधकतमं कारकं कर्मसंज्ञकं स्यात्। चकारात् करणसंज्ञकमित्यपि लभ्यते। अक्षैरक्षान् वा दीव्यति। अक्षकरणकं क्रीडनमिति बोधः। अत्र पणपूर्वकक्रीडनक्रिया धातोरर्थः। तस्यां क्रियायां साधकतमत्वात् अक्षाणां मुख्यमेव करणत्वं सिध्यति। अथापि करणत्वे द्वितीया-विधानार्थं सूत्रमिदम्। तेन द्वितीयायाः करणत्वे लक्षणा। कर्मत्वे च "कर्मणि द्वितीया" इति द्वितीया सिध्यति। कर्मसंज्ञा द्वितीयाविभक्त्यर्थम्। द्वितीयातृतीय-योरुभयोरपि करणत्वमेवार्थः।

**न च करणसंज्ञाया इत्यादि**। यत्र दिव्धात्वर्थं प्रति साधकतमानां कर्मसंज्ञा-प्रयुक्तकार्यं न भवति तत्र देवना अक्षा इत्यादौ करणसंज्ञायां सत्यां ल्युट् भवति। देवना इत्यस्य क्रीडाकरणभूता इत्यर्थः। दीव्यन्ते अक्षा इत्यत्र कर्मणि लकारे कर्मसंज्ञा सावकाशा भवति। उभयोः कर्मसंज्ञाकरणसंज्ञयोः सावकाशत्वात् दीव्यति इति कर्त्राख्यातस्थले संज्ञाद्वयप्रयुक्तद्वितीयातृतीयारूपकार्यद्वयप्रसङ्गे करणसंज्ञापेक्षया कर्मसंज्ञायाः परत्वात् द्वितीयाया एव प्रसङ्गे अक्षैः दीव्यतीति तृतीयान्तप्रयोगस्य कथं साधुत्वम्। विभक्तिगतपरत्वाद्वा वैपरीत्येन तृतीयाया एव साधुत्वं द्वितीयाया असाधुत्वं च स्यादिति प्रश्नः।

तत्र समाधानमेवम् — "दिवः कर्म च" (पा.सू 1.4.43) इत्यनेन कर्मकरण-संज्ञाद्वयं सिध्यति। यद्येकैव संज्ञा स्यात् तर्हि चशब्दप्रयोगो व्यर्थः स्यात्। तेन द्वयोः संज्ञयोः परस्परं बाध्यबाधकभावो नास्तीत्यवगम्यते।

अपि च सूत्रे चशब्दाभावेऽपि "मनसादेवः" इति अलुक्समासस्थले मनसा दीव्यतीति विग्रहवाक्यम्। अत्र मनसः कर्मसंज्ञायां "कर्मण्युपपदे" "कर्मण्यण्"

(पा.सू 3.2.1) इति सूत्रेण दिव्धातोः अणप्रत्यये मनसादेव इति भवति। करण-संज्ञायां मनःशब्दात् तृतीया च भवति। अतः संज्ञाद्वयप्रयुक्तकार्यद्वयप्राप्त्या मनसादेवः इति शब्दस्य साधुत्वं सिध्यति। विभक्तिगतपरत्वाश्रयणे तु तृतीयैव स्यात्। न द्वितीया। द्वितीयाया अभावे कर्मण्यण् इत्यणप्रत्ययो न स्यात्। तथा च साधकतमत्वविवक्षया तृतीयायाः कर्मत्वविवक्षया द्वितीयायाः सिद्धिः इति चकारस्य प्रयोजनम् इति भावः।

**न च तथापीति।** दीव्यन्तेऽक्षा इत्यत्र लकारेण कर्मत्वाभिधानेऽपि करणत्व-स्यानभिधानेन अक्षैः इति तृतीयापत्तिः। एवं देवना अक्षाः इत्यत्र ल्युटा करणत्वाभिधानेऽपि कर्मत्वस्यानभिधानात् अक्षान् इति द्वितीयापत्तिरिति शङ्का। समाधानं तु — यद्यप्यत्र कर्मत्वकरणत्वरूपे द्वे संज्ञे विहिते। तथापि संज्ञि एकमेव। एकस्यैव संज्ञाद्वयमिति यावत्। तथा च दीव्यन्तेऽक्षाः इत्यत्र कर्मणो-ऽभिधाने करणमप्यभिहितमिति अक्षपदोत्तरं तृतीया न भवति। तथा कर्मणो-ऽभिधानात् अक्षपदोत्तरं द्वितीया न भवति, अपि तु, अभिहितकारकवाचिनी प्रथमैव भवतीति भावः।

## अपवर्गे तृतीयेत्यत्र बोधप्रकारः

**एवं 'अपवर्गे तृतीया' (पा.सू 2.3.6) इति सूत्रेण फलप्राप्तिपरूपापवर्गे द्योत्ये कालाध्वनोरत्यन्तसंयोगे तृतीया स्यात्, अन्यथा द्वितीया, इत्यर्थकेन मासेनाधीतो-ऽनुवाकः इत्यत्र तृतीयया फलप्राप्तिर्द्योत्या। अन्यथा मासमधीतो नायातः इतिवद् बोध्यः।**

अथ "अपवर्गे तृतीया" (पा.सू 2.3.6) इति सूत्रं सोदाहरणं व्याचष्टे — एवमित्यादिना। फलप्राप्तिरूपेऽपवर्गे द्योत्ये कालाध्वनोरत्यन्तसंयोगे तृतीया स्यात्। फलप्राप्त्यभावे तु द्वितीयैव भवतीति सूत्रार्थः। मासेनाधीतोऽनुवाकः इत्यत्र मासकालिकाध्ययनेन अक्षरग्रहणरूपफलप्राप्तिः संजातेति ज्ञायते। मासमधीतो नायातः इत्यत्र मासकालिकाध्ययने कृतेऽपि वेदाक्षरराशिग्रहणरूपफलप्राप्तिर्न संजातेति प्रतीयते। अतो द्वितीया।

## सहयुक्तेऽप्रधाने इत्यत्र बोधप्रकारः

**एवं सहयुक्तेऽप्रधाने (पा.सू 2.3.19) एवं — साकम्, सार्द्धम् 'समंयोगेऽपि' इत्यनुशासनेन 'पुत्रेण सहागतः पिते'ति तृतीया। अत्र च पुत्रस्याप्राधान्यम्, न क्रियानन्वयित्वेनैव — ['सहैव दशभिः पुत्रैर्भारं वहति गर्दभी'] इत्यादिवत्, अपितु यस्य क्रियासम्बन्धः शाब्दः, तत्प्रधानम्, यस्य त्वार्थः, तस्याप्राधान्यम्। अत एव पुत्रेण सहेत्यत्र पुत्रस्याप्यागमनप्रतीतिः। अत्र न सहशब्दयोग एव विवक्षितः, 'वृद्धो यूना' इति तदभावेऽपि तृतीयादर्शनात्। अत एव सहत्वमत्र तृतीयार्थः। सहशब्दः क्वाचित्कस्तात्पर्यग्राहकः। तदन्वयस्तु स्वनिरूपकपित्राश्रयकत्वसम्बन्धेन क्रियाया-मेव। साहित्यञ्च 'सहैव दशभिः पुत्रैरि'त्यादौ तत्काले विद्यमानत्वम्। 'पुत्रेण सहागतः' इत्यादौ चैकक्रियान्वयित्वमित्यादि योग्यतानुसारेण बोध्यम्।**

---

अथ "सहयुक्तेऽप्रधाने" (पा.सू 2.3.19) इति सूत्रार्थं सोदाहरणं दर्शयति — एवमित्यादिना। सहार्थेन युक्ते अप्रधानवाचकपदे तृतीयाविभक्तिर्भवतीति सूत्रार्थः। अत्र सहशब्दस्य साहित्यार्थकशब्दपरत्वात् साकं सार्धं समं इति शब्दयोगेऽपि तृतीया भवति। पुत्रेण सह आगतः पिता इति उदाहरणम्। पुत्रस्य

अप्रधानत्वात् पुत्रशब्दोत्तरं तृतीया भवति। किं नाम अप्राधान्यमिति जिज्ञासायां केचन क्रियानन्वयित्वं तत् इति वदन्ति। तन्न युक्तम्। क्रियानन्वयेऽपि सहयुक्ते तृतीयायाः दर्शनात् — यथा "सहैव दशभिः पुत्रैः भारं वहति गर्दभी" इति। पुत्रैः सह विद्यमाना गर्दभी भारं वहतीत्यर्थः। अत्र क्रियायामन्वयः गर्दभ्यामेव, न पुत्रेषु। पुत्रेण सह आगतः पिता इत्यत्र तु आगमनक्रियायां पितुरिव पुत्रस्यापि संबन्धोऽस्ति। ततश्च यस्य क्रियासंबन्धः शाब्दः, तत् प्रधानम्, यस्य तु सः आर्थः तत् अप्रधानम्। अत एव शाब्दत्वाभावेऽपि तृतीया दृश्यते "वृद्धो यूना" इति सूत्रे सहशब्दयोगाभावेऽपि यूना इति तृतीया दृश्यते। ततश्च सहयोगस्थले पुत्रेण सह आगतः पिता इत्यत्र साहित्यं तृतीयार्थः। सहशब्दः तात्पर्यग्राहकः। तृतीयार्थस्य साहित्यस्य स्वनिरूपकपित्राश्रयकत्वसंबन्धेन क्रियायामन्वयः। पुत्रवृत्ति यत् साहित्यं तन्निरूपकः पिता तदाश्रयकत्वं (तन्निष्ठत्वं) आगमनक्रियायामस्तीति समन्वयः। सहैव दशभिः पुत्रैः भारं वहति गर्दभी इत्यत्र पुत्राणां साहित्यं भारवहनकाले गर्दभ्या सह विद्यमानत्वम्। पुत्रेण सहागतः पिता इत्यत्र तु एकक्रियान्वयित्वं साहित्यम् पितृकर्तृकागमनक्रियायां पुत्रस्यापि संबन्धात्। एतद्विस्तरस्तु न्यायव्याकरणादिग्रन्थेषु द्रष्टव्यः, मदीयशाब्दबोधमीमांसायां च।

## येनाङ्गविकार इत्यत्र बोधप्रकारः

एवं येनाङ्गविकारः (पा.सू 2.3.20) इत्यनुशासनात् येनाङ्गेन विकृतेनाङ्गिनो विकारो लक्ष्यते, ततस्तृतीया स्यादित्यर्थकात् 'अक्ष्णा काणः' इत्यादौ तृतीया। अत्र चाक्षिपदं चक्षुर्गोलकपरम्, वृत्तित्वं तृतीयार्थः। काणपदं चक्षुरुपघातवद्गोलकवत्परम्, चक्षुर्गोलकवृत्तिचक्षुरुपघातवद्गोलकवानिति बोधः। तृतीयार्थवृत्तित्वस्य तेन सम्बन्धेन भावनायामन्वयात्।

अथ येनाङ्गविकारः (पा.सू 2.3.20) इति सूत्रं सोदाहरणं व्याचष्टे — **एवमिति।** येन अङ्गेन विकृतेन अङ्गिनो विकारो लक्ष्यते ततस्तृतीया स्यादिति सूत्रार्थः। यथा अक्ष्णा काणः। अत्र अक्षिपदं चक्षुर्गोलकपरम्। तृतीयायाः वृत्तित्वमर्थः। काणपदं चक्षुरुपघातवद्गोलकवत्परम्। उपघातो नाम किंचित् वैकल्पम्। तादृशचक्षुर्वैकल्पयुक्तं यत् गोलकं तद्वान् इति बोधः। तत्र तृतीयार्थस्य वृत्तित्वस्य परंपरासंबन्धेन चक्षुर्गोलकवद्वृत्तिचक्षुरुपघातवद्गोलकवद्वृत्तित्व-संबन्धेन भावनायामन्वयः।

## इत्थंभूतलक्षणे (पा.सू 2.3.29) इत्यत्र बोधप्रकारः

**तथा इत्थंभूतलक्षणे (पा.सू 2.3.29) इत्यनुशासनाज्जटाभिस्तापसः इत्यादौ तृतीया। अत्र लक्षणवत्त्वापरपर्यायं ज्ञाप्यत्वं तृतीयार्थः। जटाज्ञाप्यतापसत्व-वानित्यर्थः। लक्षणत्वञ्च विशेषणोपलक्षणसाधारणम्। तेन 'शमेन तापसः' इत्यपि साधु।**

---

इत्थंभूतलक्षणे च (पा.सू 2.3.29) कंचित् विकारं प्राप्तस्य ज्ञापने तृतीया स्यात्। यथा — जटाभिस्तापसः। अत्र तृतीयायाः ज्ञाप्यत्वमर्थः। जटाज्ञाप्य-तापसत्ववान् इत्यर्थः। ज्ञापकं विशेषणमपि उपलक्षणमपि भवति। अत्र जटाभि-स्तापस इत्यत्र जटा तापसस्य विशेषणं भवति, तथा उपलक्षणमपि भवति। एवं शमेन तापस इत्यत्र शमः सर्वदा अस्ति चेत् विशेषणं भवति। कदाचित् शमः भवति चेत् उपलक्षणं भवति।

## संज्ञोऽन्यतरस्यां कर्मणि इत्यत्र बोधप्रकारः

एवं 'संज्ञोऽन्यतरस्यां कर्मणि' (पा.सू 2.3.22) इत्यनुशासनात् संपूर्वकस्य जानातेः कर्मणि तृतीया, द्वितीया वा। पित्रा सञ्जानीते, पितरं सञ्जानीते।

हेतौ (पा.सू 2.3.22) इति सूत्रेण हेतुत्वं तृतीयार्थः। तच्च यद्यपि कारणत्व-रूपमेव, तथापि द्रव्यादिनिरूपितत्वघटितसंसर्गेण क्रियान्वयि हेतुत्वम्। यथा 'दण्डेन घटः' इत्यादौ। धात्वर्थनिरूपितत्वेन संसर्गेण क्रियान्वयि तु करणत्वमिति विशेषः। अत एव हेतुत्वे लक्षणा।

अथवा अखण्डोपाधिरूपकरणत्वे शक्तिः, तत्परिचायके सखण्डोपाधौ लक्षणेति पृथगनुशासनम्। फलादिसाधारणञ्च तत्। अध्ययनेन वसति। तादर्थ्यमात्रं तृतीयार्थः।

---

एवमित्यादि। "संज्ञोऽन्यतरस्यां कर्मणि" (पा.सू 2.3.32) संपूर्वकस्य ज्ञाधातोः कर्मणि तृतीया द्वितीया वा स्यात्। पित्रा पितरं वा संजानीते। पितृविषयक-समीचीनज्ञानवान् इत्यर्थः। द्वितीयापवादोऽयं तृतीयाविकल्पः। "संपरिभ्याम-नाध्याने" इत्यात्मनेपदम्। कृद्योगे तु परत्वात् "कर्तृकर्मणोः कृति" इति षष्ठी। पितुः संज्ञाता। तृतीयायाः कर्मत्वे लक्षणा। द्वितीयायास्तु कर्मत्वे शक्तिः इति विवेकः।

एवं 'अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया वाच्या' (वा. 5040) इति वार्तिकात् तृतीया। यथा-दास्या संसच्छते-ददातीत्यर्थः। शिष्टव्यवहारे तु भार्यायै संयच्छति, अयञ्च सर्वोऽपि शक्यलक्ष्यसाधारणस्तृतीयार्थः। पूर्ववदेव लिङ्गानन्वयि-पदोपात्तभावनायां श्रुतायाम्, गम्यमानायां वाऽन्वेतीति बोध्यम्। यथा-शतेन

**वत्सान् पाययति पयः, शतेन परिच्छिन्नानित्यर्थः। परिच्छेदं प्रति तस्य करणत्वात्। अत्र गम्यमानत्वमध्याहृतपदेन बोध्यम्। 'अलं श्रमेणे'त्यत्र तु नाऽनुमेया, अलमिति निपातेनैव साध्यं नास्तीत्यर्थकेन साधनाक्रियाया उपात्तत्वात्। अयमर्थश्च विभक्तिमात्रे बोध्यः।**

**इति श्रीमदाचार्यखण्डदेवविरचिते भाट्टतन्त्ररहस्ये**
**तृतीयाविभक्त्यर्थविचारः समाप्तः**

---

**हेताविति सूत्रेणेत्यादि।** हेतौ इति सूत्रेण हेतुत्वं तृतीयार्थः इत्युच्यते। हेतुत्वं च यद्यपि कारणत्वरूपमेव। तथापि द्रव्यादिनिरूपित्वघटितसंबन्धेन क्रियान्वयि हेतुत्वम्। यथा दण्डेन घट इत्यादौ। धात्वर्थनिरूपितत्वसंबन्धेन क्रियान्वयि तु करणत्वमिति विशेषः इत्युक्तम्। अयमाशयः — सर्वेषामपि सुबर्थानां भावनायामन्वय इति व्युत्पत्तेः दण्डेन घट इत्यत्र जायते इत्यध्याह्रियते। तत्र तृतीयार्थः कारणत्वम्। तत्र आधेयतासंबन्धेन प्रकृत्यर्थस्य दण्डस्यावयः। कारणत्वस्य स्वनिरूपकघटवृत्त्युत्पत्त्यनुकूलत्वसंबन्धेन आख्यातार्थभावनायामन्वयः। अत्र संबन्धमध्ये कारणतानिरूपकत्वं घटरूपद्रव्यनिष्ठं घटकम्। तुल्यवित्तिवेद्यतया कारणत्वनिष्ठं घटरूपद्रव्यनिरूपितत्वं च घटकम्। अतो द्रव्यादिनिरूपितत्वघटितेन संसर्गेणेति व्यवहृतम्। यदा तु दण्डनिष्ठस्य कारणत्वस्य स्वनिरूपकधात्वर्थोत्पत्यनुकूलत्वसंसर्गेण आख्यातार्थभावनायामन्वय इष्यते तदा तत् कारणत्वं करणत्वरूपमिति करणे तृतीया। अत्रापि धात्वर्थनिष्ठं कारणतानिरूपकत्वं संसर्गघटकम्। तुल्यवित्तिवेद्यतया कारणतानिष्ठं धात्वर्थनिरूपितत्वं च संसर्गघटकमिति धात्वर्थनिरूपितत्वघटितेन संसर्गेणेति व्यवहृतम्। अत एव

हेतुत्वे तृतीयायाः लक्षणा। क्रियाद्वारकसंबन्धेन भावनान्वयिनि अर्थे शक्तिः। अन्यद्वारकसंबन्धिन्यर्थे लक्षणेति व्यवस्था।

अथ वा अखण्डोपाधिरूपकारणत्वे शक्तिः। तत्परिचायके सखण्डोपाधौ लक्षणेति पृथगुपादानम्। स च हेतुः फलादिसाधारणः। यथा अध्ययनेन वसति। अत्र वासस्य फलमपि अध्ययनं वासस्य हेतुः भवति। अत्र तृतीयायाः तादर्थ्यमर्थः। अध्ययनफलको वास इति बोधः।

**अशिष्टव्यवहार इति।** शिष्टाः वेदविहितकर्मकर्तारः। तद्विरुद्धकर्मकर्तारः अशिष्टाः तेषां यो व्यवहारः प्रवृत्त्यादिः तत्र दाण् धातोः चतुर्थ्यर्थे चतुर्थ्याः अर्थे संप्रदाने तृतीया वाच्या इति वार्तिके उक्तम्। उदाहरणं दास्या संयच्छते इति। दास्यै ददातीत्यर्थः। तत्र तृतीयायाः संप्रदानमर्थः। दासीसंप्रदानकं दानम् इति बोधः। शिष्टव्यवहारे तु भार्यायै संयच्छति। "दाणश्च सा चेच्चतुर्थ्यर्थे" इति (वा. 5040) सूत्रेण आत्मनेपदम्। अयं च सर्वोऽपीत्यादि निगदव्याख्यातम्।

**इति सारप्रकाशिकायां तृतीयाविभक्त्यर्थविचारः**

# चतुर्थीविभक्त्यर्थविचारः

## संप्रदानत्वनिर्वचनम्

एवं 'चतुर्थी संप्रदाने' (पा.सू. 2.3.13) इति सूत्रात्संप्रदानत्वार्थिका चतुर्थी भावनान्वयिन्येव। तच्च 'कर्मणा यमभिप्रैति, स सम्प्रदानम्' (पा.सू. 1.4.32) इति सूत्रे निरुक्तम्। दानक्रियाकर्मकारकेण यमभिप्रैति सम्बध्नाति, स सम्प्रदानमिति सूत्रार्थः। सम्प्रदीयतेऽस्मै इत्यन्वर्थसंज्ञाबलाद्दानकियालाभः। तथा च त्यज्यमान-द्रव्योद्देश्यत्वे सति स्वीकारवत्त्वं सम्प्रदानत्वमिति न्यायसुधाकारादयः। तेषामय-माशयः — स्वीकारः — यथेष्टविनियोगयोग्यतोपधायकः प्रतिग्रहः। विप्राय गां ददाति इत्यत्र लक्षणसमन्वयः स्फुटः। उद्देश्यत्वस्वीकारौ च गवा विप्रस्य सम्बन्धः। तत्रोद्देश्यत्वं त्यागकालीनचतुर्थ्यन्तपदोच्चारणजन्यज्ञानविषयत्वम्। न च तत्र प्रमाणाभावः, शिष्टाचारस्यैव प्रमाणत्वात्।

नामगोत्रे समुच्चार्य सम्यक् श्रद्धान्वितो वदेत्।
सङ्कीर्त्य देशकालादि तुभ्यं सम्प्रददे इति॥
न ममेति स्वस्वताया निवृत्तिमपि कीर्तयेत्।
दानहोमादिकं कुर्यादेवं श्रद्धासमन्वितः॥

इति हेमाद्रिधृतवृद्धवसिष्ठवचनाच्च। अत एव पूर्वदलं इन्द्रादिदेवतायामति-व्याप्तम्, अतः स्वीकारेति। तत्र प्रतिग्रहस्य नवमे निषेधात्। अतएव त्यज्यमान-द्रव्योद्देश्यत्वमुक्तविधं इन्द्रादिरूपेऽर्थे, शब्दे च त्यागकालीनचतुर्थ्यन्तपदोच्चा-रणकर्मत्वरूपं वा देवतात्वं तद्धितवाच्यम्, वृद्धव्यवहारात्। यदि तु सम्प्रदानभूत-ब्राह्मणादौ देवतात्वव्यवहाराभावः, तदा देवतात्वलक्षणे स्वीकाराभावोऽपि

**विशेनीयः। 'प्रजापतये जुहोती'त्यादौ च तादृशदेवतात्वे लक्षणा, तस्यास्ततो दौर्बल्यमुक्तमाकरे। विक्रेत्रादौ च स्वीकारसत्त्वेपि, पूर्वदलनैयत्याभावादाद्यदलम्। तत्रापि सर्वं त्यागादिकमन्यलभ्यम्। केवलमुद्देश्यत्वम्, स्वीकारश्च चतुर्थ्यर्थः। तयोश्चोक्तपरम्परासम्बन्धेन, विषयताघटितसामानाधिकरण्येन च त्यागद्वारको भावनान्वयः। एवं चैतादृशलक्षणानाक्रान्ते यत्र यत्र चतुर्थीप्रयोगः, तत्र सर्वत्र लक्षणेति। काशिकावृत्तिकारस्याप्ययमेवाभिप्रायः।**

---

अथ चतुर्थीविभक्त्यर्थं निरूपयति — **एवं चतुर्थी संप्रदाने इत्यादिना।** उक्तसूत्रस्य संप्रदानेऽर्थे चतुर्थी विभक्तिर्भवतीत्यर्थः। कर्मणा यमभिप्रैति स संप्रदानम् (पा.सू 1.4.32) इति सूत्रं संप्रदानशब्दार्थं निर्वक्ति। दानक्रियायाः यत् कर्म तेन संबन्धुं यमिच्छति तत् संप्रदानमिति तदर्थः। दीयमानद्रव्योद्देश्यं संप्रदानमिति यावत्। संप्रदीयते अस्मै संप्रदानमिति अन्वर्थसंज्ञाबलात् अयमर्थो लभ्यते। फलितमाह — **तथा चेति।** त्यज्यमानद्रव्यभागित्वेनेच्छाविषयत्वे सति स्वीकारवत्त्वं संप्रदानत्वमित्युक्तं भवति। त्यज्यमानद्रव्यस्वामित्वेन यमिच्छति स यदि न स्वीकरोति तदा न तस्य संप्रदानसंज्ञा। तदा विप्राय गां ददातीति न प्रयोगः। स्वीकारो नाम यथेष्टविनियोगयोग्यत्वसंपादकः प्रतिग्रहः। विनियोगः उपयोगः। यं संबन्धुमिच्छतीत्यत्र विप्रस्य गोश्च कः संबन्ध इति शङ्कायामुक्तम्— **उद्देश्यत्वस्वीकारौ चेति।** तत्र उद्देश्यत्वं किं रूपमित्यत्राह — **तत्रोद्देश्य-त्वमिति।** त्यागकालीनचतुर्थ्यन्तपदोच्चारणजन्यज्ञानविषयत्वमिति। दाता यत् यस्मै ददाति — गां विप्राय ददाति तदा विप्रायेदं न ममेति उच्चार्य ददाति। दानं च त्यागविशेषः। तद्विषयत्वं विप्रस्यास्तीति तस्य उद्देश्यत्वम्। अत्र मूले जन्येत्यस्य स्थाने जनकेति पाठः साधुरिति मन्ये। यद्विषयकज्ञानेन विप्रायेति

प्रयुङ्क्ते स हि संप्रदानम्। विप्रं मनसा ज्ञात्वा हि तस्मै इदं न ममेति उच्चारयति। अथ वा उच्चारणेन तच्छ्रोतुः विप्रस्य अहं तदुद्देश्य इति ज्ञानं जायत इति तज्जन्य-ज्ञानविषयत्वं विप्रस्येति भावः। अथवा उच्चारणजन्यज्ञानाश्रयत्वमिति पाठः।

चतुर्थ्यन्तं पदमुच्चार्यैव दातव्यमित्यत्र किं प्रमाणमिति शङ्कायामाह — **न च तत्रेत्यादिना**। शिष्टानां तथा आचार एव प्रमाणमित्यर्थः। तत्र स्मृतिमपि प्रमाणयति — **नामगोत्रे इति**। स्मृतिवचनस्यायं भावः। — यस्य कस्यचित् वस्तुनो विप्राय दानकाले अहमस्मिन् देशे अस्मिन् काले अमुकगोत्राय अमुकशर्मणे तुभ्यं संप्रददे न मम इति उक्त्वा दद्यात् इत्यर्थः। स्वस्वत्वनिवृत्ति-पूर्वकपरस्वत्वापादकव्यापारवाचकपदसमूहरूपवाक्यप्रयोगपूर्वकं दद्यात् इति यावत्। होमकालेऽप्येवमुच्चार्य होतव्यमित्याह — **दानहोमादिकमिति**। आदिपदेन यागः ग्राह्यः। उक्तसंप्रदानत्वलक्षणे स्वीकारवत्वघटनस्य प्रयोजनमाह — **तत्र प्रतिग्रहस्येति**। इन्द्रादिदेवतोद्देशेन द्रव्यत्यागरूपयागकाले इन्द्रायेदं न मम इत्युच्चार्य द्रव्यत्यागात् चतुर्थ्यन्तपदोच्चारणजन्य (जनक) ज्ञानविषयत्वस्य इन्द्रादौ सत्त्वात् इन्द्रादीनां संप्रदानत्वापत्तिः। तद्वारणाय स्वीकारवत्त्वस्य निवेशः। इन्द्रादेः द्रव्यस्वीकारवत्त्वं नास्ति। स्वीकारस्य शरीरसाध्यत्वात् देवता-याश्च अशरीरत्वमिति मीमांसकसिद्धान्तात्। तदुक्तं तैः —

विग्रहो हविरादानं युगपत् कर्मसंनिधिः।
प्रीतिः फलप्रदानं च देवतानां न विद्यते।।

इति। एवं च त्यज्यमानद्रव्योद्देश्यत्वं देवतात्वम्। त्यज्यमानद्रव्योद्देश्यत्वे सति तत्स्वीकारवत्त्वं संप्रदानत्वमिति देवतात्वसंप्रदानत्वयोर्भेदः। तन्मते देवतावाचकः अग्न्यादिशब्द एव देवता। तदाह — **तत्रेति**। देवतायामित्यर्थः। **नवमे** = नवमाध्याये देवताधिकरणे इन्द्रादिदेवानां शरीराभावेन प्रतिग्रहस्य निषेधात्

इत्यर्थः। अपि च मीमांसकमते इन्द्रादिशब्द एव देवता इत्येकः पक्षः। इन्द्रादिशब्दातिरिक्तः तदर्थः देवता इत्यपरः पक्षः। पक्षद्वयेऽपि देवतायाः शरीरादिपञ्चकं नास्तीति तुल्यम्। पक्षद्वयेऽपि देवतात्वं नाम नानुगतम्। अर्थनिष्ठं देवतात्वं त्यज्यमानद्रव्योद्देश्यत्वरूपम्। शब्दनिष्ठं देवतात्वं तु द्रव्यत्यागकालीन-चतुर्थ्यन्तपदोच्चारणकर्मत्वरूपम्। एतादृशं देवतात्वं तु संप्रदानभूतब्राह्मणा-दावप्यस्तीति इष्टमेव। यदि संप्रदानभूतब्राह्मणादौ देवतात्वव्यवहारो नास्ति, तदा पूर्वोक्तदेवतालक्षणद्वयेऽपि स्वीकाराभाववत्त्वं निवेशनीयम्। ब्राह्मणस्य द्रव्यस्वी-कारवत्त्वात् तदभावघटितं देवतालक्षणं नास्तीति नातिव्याप्तिः। ऐन्द्रं दधीत्यादौ इन्द्रशब्दात् 'सास्य देवता' इति सूत्रेण विहितस्य तद्धितस्य अण्प्रत्ययस्य पूर्वोक्तदेवतात्वं शक्यतावच्छेदकम् इति भावः। ननु संप्रदानचतुर्थ्याः त्यज्यमान-द्रव्योद्देश्यत्वं स्वीकारश्चार्थः। तदा प्रजापतये जुहोति इत्यादौ कथं संप्रदानचतुर्थी प्रजापतिरूपदेवतायाः पूर्वोक्तस्वीकारघटितसंप्रदानलक्षणाभावात् इत्याशङ्क्य तत्र चतुर्थ्याः संप्रदानत्वं नार्थः। अपि तु पूर्वोक्तं देवतात्वमेव लक्षणया अर्थ इत्याह — **प्रजापतये जुहोतीत्यादाविति**। तस्याः = देवतात्वार्थकचतुर्थ्याः ततः = देवतात्वार्थकतद्धितापेक्षया दौर्बल्यम् आकरे वार्तिके उक्तमित्यर्थः।

तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन वा पुनः।
देवताया विधिस्तत्र दुर्बलं तु परं परम्।।

इति वार्तिकम्। संप्रदानलक्षणे त्यज्यमानद्रव्योद्देश्यत्वे सति स्वीकारवत्त्वम् इत्यत्र सत्यन्तानुपादाने विक्रेतुः सकाशात् किंचिद्वस्तुक्रेतरि तद्वस्तुस्वीकार-तवत्वसत्वात् क्रेतुः संप्रदानत्वापत्त्या क्रेत्रे ददातीति प्रयोगापत्तिः। अतः सत्यन्तोपादानम्। क्रेतुः त्यज्यमानद्रव्योद्देश्यत्वाभावात् न संप्रदानत्वम्। अतः क्रेत्रे ददातीति न प्रयोग इति भावः।

**तत्रापि सर्वमित्यादि।** त्यज्मानद्रव्योद्देश्यत्वे सति स्वीकारवत्त्वं संप्रदानत्वमिति लक्षणे घटकाः ये पदार्थाः त्यागः द्रव्यम् स्वीकारः उद्देश्यत्वमिति तत्र त्यागस्य धातुना द्रव्यस्य गवादिपदेन च लाभात् विप्राय गां ददातीत्यत्र उद्देश्यत्वं केवलं स्वीकारश्च चतुर्थ्याः अर्थः। तयोः आख्यातार्थभावनायामन्वयः। तथा हि — विप्रप्रातिपदिकार्थस्य उद्देश्यत्वे आधेयत्वसंबन्धेनान्वयः। उद्देश्यत्वस्य स्वनिरूपकत्यागानुकूलत्वसंबन्धेन भावनायामन्वयः। स्वीकारो नाम इदं ममेत्याकारकज्ञानविशेषः। तस्य स्वविषयद्रव्य (गो) विषयकत्यागानुकूलत्वसंबन्धेन भावनायामन्वयः। तथा च विप्रनिष्ठोद्देश्यतानिरूपकगोकर्मकत्यागानुकूला विप्रनिष्ठज्ञानविषयगोविषयकत्यागानुकूला च भावनेति शाब्दबोधः। विषयताघटितसामानाधिकरण्यं नाम स्वविषयविषयकत्वम्। स्वीकारस्य यो विषयः स एव त्यागस्यापि विषयः इति तात्पर्यम्। विषयतासंबन्धेन स्वीकाराधिकरणे विषयतासंबन्धेन त्यागस्य सत्त्वात् स्वीकारेण त्यागस्य विषयताघटितसामानाधिकरण्यं, तच्च स्वविषयविषयकत्वे पर्यवस्यतीत्यवधेयम्।

मूले **तयोश्चेति।** उद्देश्यत्वस्वीकारयोरित्यर्थः। तत्र उद्देश्यत्वस्य **उक्तपरंपराबन्धेन** = स्वनिरूपकत्यागानुकूलत्वसंबन्धेन स्वनिष्ठं अथवा स्वनिरूपकं यत् ज्ञानं तज्जनकं यत् चतुर्थ्यन्तपदोच्चारणं तत्कालिकत्वसंबन्धेनेति यावत्। विषयताघटितसामानाधिकरण्यसंबन्धेन त्यागे स्वीकारस्य, स्वविषयविषयकत्यागानुकूलत्यसंबन्धेन भावनायां तस्यान्वय इति भावः। सूक्ष्मदृष्टिः कार्या।

**एवं चेति।** पूर्वोक्तं यत् संप्रदानलक्षणं तदनाश्रये यत्र यत्रार्थे चतुर्थीप्रयोगः तत्र सर्वत्र लक्षणा। काशिकावृत्तिकारस्याप्ययमेवाभिप्रायः।

## वैयाकरणमतेन संप्रदाननिरुक्तिः

**वैयाकरणनव्यास्तु — यत्क्रियाकर्मसम्बन्धजन्यफलभागित्वेनोद्देश्यं यत्, तत्, तत्क्रियासम्प्रदानम्। विप्राय गां ददातीत्यत्र दानक्रियाकर्मकारकेण गोद्रव्येण यस्स्वत्त्वाख्यो विप्रस्य सम्बन्धः, तज्जन्यं फलं सुखादि, तद्भागित्वरूपेण उद्देश्यत्वं विप्र इति, स दानक्रियासम्प्रदानमिति लक्षणसमन्वयः। पितृस्वर्गोद्देशेन ब्राह्मण-सम्प्रदानकधनदाने पितुः स्वर्गादिरूपफलभागित्वेऽपि, न सम्प्रदानत्वम्। तत्फलस्य पितरि धनसम्बन्धाभावेन तत्सम्बन्धजन्यत्वाभावात्। अत एव कर्मकारकजन्यत्वं पितृस्वर्गादावपि कदाचित्सम्भाव्येतेति, सम्बन्धजन्यत्वानु-धावनम्। अत्र 'कर्मणा यमि'ति द्वितीयानिर्देशात् कर्मकारकं प्रति सम्प्रदानस्ये-प्सितत्वं लभ्यते। तेन फलभागित्वेन ईप्सितत्वम् सम्प्रदानत्वमित्यर्थः। 'विप्राय गां ददाति स्वर्गकामः' इत्यादौ च कर्मकारकस्य स्वर्गाङ्गभूतदानाङ्गत्वेऽपि दानसाद्-गुण्यजनकत्वेन ईप्सितत्वात् विप्रे सम्प्रदानत्वाविघातः।**

---

अथ वैयाकरणनव्यमतमनुवदति — **वैयाकरणनव्यास्तु इत्यादिना**। अत्रानूद्य-मानं नव्यवैयाकरणमतं कस्मिन् व्याकरणग्रन्थेऽस्तीति न जानीमः। प्रौढमनो-रमायां वा भूषणसारे वा मञ्जूषायां वा न दृश्यते। यत्क्रियेति। यस्याः क्रियायाः यत् कर्म तत्संबन्धजन्यं यत् फलं तदाश्रयत्वेन उद्देश्यम् इच्छाविषयः यः सः तस्याः क्रियायाः संप्रदानम् इत्युच्यते। यथा विप्राय गां ददातीत्यत्र दानक्रियायाः कर्म गौः तन्निष्ठः यः स्वत्वरूपः विप्रानुयोगिकः संबन्धः तज्जन्यं यत् फलं सुखादि तदाश्रयत्वेनेच्छाविषयः विप्र इति तस्य संप्रदानत्वं दानक्रियायाम्। तत्क्रियाकर्म-संबन्धजन्यफलाश्रयत्वप्रकारकेच्छाविषयत्वं तत्क्रियासंप्रदानत्वमित्युक्तं भवति। अत्र इच्छा दातृपुरुषनिष्ठा। उद्देश्यत्वं प्रतिग्रहीतृनिष्ठम्। विप्रः दानक्रियाकर्म-

भूतगोनिष्ठस्वत्वजन्यसुखाद्याश्रयो भवतु इत्याकारकेच्छा। उक्तं संप्रदानत्वं विप्रे समन्वेति। उक्तलक्षणे कर्मसंबन्धजन्येति विशेषणस्य प्रयोजनमाह — **पितृ-स्वर्गोद्देशेनेति।** कर्मसंबन्धजन्येति विशेषणमनुपादाय यत्क्रियाजन्यफलाश्रय-त्वेनोद्देश्यं यत् तत् तत्क्रियासंप्रदानमित्युक्ते यः स्वपितुः स्वर्गो भवतु इतीच्छया ब्राह्मणाय धनं ददाति तत्र ब्राह्मणसंप्रदानकधनदानात् पितुरेव स्वर्गो भवति, तथा च दानक्रियाजन्यस्वर्गाश्रयत्वेन इच्छाश्रयत्वस्य पितरि सत्वात् पितुः संप्रदानत्वं स्यात्, तदा पित्रे धनं ददातीति प्रयोगः स्यात्। स च न साधुः। तदा ब्राह्मणस्यैव संप्रदानत्वमिष्यते। तथा च पितरि संप्रदानत्ववारणाय कर्मसंबन्धजन्येत्युक्तम्। तथा सति दानक्रियायाः यत् कर्म धनं तत्संबन्धजन्यं सुखं ब्राह्मणस्यैव न तु पितुः। पितुः दानकर्मधनसंबन्धाभावात्। अपि तु विप्रस्यैव धनसंबन्धजन्यं सुखं भवतीति तस्यैव संप्रदानत्वम्। विप्रपदोत्तरमेव संप्रदाने चतुर्थी। यद्यपि ब्राह्मणे तृप्ते, पितुः सुखं भवति, तथापि तत् न दानकर्मधनसंबन्धजन्यम्, अपि तु ब्राह्मणतृप्तिजन्यम्। अतस्तदानीं ब्राह्मणाय ददातीत्येव प्रयोगः साधुः, न तु पित्रे ददातीति इति भावः। तत्र संबन्धपदप्रयोजनमाह — **अत एवेति।** दानक्रिया-कर्मजन्येत्यनुक्त्वा दानक्रियाकर्मसंबन्धजन्येति कथनादेव पितृगतसुखस्य उक्त-रीत्या परंपरया दानकर्मभूतधनजन्यत्वमस्तीति पितुः संप्रदानत्वं संभाव्येतेति तद्वारणाय कर्मसंबन्धजन्येत्यत्र संबन्धपदम्। धनसंबन्धस्य पितर्यभावात् न पितुः दानकर्मधनसंबन्धजन्यसुखाश्रयत्वम् इति न संप्रदानत्वशङ्काया अवकाश इत्याशयः। परं त्वेतत् प्रयोजनं नातीव रोचते। धनसंबन्धवत् धनस्यापि पितर्यभावात्। परंपरयेति तूभयथापि तुल्यम्। उक्तविधस्य संप्रदानत्वस्य सूत्राल्लाभप्रकारमाह — **अत्र कर्मणा यमिति।** अत्र अस्मिन् सूत्रे कर्मणा यम् इति द्वितीयाविभक्त्यन्तयच्छब्दनिर्देशात् संप्रदानस्य यच्छब्दनिर्दिष्टस्य ईप्सितत्वं

लभ्यते। ईप्सितत्वं नाम फलशालितया इच्छाविषयत्वम्। कर्मणा इत्यनेन कर्मसंबन्धजन्यत्वं लभ्यते। फलाश्रये संबद्धं हि कर्म फलं जनयेत्। तथा च दानस्येति दाधातुघटितसंप्रदानसंज्ञाबलात् लभ्यते। ततश्च दानक्रियाकर्मसंबन्ध-जन्यफलशालितया इच्छाविषयत्वं संप्रदानत्वम्। तच्च विप्राय गां ददातीत्यत्र विप्रे भवतीति भावः।

ननु विप्राय गां ददाति स्वर्गकामः इत्यत्र स्वर्गकाम इति पदेन निर्दिश्य-मानस्वर्गरूपफलाश्रयत्वं दातुरेव भवति, न तु विप्रस्येति सर्वसंप्रतिपन्नम्। तत्र विप्रस्य स्वर्गरूपफलभागित्वेनोद्देश्यत्वाभावात् कथं संप्रदानत्वमिति शङ्काया-माह — **विप्राय गां ददाति स्वर्गकाम इत्यादाविति।** तत्र स्वर्गरूपफलं प्रति गोदानमङ्गमिति इष्यते। विप्रस्य गोसंबन्धजन्यं यत् सुखादिरूपं फलं तन्नास्तीति नोच्यते। ततश्च विप्रस्य गोसंबन्धजन्यं फलं सुखादिरूपमन्यत्। गोदातुः विप्रोद्देश्यकगोदानजन्यं स्वर्गरूपं फलमन्यत्। दानं तावत् देयद्रव्यस्य विप्र-संबन्धात् साद्गुण्यं लभते। तच्च स्वर्गोपयोगि। ततश्च विप्रे दानसाद्गुण्य-जनकत्वेन ईप्सितत्वात् संप्रदानत्वमिति भावः।

**'अजां ग्रामं नयती'त्यत्र अजासम्बन्धजन्यफलवत्त्वेन ग्रामस्येप्सितत्वाभावान्न ग्रामस्य सम्प्रदानत्वप्रसङ्गः। तादृशफलवत्त्वेन ग्रामस्येप्सितत्वे 'अजां ग्रामाय नयती'ति प्रयोग इष्ट एव।**

**एवमेव च 'रजकाय वस्त्रं ददाति, रजकस्य वस्त्रं ददाती'त्यादयः प्रयोगा अप्युपपादनीयाः। एव 'मुपाध्यायस्तस्मै चपेटिकां ददाती'ति महाभाष्यप्रयोगोऽपि संगच्छते। इतरथा स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वापादनदानघटितसम्प्रदानत्वे ईदृशप्रयोगाणां भाक्तत्वापत्तेः। अतो बहुतरप्रयोगसाधारणमिदं सम्प्रदानत्वम्।**

---

क्रियाकर्मकारकसंबन्धजन्यफलाश्रयत्वेनोद्देश्यत्वं संप्रदानत्वमित्यत्र संबन्धपदस्य स्थलान्तरे प्रयोजनमाह — **अजां ग्रामं नयतीत्यत्रेति**। तत्र णीञ्धातोः प्रापणमर्थः। प्रापणं नाम संयोगजनकक्रिया। तस्याः कर्म अजा। तज्जन्यं फलं अजाग्रामसंयोगः तदाश्रयत्वं ग्रामस्यास्तीति ग्रामस्य संप्रदानसंज्ञापत्तिः। तद्वारणाय कर्मकारकसंबन्धजन्येत्युक्तम्। अजासंयोगजन्यत्वं अजाग्रामसंयोगे नास्ति। स्वस्य स्वजन्यत्वाभावात् अतः न अजायाः संप्रदानत्वापत्तिरिति भावः। यदा तु अजाग्रामसंयोगाश्रयत्वेन ग्रामः इष्टो भवति तदा अजां ग्रामाय नयतीति प्रयोग इष्ट एवेति भावः।

**एवमेवेति**। रजकाय वस्त्रं ददातीत्यत्र रजकस्य वस्त्रसंबन्धात् धनलाभरूपफलं भवतु इति विवक्षया चतुर्थी। तदविवक्षायां संबन्धसामान्यविवक्षायां तु रजकस्य वस्त्रं ददातीति प्रयोगः। **महाभाष्यप्रयोग इति**। वृद्धिसंज्ञासूत्रे इदं भाष्यम्। य उदात्ते कर्तव्ये अनुदात्तं करोति खण्डिकोपाध्यायः तस्मै चपेटां ददाति इति भाष्यम्। खण्डिकोपाध्यायः बालोपाध्यायः। इतरथा संज्ञायाः अन्वर्थत्वाश्रयणे स्वस्वत्वनिवृत्तिपूर्वकं यत् परस्वत्वापादनरूपं दानं तद्घटितसंप्रदानत्वविवक्षायां ईदृशप्रयोगाणां रजकाय वस्त्रं ददाति, खण्डिकोपाध्यायस्तस्मै चपेटां ददातीत्यादिप्रयोगाणां भाक्तत्वं स्यात् इति भावः।

## अस्मिन् मते शाब्दबोधप्रकारः

अत्र च 'विप्राय गां ददाती'त्यत्र फलजनकत्वरूपमुद्देश्यत्वम्, निरूपितत्वञ्च चतुर्थ्यर्थः, प्रकृत्यर्थः चतुर्थ्यर्थे फले, निरूपितत्वे च साक्षात्सम्बन्धेनाऽन्वेति। चतुर्थ्यर्थयोश्च परस्वत्वापादकस्वस्वत्वनिवृत्त्यनुकूलक्रियावाचिधात्वर्थतावच्छेदकपरस्वत्वेऽन्वयः। द्वितीयार्थवृत्तित्वस्यापि तत्र, स्वस्वत्वे चाऽन्वयः। तथा च

**विप्रवृत्तिसुखजनकविप्रनिरूपितगोवृत्तिस्वत्वजनकस्वस्वत्वनिवृत्तिजनकक्रिया चैत्रनिष्ठेति शाब्दबोधः। रजकाय वस्त्रं ददाती'त्यादौ समर्पण एव धात्वर्थतावच्छेदके चतुर्थ्यर्थयोरन्वयः। चपेटां ददातीत्यत्र चपेटासंयोग एव धात्वर्थतावच्छेदके तयोरन्वयः। 'वृक्षायोदकं सिञ्चती'त्यत्रापि वृक्षनिष्ठपुष्टिजनकत्ववृक्षनिरूपितत्वयोः धात्वर्थतावच्छेदके उदकनिष्ठसंयोगेऽन्वयः — इत्याहुः।**

---

उक्तवैयाकरणमतानुसारेण चतुर्थ्यर्थकथनपूर्वकं शाब्दबोधं वर्णयति — **अत्र चेत्यादिना**। चैत्रः विप्राय गां ददातीत्यत्र चतुर्थ्याः सुखरूपफलजनकत्वरूपमुद्देश्यत्वं निरूपितत्वं चार्थः। प्रकृत्यर्थस्य विप्रस्य चतुर्थ्यर्थसुखरूपफले आधेयतासंबन्धेनान्वयः, निरूपितत्वे च स्वनिष्ठनिरूपकताकत्वसंबन्धेनान्वयः। सुखजनकत्वस्य धात्वर्थैकदेशे परस्वत्वे आश्रयत्वसंबन्धेनान्वयः। स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वजनको व्यापारः दाधात्वर्थः। स्वस्वत्वं नाम दातृनिरूपितं स्वत्वम्। परस्वत्वं नाम प्रतिग्रहीतृविरूपितं स्वत्वम्। गोशब्दोत्तरद्वितीयायाः आधेयत्वमर्थः। तस्य परस्वत्वे स्वस्वत्वे च अन्वयः। तथा च विप्रनिष्ठसुखजनकं विप्रनिरूपितं यत् गोनिष्ठं स्वत्वं तज्जनकः दातृनिरूपितगोनिष्ठस्वत्वनिवृत्तिजनकश्च व्यापारः चैत्रनिष्ठः इति शाब्दबोधः। दानेन तावत् गवि विद्यमानं दातृनिरूपितं स्वत्वं निवर्तते, विप्रनिरूपितं स्वत्वं जायते तत् विप्रस्य सुखजनकम्। इदं मनसिकृत्य शाब्दबोधः वर्णितः।

रजकाय वस्त्रं ददातीत्यत्र समर्पणानुकूलो व्यापारो धात्वर्थः। समर्पणमत्र धात्वर्थतावच्छेदकं फलम्। रजकोद्देश्यकवस्त्रसमर्पणानुकूलो व्यापारः चैत्रनिष्ठ इति बोधः।

चपेटां ददातीत्यत्र चपेटासंयोगानुकूलो व्यापारो धात्वर्थः। छात्रोद्देश्यकछात्र-चपेटासंयोगजनकस्वहस्तक्रियाजनको व्यापारः उपाध्यायनिष्ठ इति बोधः।

वृक्षायोदकं सिञ्चतीत्यत्र संयोगानुकूलो व्यापारः धात्वर्थः। पुष्टिजनकत्वं निरूपितत्वं च चतुर्थ्यर्थः। तयोः संयोगेऽन्वयः। वृक्षनिष्ठपुष्टिजनकः वृक्षनिरूपितश्च यो जलसंयोगः तदनुकूलव्यापारः चैत्रवृत्तिरिति बोधः। समर्पणम् — अधीनीकरणम्। चपेटा — करतलसंयोगः।

## वैयाकरणमतनिराकरणम्

**तन्न। सम्प्रदानशब्दस्याऽवयवार्थबाधेन शक्त्यन्तरकल्पने प्रमाणाभावात्, 'ग्रामं गच्छती'त्यत्र चैत्रस्य गमनक्रियाकर्मकारकग्रामजन्यसंयोगजन्यसुखभागित्वेन सम्प्रदानत्वापत्तेश्च। न चेष्टापत्तिः, 'ग्रामं गच्छति चैत्राये'ति प्रयोगापत्तेः। न च आकडारादेका संज्ञा (पा.सू 1.4.1) इत्यनुशासनात् संज्ञाद्वयप्रयुक्तकार्यानुपपत्तेः, विप्रतिषेधे परं कार्यम् (पा.सू 1.4.2) इति स्मृतिवचनात् गच्छतीत्यत्र कर्त्राख्याते कर्तृसंज्ञाया आवश्यकत्वेः, पूर्वायाः सम्प्रदानसंज्ञाया बाधोपपत्तिरिति वाच्यम्। तथात्वे 'चैत्रेण ग्रामो गम्यते' इतिवत् चैत्राय ग्रामो गम्यते इति प्रयोगापत्तेः। कर्तृत्वविवक्षायां तृतीयाप्रयोगवत्, संम्प्रदानत्वविवक्षायां चतुर्थीप्रयोगस्य निवारयितुमशक्यत्वात्। इतरथा 'ग्रामं गच्छति, ग्रामे गच्छती'ति विवक्षाभेदेन प्रयोगद्वयानापत्तेः। न च 'चैत्रः स्वस्मै गच्छती'तिवत् तादृशप्रयोगे इष्टापत्तिः, स्वस्मै गम्यते इत्यस्य 'स्वार्थं गम्यते' इति विवरणानुरोधेन तादर्थ्यचतुर्थीत्वेन सम्प्रदानविभक्तित्वानुपपत्तेः।**

एतावता प्रबन्धेन अनूदितं वैयाकरणमतं दूषयति — **तन्नेत्यादिना। अवयवार्थ-बाधेनेति।** सम्यक् प्रदीयते अस्मै तत् संप्रदानम् इत्यवयवलभ्यार्थबाधेन **शक्त्यन्तरकल्पने** = फलभागित्वेनोद्देश्येऽर्थे संप्रदानशब्दस्य शक्तिकल्पने प्रमाणा-भावात्। लघ्वीं टि-घु-भादिसंज्ञां परित्यज्य संप्रदानमिति गुर्व्याः संज्ञायाः करणेन अवयवार्थयुक्तस्यैव संप्रदानसंज्ञेति पाणिनेस्तात्पर्यात्। अपि च चैत्रः ग्रामं गच्छतीत्यत्र गमनक्रियायाः यत् कर्म ग्रामः तत्संबन्धेन तत्संयोगेन जायमानं यत् सुखरूपं फलं तदाश्रयत्वेनोद्देश्यत्वं कर्तुः चैत्रस्यास्तीति तस्य संप्रदानसंज्ञा स्यात्। तथा च चैत्रायेति चतुर्थी स्यात् इति भावः। तत्र शङ्कते — **न चेति।** चैत्रो ग्रामं गच्छतीत्यत्र गमनकर्तृत्वमपि चैत्रस्यास्ति। उक्तरीत्या संप्रदानत्वमप्यस्ति। तत्र 'आ कडारादेका संज्ञा' इति सूत्रेण संप्रदानसंज्ञापेक्षया परया कर्तृसंज्ञया संप्रदानसंज्ञायाः बाधात् कर्तृसंज्ञाप्रयुक्ता प्रथमैव भवति, न संप्रदानसंज्ञाप्रयुक्ता चतुर्थी इति भावः। तत्र समाधत्ते — **तथात्वे इत्यादिना।** पूर्वोक्तशङ्का न युक्ता। चैत्रेण ग्रामो गम्यते इत्यत्र ग्रामसंयोगजन्यसुखाश्रयत्वात् संप्रदानत्वे सत्यपि यथा कर्तृत्वविवक्षया तृतीया तथैव संप्रदानत्वविवक्षायां चतुर्थ्यपि कुतो न भवति। विवक्षातः कारकाणां प्रवृत्तेः स्वीकारात्। अन्यथा विवक्षामनादृत्य आकडार-सूत्रबलेन परायाः परसूत्रविहिताया विभक्तेः प्रवृत्तिरिति स्वीकारे चैत्रो ग्रामं गच्छतीतिवत् चैत्रो ग्रामे गच्छतीति प्रयोगस्यानुपपत्तिः स्यात्। परया कर्मसंज्ञया अधिकरणसंज्ञायाः बाधेन तत्प्रयुक्तसप्तम्यनुपपत्तेः इति भावः।

ननु चैत्रः स्वस्मै गच्छतीतिवत् चैत्रश्चैत्राय गच्छतीति प्रयोग इष्ट इत्या-शङ्कते — **न च चैत्रः स्वस्मै इति।** स्वस्मै गच्छति इत्यस्य स्वार्थं गच्छतीत्यर्थः। इयं च न संप्रदानार्थकचतुर्थी। अपि तु तादर्थ्ये चतुर्थी। तत्र स्वार्थं गच्छतीति विवरणं प्रमाणम्। न तथा चैत्रश्चैत्राय गच्छतीत्यत्र वक्तुं शक्यत इति समाधानम्।

चैत्रः चैत्रार्थं गच्छतीति विवरणाभावात्। अत्र मूले स्वस्मै गम्यत इत्यस्य स्वार्थं गम्यत इति विवरणानुरोधेन इत्यस्य स्थाने स्वस्मै गच्छति इत्यस्य स्वार्थं गच्छतीति विवरणानुरोधेन इति पाठः साधुः।

**न चैतद्दोषवारणाय क्रियाकरणत्वमिति कर्मविशेषणम्, ग्रामश्च न गमन-करणम्, देयन्तु दानक्रियाकरणमिति, नासम्भव इति वाच्यम्। देयस्यापि स्वत्व-रूपफलांशे करणत्वम्, न तु तदनुकूलक्रियांश इति गमनेऽपि तदविशिष्टम्, गमनफलस्य संयोगस्याऽपि ग्रामजन्यत्वाविशेषात्। विप्रनिष्ठफलसामान्याभावेऽपि 'विप्राय मया गौर्दत्ता, न तु तस्य कश्चित् भोगो जातः' इत्यादिव्यवहारानुपपत्तेः न फलघटितसम्प्रदानत्वं युक्तम्।**

**मनसा पात्रमुद्दिश्य जलमध्ये जलं क्षिपेत् (ना.स्मृ 1-2) इति वचनात् पात्रोद्देश्यकत्यागमात्रेणाऽस्मै मया दत्ता, नत्वनेन गृहीतेति व्यवहारः, स दानस्यैव तत्र परस्वत्वोत्पत्त्यभावेन अजातत्वात्, भाक्त एवेति, न पूर्वमते तादृशस्थले अव्याप्त्यापत्तिः।**

---

पुनः शङ्कते — **न चैतद्दोषवारणायेति।** चैत्रो ग्रामं गच्छतीत्यत्र कर्तुश्चैत्रस्य संप्रसारणत्ववारणाय पूर्वोक्ते संप्रदानलक्षणे यत्क्रियाकर्मसंबन्धजन्यफलशालित्वे-नोद्देश्यं यत् तत् तत्क्रियासंप्रदानम् इत्यत्र कर्मकारके करणत्वमित्यपि विशेषणं दीयते। तेन क्रियायाः करणं सत् यत्क्रियाकर्म तत्संबन्धजन्यफलभागित्वे-नोद्देश्यत्वं संप्रदानत्वमिति लक्षणं भवति। चैत्रो ग्रामं गच्छतीत्यत्र ग्रामो यद्यपि गमनकर्म, तथापि करणं न भवति अतो ग्रामं गृहीत्वा तत्संबन्धजन्यफल-भागित्वात् चैत्रस्य संप्रदानत्वमापादयितुं न शक्यते। विप्राय गां ददातीत्यत्र तु

दानकर्म गोद्रव्यं दानस्य करणं कर्म च भवति। अतस्तत्संबन्धजन्यसुखरूपफलशालित्वात् विप्रस्य संप्रदानत्वमिति न दोष इति भावः।

तत्र समाधत्ते — **देयस्यापीति**। विप्राय गां ददातीत्यत्र दानक्रियाजन्यस्वत्वरूपफलं प्रति दानकर्मणो गोः करणत्वमस्ति। न तु तदनुकूलदानक्रियां प्रति करणत्वम्। एवं च गमनजन्यसंयोगरूपफलं प्रति ग्रामस्यापि करणत्वात् तत्संयोगजन्यसुखाश्रयस्य कर्तुश्चैत्रस्य संप्रदानत्वापत्तिः अनिवार्यैति भावः।

अपि च फलघटितं पूर्वोक्तं संप्रदानलक्षणं न संभवतीत्याह — **विप्रनिष्ठेत्यादिना**। क्रियाकर्मजन्यफलशालितया उद्देश्यत्वमिति फलघटितं संप्रदानलक्षणं न युक्तम्। दानक्रियया विप्रस्य फलसामान्याजननेऽपि विप्राय मया गौर्दत्ता, न तु तस्य कश्चित् भोगो जातः इति व्यवहारात्, फलाजननेऽपि विप्रायेति संप्रदानचतुर्थीदर्शनात् इति भावः।

ननु न्यायसुधाकारमतानुसारेण उक्ते त्यज्यमानद्रव्योद्देश्यत्वे सति स्वीकारवत्त्वं संप्रदानत्वम् इति लक्षणेऽपि दोषोऽस्ति। तथा हि — विप्राय मया गौर्दत्ता न त्वनेन गृहीता इति व्यवहारोऽस्ति। समीचीने पात्रे दातव्यमिति अस्मै मया गौर्दत्ता, न तु अनेन गृहीता इति व्यवहारात् स्वीकारघटितसंप्रदानलक्षणमपि अव्याप्तमित्याशङ्क्य समाधत्ते — **यस्तु प्रतिग्रहाभावेऽपीत्यादिना**। ईदृशस्थले स्वस्वत्वनिवृत्तिमात्रतात्पर्येण भाक्तं संप्रदानत्वम्। मुख्यं संप्रदानत्वं स्वीकारघटितं पूर्वोक्तमिति भावः।

## सम्प्रदानत्वस्याखण्डोपाधिरूपता

**वस्तुतस्तु मतद्वयेऽपि पदार्थद्वयेऽपि शक्तिद्वयकल्पनस्यावश्यकत्वात्, अन्यमते च पदार्थैकदेशे फले प्रकृत्यर्थस्यान्वयापत्तेः, निरुक्तसम्प्रदानत्वाज्ञानेऽपि च 'विप्राय**

**गां ददाती'ति वाक्यात् विप्रसम्प्रदानकं गोकर्मकं दानमिति बोधोदयात् देयद्रव्य-निष्ठस्वत्वनिरूपकत्वरूपम्, तत्समनियतमखण्डोपाधिरूपमेव वा सम्प्रदानत्वं युक्तमाश्रयितुम्। तदेव च शाक्तश्चतुर्थ्यर्थः। तत्र प्रकृत्यर्थो विप्रः साक्षादा-धेयत्वेनैवाऽन्वेति, तस्य च धर्मिग्राहकप्रमाणेन ससम्बन्धिकत्वकल्पनात् निरूप-कापेक्षायां 'कर्मणा यमभिप्रैति' (पा.सू 1.4.32) इति सूत्रात् कर्मकारकनिरूपक-त्वावगतेः स्वनिरूपकदेयद्रव्यकर्मकदानानुकूलत्वसंसर्गेण कृतावन्वयः। मुख्य-दानातिरिक्ते च सर्वत्र भाक्तस्सम्प्रदानव्यवहारः।**

---

अथ स्वमतमाह — **वस्तुतस्तु इत्यादिना**। मीमांसकवैयाकरणयोरुभयोरपि मतयोः संप्रदानचतुर्थ्याः शक्तिद्वयं कल्पनीयं भवति। तथा हि मीमांसकमते उद्देश्यत्वं स्वीकारश्च चतुर्थ्यर्थः। वैयाकरणमते निरूपितत्वं फलं च चतुर्थ्यर्थः। अन्येषां वैयाकरणानां मते फलावच्छिन्नव्यापारे शक्तिः। तत्र प्रकृत्यर्थस्य विप्रादेः पदार्थैकदेशफले अन्वयः। ततश्च पदार्थः पदार्थेन अन्वेति न तु तदेकदेशेनेति व्युत्पत्तिभङ्गः। सर्वमतेऽपि विप्राय गां ददातीतत्यत्र विप्रसंप्रदानकं गोकर्मकं दानमिति बोधो जायते। अतो देयद्रव्यनिष्ठस्वत्वनिरूपकत्वम् अथवा तत्समनियतं अखण्डोपाधिरूपं संप्रदानत्वम्। समनियतत्वं नाम तद्व्याप्यत्वे सति तद्व्यापकत्वम्। संप्रदानत्वेनाभिमतसकलव्यक्तिवृत्तिः जातितुल्योऽखण्डो धर्मः संप्रदानत्वम्। तदेव चतुर्थ्यर्थः। तत्र आधेयतासंबन्धेन विप्रस्यान्वयः। संप्रदानत्वस्य स्वनिरूप-कदेयद्रव्यकर्मकदानानुकूलत्वसंबन्धेन भावनायामन्वयः। स्वं — विप्रनिष्ठं संप्रदा-नत्वं तन्निरूपकं यत् देयद्रव्यं गवादि तत्कर्मकं यत् दानं तदनुकूला भावनेति बोधः। ततश्च विप्रस्य संप्रदानत्वं नाम गवादिदेयद्रव्यनिष्ठस्वत्वनिरूपकत्वरूपम्। अखण्डोपाधिरूपं वा। **तस्य** = संप्रदानत्वस्य। **धर्मिग्राहकप्रमाणेन** = संप्रदान-

रूपधर्मिविषयकज्ञानजनकेन 'कर्मणा यमभिप्रैति स संप्रदानम्' (पा.सू. 1.4.32) इति सूत्रेण ससंबन्धिकत्वकल्पनात् निरूपकवत्त्वकल्पनात् गवादिरूपं देयद्रव्यं संप्रदानत्वनिरूपकम्। विप्रनिष्ठसंप्रदानत्वस्य गौः निरूपिका। अतः विप्रनिष्ठ-संप्रदानत्वनिरूपकगोकर्मकदानानुकूला भावना भवति इति भावः।

**मुख्यदानातिरिक्तेत्यादि।** स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वापादनरूपं मुख्यं दानं यत्र नास्ति, तत्र पत्ये शेते रजकाय वस्त्रं ददाति इत्यादौ, तत्र पत्यादौ संप्रदानमिति शब्दप्रयोगो लाक्षणिकः। एवं प्रजापतये जुहोतीत्यादौ। प्रजापतौ संप्रदानत्वघटकस्य त्यज्यमानद्रव्योद्देश्यत्वस्य सत्वेऽपि स्वीकाराभावेन मुख्य-संप्रदानत्वं न संभवति। तत्र चतुर्थ्याः त्यज्यमानद्रव्योद्देश्यत्वरूपं देवतात्वमर्थः। इदं च देवतात्वं भाक्तं संप्रदानत्वम् इत्युच्यते। देवतावाचकतद्धितापेक्षया देवताबोधकचतुर्थ्याः दौर्बल्यमुक्तमस्ति। 'सास्य देवता' (पा.सू. 4.2.24) इति सूत्रेण देवतार्थे विधीयमानः अण् मुख्यः त्यज्यमानद्रव्योद्देश्यरूपदेवतावाच-कत्वात्। चतुर्थ्यास्तु देवता नार्थः। अपि तु संप्रदानम्। तच्च स्वीकारघटितम्। यत्र देवतातात्पर्येण चतुर्थी प्रयुज्यते, तत्र देवतायां लक्षणा। संप्रदानघटकस्य त्यज्य-मानद्रव्योद्देश्यमात्रस्य चतुर्थ्या बोधात्। अत एव तद्धितापेक्षया चतुर्थी दुर्बलेति भावः।

## भाक्तसम्प्रदानस्थलेषु बोधप्रकारः

**अत एव 'प्रजापतये जुहोती'त्यादौ लक्षणयैव देवतात्वं प्रतिपाद्यत इति, चतुर्थ्यास्तद्धितापेक्षया दौर्बल्यम्। अत एव दानातिरिक्तयत्किञ्चित्क्रियाजन्यफल-भागित्वरूपभाक्तसम्प्रदानत्वेऽपि चतुर्थीविधानार्थं क्रियाग्रहणं कर्तव्यम्' इति वार्तिकं क्रियया यमभिप्रैति; सोपि संप्रदानसंज्ञस्स्यादित्यर्थकम्। न चैवं क्रियाफल-**

**शालित्वेन घटं करोतीत्यादौ चतुर्थ्यापत्तिः, परत्वेन द्वितीयया चतुर्थ्या बाधात्, यत्किञ्चित्क्रियाजन्यफलशालित्वात्मकस्य भाक्तसम्प्रदानत्वस्य सकर्मकाकर्मक-साधारणस्य सकर्मकमात्रविषयिण्या द्वितीयया बाधोपपत्तेश्च। अत एव 'पत्ये शेते' इत्यत्र चतुर्थी। अत एव मुख्यदानातिरिक्तसकर्मकधातुस्थलेऽपि यत्र 'वृक्षायोदकं सिञ्चती'त्यादौ कर्मकारकान्तरं लब्धम्, तत्रापि वृक्षे निरुक्तभाक्तसम्प्रदानत्व-विवक्षायां चतुर्थी भवत्येव। कर्मान्तराभावे तु द्वितीयैव।**

---

**अत एवेति।** दानस्थल एव संप्रदानत्वस्य मुख्यत्वादेव दानातिरिक्तक्रिया-जन्यफलशालित्वस्थलेऽपि संप्रदानचतुर्थीसाधुत्वार्थं क्रियाग्रहणं कर्तव्यम् इति वार्त्तिककारेण उक्तम्। संप्रदानसंज्ञाबलात् यद्यपि दानक्रियाजन्यफलशालितया उद्देश्यस्यैव संप्रदानसंज्ञा लभ्येत, तथापि अन्यक्रियास्थलेऽपि संप्रदानसंज्ञा-सिद्ध्यर्थं क्रियाग्रहणं कर्तव्यम् इत्युक्तम्। तेन सामान्यतः क्रियाजन्यफलशालितया यम् इच्छति सोऽपि संप्रदानमित्यर्थः। तेन वृक्षायोदकमासिञ्चति, पत्ये शेते इत्यादौ चतुर्थी। **न चैवमिति।** घटं करोतीत्यत्र धात्वर्थक्रियाजन्योत्पत्ति-रूपफलाश्रयत्वात् घटस्य संप्रदानत्वात् घटाय करोतीति प्रयोगापत्तिः इति शङ्का। तत्र क्रियाजन्यफलशालित्वरूपकर्मत्वस्यापि सत्त्वेन परया द्वितीयया चतुर्थ्याः बाधात् न चतुर्थी। तत्र चतुर्थीवारणाय हेत्वन्तरमाह — **यत्किंचिदिति।** यत्किंचित्क्रियाजन्यफलशालित्वरूपं भाक्तं संप्रदानत्वम्। तत्र यत्किंचित्क्रिया इत्यनेन सकर्मिका अकर्मिका वा उभयविधापि क्रिया विवक्षिता। सकर्मकमात्र-क्रियाजन्यफलशालित्वं कर्मत्वम्। इदं च कर्मत्वं विशेषरूपत्वात् सामान्यक्रिया-घटितभाक्तसंप्रदानत्वस्य बाधकम्। तथा च सकर्मककृधातुवाच्यक्रियाजन्य-फलशालिनः घटस्य करोतिकर्मत्वमेव। न तत्संप्रदानत्वम्। अतो घटं करोतीत्यत्र

द्वितीयैव न संप्रदानत्वं घटस्य। पत्ये शेते इत्यत्र शीङ्धातोः अकर्मकत्वात् तदर्थशयनजन्यप्रीत्याश्रयस्य पत्युः उक्तकर्मत्वासंभवात् क्रियाजन्यफलशालित्वरूपं भाक्तं सप्रदानत्वम्। अतस्तदर्थिका पतिशब्दोत्तरं चतुर्थी।

**अत एवेति।** सकर्मकाकर्मकसाधारणयत्किंचित्क्रियाजन्यफलशालित्वस्य भाक्तसंप्रदानत्वरूपत्वादेव वृक्षाय उदकमासिञ्चति इत्यत्र वृक्षस्य भाक्तसंप्रदानत्वमाश्रित्य वृक्षपदोत्तरं चतुर्थी भवति। तत्र सिचधातुः सकर्मकः। जलसंयोगानुकूलव्यापारवाचकः। तत्र धात्वर्थव्यापारजन्यजलसंयोगाश्रयतया वृक्षस्य भाक्तं संप्रदानत्वम्। अतः वृक्षपदोत्तरं संप्रदानत्वार्थिका चतुर्थी। तथा च वृक्षनिष्ठजलसंयोगजनिका जलकर्मिका या क्रिया तदनुकूला भावनेति बोधः। अथवा वृक्षसंप्रदानकजलसंयोगानुकूलक्रियानुकूला भावनेति बोध इति भावः। कर्मान्तराभावे तु जलरूपकर्मान्तराभावे तु वृक्षं सिञ्चतीत्येवं मुख्यकर्मत्वार्थिका द्वितीयैवेति भावः। [वृक्षायोदकमासिञ्चतीत्यत्र द्रवद्रव्यजलगतक्रियानुकूलव्यापारः धात्वर्थः। धात्वर्थतावच्छेदकक्रियारूपफलशालितया उदकस्य कर्मता। तादृशक्रियाजन्यधात्वर्थतानवच्छेदकजलसंयोगरूपफलशालितया वृक्षस्य संप्रदानत्वमिति ग्रन्थकारो मन्यत इति प्रतिभाति।]

**तत्रापि गत्यादिसकर्मकधातुविशेषस्थले पुनः प्रतिप्रसवार्थं 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि'** (पा.सू 2.3.12) **इत्यनुशासनं चेष्टारूपकर्मणि अध्वभिन्ने द्वितीयाचतुर्थ्यौ स्यातामित्यर्थकम्। ग्रामं गच्छति, ग्रामाय गच्छति, अचेष्टायान्तु मनसा हरिं व्रजति, अध्वनि तु पन्थानं गच्छति, यन्त्राऽधिष्ठित एव पथ्ययं चतुर्थीपर्युदासः। यदा तु उत्पथात् पन्था एव क्रमितुमिष्यते, तदोत्पथेन पथे**

**गच्छतीति भवत्येव चतुर्थी। अत्र सर्वत्र आश्रयत्वं लक्षणया चतुर्थ्यर्थः, तच्च स्वनिरूपकफलजनकक्रियानुकूलत्वसंसर्गेण कृतावन्वेति।**

---

**तत्रापीत्यादि।** भाक्तसंप्रदानत्वस्थलेऽपि गम्यादिसकर्मकधातुविशेषस्थले परया द्वितीयया बाधितायाः चतुर्थ्याः पुनः प्रतिप्रसवरूपेण प्राप्त्यर्थं 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि' (पा.सू. 2.3.12) इति सूत्रेण चेष्टारूपगत्यर्थक-धातोः अध्वभिन्ने कर्मणि द्वितीयाचतुर्थ्यौ विहिते। ग्रामं गच्छति, ग्रामाय गच्छति इत्युदाहरणम्। अचेष्टायां तु द्वितीयैव भवति मनसा व्रजति इति। चेष्टा नाम शारीरक्रिया। मानसव्यापारः अचेष्टा। अनध्वनि इत्युक्तत्वात् अध्वरूपे कर्मणि पन्थानं गच्छतीति द्वितीयैव। अपि च गन्त्रा अधिष्ठिते एव पथि अयं चतुर्थी-पर्युदासः। एतदुक्तं भवति — यदा गन्ता मार्ग एव वर्तते तदा अयं पन्थानं गच्छति इति प्रयोगः। परं तु यदा तु मार्गात् भ्रष्टः पुनः पन्थानमागच्छति तदा उत्पथेन पथे गच्छति इति चतुर्थी। अत्र सर्वत्र आश्रयत्वं लक्षणया चतुर्थ्यर्थः। तस्य स्वनिरूपकफलजनकक्रियानुकूलत्वसंबन्धेन कृतावन्वयः। स्वम् आश्रय-त्वम् तन्निरूपकं फलं सुखादि तज्जनिका क्रिया गमनादिक्रिया तदनुकूलत्वं कृतौ इति भावः। ततश्च उक्तसंबन्धेन मार्गनिष्ठाश्रयत्वविशिष्टा भावनेति बोधः। **आस्थितः** = आश्रितः। **उत्पथेनेति।** गन्तुमशक्त इति शेषः। उत्पथात् इति ल्यब्लोपे पञ्चमी। उत्पथं परित्यज्येत्यर्थः।

## क्रियाग्रहणं कर्तव्यमिति वार्तिकस्य वाक्यपदीयकैयटयोर्निरस्तस्यानुवादः

**यत्तु — कर्मणा यमभिप्रैति (पा.सू. 1.4.32) इति सूत्रस्थयथाश्रुतभाष्यस्वर-साद्वाक्यपदीयकैयटादौ 'क्रियाग्रहणं कर्तव्यमि'ति वार्तिकप्रत्याख्यानं कृतम्। तथाहि — सर्वा हि पाकादिक्रिया ज्ञानेच्छादिक्रियाकर्म, तद्यत्र 'पत्ये शेते' इत्यादौ**

चतुर्थ्यन्तप्रयोगः, तत्राऽनुमेयां ज्ञानादिक्रियां विवक्षित्वा, तत्कर्मत्वेन शयनं विवक्ष्यते, तत्र ज्ञानादिक्रियाकर्मकारकभूतशयनं प्रतीप्सिततत्वेन पत्युस्सम्प्रदानत्वोपत्तेर्नोऽर्थो वार्तिकेन। यत्र तु 'घटं करोति, ओदनं पचति, हरिं मनसा व्रजति, पन्थानं गच्छती'त्यादौ द्वितीयाप्रयोगः, तत्र ज्ञानादिक्रियया अभेदं पाकादिक्रियायां विवक्षित्वा, तम्प्रति ईप्सिततमस्यौदनादेः कर्मत्वम्, ग्रामं गच्छतीत्यादौ तु द्विविधप्रयोगसत्त्वात् भेदाभेदोभयविवक्षयोभयसम्प्रदानत्वस्य दानक्रियामात्रनिरूपितत्वानङ्गीकाराच्च 'पत्ये शेते' इत्यादावपि मुख्यसम्प्रदानत्वाविरोधः — इति।

---

अथ क्रियाग्रहणं कर्तव्यमिति वार्त्तिकप्रत्याख्यानविषयकवाक्यपदीयकारादिमतमुपन्यस्यति — **यत्तु इत्यादिना**। अयमत्र पिण्डितार्थः — 'कर्मणा यमभिप्रैति स संप्रदानम्' इति सूत्रस्थयथाश्रुतभाष्यस्वारस्यात् वाक्यपदीयकैयटादौ क्रियाग्रहणमपि कर्तव्यम् इति वार्त्तिकप्रत्याख्यानं कृतम् — तथा हि — सर्वा हि पाकादिक्रिया ज्ञानेच्छादिक्रियाकर्म। तत् यत्र पत्ये शेते इत्यादौ चतुर्थ्यन्तप्रयोगः तत्र अनुमेयां ज्ञानादिक्रियां विवक्षित्वा तत्कर्मत्वेन शयनं विवक्ष्यते। तत्र ज्ञानादिक्रियाकर्मकारकभूतं शयनं प्रति ईप्सिततत्वेन पत्युः संप्रदानत्वोपपत्तेः वार्तिकेन न प्रयोजनम्। यत्र तु घटं करोति, ओदनं पचति, हरिं मनसा व्रजति, पन्थानं गच्छति इत्यादौ द्वितीयाप्रयोगः तत्र ज्ञानादिक्रियया पाकादिक्रियायाः अभेदं विवक्षित्वा तां प्रति ईप्सिततमस्य ओदनादेः कर्मत्वं भवति। ग्रामं गच्छति इत्यादौ तु द्विविधप्रयोगदर्शनात् ग्रामाय गच्छतीत्यपि प्रयोगगर्शनात् भेदाभेदोभयविवक्षया उभयं साधु। संप्रदानत्वस्य दानक्रियामात्रनिरूपितत्वानङ्गीकारात् पत्ये शेते इत्यादावपि मुख्यसंप्रदानत्वाविरोधः इति। अथ पङ्क्यर्थः — पत्ये शेते

इत्यत्र चतुर्थीसमर्थनार्थं क्रियाग्रहणं कर्तव्यम् इति वार्तिकमारब्धम्। कर्मणा यमभिप्रैति (पा.सू 1.4.32) इति सूत्रात् उक्तवाक्ये पत्युः संप्रदानत्वं न भवति। क्रियाकर्मसंबन्धजन्यफलभागित्वेनोद्देश्यत्वं संप्रदानत्वम् इति सूत्रलभ्यं संप्रदानत्वम्। पत्ये शेते इत्यत्र शीङ्धातोः अकर्मकत्वात् धात्वर्थशयनकर्मैव अप्रसिद्धम्। ततः तद्घटितं संप्रदानत्वं पत्युः न संभवति। अतः चतुर्थी पतिशब्दोत्तरं न स्यात्। पत्ये शेते इति प्रयोगस्तु प्रामाणिकः। तत्समर्थनाय क्रियाग्रहणं कर्तव्यम् इति वार्तिकमारब्धम्। उक्तवार्तिकबलात् क्रियाकर्मकारकाभावेऽपि क्रियाजन्यफलशालित्वेन यदुद्देश्यम् तदपि संप्रदानम्। पत्ये शेते इत्यत्र धात्वर्थशयनजन्यसुखाश्रयत्वेनोद्देश्यत्वात् पत्युः संप्रदानत्वात् पत्ये इति संप्रदानचतुर्थी इति वार्तिककाराशयः।

उक्तवार्तिकखण्डकानां तु अयमाशयः — सर्वा हि पाकादिक्रिया ज्ञानेच्छादिक्रियाकर्म भवति। जानाति इच्छति करोतीति क्रमः प्रसिद्धः. आदौ पाकक्रियां जानाति। ततः पाकं कुर्याम् इति इच्छति, ततः पाकं करोतीति अनुभवः। एवमेव पत्ये शेते पत्नी इत्यत्रापि क्रियापदेन ज्ञानम् इच्छां च गृहीत्वा तयोः कर्म शयनं तज्जन्यं यत् फलं सुखादिकं तदाश्रयत्वं पत्युः वर्तत इति कृत्वा मुख्यमेव संप्रदानत्वं भवति। अतः क्रियाग्रहणं कर्तव्यम् इति वार्तिकमनावश्यकम् इति।

ननु सर्वासां क्रियाणां ज्ञानेच्छाकर्मत्वं स्वीकृत्य पत्ये शेते इत्यादौ मुख्यसंप्रदानत्वोपपादने, सकर्मकधातुस्थले ओदनं पचतीत्यादावपि ज्ञानक्रियाविषयः धात्वर्थपाकः तज्जन्यविक्लित्तिरूपफलशालित्वस्य ओदने सत्त्वात् ओदनपदोत्तरं संप्रदानत्वार्थिका चतुर्थी कुतो न भवति इति आशङ्क्य, तत्र धात्वर्थक्रियायाः ज्ञानस्य च भेदो न विवक्षितः, अपि तु अभेदो विवक्षितः। अतः ज्ञानापाकादिकं प्रति ईप्सिततमस्य ओदनादेः कर्मत्वम्। अतो ओदनपदोत्तरं कर्मणि द्वितीया।

गच्छतीत्यादौ, ग्रामं गच्छति, ग्रामाय गच्छति इति द्विविधप्रयोगसत्त्वात् ज्ञानादितः गमनक्रियायाः भेदः अभेदश्च विवक्षितः। अतो भेदमादाय ग्रामाय गच्छतीति प्रयोगः, अभेदमादाय ग्रामं गच्छतीति प्रयोगः। संप्रदानत्वं तु दान-क्रियामात्रनिरूपितमिति नाङ्गीक्रियते। अतः पत्ये शेते इत्यत्र क्रियापदेन ज्ञान-मिच्छां च गृहीत्वा तत्कर्म शयनं तज्जन्यं यत् फलं सुखं तदाश्रयत्वं पत्यौ वर्तत इति कृत्वा पत्युः मुख्यमेव संप्रदानत्वमिति वाक्यपदीयकैयटादीनामाशयः।

## वाक्यपदीयकैयटमतखण्डनेनोक्तवार्तिकस्यावश्यकत्वप्रतिपादनम्, तत्रैव भाष्यवृत्त्योर्नैर्भर्यमिति चोपपादनम्

**तन्न। पच्यादिधातुभ्यो ज्ञानाद्यनुभवाभावात्, नियमेनाऽऽरोपे प्रमाणाभावाच्च, विध्यभावे कारणाभावेन प्रयोगगतसाधुत्वज्ञानाभावात्, भेदाभेदव्यवस्थाप्रतीत्यनु-पपत्तेश्च। तस्मात् 'क्रियाग्रहणं कर्तव्यमि'ति न प्रत्याख्येयम्। अत एव भाष्य-कारेणापि कर्मणेति सूत्रे प्रत्याख्यातमपि, गत्यर्थकर्मणि (पा.सू 2.3.12) इति सूत्रे क्रियाग्रहणमपि तत्र चोद्यते, इति ग्रन्थेन विधित्वं तस्याश्रितमेव। न चैवं गत्यर्थ-कर्मणीति सूत्रप्रत्याख्यानानुपपत्तिः, धात्वर्थतावच्छेदकफलशालित्वरूपे, तत्सम-नियताखण्डोपाधौ वा विवक्षिते द्वितीया। तदनवच्छेदकक्रियाजन्यफलभागित्वे विवक्षिते चतुर्थीत्येव उभयोपपत्तेः, सूत्रवैयर्थ्यमित्याशयात्। गमनजन्यस्वास्थ्या-द्याश्रयत्वेन 'ग्रामाय गच्छती'ति प्रयोगोपपत्तेः।**

---

अथ तन्मतनिराकरणपूर्वकं वार्तिककारपक्षं समर्थयते — **तन्नेत्यादिना।** यदुक्तं सर्वापि क्रिया ज्ञानेच्छादिक्रियाकर्म जानाति इच्छति, ततः करोति इत्यनुभवात् इत्युक्तम्, तन्न। पचति इत्युक्ते पाकविषयकज्ञानस्य पाकविषयकेच्छायाश्चानु-भवाभावात्। अतस्तत्रानुमेयां ज्ञानादिक्रियामादाय कर्मत्वं धात्वर्थस्य वक्तुं न

शक्यते। अपि च ज्ञानादेः पाकादिक्रियायाश्च अभेदारोपेऽपि प्रमाणं नास्ति। ततश्च ज्ञानक्रियां गृहीत्वा तत्कर्मभूतशयनजन्यफलाश्रयतया पत्युः मुख्यं संप्रदानत्वमिति यदुक्तं, तन्न संगच्छते। ग्रामं, ग्रामाय वा गच्छतीत्यादौ गमनादिक्रियायाः ज्ञानेच्छादितो भेदाभेदोभयविवक्षायां च किमपि प्रमाणं नास्ति।

अतः पत्ये शेते इत्यादौ संप्रदानचतुर्थीसाधुत्वार्थं क्रियाग्रहणं कर्तव्यमिति वार्तिकमारब्धव्यमेव, न तु तत्प्रत्याख्यानं युक्तम्। **विध्यभावे इति।** क्रियाग्रहणं कर्तव्यम् इति वार्तिकरूपानुशासनाभावे इत्यर्थः। **कारणाभावेन** = प्रयोगसाधुत्वज्ञानकारणस्याभावेन। अपि च क्वचित् भेदो विवक्ष्यते क्वचिच्चाभेदः विवक्ष्यते इति व्यवस्थाप्रतीतेश्च कारणं नास्तीत्यर्थः। अत एव भाष्यकारेणापि कर्मणा यमभिप्रैति इति सूत्रे प्रत्याख्यातमपि क्रियाग्रहणं (कर्तव्यम् इति वार्तिकं) गत्यर्थकर्मणि इति सूत्रे क्रियाग्रहणमपि तत्र चोद्यते इति ग्रन्थेन तस्य वार्तिकस्य विधित्वमाश्रितमेव।

ननु क्रियाग्रहणं कर्तव्यमिति वार्तिकं यदि न प्रत्याख्यायते तदा भाष्यकृता गत्यर्थकर्मणीति सूत्रप्रत्याख्यानं यत् कृतं तन्न संगच्छते। तथा हि — ग्रामं गच्छतीत्यत्र ग्रामस्य कर्तुरीप्सिततमं कर्म इति सूत्रेण कर्मत्वं सिध्यति। संप्रदानसंज्ञासूत्रे क्रियाग्रहणं कर्तव्यम् इति वार्तिकबलात् पूर्वोक्तरीत्या ज्ञानादिक्रियामादाय तत्कर्मकारकजन्यफलशालित्वेनोद्देश्यस्यापि ग्रामस्य भाक्तं संप्रदानत्वमपि लभ्यते। परं तु सकर्मकधातुस्थले ग्रामं गच्छतीत्यत्र परया कर्मत्वप्रयुक्तद्वितीयया वार्तिकलभ्यचतुर्थ्याः बाधः स्यात्। सा बाधा मा भूत् इत्येतदर्थमुभयोरपि द्वितीयाचतुर्थ्योः विभक्त्योः सिद्ध्यर्थं गत्यर्थकर्मणीति सूत्रमावश्यकं प्रतीयते। तथा च भाष्योक्तं तत्सूत्रप्रत्याख्यानं न संगच्छते इत्याशयेन शङ्कते — **न चैवं गत्यर्थकर्मणीति सूत्रप्रत्याख्यानानुपपत्तिरिति।** समाधत्ते — **धात्वर्थतावच्छेदकफलशालित्वरूपे इत्यादिना।**

**अयमाशयः** — ओदनं पचतीत्यत्र विक्लित्यनुकूलव्यापारो धात्वर्थः। धात्वर्थ-तावच्छेदकं फलं विक्लित्तिः। तदाश्रयत्वात् ओदनस्य कर्मत्वं भवति। पत्ये शेते इत्यत्र धात्वर्थजन्यं फलं सुखादिरूपं न धात्वर्थतावच्छेदकम्। धातोरकर्मकत्वात्। परं तु तत् फलं धात्वर्थशयनजन्यम्। अतो धात्वर्थतानवच्छेदकसुखादिफला-श्रयत्वात् पत्युः भाक्तं संप्रदानत्वं भवति। इयं च व्यवस्था क्रियाग्रहणं कर्तव्यमिति वार्तिकाल्लभ्यते। तथा गमनजन्यधात्वर्थतावच्छेदकसंयोगरूपफलाश्रयतया ग्रामस्य कर्मत्वात् ग्रामं गच्छतीति प्रयोग उपपद्यते। गमनजन्यं धात्वर्थता-नवच्छेदकं स्वास्थ्यादिकं फलं गृहीत्वा तदाश्रयत्वेन भाक्तं संप्रदानत्वं ग्रामस्य लभ्यत इति ग्रामाय गच्छतीति प्रयोगश्च उपपद्यते। ततश्च गच्यर्थकर्मणीति सूत्राभावेऽपि द्वितीयाचतुर्थ्योः साधुत्वलाभात् तत्सूत्रप्रत्याख्यानं भाष्यकृतामुप-पन्नमेवेति।

**न चैवमध्वादिरूपापवादविषयेऽपि प्रयोगद्वयापत्तिः, तदंशेऽप्रत्याख्यानस्य भाष्यसिद्धत्वात्। भाष्यकारो हि अध्वादीनां न स्वरूपेणापवादविषयता, 'स्त्रियम् गच्छति' इत्यत्र द्वितीयानियमानापत्तेः, अपि तु सम्प्राप्तत्वेन प्राप्त एव पन्थाः, स्त्री च। तत्र 'पन्थानं गच्छति, स्त्रियं गच्छती'ति द्वितीयानियम इति प्रतिपादयन्, असम्प्राप्ते कर्मणि द्वितीयाचतुर्थ्यौ भवत इति वक्तव्यमित्याह। वृत्तिकारोऽपि अमुमेवाऽर्थमनुमन्यते। अतस्सिद्धं धात्वर्थतानवच्छेदकं यत्क्रियाफलम्, तदाश्रय-त्वमेव एवमादिस्थले भाक्तसम्प्रदानत्वम् — इति।**

---

ननु गत्यर्थकर्मणि इति सूत्रप्रत्याख्याने अनध्वनि इत्युक्ताध्वादिरूपाप-वादविषयेऽपि पन्थानं गच्छति पथे गच्छति इति द्वितीयाचतुर्थीरूपविभक्ति-द्वयमपि साधु स्यात् इत्याशङ्क्य एतादृशस्थले प्रत्याख्यानं नास्तीति भाष्यादेव

सिद्धत्वात् इति समाधत्ते — **न चैवमध्वादीति**। तथा हि — अनध्वनीति अध्वनः न स्वरूपेणापवादविषयत्वम्। तथा सति स्वरूपेणापदवादविषयत्वे सति स्त्रियं गच्छति, स्त्रियै गच्छतीति प्रयोगद्वयसाधुत्वापत्तेः। इष्यते तु स्त्रियं गच्छतीति द्वितीयैव। अत एव भाष्यकृता — असंप्राप्ते कर्मणि द्वितीयाचतुर्थ्यौ भवत इति वक्तव्यम् इत्युक्तम्। तस्यायमाशयः — यत्र कर्म पूर्वमसंप्राप्तम्, तत्र द्वितीया-चतुर्थ्यौ भवतः — ग्रामं गच्छति, ग्रामाय गच्छतीति। यत्र तु कर्म पूर्वमेव प्राप्तं तत्र द्वितीयैव भवति, यथा कश्चित् ग्रामं जिगमिषुः पन्थानमधितिष्ठति, तदा प्राप्तत्वात् द्वितीया भवति पन्थानं गच्छतीति। अतश्च उत्पथेन पथे गच्छतीत्यत्र असंप्राप्तत्वात् चतुर्थी भवति। एवमेव स्त्रियं गच्छतीत्यत्र स्त्रीशब्दसाहचर्यात् गमेः मैथुनार्थकत्वम्। मैथुनवेलायां स्त्रियाः पूर्वमेव प्राप्तत्वात्। (उपस्थितत्वात्) तत्र द्वितीयैव भवति न चतुर्थी। सर्वमिदमभिप्रेत्यैव भाष्यकार आह — असंप्राप्ते कर्मणि द्वितीयाचतुर्थ्यौ भवतः इति वक्तव्यम् इति। काशिकावृत्तिकारोऽप्य-मुमेवार्थमनुमन्यते। ततश्च क्रियाग्रहणं कर्तव्यम् इति वार्तिकस्य अप्रत्याख्यानात् पत्ये शेते वृक्षायोदकमासिञ्चति इत्यादौ सुखादिरूपं पुष्ट्यादिरूपं च यत् फलं तदाश्रयत्वरूपं भाक्तं संप्रदानत्वम्, तत्प्रयुक्ता चतुर्थी चेति सिद्धमिति भावः।

## रुच्यर्थानां प्रीयमाण इत्यत्र बोधप्रकारः

**एवं 'रुच्यर्थानां प्रीयमाणः'** (पा.सू 1.4.33) **इत्यनुशासनात् रुच्यर्थधातूनां योगे प्रीयमाणः — रुचिविषयीभूतद्रव्यजन्यप्रीतिमानर्थोऽपि सम्प्रदानसंज्ञस्स्यादित्यर्थ-कात्, 'चैत्राय रोचते मोदकः' इत्यादौ चतुर्थी। अत्र मोदकेऽपि धातुयोगस्य सत्त्वात्, तद्वारणाय प्रीयमाणः इति वास्तवञ्च विशेषणम्। वृत्तित्वम्, लक्षणया**

**चतुर्थ्यर्थः। स्वनिरूपकरुचिनिरूपकत्वेनाख्यातार्थान्वयि विषयत्वं लक्षणयाख्यातार्थः, अभिलाषो धात्वर्थः, चैत्रवृत्तित्ववद् रुचिविषयत्वं मोदकवृत्तीति शाब्दबोधः।**

---

अथ रुच्यर्थानां प्रीयमाणः इति सूत्रव्याख्यानम्। रुच्यर्थानां धातूनां प्रयोगे प्रीयमाणोऽर्थः संप्रदानं स्यादित्यर्थः। प्रीयमाण इत्यस्य प्रीत्याश्रय इत्यर्थः। प्रीतिविषयीभूतवस्तुजन्यप्रीतिमानर्थः संप्रदानसंज्ञकः स्यादिति फलितम्। चैत्राय रोचते मोदकः इति उदाहरणम्। अत्र रुचधातुयोगे संप्रदानम् इत्येतावन्मात्रोक्तौ मोदकेऽपि तद्धातुयोगसद्भावात् तस्यापि संप्रदानत्वं स्यात्। तद्वारणाय प्रीयमाण इति विशेषणम्। मोदकस्य प्रीत्याश्रयत्वाभावान्न दोषः। अत्र चतुर्थ्याः लक्षणया आधेयत्वमर्थः। तत्र निरूपितत्वसंबन्धेन प्रकृत्यर्थस्य चैत्रस्यान्वयः। आख्यातस्य लक्षणया विषयत्वमर्थः। तत्र चतुर्थ्यर्थस्य आधेयत्वस्य स्वनिरूपकरुचिनिरूपितत्वसंबन्धेनान्वयः। मोदकस्य आधेयतासंबन्धेन आख्यातार्थविषयत्वेऽन्वयः। तथा च चैत्रनिरूपिताधेयत्वाश्रय (चैत्रवृत्ति) प्रीतिनिरूपितविषयत्वं मोदकवृत्तीति शाब्दबोधः। मोदकः चैत्रवृत्तिप्रीतिविषयः इति यावत्।

अत्र मूले वृत्तित्वं लक्षणया चतुर्थ्यर्थः स्वनिरूपकरुचिनिरूपकत्वेनाख्यातान्वयी इति पाठो दृश्यते। आख्यातान्वयी इत्यस्य आख्यातार्थविषयत्वेऽन्वयी इत्यर्थः। तथा स्वनिरूपकेत्यस्य स्वाश्रयेत्यर्थः। रुचिर्हि चैत्रनिष्ठा चैत्रनिरूपिताधेयत्वाश्रयः भवति। चैत्रनिरूपितस्य आधेयत्वस्य निरूपकः आधारः चैत्र एव भवेत्। रुचिः कथं भवेत् निरूपिका। यद्वा एवं वक्तव्यम् — चैत्रनिरूपिताधेयत्वस्य आश्रयः रुचिः, रुचिनिष्ठाधारतानिरूपकं आधेयत्वं भवति। आधेयत्वनिरूपकमाधार इति कृत्वा रुचेः आधेयतानिरूपकमिति व्यवहृतम्। सर्वथा

आश्रय इत्यत्रैव पर्यवसानमित्यवधेयम्। चैत्रवृत्तित्ववत् = चैत्रवृत्तिः या रुचिः प्रीतिः तन्निरूपितविषयत्वं मोदकवृत्तीत्यर्थः।

## श्लाघह्नुङ् (पा.सू 1.4.34) इत्यत्र बोधः

**एव 'श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः' (पा.सू 1.4.34) इत्यनुशासनादेषां धातूनां प्रयोगे बोधयितुमिष्टः सम्प्रदानसंज्ञः स्यादित्यर्थकात् 'कृष्णाय श्लाघते, ह्नुते, तिष्ठते, शपते वा इत्यादौ चतुर्थी'। अत्राद्यधातुद्वये सकर्मकत्वात् कर्मत्वं चतुर्थ्यर्थः, द्वितीयाबाधेन च चतुर्थी। तृतीयचतुर्थयोस्त्वकर्मकत्वात् षष्ठीबाधेन सम्बन्धश्चतुर्थ्यर्थः।**

**अथवा सर्वत्र शलाघादिज्ञापनं लक्षणया धात्वर्थः। तम्प्रति कृष्णस्य कर्मत्वेन द्वितीयाप्राप्तौ चतुर्थी।**

---

**एवमित्यादि।** श्लाघह्नुङ्स्थाशपां ज्ञीप्स्यमानः (पा.सू 1.4.34) इति सूत्रेण शलाघृ कत्थने ह्नुङ् अपनयने ष्ठा गतिनिवृत्तौ शप उपालम्भने इत्येतेषां धातूनां प्रयोगे ज्ञीप्स्यमानः बोधयितुम् इष्टः योऽर्थः कारकरूपः स संप्रदानसंज्ञकः इत्युच्यते। कृष्णाय श्लाघते, कृष्णाय ह्नुते, कृष्णाय तिष्ठते, कृष्णाय शपते इति उदाहरणम्। श्लाघा स्तुतिः ह्नुवनं संगोपनम्। कृष्णाय श्लाघते। कृष्णं स्तौतीत्यर्थः। स्तोत्रेण हि कृष्णः ज्ञापयितुं शक्यते। ह्नुते = अपलपति। तिष्ठते। प्रकाशनस्थेयाख्ययोश्च (पा.सू 1.3.24) इति सूत्रेण स्थाधातोः आत्मनेपदम्। अहम् ईदृशीति स्थित्या प्रकाशयति गोपी इत्यर्थः। शपते = उपालभते शपथेन प्रकाशयति इत्यर्थः। संगोपनं नाम इतरादर्शनयोग्यदेशस्थापनम्। अत्र = एतादृशोदाहरणेषु वास्तवे = वस्तुसति ज्ञापयितुम् इष्यमाणत्वे सति चतुर्थी। अत्र

आद्यधातुद्वये = श्लाघह्नुङ्स्थाशपधातुद्वये सकर्मकत्वात् कर्मत्वं चतुर्थ्यर्थः। द्वितीयायाः बाधनेन प्रकृतसूत्रेण चतुर्थी। तृतीयचतुर्थयोः = स्थाशपधात्वोः अकर्मकत्वात् संबन्धसामान्यषष्ठीं बाधित्वा चतुर्थी। कृष्णसंबन्धी शाप इत्यर्थः। अथवा सर्वत्र श्लाघादिज्ञापनं लक्षणया धात्वर्थः। तं प्रति = तादृशधात्वर्थं प्रति कृष्णस्य कर्मत्वेन द्वितीयाप्राप्तौ चतुर्थी। कृष्णकर्मकं यत् श्लाघादिज्ञापनं तदनुकूला भावनेति बोधः।

## धारेरुत्तमर्णः (पा.सू 1.4.35) इत्यत्र बोधः

**एवं धारेरुत्तमर्णः (पा.सू 1.4.35) इति सूत्रेण धारयतेर्योगे उत्तमर्णः उक्तसंज्ञस्स्यादित्यर्थकेन 'चैत्राय शतं धारयती'त्यत्र चतुर्थी। अत्र चतुर्थ्यर्थः उत्तमर्णत्वापरपर्यायप्रत्यर्पणीयत्वाख्यस्सम्बन्धः। तस्य च स्वनिरूपकद्रव्यकर्मकधारणानुकूलत्वेन कृतावन्वयः। तथा च चैत्रप्रत्यर्पणीयं शतं धारयतीत्यर्थः। यदा तु स्वत्वाख्यसम्बन्धविवक्षा, तदा चैत्रस्य शतं धारयतीति प्रयोगः। न चास्य मुख्यसम्प्रदानत्वविवक्षयैव चतुर्थ्युपपत्तेः, सूत्रान्तरवैयर्थ्यम्, दानक्रियाभावेन तस्याऽप्राप्तेः, प्रत्यर्पणीयत्वविवक्षया तत्सार्थक्याच्च। अत एव 'क्रियाग्रहणं कर्तव्यम्' इत्यनेनापि न वैयर्थ्यम्।**

---

'धारेरुत्तमर्णः' (पा.सू 1.4.35) इति सूत्रं व्याचष्टे — **एवमिति**। णिजन्तधृञ्धातोः प्रयोगे उत्तमर्णो योऽर्थः तत् कारकं संप्रदानसंज्ञकं भवतीति सूत्रार्थः। चैत्राय शतं धारयति इति उदाहरणम्। अत्र चैत्रः उत्तमर्णो भवति। उत्तमं ऋणं यस्य सः उत्तमर्णः। ऋणस्य दाता उत्तमर्णः। चैत्राय शतं धारयति मैत्रः। मैत्रः अधमर्णः ऋणस्य ग्रहीता। अत एव तस्मै इदं शतं रूप्यकं प्रत्यर्पणीयं भवति।

अत्र चतुर्थ्याः उत्तमर्णत्वापरपर्यायः प्रत्यर्पणीयत्वाख्यः संबन्धः अर्थः। तस्य च स्वनिरूपकद्रव्यकर्मकधारणानुकूलत्वसंबन्धेन कृतावन्वयः। स्वं = प्रत्यर्पणीयत्वं, तन्निरूपकं द्रव्यं शतरूप्यकम्, तद्धारणानुकूला भावनेति बोधः। धारणं नाम अधमर्णे स्थितत्वम्।

यदा तु स्वत्वाख्यसंबन्धविवक्षा = यदा शतरूप्यकमयं द्रव्यं चैत्रस्य न ऋणतया धारयति अपि तु निधिरूपेण कंचित्कालं स्थापयति, अनन्तरं प्रत्यर्पयति, तदा चैत्रस्य शतं धारयति मैत्रः इति प्रयोग इति भावः। स्थापनरूपः संबन्धः षष्ठ्यर्थः।

शङ्कते — **न चेति**। चैत्राय शतं धारयतीत्यत्र कर्मणा शतरूप्यादिना कर्तुः धारणकर्तुः मैत्रादेः अभिप्रेयमाणत्वात् चैत्रस्य, कर्मणा यमभिप्रैति स संप्रदानम् इति सूत्रेण मुख्यमेव संप्रदानत्वं कुतो न भवतीति शङ्कितुर्भावः। **सूत्रान्तरवैयर्थ्यम्** = धारेरुत्तमर्णः इति सूत्रवैयर्थ्यम्। समाधानमाह — **दानक्रियाभावेनेति**। यत्र दानक्रिया भवति तत्रैव अभिप्रेयमाणस्य संप्रदानसंज्ञा। अत्र तु दानक्रियायाः अभावात् न मुख्यं संप्रदानत्वम् इति एकं समाधानम्। अपि च स्वस्वत्वनिवृत्तिपूर्वकपरस्वत्वापादानस्थल एव मुख्यसंप्रदानत्वम्, यथा विप्राय गां ददातीति। अत्र तु गृहीतवस्तुसदृशवस्तुनः प्रत्यर्पणीयत्वं विवक्षितम् इति भेदात् न मुख्यं संप्रदानत्वमिति भावः। क्रियया यमभिप्रैतीति वार्तिकस्याप्यत्र न प्रवृत्तिः। प्रत्यर्पणीयत्वविवक्षायाम् एव प्रकृतसूत्रप्रवृत्तेः वार्तिकेन तदलाभात् इति भावः।

## स्पृहेरीप्सितः (पा.सू 1.4.36) इत्यत्र बोधः

एवं 'स्पृहेरीप्सितः' (पा.सू 1.4.36) इत्यनुशासनात् स्पृहयतियोगे इष्टः सम्प्रदानसंज्ञस्स्यादित्यर्थकात् 'पुष्पेभ्यः स्पृहयति' इत्यत्र चतुर्थी। अत्र चतुर्थ्यर्थः

**कर्मत्वम्, सम्बन्धत्वेन विषयत्वरूपसम्बन्धश्च। तयोश्च तात्पर्यानुरोधेनैकैकशः, समुदितयोर्वा बोधः, तेन निरवकाशत्वात् सम्प्रदानसंज्ञा कर्मसंज्ञाशेषषष्ठयोः बाधिकेति वाक्यपदीयप्रभृतयः।**

**वस्तुतस्तु ईप्सितग्रहणात् ईप्सिततमत्वप्रयुक्तकर्मसंज्ञायाः, सम्बन्धसामान्यप्रयुक्तशेषषष्ठ्या वा बाधे प्रमाणाभावः, तेन विषयित्वमेव तत्त्वेन चतुर्थ्यर्थः। तस्य च स्वाश्रयस्पृहावत्त्वेनाख्यातार्थाश्रयत्वेऽन्वयः। कर्मत्वविवक्षायां 'पुष्पाणि स्पृहयति' इति प्रयोगः। शेषत्वविवक्षायाञ्च पुष्पस्य स्पृहयतीति प्रयोगः। 'परस्परेण स्पृहणीयशोभमि'ति कर्मत्वार्थकः प्रत्ययः। 'कुमार्य इव कान्तस्य त्रस्यन्ति स्पृहयन्ति चे'ति षष्ठीप्रयोगोऽपि सङ्गच्छते। हरदत्तादयोऽप्येवम्।**

---

**एवमिति।** 'स्पृहेरीप्सितः' (पा.सू 1.4.36) स्पृह ईप्सायाम् इति धातुना योगे आप्तुमिष्टोऽर्थः संप्रदानसंज्ञकः स्यात् इत्यर्थः। पुष्पेभ्यः स्पृहयति इति उदाहरणम्। एतत्सूत्रविहितं संप्रदानत्वं संबन्धसामान्यस्य कर्मत्वस्य चापवादः। येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधक इति न्यायात्। अतः चतुर्थ्याः कर्मत्वं संबन्धश्च अर्थः। संबन्धोऽत्र विषयत्वरूपः। पुष्पकर्मकस्पृहा पुष्पविषयकस्पृहा इति बोधः। अत्र तात्पर्यमनुसृत्य कर्मत्वविषयत्वयोः समुदितयोर्वा एकैकस्य वा बोधः। इदं वाक्यपदीयकारमतम्।

तत्रास्वारस्यं प्रकटयन् स्वमतमाह — **वस्तुतस्त्विति।** 'कर्तुरीप्सिततमं कर्म' इति कर्मसंज्ञासूत्रे तमप्ग्रहणमस्ति। स्पृहेरीप्सितः इत्यस्मिन् सूत्रे तु तमप्ग्रहणं नास्ति। अतः समानविषयकत्वाभावात् कर्मसंज्ञायाः नायमपवादः। एवमिच्छाविषयत्वं विषयत्वसामान्यात् भिन्नम्। अतः सामान्यविषयकषष्ठ्या अपि नायमप-

वादः। एवं च कर्मत्वविवक्षायां पुष्पाणि स्पृहयति शेषत्वविवक्षायां पुष्पाणां स्पृहयति इत्यपि प्रयोगः साधुः। पुष्पकर्मकस्पृहा पुष्पविषयकस्पृहा इति बोध-द्वयम् इति भावः। विषयित्वमेव तत्त्वेन विषयित्वत्वेन चतुर्थ्यर्थः। तस्य विषयित्वस्य स्वाश्रयस्पृहानिरूपितत्वसंबन्धेन आख्यातार्थाश्रयत्वेऽन्वयः। अतश्च चैत्रः पुष्पेभ्यः स्पृहयति इति वाक्यात् पुष्पनिरूपितविषयित्वाश्रयस्पृहाश्रयत्वं चैत्रवृत्ति इति बोधः। कर्मत्वविवक्षायां तु पुष्पनिष्ठकर्मत्वनिरूपकस्पृहाश्रयत्वं चैत्रवृत्तीति बोध इति भावः। कर्मत्वविवक्षायां कर्मत्वत्वेन कर्मत्वविवक्षायाम्।

**अत एव** = एतत्सूत्रोक्तसंप्रदानत्वस्य कर्मत्वषष्ठ्योः बाधकत्वाभावात् एव। **स्पृहणीयशोभमिति।** स्पृहणीया शोभा यस्य तत् स्पृहणीयशोभम्। अत्र स्पृहधातोः कर्मण्यनीयर् प्रत्ययः। संप्रदानसंज्ञायाः कर्मसंज्ञाबाधकत्वे तु अनीयर् प्रत्ययः न स्यात्। अयं च कृत्यसंज्ञकः प्रत्ययः।

हरदत्तादयोऽप्येवमिति। काशिकाव्याख्याने — ईप्सितमात्रे इयं संज्ञा। प्रकर्षविवक्षायां तु परत्वात् कर्मसंज्ञैव भवति। यदा तु ईप्सितम् ईप्सिततमं च शेषत्वेन विवक्ष्यते तदा षष्ठी भवति इति हरदत्तग्रन्थः। आदिपदेन भट्टोजीप्रभृतयः विवक्षिताः। एवं च कर्मसंज्ञासूत्रे कर्तुरीप्सिततमं कर्म इति तमब्ग्रहणस्य संप्रदानसंज्ञासूत्रे स्पृहेरीप्सितः इति तमब्ग्रहणाभावस्य पर्यालोचनेन तयोः संज्ञयोः भिन्नविषयकत्वप्रतीत्या न तयोः बाध्यबाधकभाव इति खण्डदेवाशयः। अधिकमन्यत्र। अधिकं मदीयशाब्दबोधमीमांसायां द्रष्टव्यम्।

## क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः (पा.सू 1.4.37) इति सूत्रार्थः

क्रुधद्रुहाद्यर्थानां धातूनां योगे यं प्रति कोपः, स सम्प्रदानसंज्ञस्स्यादित्यर्थकात् 'शत्रवे क्रुध्यति' ईर्ष्यति, असूयतीत्येवं चतुर्थी। अत्र क्रोधः — अमर्षः। द्रोहः

**अपकारः। ईर्ष्या असहनम्। असूया गुणेषु दोषारोपः। अत्राद्ययोरकर्मकत्वात् तद्योगे षष्ठीप्राप्तौ, अन्त्ययोश्च सकर्मकत्वात् द्वितीयाप्राप्तौ, चतुर्थीविधिः, तद्बाधेन 'यं प्रति कोपः' इत्यनेन यत्सम्बन्धित्वयत्कर्मत्वयोः उपादानात्। अत एव नाऽत्र पूर्ववत् द्वितीयान्तादिप्रयोगोऽपि। चतुर्थ्यर्थोऽपि स एव। वास्तवो यत्र कोपः, तत्र कर्मत्वादौ चतुर्थीत्यर्थः। कोपपदोपादानात् 'भार्यामीर्ष्यति मैनामन्यो द्राक्षीदि'त्यत्र न चतुर्थी। अत एव आद्ययोर्धात्वर्थयोरुपसर्गयोगे कर्मसंज्ञाविधिः, शत्रुमभिक्रुध्यति, अभिद्रुह्यती'त्यादौ 'क्रुधद्रुहोरुपसृष्टयोः कर्म' (पा.सू 1.4.38) इत्यनेन।**

---

अथ क्रुधद्रुहेत्यादिसूत्रव्याख्यानम्। 'क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः' (पा.सू 1.4.37) इति सूत्रम्। क्रुध क्रोधे, द्रुह जिघांसायाम्, ईर्ष्य ईर्ष्यायाम्, असूञ् उपतापे एषामर्था एवार्थाः येषां धातूनां तेषां प्रयोगे यं प्रति कोपः, स संप्रदानसंज्ञः स्यात् इति सूत्रार्थः। शत्रवे क्रुध्यति, द्रुह्यति, ईर्ष्यति, असूयति इत्येवं चतुर्थी। क्रोधः अमर्षः = वधादीच्छासमनियतः चित्तवृत्तिविशेषः। द्रोहः अपकारः। ईर्ष्या — अक्षमा असहनम्। असूया = गुणेषु दोषाविष्करणम्। द्रोहादयोऽपि कोपप्रभवा एव। अतो यं प्रति कोपः इति सामान्येनोक्तम्। अत्र आद्ययोः क्रुधद्रुहयोः अकर्मकत्वात् तद्योगे संबन्धसामान्ये षष्ठीप्राप्तौ, अन्त्ययोः ईर्ष्यासूययोः सकर्मकत्वात् द्वितीयाप्राप्तौ तद्बाधेन चतुर्थी विधीयते। यं प्रति कोप इत्यनेन यत्संबन्धित्वयत्कर्मकत्वयोरुभयोरुपादानात्। अत एव नात्र द्वितीयान्तप्रयोगोऽपीष्यते। चतुर्थ्यन्तप्रयोग एवेष्यते। चतुर्थ्यर्थोऽपि संबन्धित्वं कर्मत्वं च। शत्रुसंबन्धी शत्रुकर्मकश्च क्रोधः इत्यादिरूपेण बोधः। वास्तवो यत्र कोपः तत्रैव चतुर्थी। वास्तवकोपाभावादेव भार्यामीर्ष्यति मैनामन्यो द्राक्षीत् इत्यत्र भार्यापदोत्तरं न चतुर्थी। अत्र आद्ययोः क्रुधद्रुहयोः अकर्मकत्वादेव उपसर्गयुक्तयोः

तयोः योगे 'क्रुधद्रुहोरुपसृष्टयोः कर्म' (पा.सू 1.4.38) इति सूत्रेण कर्मसंज्ञा विधीयते क्रूरमभिक्रुध्यति, अभिद्रुह्यति इत्यादौ। यदि तयोः सकर्मकत्वं स्यात् तदा कर्मत्वस्य स्वतः प्राप्तत्वात् तद्विधानं व्यर्थं स्यादिति भावः। एवं च शत्रवे क्रुध्यतीत्यादौ शत्रुसंबन्धिक्रोधानुकूला भावना, शत्रुकर्मकक्रोधानुकूला भावना इति बोधः इति भावः।

## राधीक्ष्योर्यस्य विप्रश्नः (पा.सू 1.4.39)

**एवं 'राधीक्ष्योर्यस्य विप्रश्नः' (पा.सू 1.4.39) इत्यनेनैतयोर्योगे विविध-प्रश्नसम्बन्धी संप्रदानसंज्ञस्स्यादित्यर्थकेन कृष्णाय राध्यति, ईक्षते वा, इत्यत्र चतुर्थी, विविधं पृष्टो गर्गः कृष्णसंबन्धि शुभाशुभं पर्यालोचयतीत्यर्थः। अत एव सम्बन्धित्वं चतुर्थ्यर्थः।**

---

**एवमिति।** राधीक्ष्योर्यस्य विप्रश्नः (पा.सू 1.4.39) इति सूत्रेण राध संसिद्धौ ईक्ष दर्शने इति धात्वोर्योगे यत्संबन्धी यद्विषयकः विविधः प्रश्नः क्रियते तत् कारकं संप्रदानसंज्ञकं भवतीत्युच्यते। कृष्णाय राध्यति ईक्षते वा। पृष्टो गर्गः शुभाशुभं पर्यालोचयतीत्यर्थः। गर्गो नाम ज्योतिःशास्त्रज्ञः ऋषिः। स कृष्णस्य शुभाशुभ-विषये पृष्टः सन् कृष्णविषयकं शुभाशुभं पर्यालोचयतीत्यर्थः। कृष्णस्य संप्रदानत्वं षष्ठ्यपवादरूपेण विधीयते। अत्र विषयत्वमपि संबन्धत्वेन रूपेण भासते। अतः कृष्णसंबन्धिशुभाशुभपर्यालोचनाश्रयत्वं गर्गवृत्तीति बोधः। अत्र क्रुधद्रुहेर्ष्या-सूयार्थानां यं प्रति कोपः (पा.सू 1.4.37) इति सूत्रात् यं प्रतीत्यस्य अनुवृत्त्यैव यत्संबन्धीत्यर्थस्य लाभात् यस्य इति पदम् अनर्थकमिति हरदत्तादयः इत्याहुः।

## प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्तीति सूत्रम्

एवं प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता (पा.सू 1.4.40) इत्यनुशासनात् आभ्यामुपसर्गाभ्यां परस्य शृणोतेर्योगे पूर्वस्य प्रवर्तनरूपव्यापारस्य कर्ता सम्प्रदानसंज्ञस्स्यात् इत्यर्थकात् 'विप्राय गां प्रतिश्रृणोती'त्यत्र चतुर्थी। प्रवर्तनापूर्वकोऽभ्युपगमो धात्वर्थः, वृत्तित्वं चतुर्थ्यर्थः। स च स्वाश्रयप्रवर्तनाजन्याभ्युपगमानुकूलत्वसंसर्गेण कृतावन्वेति। चैत्रनिष्ठप्रवर्तनाप्रवर्तितः प्रतिजानीत इत्यर्थः।

---

**एवं प्रत्याङ्भ्यामिति।** प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता (पा.सू 1.4.40) इति सूत्रम्। प्रति आङ् इत्येताभ्यामुपसर्गाभ्यां परस्य श्रुधातोर्योगे पूर्वस्य प्रवर्तनारूपपूर्वतनस्य व्यापारस्य कर्ता संप्रदानं स्यादित्यर्थः। प्रत्याङ्भ्यामित्यनेन समुदिताभ्यां परस्येत्यर्थो न विवक्षितः। प्रत्येकमेव तयोर्निमित्तत्वात्। अन्यथा अभिनिविशश्च इतिवत् प्रत्याङ्श्रुवः इत्येव ब्रूयात्। चैत्रः विप्राय गां प्रतिशृणोति आशृणोति वा इत्युदाहरणम्। विप्रेण मह्यं देहीति प्रार्थितः सन् देवदत्तः तत् प्रतिजानीते। अत्र धातोः प्रवर्तनापूर्वकाभ्युपगमोऽर्थः। आधेयत्वं चतुर्थ्यर्थः। स च स्वाश्रयप्रवर्तनजन्याभ्युपगमानुकूलत्वसंबन्धेन भावनायामन्वेति। विप्रनिष्ठं यत् प्रवर्तनं तज्जन्यो यः अभ्युपगमः तदाश्रयत्वं चैत्रनिष्ठमिति शाब्दबोधः। अत्र भावना आश्रयत्वरूपा। स्वं विप्रनिरूपितमाधेयत्वम्। तदाश्रयः प्रवर्तनम्। विप्रनिष्ठं प्रवर्तनमिति पर्यवसितम्। मूलानुसारात् अभ्युपगमानुकूला कृतिः इति बोधः लभ्यते। अभ्युपगमस्य ज्ञानविशेषरूपत्वात् कृतिपदमाश्रयत्वपरमिति ध्येयम्। पर्यवसितः तात्पर्यार्थस्तु विप्रनिष्ठप्रवर्तनप्रवर्तितः प्रतिजानीते इति। अत्र

मूले चैत्रनिष्ठेत्यत्र चैत्रपदस्थाने विप्रपदं निक्षिप्य शोधनं कर्तव्यमिति भाति। अथ वा चैतर्निष्ठेत्यस्य चैत्ररूपविप्रनिष्ठेत्यर्थः।

## अनुप्रतिगृणश्च (पा.सू 1.4.41)

**एवं 'अनुप्रतिगृणश्च' (पा.सू 1.4.41) इत्यनेनाभ्यां परस्य गृणातेर्योगे पूर्वव्यापारस्य कर्तृभूतकारकं सम्प्रदानसंज्ञं स्यादित्यर्थकेन होत्रे अनुगृणाति, प्रतिगृणातीत्यत्र चतुर्थी, शंसनपूर्वकप्रोत्साहनं धात्वर्थः, वृत्तित्वरूपसम्बन्धः, कर्मत्वञ्च चतुर्थ्यर्थः, तयोश्च क्रमेण शँसनप्रोत्साहनद्वारको भावनान्वयः। होता प्रथमं शंसति, तमध्वर्युः प्रोत्साहयतीत्यर्थः।**

---

**एवमित्यादि।** अनुप्रतिगृणश्च (पा.सू 1.4.41) इति सूत्रस्य अनु प्रति एताभ्यां परस्य गृ शब्दे इति धातोः योगे पूर्वव्यापारस्य कर्तृभूतं कारकं संप्रदानसंज्ञं स्यादित्यर्थः। अध्वर्युः होत्रे अनुगृणाति प्रतिगृणाति वा इति उदाहरणम्। होता प्रथमं शंसति, तम् अध्वर्युः प्रोत्साहयतीत्यर्थः। प्रोत्साहनं प्रति होतुः कर्मत्वं प्राप्तम्। पूर्वव्यापारं शंसनं प्रति कर्तृत्वात् होतुः संप्रदानत्वम्। शंसनं नाम गानपूर्वकं गुणिनिष्ठगुणाभिधानम्। तत्र होता प्रथमं शंसति, तमध्वर्युः प्रोत्साहयति। शंसन्तं होतारं प्रोत्साहयति अध्वर्युः। अत्र शंसनस्य कर्तुः होतुः संप्रदानसंज्ञा। अतः होत्रे इति चतुर्थी। अत्र शंसनपूर्वकप्रोत्साहनं धात्वर्थः। आधेयत्वं कर्मत्वं च चतुर्थ्यर्थः। आधेयत्वे निरूपितत्वसंबन्धेन होतुः अन्वयः। आधेयत्वस्य आश्रयत्वसंबन्धेन शंसनेऽन्वयः। एवं चतुर्थ्यर्थे कर्मत्वे होतुः आधेयतासंबन्धेनान्वयः। कर्मत्वस्य निरूपकत्वसंबन्धेन प्रोत्साहनेऽन्वयः। प्रोत्साहनस्य आख्यातार्थभावनायामन्वयः। अध्वर्योरपि भावनायामन्वयः। एवं च

होतृकर्तृकशंसनपूर्वकहोतृकर्मकप्रोत्साहनानुकूला अध्वर्युकर्तृका भावनेति शाब्द-बोधः। तयोः वृत्तित्वकर्मत्वयोः क्रमेण होतृकर्तृकशंसनपूर्वकहोतृकर्मकप्रोत्साह-नेति रीत्या प्रोत्साहनद्वारको भावनायामन्वयः। अथ वा होतृकर्तृकशंसन-पूर्वकप्रोत्सहनानुकूला अध्वर्युकर्तृकप्रोत्साहनानुकूला च भावनेति क्रमेणेति भावः।

## परिक्रयणे सम्प्रदानमन्यतरस्याम् (पा.सू 1.4.44)

**एवं 'परिक्रयणे सम्प्रदानमन्यतरस्याम्' (पा.सू 1.4.44) इत्यनेन यन्नियतकालं भृत्या स्वीकरणम् परिक्रयणम्, तस्मिन् साधकतमङ्कारकं विकल्पेन सम्प्रदानसंज्ञं स्यादित्यर्थकेन 'शताय, शतेन वा परिक्रीतः' इत्यत्र विकल्पेन चतुर्थी। करणत्वं चतुर्थ्यर्थः।**

---

एवमिति। 'परिक्रयणे संप्रदानमन्यतरस्याम्' (पा.सू 1.4.44) इति सूत्रम्। नियतकालं भृत्या स्वीकरणं परिक्रयणम्। तुभ्यं मया एतावत् वेतनं दीयते, तत् गृह्णन् एतावन्तं कालं त्वं मम कर्मकरो भव इत्येवं भृत्या वेतनादिना परिमितकालं स्वीकरणं परिक्रयणमिति यावत्। तस्मिन् परिक्रयणे साधकतमं कारकं संप्रदान-संज्ञं वा स्यात् इत्यर्थः। शतेन शताय वा परिक्रीतः। कारणत्वं चतुर्थ्यर्थः। यत्किंचिच्छतद्रव्यकारणकक्रयणानुकूला भावना इति शाब्दबोधः।

## तादर्थ्ये चतुर्थी वाच्या

**एवं 'तादर्थ्ये चतुर्थी वाच्या' (वा. 1458) इति वार्तिकादुपकारकापकारक-साधारणं तदुद्देश्यकत्वं लक्षणया चतुर्थ्यर्थः, मुक्तये हरिं भजति, मशकाय धूमः इत्यादौ, तच्च जनकत्वादिनाऽनेकप्रकारेण। 'तेन ब्राह्मणाय दधि तिष्ठती'त्यादावपि**

**द्रव्यद्वारकक्रियासम्बन्धेऽपि चतुर्थी। अत एव क्रियाग्रहणं कर्तव्यमित्यनेनाऽपि न गतार्थत्वम्।**

---

एवं तादर्थ्य इति। तादर्थ्ये चतुर्थी वाच्या (वा. 1458) इति वार्तिकम्। चतुर्थी संप्रदाने इति सूत्रे भाष्ये पठितमेतत्। तस्मै इदं तदर्थम्। अर्थेन नित्यसमासः। तदर्थस्य भावः तादर्थ्यम्। ब्राह्मणादित्वात् ष्यञ्। उपकारकापकारकसाधारणं तदुद्देश्यकत्वं लक्षणया चतुर्थ्यन्तार्थः। मुक्तये हरिं भजति, मशकाय धूम इति उदाहरणम्। तदुद्देश्यकत्वं च जनकत्वादिना अनेकप्रकारेण। मुक्त्युद्देश्यकहरि-कर्मकभजनानुकूला भावना (कृतिः) इति शाब्दबोधः। मुक्त्युद्देश्यकत्वं च मुक्ति-जनकत्वम्। मशकाय धूमः अस्ति। मशकोद्देश्यकधूमसत्ता। मशकोद्देश्यकत्वं च मशकनिवर्तकत्वम्। मशकनिवर्तकसत्ताश्रयत्वं धूमवृत्तीति बोधः। ब्राह्मणाय दधि तिष्ठतीत्यादौ द्रवद्रव्यद्वारकक्रियासंबन्धेऽपि चतुर्थी। ब्राह्मणोद्देश्यकं यत् दधि तत्कर्तृका सत्ता, इति बोधः। ईदृशस्थले साक्षात् क्रियासंबन्धाभावेऽपि चतुर्थी-संपादनाय प्रकृतवार्तिकमावश्यकम्। अत एव क्रियाग्रहणं कर्तव्यमिति वार्तिकेन गतार्थता न भवतीति तादर्थ्ये चतुर्थीति वार्तिकमावश्यकमिति भावः।

## क्लृपि सम्पद्यमाने च

**एवं 'क्लृपि सम्पद्यमाने च' (वा. 1459) इत्यनेन प्रकृतिरूपं कारणं कार्यात्मना यदा सम्पद्यते, तदा कार्यवाचकाच्चतुर्थी स्यात् क्लृप्यर्थकधातुयोगे। मृत् घटाय कल्पते संपद्यते नाथते वेत्यादौ मृत् घटाकारेण परिणमत इत्यर्थः। इदञ्च कार्य-कारणयोर्भेदविवक्षायाम्। पार्ष्ठिकाभेदविवक्षायां मृद्घटः कल्पते, इति प्रथमैव। 'जनिकर्तुः प्रकृतिः' (पा.सू. 1.4.30) 'इत्यनेन मृदोऽपादानत्वविवक्षायां तु मृदो**

घटः कल्पते' इत्यत्र कारणे पंचमी। कार्ये तु अभिहितत्वात् प्रथमैव। न च तादर्थ्ये चतुर्थीत्यनेन गतार्थत्वम्, परिणामत्वेन बोधस्य विवक्षितत्वात्। एवमग्रेऽपि।

---

एवमिति। क्लृपि संपद्यमाने च (वा. 1459) इति वार्तिकम्। क्लृपीति सप्तम्यन्तम्। क्लृप्तिः संपत्तिः विकारात्मना परिणामः। क्लृप् इति धातौ प्रयुज्यमाने सति संपद्यमानेऽर्थे वर्तमानात् कार्यवाचकात् प्रातिपदिकात् चतुर्थी वाच्येति अर्थः। भक्तिः ज्ञानाय कल्पते ज्ञानात्मना परिणमते इत्यर्थः। एवं मृत् घटाय कल्पते घटाकारेण परिणमते इत्यर्थः। इदं च कार्यकारणयोः भेदविवक्षायाम्। पार्ष्ठिकबोधविषयाभेदविवक्षायां तु मृत् घटः कल्पते संपद्यते इति प्रथमैव। मृदः अपादानत्वविवक्षायां तु मृदो घटः कल्पते इति कारणे पञ्चमी। न च तादर्थ्ये चतुर्थ्या गतार्थत्वम्। परिणामत्वेन बोधस्य विवक्षितत्वात्।

## उत्पातेन ज्ञापिते च

तथा 'उत्पातेन ज्ञापिते च' (वा. 1460) इत्यनेन उत्पातेन ज्ञापनविषये चतुर्थी इत्यर्थकेन वाताय कपिला विद्युद्विद्योतते इत्यत्र चतुर्थी। तत्त्वेन ज्ञापकत्वं चतुर्थ्यर्थः।

एवं हितसुखादियोगेऽपि चतुर्थी, ब्राह्मणाय हितम्, सुखं वेत्यादौ। इदञ्च तद्योगे चतुर्थीसमासविधानरूपज्ञापकवशात्। सम्बन्धित्वं चतुर्थ्यर्थः।

---

एवम् 'उत्पातेन ज्ञापिते च' (वा. 1460) इत्यनेन उत्पातेन ज्ञापनविषये चतुर्थी इत्यर्थकेन वाताय कपिला विद्युत् विद्योतते इत्यत्र वातशब्दोत्तरं चतुर्थी। उत्पातो नाम अशुभसूचकः आकस्मिकः भूतविकारः। तत्त्वेन ज्ञापकत्वं चतुर्थ्यर्थः।

उत्पातत्वावच्छिन्नज्ञापकत्वं चतुर्थ्यर्थः। तस्य आश्रयत्वसंबन्धेन कपिलविद्युति अन्वयः। यदा विद्युत् कपिलवर्णा भवति तदा वातस्य कश्चन विकारो भवति, येन जगतः अशुभं जायेत इति तात्पर्यम्। तथा च वातनिष्ठाशुभसूचकविकार-विशेषावच्छिन्नज्ञाप्यतानिरूपितज्ञापकत्वाश्रयकपिलविद्युद्विद्योतनमिति शाब्द-बोधः। **एवं हितेत्यादि।** हित सुख इति शब्दाभ्यां योगेऽपि चतुर्थी भवति 'चतुर्थी संप्रदाने' (पा.सू 2.3.13) इति सूत्रे 'हितयोगे च' (वा. 1461) इति वार्तिकम्। तत्रत्यचशब्देन सुखशब्दस्य ग्रहणम्। तेन हितसुखशब्दाभ्यां योगे चतुर्थी इत्यर्थः। मूले हितसुखादीत्यत्र आदिपदं संपातायातम्। संबन्धित्वं चतुर्थ्यर्थः। ब्राह्मणाय हितं सुखं वा इत्यस्य ब्राह्मणसंबन्धि हितं सुखं चेति बोधः।

वार्तिकमेतत् सूत्रसिद्धार्थानुवादकमित्याह — **चतुर्थीसमासेति।** 'चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः' (पा.सू 2.1.36) इति सूत्रम्। तेन गवे हितं गोहितं, गवे सुखं गोसुखम् इत्यादौ चतुर्थ्यन्तस्य हितसुखशब्दप्रकृतिकसुबन्तेन समासो विहितः। चतुर्थीविधायकं सूत्रान्तरं नास्ति। अथापि चतुर्थ्यन्तस्य ताभ्यां सह समासविधानात् चतुर्थी ज्ञाप्यतं इति भावः।

## क्रियार्थोपपदस्य च कर्मणि स्थानिनः (पा.सू 2.3.14)

**एवं 'क्रियार्थोपपदस्य च कर्मणि स्थानिनः' (पा.सू 2.3.14) इत्यनेन क्रियावाचि उपपदं यस्य, तस्य स्थानिनः तुमुण्ण्वुल्रूपस्याऽप्रयुज्यमानस्य कर्मणि चतुर्थी स्यादित्यर्थकेन 'फलेभ्यो याति, नमस्कुर्मो नृसिंहाये'त्यादौ चतुर्थी। फलान्याहर्तुम्, नृसिंहमनुकूलयितुमित्यर्थः। इदञ्च तुमुनन्तस्याऽप्रयोगे। ण्वुलन्तस्याऽप्रयोगे तु फलान्याहारक इत्यर्थः। द्वितीयापवादार्थं कर्मग्रहणम्। प्रयुज्यमाने तु द्वितीयैव।**

**अत्राप्रयुज्यमानाहरणनिरूपितं कर्मत्वं चतुर्थ्यर्थः। तस्य च स्वनिरूपकाहरण-क्रियोद्देश्यकयानानुकूलत्वं कृतौ संसर्गः। संसर्गकोटिप्रविष्टत्वादेव चाहरणस्याशाब्दत्वेऽपि न क्षतिः।**

---

**एवं क्रियार्थेत्यादि।** क्रिया अर्थः प्रयोजनं यस्याः सा क्रियार्था। क्रियेति विशेष्यमध्याहार्यम्। क्रियार्था क्रिया = क्रियाफलकक्रियावाचकं पदं उपपदं यस्य तस्य क्रियार्थोपपदस्य। तुमुनो विशेषणमेतत्। उप समीपे उच्चारितं पदमुपपदम्, तस्य। स्थानिनः इत्यपि तुमुनो विशेषणम्। स्थानं प्रसक्तिः अस्यास्तीति स्थानी तस्य स्थानिनः अप्रयुज्यमानस्येत्यर्थः। तथा च क्रियाफलकक्रियावाचक-धातूपपदकस्य अप्रयुज्यमानस्य तुमुनः तुमुन्नन्तस्य कर्मणि चतुर्थी स्यात् इति सूत्रार्थः। फलेभ्यो यातीति उदाहरणम्। फलानि आहर्तुं यातीति तदर्थः। इह फलाहरणक्रियार्था यानक्रिया। तद्वाचके उपपदे आहर्तुम् इति अध्याहारलभ्य-तुमुन्नन्तार्थाहरणक्रियां प्रति फलानां कर्मत्वात् ततश्चतुर्थी। ततश्च चतुर्थ्याः द्वितीयापवादकत्वम्। अत एव कर्मत्वं आहरणक्रियानिरूपितं चतुर्थ्यर्थः। तस्य स्वनिरूपकफलकर्मकाहरणोद्देश्यकयानानुकूलत्वसंसर्गेण कृतावन्वयः। तथा च फलकर्मकाहरणोद्देश्यकयानानुकूला भावना (कृतिः) इति शाब्दबोधः। आहरण-वाचकशब्दाभावेऽपि आहरणस्य संसर्गकोटिप्रविष्टत्वात् शाब्दत्वमिति भावः। नमस्कुर्मो नृसिंहाय इत्यस्य नृसिंहमनुकूलयितुं नमस्कुर्म इत्यर्थः। 'तुमुन्ण्वुलौ क्रियार्थायां क्रियायाम्' (पा.सू 3.3.10) इति सूत्रेण क्रियार्थायां क्रियायां ण्वुलपि विहितः। अतः तदप्रयोगेऽपि तत्कर्मणि चतुर्थी भवति। तदापि फलेभ्यो यातीत्येव प्रयोगः। फलानि आहारको याति इति तदर्थः। शाब्दबोधः स एव।

## तुमर्थाच्च भाववचनात् (पा.सू 2.3.15)

**एवं 'तुमर्थाच्च भाववचनात्' (पा.सू 2.3.15) इति सूत्रेण 'भाववचनाश्च' (पा.सू 3.3.12) इति सूत्रेण विहितो यस्तुमुना समानार्थकः प्रत्ययः, तदन्ताच्चतुर्थी स्यादित्यर्थकेन 'यागाय याती'त्यादौ चतुर्थी। यष्टुं यातीति तदर्थः। स च प्रकृते घञ्। न च तादर्थ्ये चतुर्थीत्यनेन गतार्थत्वम्, तुमुनेव तादर्थ्यस्यापि घञोक्ततया साधुत्वार्थं प्रथमातिक्रमे कारणाभावेन प्रथमाप्राप्तौ चतुर्थीविधिसार्थक्यात्। न च शुद्धभाव एव घञं व्युत्पाद्य तादर्थ्यचतुर्थ्युपपत्तेः, 'भाववचनाश्च' (पा.सू 3.3.11) इति सूत्रवैयर्थ्यम्, क्रियार्थायां क्रियायां विशेषविहितेन तुमुना घञो बाधापत्तेः, तदन्तोपरि तादर्थ्यचतुर्थ्यप्रसक्तेः। अतस्तदबाधार्थं घञादेरपि तदर्थे विधाने कृते प्रथमाबाधार्थं चतुर्थीविधिसार्थक्यात्।**

---

**एवं तुमर्थाच्चेति।** 'तुमर्थाच्च भाववचनात्' (पा.सू 2.3.15) इति सूत्रम्। भाववचनाश्च (पा.सू 3.3.11) इत्यादिसूत्रैः विहिताः ये तुमुना समानार्थकाः घञादयः प्रत्ययाः तदन्तेभ्यः प्रातिपदिकेभ्यः चतुर्थी भवतीत्यर्थः। यागाय याति। यष्टुं यातीत्यर्थः। ननु यागाय यातीत्यस्य यागार्थं यातीति यदि अर्थः तदा तादर्थ्ये चतुर्थ्या सिद्धम्। तुमर्थाच्चेति सूत्रं व्यर्थम् इति शङ्कते — **न च तादर्थ्ये चतुर्थीत्येतेन गतार्थत्वमिति।** यथा तुमुन्प्रत्ययः तादर्थ्यं बोधयति, तथा घञपि तादर्थ्यं बोधयति चेत् चतुर्थ्याः अपि तादर्थ्यार्थकत्वात् उक्तार्थानामप्रयोग इति न्यायेन चतुर्थ्येव न स्यात्। साधुत्वार्थं चतुर्थीति वक्तुं न शक्यते। प्रथमातिक्रमे कारणाभावेन साधुत्वार्थं प्रथमाया एव प्रसक्तेः। इष्यते च चतुर्थी। तदर्थं तुमर्थाच्चेति सूत्रारम्भ इति समाधत्ते — **तुमेनेवेति।** तुमुन्प्रत्ययेन तादर्थ्यं यथोच्यते तथा घञा तादर्थ्यस्योक्ततयेति भावः।

ननु तुमर्थाच्च भाववचनादिति सूत्रमेव मास्तु। यजधातोः भावे घञा यागशब्दे निष्पन्ने तदर्थस्य यागस्य यानार्थत्वविवक्षायां तादर्थ्ये चतुर्थी इति वार्तिकेन चतुर्थी भविष्यति। तया च यागार्थकत्वं याने भोत्स्यते इति यागाय यातीति सिद्धेः इति शङ्कते — **न च शुद्धभाव एवेत्यादिना।** 'भावे' (पा.सू 3.3.18) इति सूत्रे शुद्धक्रियायां घञ् विधीयते, न तु क्रियार्थक्रियायाम्। तुमुन्प्रत्ययस्तु क्रियार्थक्रियायां विधीयते। ततश्च विशेषविहितेन तुमुना घञः बाधापत्तेः यष्टुं यातीत्यर्थे यागाय यातीति प्रयोगसाधुत्वानुपपत्तेः तदुपपादनाय क्रियार्थक्रियार्थे घञ्विधायकं भाववचनाश्चेति सूत्रमावश्यकमेव। ततश्च घञैव तादर्थ्यं ज्ञातम् इति उक्तार्थत्वात् तादर्थ्यचतुर्थी न स्यात्। साधुत्वार्थमपि प्रथमैव स्यात्। तद्बाधार्थं चतुर्थीविधानमित्याशयेन समाधत्ते — **क्रियार्थायां क्रियायामिति।** ततश्च भावघञन्तोपरि तादर्थ्यचतुर्थ्या यष्टुं यातीत्यर्थे यागाय यातीति प्रयोगसाधुत्वं न संपादयितुं शक्यमिति तुमर्थाच्च भाववचनादिति सूत्रमावश्यकमिति भावः। तदन्तोपरि = भावघञन्तोपरि। तद्बाधनार्थम् = तुमुन्ण्वुलोर्बाधनार्थम्। तदर्थे = क्रियार्थक्रियायाम्।

## नमः स्वस्तिस्वाहास्वधालंवषड्योगाच्च (पा.सू 2.3.16)

**एवं 'नमः स्वस्तिस्वाहास्वधालंवषड्योगाच्च' (पा.सू 2.3.16) इति शास्त्रेणैभिः शब्दैर्योगे चतुर्थी स्यादित्यर्थकेन हरये नमः इत्यादौ चतुर्थी। उद्देश्यत्वं चतुर्थ्यर्थः। तस्य च स्वनिरूपकनमनास्तित्ववैशिष्ट्यमाख्यातार्थे संसर्गः। उपपदस्य संसर्गघटकत्वेन तात्पर्यग्राहकत्वाच्च उपपदविभक्तित्वम्। न च तादर्थ्यचतुर्थ्यैव ब्राह्मणाय दधि इत्यादाविव गतार्थत्वम्। नमः पदयोगे षष्ठीव्यावृत्त्यर्थत्वेन नमनार्थकपदान्तरयोगे वा चतुर्थीव्यावर्तकत्वेन च सार्थक्यात्। यदा तु नमनस्य धात्वर्थत्वम्, तदा**

**धातोः संसर्गघटकत्वतात्पर्यग्राहकत्वात् कारकविभक्तित्वेन देवान्नमस्करोति इत्यादौ कर्मत्वार्थिका द्वितीयापि नानुपपन्ना। प्रजाभ्यः स्वस्ति, अग्नये स्वाहा, पितृभ्यः स्वधा, दैत्येभ्यो हरिः अलम्। पर्याप्त्यर्थकश्चायमलंशब्द उपलक्षणं प्रभुसमर्थशक्तादिशब्दानाम्। तस्मै प्रभवतीति प्रयोगः। न त्वत्र षष्ठीव्यावृत्तिः, तेन प्रभुर्बुभूषुर्भुवनत्रयस्य इति न विरोधः। वषट् इन्द्राय। चकारः षष्ठीनिषेधार्थकः।**

---

एवं **नमः स्वस्तीत्यादि**। 'नमः स्वस्तिस्वाहास्वधालंवषड्योगाच्च' (पा.सू 2.3.16) इति सूत्रम्। नमः, स्वस्ति, स्वाहा, स्वधा, अलं, वषट् इत्येतैः शब्दैर्योगे चतुर्थी स्यादिति सूत्रार्थः। हरये नमः। अत्र हरिशब्दोत्तरचतुर्थ्याः उद्देश्यत्वमर्थः। अत्र अस्ति इति क्रिया अध्याहार्या। चतुर्थ्यन्तार्थस्य हरिनिष्ठोद्देश्यत्वस्य स्वनिरूपकनमनास्तित्ववैशिष्ट्यसंबन्धेन आख्यातार्थाश्रयत्वे अन्वयः। नमः शब्दार्थस्य नमनस्य आधेयत्वसंबन्धेन आश्रयत्वेऽन्वयः। हर्युद्देश्यकं यत् नमनं तन्निष्ठा या सत्ता तद्वैशिष्ट्यनिरूपितमाश्रयत्वमित्यर्थः। अत्र नमःशब्दस्य नमनमर्थः। सोऽपि संसर्गघटकः। एतत्सूत्रविहिता चतुर्थी उपपदविभक्तिः, न कारकविभक्तिः। उप = समीपे उच्चरितं पदम् उपपदं नमःपदं तद्योगनिमित्तकत्वात् अत्रत्यचतुर्थी उपपदविभक्तिः। नमःपदार्थनमनस्य संसर्गघटकत्वे चतुर्थ्यर्थस्य आख्यातार्थेऽन्वये यः संसर्गः तद्घटकत्वे तात्पर्यग्राहकं नमः पदम्।

ननु ब्राह्मणाय दधीत्यादौ यथा तादर्थ्ये चतुर्थी, तथा हरये नम इत्यत्रापि तादर्थ्ये चतुर्थी इत्येवास्तु। किमर्थं पृथक्सूत्रनिर्माणमिति शङ्कते — **न च तादर्थ्यचतुर्थ्यैति**। तदुद्देश्यकत्वरूपसंबन्धविवक्षायां षष्ठीव्यावृत्यर्थम्, नमः — पदपर्यायनतिप्रह्वीभावादिपदप्रयोगे चतुर्थीव्यावृत्त्यर्थं च पृथगेतत्सूत्रमिति समाधत्ते — **नमः पदयोग इति**।

ननु नमःपदयोगे यदि चतुर्थी स्यादित्युच्यते तदा देवान् नमस्करोतीत्यादावपि नमः पदयोगसद्भावात् देवशब्दोत्तरं चतुर्थ्या भाव्यं देवेभ्य इति, इति शङ्कायामाह — **यदा तु इत्यादिना।** यत्र विभक्त्यर्थस्य उपपदार्थघटितसंसर्गेण क्रियायामन्वयो भवति, सा विभक्तिः उपपदविभक्तिः। यत्र तु धात्वर्थघटितसंबन्धेन क्रियायामन्वयो भवति सा विभक्तिः कारकविभक्तिः इत्युच्यते। देवान् नमस्करोतीत्यत्र कृधातोः नमनमर्थः। नमःपदं तात्पर्यग्राहकम्। द्वितीयायाः कर्मत्वमर्थः। तस्य स्वनिरूपकनमनानुकूलत्वसंबन्धेन आख्यातार्थकृतावन्वयः। अत्र विभक्त्यर्थस्य कर्मत्वस्य आख्यातार्थे यः संबन्धः तद्घटकत्वं नमनस्यास्ति। अत इयं कारकविभक्तिः। देवकर्मकनमनानुकूला कृतिः इति शाब्दबोधः।

## मन्यकर्मण्यनादरे विभाषाप्राणिषु (पा.सू 2.3.017)

**एवं मन्यकर्मण्यनादरे विभाषाप्राणिषु** (पा.सू 2.3.017) **इत्यनेन प्राणिवर्जिते मन्यतेः कर्मणि तिरस्काररूपानादरे विवक्षिते चतुर्थी वा स्यादित्यर्थकेन, न त्वां तृणम्, तृणाय वा मन्ये, इत्यत्र वैकल्पिकी चतुर्थी। अत्र कर्मत्वं चतुर्थ्यर्थः। अत्र च तृणपदं तृणसदृशपरम्, तथा च तृणसदृशकर्मकाभिन्नं त्वत्कर्मकं ज्ञानमित्यर्थः। त्वत्कर्मकज्ञाने तृणसदृशकर्मकाभेदश्चाऽत्र त्वयि तृणसदृशाभेदे पर्यवस्यति। तत्र चानादरविवक्षायां 'त्वां तृणसदृशमपि न मन्ये', इत्यर्थः फलितः। अतो नोत्कृष्टत्वविक्षायां चतुर्थीप्रयोगः।**

अत्र मन्ये इत्युपादानात् मन्व इत्यत्र न चतुर्थी, तेन त्वां तृणं मन्वे इत्येव प्रयोगः। अत्राऽप्राणिष्वित्यपनीय 'नौकाकान्नशुकसृगालवर्ज्येष्विति वाच्यम्' (वा. 1464) तेनाप्राणित्वेऽपि 'न त्वाम्, नावमन्नं वा मन्ये' इत्यादौ न चतुर्थी।

प्राणित्वेऽपि च 'न त्वां शुने मन्ये' इत्यादौ भवत्येव चतुर्थी। न चैवं मन्यतिकर्मत्वाविशेषाद्युष्मच्छब्दादपि चतुर्थ्यापत्तिः। अनादर इत्यस्य कर्मविशेषणत्वेन अनादरव्यञ्जके कर्मणि चतुर्थीविधिप्रतीतेस्तदप्रसङ्गात्। तत्सिद्धं सर्वत्र चतुर्थ्या भावनान्वयः — इति।

इति श्रीमदाचार्यखण्डदेवविरचिते भाट्टतन्त्ररहस्ये
चतुर्थीविभक्त्यर्थविचारः समाप्तः

---

एवमित्यादि। 'मन्यकर्मण्यनादरे विभाषाप्राणिषु' (पा.सू 2.3.17) इति सूत्रेण प्राणिवर्जिते मन्यतेः कर्मणि तिरस्काररूपानादरे विवक्षिते चतुर्थी वा स्यात् इत्यर्थकेन न त्वां तृणं तृणाय वा मन्ये इत्यत्र वैकल्पिकी चतुर्थी। तृणपदं तृणसदृशपरम्। कर्मत्वं चतुर्थ्यर्थः। तृणसदृशकर्मकाभिन्नं त्वत्कर्मकं ज्ञानमिति बोधः। त्वत्कर्मकज्ञाने तृणसदृशकर्मकाभेदश्च त्वयि तृणसदृशाभेदे पर्यवस्यति। तत्र चानादरविवक्षायां त्वां तृणसदृशमपि न मन्ये इत्यर्थः पर्यवसितः। अतः उत्कृष्टत्वविवक्षायां न चतुर्थी। अत्र मन्येति श्यना निर्देशात् तानादिकमनधातुयोगे न चतुर्थी, अपि तु द्वितीया। न त्वां तृणं मन्वे इत्येव प्रयोगः, न तु तृणाय मन्वे इति।

अत्र अप्राणिषु इत्येतदपनीय तत्स्थाने नैकाकशुकश्रृगालवर्जेष्विति पठनीयम्। तेन अप्राणित्वेऽपि न त्वां नावमन्नं वा मन्ये इत्यादौ न चतुर्थी। प्राणित्वेऽपि च न त्वां शुने मन्ये इत्यादौ भवत्येव चतुर्थी।

न चैवं मन्यतिकर्मत्वाविशेषात् युष्मच्छब्दादपि चतुर्थ्यापत्तिरिति वाच्यम्। अनादरे इत्यस्य कर्मविशेषणत्वेन अनादरव्यञ्जके कर्मणि चतुर्थीविधिप्रतीतेः युष्मच्छब्दार्थस्य अनादरव्यञ्जकत्वाभावेन चतुर्थीप्रसङ्गाभावात् इति भावः।।

**इति सारप्रकाशिकायां चतुर्थीविभक्त्यर्थविचारः**

# पञ्चमीविभक्त्यर्थविचारः

## अपादानत्वनिर्वचनम्

एवं पञ्चम्यपि तत्रैवाऽन्वेति। तदर्थश्च 'अपादाने पञ्चमी' (पा.सू 2.3.28) इति सूत्रादपादानत्वरूपः। तच्च 'ध्रुवमापायेऽपादानम्' (पा.सू 1.4.24) इति सूत्र-निरुक्तम्। तथा हि अपाये विभागे। ध्रुवम् निश्चलं क्रियानाश्रयं यत्, तदपादानसंज्ञं स्यादिति सूत्रार्थः। तथा च क्रियानाश्रयत्वे सति क्रियाजन्यविभागाश्रयत्वम-पादानत्वम्। अस्ति चेदं 'वृक्षात्पर्णं पतती'त्यत्र वृक्षे पतनक्रियानाश्रयत्वात्, पतनक्रियाजन्यविभागाश्रयत्वाच्च। अत्र चोदासीने घटे, पर्णे च अतिप्रसङ्गवारणार्थं दलद्वयम्। क्रियानाश्रयत्वञ्च यद्यपि सामान्यतो न क्रियावन्निष्ठभेदप्रतियोगित्वम्। प्रतियोगितासामान्यप्रवेशे पतनवत्यपि पर्णे द्वित्वाद्यवच्छिन्नप्रतियोगिताकभेद-सत्त्वात् स्वस्मात् पततीति प्रयोगापत्तेः। प्रकृत्यर्थतावच्छेदकावच्छिन्नप्रतियोगिता-प्रवेशे च 'द्रव्यात् पतती'त्यस्याऽनापत्तेः, पतनवति पर्णे द्रव्यत्वावच्छिन्नभेदा-भावात्। तथापि प्रकृत्यर्थतावच्छेदकाश्रययत्किञ्चिद्व्यक्तित्वावच्छिन्नप्रतियोगिता-निवेशेनैव क्रियावन्निष्ठभेदप्रतियोगित्वं निर्वाच्यम्। तच्च पतमानपर्णव्यक्तिनिष्ठभेद-निरूपितयत्किञ्चित्पर्णव्यक्तित्वावच्छिन्नप्रतियोगिताकत्वमुदासीने पर्णेऽपि, अतः क्रियाजन्यविभागाश्रयत्वोपादानमिति, न 'वृक्षात्पतति पर्णे पर्णात् पतती'ति प्रयोगः।

---

अत्रत्याः परिष्काराः सर्वेऽपि प्रायः व्युत्पत्तिवादे दृश्यन्ते। परं तु अनयोः कालविषये निर्णयः कर्तुं न पार्यते। अस्तु। एवं पञ्चम्यपि तत्रैवान्वेतीति।

पञ्चम्यर्थोऽपि भावनायामेवान्वेतीत्यर्थः। **तदर्थश्च** = पञ्चम्यर्थश्च अपादानत्वरूपः। अपादाने पञ्चमी (पा.सू. 2.3.28) इति सूत्रात्। **तच्च** = अपादानत्वं च "ध्रुवमपायेऽपादानम्" (पा.सू. 1.4.24) इति सूत्रेण निरुक्तम्। तथा हि — **अपाये** = विश्लेषे विभागे **ध्रुवम्** = निश्चलम्, क्रियाया अनाश्रयमिति यावत्। तत् अपादानसंज्ञकं भवतीति सूत्रार्थः। क्रियानाश्रयत्वे सति क्रियाजन्यविभागाश्रयत्वमपादानत्वमिति परिष्कारः। तत्र उदाहरणं वृक्षात् पर्णं पततीति। पतनक्रियायाः आश्रयः पर्णम्, अनाश्रयः वृक्षः, स च पर्णपतनक्रियाजन्यः यः विभागः तदाश्रयो भवतीति वृक्षस्यापादानत्वम्। तत्र दलप्रयोजनमाह — **अत्र चेति**। अस्मिन्नपादानलक्षणे क्रियानाश्रयत्वमात्रोक्तौ उदासीने निश्चले घटेऽतिव्याप्तिः। तद्वारणाय क्रियाजन्यविभागाश्रयत्वमिति विशेष्यदलम्। उदासीने घटे विभागाश्रयत्वाभावान्नातिव्याप्तिः। विशेष्यदलमात्रोक्तौ अर्थात् क्रियाजन्यविभागाश्रयत्वमात्रोक्तौ संयोगवत् विभागस्यापि द्विनिष्ठत्वात् पतनजन्यविभागाश्रयत्वस्य पर्णेऽपि सत्वात् तस्यापादानत्वापत्तिः। ततश्च पर्णपदोत्तरं पञ्चम्यापत्तिः। तद्वारणाय क्रियानाश्रयत्वे सतीत्युक्तम्। पर्णस्य पतनक्रियाश्रयत्वात् नापादानलक्षणातिव्याप्तिः पर्णे इति भावः।

अथ क्रियानाश्रयत्वदलं परिष्करोति — **क्रियानाश्रयत्वं चेति**। क्रियानाश्रयत्वं नाम यदि क्रियावन्निष्ठभेदप्रतियोगित्वं तदा पतनक्रियावति पर्णेऽपि क्रियानाश्रयत्वं स्यात्। क्रियावति पर्णे यो भेदः पर्णघटोभयभेदः, एकं नोभयमिति न्यायात्। तत्प्रतियोगित्वं पर्णघटोभयस्मिन्, उभयस्य प्रत्येकानतिरेकात् पर्णेऽपि इति पर्णस्याप्यपादानत्वापत्तिः। ततश्च पर्णपदोत्तरमपादाने पञ्चम्यापत्त्या पर्णात् पर्णं पततीति प्रयोगापत्तिः। **द्वित्वाद्यवच्छिन्नप्रतियोगिताकभेदसत्वात्** = पर्णघटोभय-

त्वावच्छिन्नप्रतियोगिताकभेदसत्वात्। आदिपदेन पर्णघटपटत्रित्वं अथवा वैशिष्ट्यं गृह्यते। **स्वस्मात्** = पर्णात्।

ननु क्रियानाश्रयत्वं नाम क्रियावन्निष्ठो यः पञ्चमीप्रकृत्यर्थतावच्छेदकावच्छिन्नप्रतियोगिताको भेदः तत्प्रतियोगित्वम्। आपाद्यमाने पर्णं स्वस्मात् पततीति प्रयोगे पञ्चमीप्रकृतिः स्वपदम्। तदर्थः पर्णं तदर्थतावच्छेदकं पर्णत्वं, तदवच्छिन्नप्रतियोगिताकभेदः क्रियावत्पर्णनिष्ठो न भवतीति तादृशभेदघटितक्रियानाश्रयत्वं पर्णस्य नास्तीति न पर्णस्यापादानत्वापत्तिः इत्याशङ्क्य तथा सत्यपि वृक्षरूपद्रव्यतात्पर्येण इष्यमाणस्य द्रव्यात् पर्णं पतति इति प्रयोगस्यानुपपत्तिः। पतनक्रियावति पर्णे वृक्षत्वावच्छिन्नप्रतियोगिताकभेदसत्त्वेऽपि पञ्चमीप्रकृत्यर्थतावच्छेदकं यत् द्रव्यत्वं तदवच्छिन्नप्रतियोगिताकभेदासत्वात्, पर्णस्यापि द्रव्यत्वात् इति यद्यपीत्यादिग्रन्थस्य भावः।

समाधत्ते — **तथापीति**। क्रियानाश्रयत्वं नाम क्रियावन्निष्ठः यः पञ्चमीप्रकृत्यर्थतावच्छेदकाश्रययत्किंचिद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदः तत्प्रतियोगित्वम्। द्रव्यात् पर्णं पततीत्यत्र पतनक्रियावत् पर्णम्, तन्निष्ठः पञ्चमीप्रकृत्यर्थतावच्छेदकद्रव्यत्वाश्रययत्किञ्चिद्व्यक्तित्वं वृक्षत्वं तदवच्छिन्नप्रतियोगिताको भेदः वृक्षभेदः तत्प्रतियोगित्वं वृक्षरूपे द्रव्येऽस्तीति द्रव्यात् पर्णं पततीति प्रयोगस्योपपत्तिः इति भावः।

एवं च क्रियानाश्रयत्वं नाम क्रियावन्निष्ठः यः पञ्चमीप्रकृत्यर्थतावच्छेदकाश्रययत्किंचिद्व्यक्तित्वावच्छिन्नप्रतियोगिताकभेदः तत्प्रतियोगित्वम्। एवं परिष्कृतेऽपि यदा वृक्षात् पर्णं पतति तदा पर्णात् पर्णं पततीति प्रयोगापत्तिः। पतनक्रियावत् यत् पर्णं तन्निष्ठो भेद इत्यनेन पतमानपर्णात् भिन्नं यत् अपतमानपर्णं

तद्भेदः अपतमानपर्णभेदः तत्प्रतियोगित्वम् अपतमानपर्णेऽपि वर्तत इति स्वस्य स्वापादानत्वापत्त्या पर्णत्वाश्रयस्य पर्णत्वाश्रयापादनत्वप्रसक्त्या पर्णं पर्णात् पततीति प्रयोगापत्तिः। तद्वारणाय क्रियाजन्यविभागाश्रयत्वमिति विशेष्य-दलोपादानम्। पतमाने पर्णे पर्णान्तरात् भेदसत्वेऽपि पतनजन्यविभागाश्रयत्वं नास्ति। वृक्षस्यैव तदस्ति। अतो पर्णं स्वस्मात् पततीति प्रयोगस्य नापत्तिः। पर्णं वृक्षात् पततीति प्रयोगस्य उपपत्तिश्चेति भावः। सावधानं पठनीयम्।

## पञ्चम्यर्थनिरूपणम्

**अत्र विभागः, परसमवेतत्वञ्च विभक्तिशक्यम्। तत्र च प्रकृत्यर्थो वृक्षो विभागे, पदार्थैकदेशे भेदे च समवेतत्वप्रकृत्यर्थतावच्छेदकाश्रयपतनजन्यविभागाश्रयीभूत-व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसंसर्गाभ्यामन्वेति। विभागः, परसमवेतत्वञ्च जनकत्वस्वरूपसम्बन्धाभ्यां पतनाख्यधात्वर्थेऽन्वेति। तथा च वृक्षसमवेतविभाग-जनकवृक्षत्वरूपप्रकृत्यर्थतावच्छेदकाश्रयविभागाश्रयीभूतव्यक्तित्वावच्छिन्नप्रतियो-गिताकत्वसंसर्गेण वृक्षवद्भेदाश्रयसमवेतपतनाश्रयः पर्णमिति शाब्दबोधः।**

---

एतावता अपादानत्वं परिष्कृतम्। अथ पञ्चम्यर्थं निरूपयति — **अत्र विभाग इत्यादिना।** वृक्षात् पर्णं पततीत्यत्र विभागः परसमवेतत्वं च पञ्चम्याः शक्यार्थः। परसमवेतत्वम् नाम भिन्नसमवेतत्वम्। भेदवन्निरूपितसमवायसंबन्धावच्छिन्न-वृत्तित्वमिति यावत्। विभागे प्रकृत्यर्थस्य वृक्षस्य समवेतत्वसंबन्धेनान्वयः। तथा वृक्षस्य परसमवेतत्वघटकभेदे विभागाश्रयीभूता या व्यक्तिः तद्व्यक्तित्वावच्छिन्न-प्रतियोगिताकत्वसंबन्धेनान्वयः। पञ्चम्यर्थस्य विभागस्य जनकत्वसंबन्धेन, परसमवेतत्वस्य स्वरूपसंबन्धेन (आश्रयत्वरूपेण) धात्वर्थे पतनेऽन्वयः। तथा च

वृक्षसमवेतो यो विभागः तज्जनकम्, वृक्षत्वाश्रयीभूता विभागाश्रयीभूता च या व्यक्तिः तत्प्रतियोगिकभेदवत्समवेतं च यत् पतनं तदाश्रयः पर्णमिति शाब्दबोधः वृक्षात्पर्णं पततीति वाक्याज्जायते इति भावः।

## नैयायिकनव्यानां मतम्

**अत्र प्रकृत्यर्थतावच्छेदकाश्रययत्किञ्चिद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वस्यैव प्रकृत्यर्थस्य वृक्षस्य पञ्चम्यर्थे भेदे संसर्गत्वोक्तौ वृक्षात्पतति पर्णे पर्णात्पतति इति प्रयोगापत्तिः। तत्पतनस्यापि प्रकृत्यर्थतावच्छेदकपर्णत्वाश्रययत्किञ्चिदुदासीनपर्णव्यक्तित्वावच्छिन्नप्रतियोगिताकभेदवत्पतमानपर्णवृत्तित्वात्। पतमानपर्णवृत्तिविभागजनकत्वाच्च। अतस्तद्व्यावृत्त्यर्थं प्रकृत्यर्थस्य भेदेन सहाऽन्वये संसर्गघटकव्यक्तौ पतनजन्यविभागाश्रयत्वं, विशेषणमिति केचिन्नैयायिकनव्याः।**

---

अत्र प्रकृत्यर्थस्य वृक्षस्य विभक्त्यर्थपरसमवेतत्वघटकभेदे प्रकृत्यर्थतावच्छेदकाश्रययत्किंचिद्व्यक्तित्वावच्छिन्नप्रतियोगितासंबन्धेनैवान्वयोऽस्तु। प्रतियोगितायां प्रकृत्यर्थतावच्छेदकाश्रयपतनजन्यविभागाश्रयीभूतव्यक्तित्वावच्छिन्नेति विशेषणं किमर्थमिति शङ्कायां, तत्प्रयोजनमाह — **अत्रेत्यादिना**। एवं च संबन्धमध्ये पतनजन्यविभागाश्रयेति विशेषणं किमर्थमिति प्रश्नः। तत्रेत्थं समाधानम् — पञ्चम्यर्थे भेदे प्रकृत्यर्थस्य वृक्षस्य प्रकृत्यर्थतावच्छेदकवृक्षत्वाश्रययत्किंचिद्व्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेनान्वयः इति यद्युच्येत, तदा वृक्षात् पर्णे पतति सति पर्णात् पर्णं पतति इति प्रयोगापत्तिः, यत् पर्णं पतति, तस्य पञ्चमीप्रकृत्यर्थतावच्छेदकं यत् पर्णत्वं तदाश्रयीभूतं यत्किंचित् उदासीनम् क्रियाशून्यं यत् पर्णान्तरं तस्यापि प्रकृत्यर्थतावच्छेदकपर्णत्वाश्रयत्वात् पर्णत्वाश्रयीभूत-

तादृशोदासीनपर्णव्यक्तित्वावच्छिन्नप्रतियोगिताकभेदवत् यत् पतमानं पर्णं तद्वृत्तित्वं पतनेऽस्तीति पर्णात् पर्णं पतति इति प्रयोगापत्तिः। तद्वारणाय प्रकृत्यर्थस्य भेदेन सहान्वये यः संबन्ध उक्तः तद्घटकव्यक्तौ पतनजन्यविभागाश्रयेति विशेषणं दत्तम्। तस्मिन् दत्ते अपतमानोदासीनपर्णव्यक्तौ पतनजन्यविभागाश्रयत्वं नास्तीति तद्घटितसंबन्धबाधात् न पर्णात् पर्णं पततीति प्रयोगापत्तिरिति भावः। अर्थं बुद्धा पठनीयम्।

## अन्येषां नैयायिकानां मतम्

अन्ये तु गुरुभूतसंसर्गघटितव्युत्पत्तिविशेषकल्पनायां गौरवापत्तेः, क्रियानाश्रयत्वं न क्रियावन्निष्ठभेदप्रतियोगित्वम्, अपितु क्रियावत्प्रतियोरिकभेदाश्रयत्वम्। तदा क्रिया प्रतियोगितावच्छेदिका। भेदश्चाभावीयविशेषणतासम्बन्धेनैव अपादानवृत्तिः तच्चोदासीनपर्णादावपीति तद्व्यावृत्त्यर्थं विशेष्यदलम्। तथा चास्मिन् पक्षे विभागः, भेदश्च पञ्चम्यर्थः। तत्र चाधेयतया प्रकृत्यर्थान्वयः। तयोश्च जनकत्वप्रतियोगितावच्छेदकत्वोभयसंसर्गेण धात्वर्थान्वयः। वृक्षवृत्तिविभागजनकवृक्षनिष्ठभेदप्रतियोगितावच्छेदकपतनेत्यादिशाब्दबोधः। अत्र च 'ग्रामादागच्छतः अश्वात्पतती'त्यत्र अश्वग्रामयोर्गमनपतनापादानत्वव्यावृत्त्यर्थम् लक्षणे क्रियाविशेषविवक्षा द्रष्टव्या। तेन यन्निष्ठविभागजनकत्वेन, यन्निष्ठभेदप्रतियोगितावच्छेदकत्वेन च यत्क्रिया विवक्षिता, तत्त्वं तत्क्रियापादानत्वमिति निष्कर्षः। ततश्च पतनस्याऽश्व एव, गमनस्य च ग्राम एवाऽपादानत्वमिति सिद्धयति। अत एव 'परस्परस्मान्मेषावपसरतः' इत्यत्रोभयकर्मजनिभागस्थले विभागस्यैकत्वेऽपि या या क्रिया विवक्षिता, तत्तत्क्रियाविशेषानादायैव तदनाश्रयस्य तदपादानत्वं निर्वचनीयम्। विवक्षापदोपादानेन च यदा नोक्तरूपेण विवक्षा, अपि त्ववयवावयविभावस्यैव

**विवक्षा, तत्र वृक्षस्य पर्णं पततीत्येव प्रयोग इति, न तत्र अपादानत्वप्रसङ्गः। यत्पदञ्च यत्पदाभिधेयपरम्, तेन वृक्षात्तस्मिन्नेव वृक्षे पर्णं पततीत्यत्र सप्तम्यन्तपदाभिधेयत्व-विशिष्टस्य नापादानत्वम्।**

---

इत्थं केषांचित् अन्येषां नैयायिकानां मतमुक्त्वा अन्येषां नैयायिकानां मतमनुवदति — **अन्ये तु इत्यादिना।** पूर्वं तत्क्रियानाश्रयत्वे सति तत्क्रिया-जन्यविभागाश्रयत्वम् इत्युक्त्वा तत्क्रियानाश्रयत्वादिपरिष्कारपूर्वकं पञ्चम्यर्थः तदन्वयप्रकारश्च केषांचित् नैयायिकानां मतमनुसृत्य प्रतिपादितः। अथ तत्र गौरवमालोच्य क्रियानाश्रयत्वं प्रकारान्तरेण परिष्कुर्वतां मतमाह — अन्ये तु इत्यादिना। पूर्वं केषांचित् मते विभागः परसमवेतत्वं च पञ्चम्यर्थः। प्रकृत्यर्थस्य वृक्षस्य विभागे समवेतत्वसंबन्धेन भेदे प्रकृत्यर्थतावच्छेदकाश्रयपतनजन्य-विभागाश्रयीभूतव्यक्तित्वावच्छिन्नप्रतियोगिताकत्वसंबन्धेनान्वयः इत्युक्तम्। स च संसर्गो गुरुभूत इत्यालोच्य अन्ये नैयायिकाः लघुभूतं क्रियानाश्रयत्वं वदन्ति। तथा हि — क्रियानाश्रयत्वं नाम क्रियावन्निष्ठभेदप्रतियोगित्वम् इति न। अपि तु क्रियावत्प्रतियोगिकभेदवत्त्वम्। वृक्षात् पर्णं पततीत्यत्र क्रियावत् पतनवत् पर्णं तत्प्रतियोगिकभेदवत्त्वं वृक्षे स्वरूपसंबन्धेन वर्तते। अतो वृक्षस्य अपादानत्वम्। एवं पतनाश्रयपर्णप्रतियोगिकभेदवत्त्वस्य पतनशून्ये पर्णे सत्त्वेन तस्यापादानत्वं स्यात्। तथा च पर्णात् पर्णं पततीति प्रयोगः स्यात्। तद्वारणाय क्रियाजन्य-विभागाश्रयत्वमिति विशेष्यदलम्। पर्णान्तरे विभागाश्रयत्वं नास्तीति नाति-प्रसङ्गः। अस्मिन् मते वृक्षात् पर्णं पततीत्यत्र विभागो भेदश्च पञ्चम्यर्थः। तत्र आधेयतासंबन्धेन प्रकृत्यर्थस्य वृक्षस्यान्वयः। पञ्चम्यर्थस्य विभागस्य जनकत्व-

संबन्धेन, भेदस्य प्रतियोगितावच्छेदकत्वसंबन्धेन धात्वर्थे पतनेऽन्वयः। ततश्च वृक्षवृत्तिविभागजनकवृक्षवृत्तिभेदप्रतियोगितावच्छेदकपतनानुकूलकृतिमान् इति बोधः। पतने वृक्षवृत्तिविभागजनकत्वमस्ति, वृक्षवृत्तिर्यो भेदः पतनवद्भेदः तत्प्रतियोगितावच्छेदकत्वमप्यस्तीति समन्वयः।

**अत्र चेत्यादि।** क्रियाद्वयघटितवाक्ये पूर्वोक्तापादानलक्षणसमन्वयप्रकारः कथ्यते। ग्रामादागच्छतोऽश्वात् पतति चैत्रः। अत्र आगमनक्रियायाः ग्रामः अपादानम्। पतनक्रियायाः अश्वः अपादानम्। परं तु अश्वस्य आगमन-क्रियाश्रयत्वेऽपि पतनक्रियानाश्रयत्वात् आगमनक्रियां प्रति अपादानत्वं स्यात्। एवं ग्रामस्य क्रियानाश्रयत्वात् पतनक्रियां प्रति अपादानत्वं स्यात्। तद्वारणाय अपादानलक्षणे क्रियाविशेषो विवक्षणीयः। तेन यन्निष्ठविभागजनकत्वेन यन्निष्ठ-भेदप्रतियोगितावच्छेदकत्वेन च यत्क्रिया विवक्षिता तत्त्वं तत्क्रियापादानत्वमिति निष्कर्षः। वृक्षात् पर्णं पततीत्यत्र वृक्षनिष्ठविभागजनकत्वेन वृक्षनिष्ठभेदप्रति-योगितावच्छेदेन च पतनक्रिया विवक्षिता, पर्णपतनस्य वृक्षनिष्ठविभागजनकत्वात् वृक्षनिष्ठो यो भेदः पतनवद्भेदः तत्प्रतियोगितावच्छेदकत्वाच्च। अतः वृक्षस्या-पादानत्वम्।

ग्रामादागच्छतोऽश्वात् पतति इत्यत्र ग्रामनिष्ठविभागजनकत्वेन ग्रामनिष्ठभेद-प्रतियोगितावच्छेदकत्वेन च अश्वनिष्ठा आगमनक्रिया विवक्षितेति आगमनं प्रति ग्रामस्य अपादानत्वम्, नाश्वस्य। अश्वनिष्ठविभागजनकत्वेन अश्वनिष्ठभेदप्रति-योगितावच्छेदकत्वेन चैत्रनिष्ठा पतनक्रिया विवक्षितेति पतनं प्रति अश्वस्या-पादानत्वं न ग्रामस्येति भावः।

**अत एवेति।** यन्निष्ठेत्यादिना अपादानत्वस्वरूपनिष्करणादेव परस्परस्मान्मेषावपसरतः इत्यत्र उभयनिष्ठक्रियाद्वयजन्यविभागस्थले मेषद्वयस्याप्यपादानत्वं निर्वहति। तत्र यत्पदेन एको मेषो गृह्यते चेत् तन्निष्ठविभागजनकत्वेन, तन्निष्ठभेदप्रतियोगितावच्छेदकत्वेन च मेषान्तरनिष्ठा क्रिया विवक्षिता तां प्रति अपादानत्वम् एकमेषस्य सिध्यति। मेषान्तरं यत्पदेन गृह्यते चेत् तन्निष्ठक्रियाजनकत्वेन तन्निष्ठभेदप्रतियोगितावच्छेदकत्वेन च एकमेषनिष्ठा क्रिया विवक्षिता भवति, तां प्रति अपादानत्वं मेषान्तरस्य सिध्यति। अत उभयोरपि अपादानत्वात् उभयतात्पर्यकपरस्परशब्दात् पञ्चमी निर्वहतीति भावः। ततश्च परस्परनिष्ठविभागजनकपरस्परनिष्ठभेदप्रतियोगितावच्छेदकापसरणानुकूला भावनेति बोधः।

उक्तापादानत्वनिष्कृष्टलक्षणे विवक्षापदोपादानात् यत्र उक्तप्रकारेण विवक्षा नास्ति, अपि तु अवयवावयविभावेनैव विवक्षा तत्र संबन्धसामान्ये षष्ठी इति वृक्षस्य पर्णं पतति इत्येव प्रयोग।

ननु वृक्षात् पतत् पर्णं तस्मिन्नेव वृक्षे पततीत्यर्थके वृक्षात् तस्मिन्नेव वृक्षे पर्णं पतति इत्यत्र सप्तम्याः अनुपपत्तिः। वृक्षस्य एकत्वात् तत्रापि निरुक्तापादानत्वसंभवात्, अत आह — **यत्पदं चेति।** पूर्वोक्तलक्षणे यत्पदं यत्पदाभिधेयपरम्। तथा च यत्पदाभिधेयनिष्ठविभागजनकत्वेन यत्पदाभिधेयनिष्ठभेदप्रतियोगितावच्छेदकत्वेन च या क्रिया विवक्षिता तत्त्वं तत्क्रियापादानत्वमिति निष्कर्षः। उक्तस्थले वृक्षस्यैकत्वेऽपि तदुपस्थापकयोः पदयोः भिन्नत्वात् सप्तम्यन्तपदोपस्थाप्ये अपादानत्वं न भवतीति सप्तम्याः साधुत्वमिति भावः। अर्थात् यत्पदाभिधेयेत्यत्र पञ्चम्यन्तवृक्षपदाभिधेयो गृहीतः अतः तत्पदादेव पञ्चमीत्युक्तं भवति।

अपादानत्वलक्षणस्य केषुचित् स्थलेषु अतिव्याप्तिशङ्का तद्वारणञ्च

न चैवमपि वृक्षं त्यजतीत्यत्र स्पन्दते पर्णमित्यत्र च वृक्षे अपादानत्वापत्तिः, क्रियाजन्यविभागाश्रयत्वात्, क्रियानाश्रयत्वाच्चेति वाच्यम्। वृक्षे अपादनत्वसत्त्वेपि बलीयस्या कर्मसंज्ञया धात्वर्थतावच्छेदकफलाश्रयत्वसत्त्वेन त्यागकर्मत्वस्याऽपि सत्त्वात्, द्वितीयोत्पत्तेः पञ्चम्यप्रयोगात्। 'स्पन्दते पर्णमि'त्यत्र 'आसनाच्चलितः, राज्याच्चलितः' इतिवत् 'वृक्षात् स्पन्दते' इत्यस्याऽपीष्टत्वात्।

अत एव स्पन्दते इत्यत्रापादानत्वव्यावृत्त्यर्थं क्रियापदं सकर्मकधातुपरमिति केषाञ्चित्समाधानमपास्तम्। 'वृक्षं त्यजती'त्यत्रैवमप्यनिवारणाच्च।

---

**न चैवमपीति**। वृक्षं त्यजतीत्यत्र त्यजधातोः विभागानुकूलव्यापारोऽर्थः। तदनाश्रयत्वात् क्रियाजन्यविभागाश्रयत्वाच्च वृक्षस्य अपादानत्वापत्तिः इति शङ्का। यथा वृक्षस्य उक्तलक्षणमपादानत्वमस्ति, तथा धात्वर्थतावच्छेदकविभागरूपफलाश्रयतया कर्मत्वमप्यस्ति। तत्र परया कर्मसंज्ञया अपादानसंज्ञायाः बाधात् कर्मसंज्ञायुक्तद्वितीयैव भवति, न तु अपादानसंज्ञाप्रयुक्ता पञ्चमीति समाधानम्।

नन्वेवमपि वृक्षात् स्पन्दते पर्णमिति प्रयोगापत्तिः, स्पन्दक्रियानाश्रयत्वे सति स्पन्दजन्यविभागाश्रयत्वात् वृक्षस्य अपादानत्वात् तत्प्रयुक्तपञ्चम्याः संभवात् इत्याशङ्काम् इष्टापत्त्या परिहरति — **स्पन्दते पर्णमिति**। तत्र दृष्टान्तमाह — **आसनाच्चलित इति**। चलनक्रियाजन्यविभागाश्रयत्वात् आसनस्य अपादानत्वम्। यत्तु ईदृशस्थले अपादानसंज्ञावारणार्थं कैश्चित् — क्रियानाश्रयत्वे सति क्रियाजन्यफलाश्रयत्वमिति अपादानलक्षणे क्रियापदं सकर्मकधातुपरम्। ततश्च सकर्मकधात्वर्थक्रियाजन्यविभागाश्रयत्वे सति सकर्मकधात्वर्थक्रियानाश्रयत्वम-

पादानत्वम्। स्पन्दधातोरकर्मकत्वात् वृक्षात् स्पन्दते पर्णमिति न प्रयोग इति उक्तम्। तत्तु उक्तप्रयोगस्येष्टत्वात् तद्वारणफलकं सकर्मकेति क्रियाविशेषणं न युक्तमित्याह — अत एवेति। वृक्षात् स्यन्दते इति। प्रयोगस्येष्टत्वादेवेत्यर्थः। तन्मते दोषान्तरमप्याह — **वृक्षं त्यजतीत्यत्रेति**। त्यजधातोः सकर्मकत्वात् तद्धात्वर्थजन्यविभागाश्रयत्वात् वृक्षस्य अपादानत्वापत्त्या पञ्चम्यापत्तेः इति भावः। तथा च पूर्वोक्तरीतिरेव युक्तेत्याशयः।

**अथवा उभयत्राऽपादानत्वव्यावृत्त्यर्थं धात्वर्थतावच्छेदकफलभिन्नत्वम् विभाग-विशेषणं वाच्यम्, त्यजेर्हि विभागानुकूलो व्यापारो वाच्यः, अतो विभागस्य धात्वर्थतावच्छेदकत्वात् तद्भिन्नविभागाश्रयत्वाभावेन न वृक्षापादानत्वप्रसङ्गः। स्पन्दतेश्च धात्वर्थतावच्छदेकफलाभावेन तद्भेदस्याऽप्रसिद्ध्या तादृशविभागा-प्रसिद्धेर्नापादानत्वप्रसक्तिः।**

---

वृक्षं त्यजतीत्यादौ प्रकारान्तरेणापादानत्वं वारयति — अथवेति। उभयत्र = वृक्षं त्यजति, स्पन्दते पर्णम् इत्यत्र वृक्षात् त्यजति, वृक्षात् स्पन्दते इति पञ्चमी यदि नेष्यते, तदा तत्र अपादानत्वं वारयितुं अपादानत्वलक्षणे विभागे धात्वर्थ-तावच्छेदकफलभिन्नत्वमिति विशेषणं निवेशनीयम्। तथा च क्रियाजन्यधात्वर्थ-तावच्छेदकफलभिन्नो यो विभागः तदाश्रयत्वमपादानत्वम्। वृक्षं त्यजतीत्यत्र विभागावच्छिन्नव्यापारो धात्वर्थः। अत्र विभागरूपं फलं क्रियाजन्यं धात्वर्थता-वच्छेदकं भवति। अतो वृक्षस्य क्रियाजन्यधात्वर्थतावच्छेदकफलाश्रयत्वमेवास्ति, न तु धात्वर्थतावच्छेदकफलभिन्नविभागाश्रयत्वमिति न वृक्षस्य अपादानत्व-प्रसङ्गः।

स्पन्दते पर्णमित्यत्र तु धात्वर्थः क्रिया, न तु विभागावच्छिन्नक्रिया। अतः धात्वर्थतावच्छेदकफलस्यैवाप्रसिद्ध्या तादृशफलभेदस्याप्रसिद्ध्या तदाश्रयत्वमेव वृक्षस्य नास्ति। अतस्तस्यापादानत्वमपि न भवतीति वृक्षात् स्पन्दते पर्णमिति प्रयोगस्य न प्रसङ्ग इति भावः।

**अथवा — यन्निष्ठविभागेत्यपहाय, यन्निरूपितेति लक्षणे विवक्षितम्। 'वृक्षं त्यजती'त्यत्र वृक्षनिष्ठो विभागो विवक्षितः, न तु वृक्षनिरूपित इति नातिप्रसङ्गः। वृक्षात्पर्णमित्यत्र च प्रकृत्यर्थस्य निरूपितत्वं विभागे संसर्गः। तथा च वृक्षनिरूपितविभागजनकं वृक्षनिष्ठभेदप्रतियोगितावच्छेदकं यत्पतनमित्यादिशाब्दबोधः। 'स्पन्दते' इत्यत्रापादानत्ववारणाय क्रिया सकर्मिकैव लक्षणे विवक्षिता। आसनाच्चलितः, सार्थाद्धीयते पशुरित्यादयः प्रयोगास्तु वक्ष्यमाणावधित्वरूपं पञ्चम्यर्थमादाय नेया इत्याहुः। वैयाकरणनव्या अपि केचिदेवम्।**

---

पुनः वृक्षं त्यजतीत्यादौ अपादानत्वं प्रकारान्तरेण वारयति — **अथवेति**। यन्निष्ठविभागजनकत्वेन यन्निष्ठभेदप्रतियोगितावच्छेदकत्वेन च या क्रिया विवक्षिता तत्त्वं तत्क्रियापादानत्वमिति पूर्वोक्तापादानत्वलक्षणे — यन्निष्ठविभागेत्यस्य स्थाने यन्निरूपितविभागेति निवेशनीयम्। तेन यन्निरूपितविभागजनकत्वेन या क्रिया विवक्षिता तत् तत्क्रियायाः अपादानमिति फलितम्। अतः वृक्षं त्यजतीत्यत्र वृक्षनिष्ठो विभागो विवक्षितः, न तु वृक्षनिरूपितो विभागः, अतो वृक्षस्य अपादानत्वप्रसक्तिर्न भवति। वृक्षात् पर्णं पततीत्यत्र तु वृक्षनिरूपितो विभागः, पर्णवृक्षयोर्विभागस्य द्विनिष्ठस्यापि वृक्षनिरूपितत्वात्। अतस्तत्र वृक्षस्यापादानत्वमेव। प्रकृत्यर्थस्य वृक्षस्य पञ्चम्यर्थे विभागे निरूपितत्वसंबन्धेनान्वयात्। तथा च तद्वाक्यात् वृक्षनिरूपितविभागजनकं वृक्षनिष्ठभेदप्रतियोगितावच्छेदकं च यत्

पतनं तदनुकूला भावनेति तत्र शाब्दबोधः। स्पन्दते पर्णमित्यत्र वृक्षात् इति पञ्चमीवारणाय (वृक्षस्यापादनत्ववारणाय) क्रिया इत्यनेन सकर्मकक्रिया विवक्षणीया। स्पन्दस्य सकर्मकत्वाभावात् तं प्रति न वृक्षस्यापादानत्वप्रसङ्गः। तथा च यन्निरूपितविभागजनकत्वेन यन्निष्ठभेदप्रतियोगितावच्छेदकत्वेन च या सकर्मकक्रिया विवक्षिता तत् तत्क्रियापादानमिति फलितम्। आसनाच्चलितः इत्यत्र तु अवधित्वं पञ्चम्यर्थः तेन आसननिष्ठावधित्वनिरूपकचलनाश्रयः इति बोधः सार्थात् हीयते पशुः इत्यत्र सार्थावधिकहानाश्रयः पशुः इति बोधः।

## अपादानत्वमखण्डोपाधिरिति सिद्धान्तः

वस्तुतस्तु गुरुभूतशक्यतावच्छेदकभेदेनानेकशक्तिकल्पनापेक्षया प्रकृत्यर्थस्य पञ्चम्यर्थद्वयान्वये व्युत्पत्तिद्वयम्, पञ्चम्यर्थस्य च धात्वर्थद्वयान्वये व्युत्पत्तिद्वयमिति कल्पनापेक्षया चाऽनुगतव्यवहारसाक्षिकतयाऽपादानत्वमखण्डोपाधिरूपमेकं धर्मं निरुक्तापादानत्वसमव्यापकं कल्पयित्वा, तत्रैव पञ्चम्याश्शक्तिं कल्पयित्वा, तस्मिंश्च प्रकृत्यर्थान्वयायैकाम्, तस्य चाख्यातार्थन्वयायैकां व्युत्पत्तिं कल्पयितुमुचितम्। प्रकृत्यर्थस्य च तत्राधेयतयाऽन्वयः, तस्य च स्वनिरूपकधात्वर्थानुकूलत्वसंसर्गेण कृतावन्वयः। तदेवं प्रचुरप्रयोगादपादानत्वं पञ्चम्याश्शक्यम्। तत्र तु 'वृक्षाद्विभजते' इत्यादौ विभागजन्यविभागाश्रयत्वाभावान्नोक्तापादानत्वसम्भवः, तत्र लक्षणया स्वरूपसम्बन्धविशेषरूपमवधित्वं पञ्चम्यर्थः, तत्रापि अपाये विभागे, ध्रुवम्-अवधिभूतमपादानसंज्ञं स्यादिति वाक्यपदीयादौ सूत्रं व्याख्यातम्। तस्यापि धात्वर्थघटितसंसर्गेण भावनान्वयः। वृक्षनिष्ठावधितानिरूपकविभागानुकूलकृतिः कर्तृवृत्तिरिति शाब्दबोधः। स्वनिष्ठविभागावधित्वस्य स्वस्मिन्नभावाच्च, न 'स्वस्माद्विभजते' इति प्रयोगः। सर्वेष्वपि पूर्वोक्तेषु अवधित्वमेव पञ्चम्यर्थः, तस्य च

**क्वचिद्धात्वर्थजन्यविभागद्वारकोऽन्वयः, क्वचिद्धात्वर्थद्वारक इत्यपि वा सुवचम्। बलाहकाद्विद्योतते विद्युत् इत्यत्र तु निःसरणजन्यं विद्योतनं लक्षणया द्युतेरर्थः। तदेकदेशे निःसरणे पञ्चम्यर्थान्वयः। एवं 'कुसूलात् पचति' इत्यत्राप्यादानजन्यः पाकः पच्यर्थः। आदाने च पच्यम्यर्थान्वय इति परकीयाः। स्वमते तु लक्षणायाम्, एकदेशान्वये च प्रमाणाभावात्, पञ्चम्यर्थोऽपादनात्वादिरेव स्वनिरूपकनिःसरणादिजन्यविद्योतनानुकूलत्वसंसर्गेण कृत्यन्वयी। 'कुतो भवान्' इत्यादौ प्रश्ने, 'पाटलीपुत्रादित्युत्तरे च आगतः' इत्यध्याहारेणान्वयो बोध्यः।**

---

तथा चैतत् सिद्धं — क्वचित् विभागः, क्वचित् अवधित्वं पञ्चम्यर्थः। विभागे प्रकृत्यर्थनिरूपितत्वं विवक्षितं चेत् अपादानत्वं भवति। प्रकृत्यर्थनिष्ठत्वं विवक्षितं चेत् कर्मत्वं भवति। स्पन्दते पर्णम् इत्यत्र वृक्षात् इति प्रयोगवारणाय क्रियापदेन सकर्मकक्रिया विवक्षितेति। वैयाकरणनव्याः भट्टोजीभूषणकारादयोऽपि एवमेव वदन्तीति। इतः परं कर्मत्वादिवत् अपादानत्वमपि अखण्डोपाधिरूपमित्याह — **वस्तुतस्तु इत्यादिना।**

अत्रायं संपिण्डितार्थः — तत्क्रियानाश्रयत्वे सति तत्क्रियावन्निष्ठभेदप्रतियोगित्वम् इत्यादिना निर्वचनरीत्या पञ्चम्याः गुरुभूतशक्यतावच्छेदकभेदेन अनेकशक्तिकल्पनया गौरवम्।

अपि च प्रकृत्यर्थस्य पञ्चम्यर्थविभागे भेदे च अन्वयाङ्गीकारात् तदनुसारेण प्रकृत्यर्थनिष्ठप्रकारतानिरूपितविभागनिष्ठविशेष्यतासंबन्धेन शाब्दबोधं प्रति विभागनिष्ठविशेष्यतासंबन्धेन पञ्चमीजन्योपस्थितिः कारणम् इति, प्रकृत्यर्थनिष्ठप्रकारतानिरूपितभेदनिष्ठविशेष्यतासंबन्धेन शाब्दबोधं प्रति भेदनिष्ठविशेष्यतासंबन्धेन पञ्चमीजन्योपस्थितिः कारणमिति कार्यकारणभावद्वयं कल्पनीयम्।

तथा पञ्चम्यर्थस्य विभागस्य जनकतासंबन्धेन धात्वर्थे पञ्चम्यर्थस्य भेदस्य च प्रतियोगितावच्छेदकत्वसंबन्धेन तत्रैवान्वय इत्यङ्गीकारात् तदनुसारेण पञ्चम्यर्थ-विभागनिष्ठजनकतासंबन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबोधं प्रति विशेष्यतासंबन्धेन धातुजन्योपस्थितिः कारणमिति, पञ्चम्यर्थभेदनिष्ठप्रति-योगितावच्छेदकत्वसंबन्धावच्छिन्नप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबोधं प्रति विशेष्यतासंबन्धेन धातुजन्योपस्थितिः कारणमिति च कार्यकारणभावद्वयं कल्पनीयम् इति गौरवम्।

तदपेक्षया लाघवात् अपादानमपादानमित्यनुगतव्यवहारसाक्षिकतया अपादा-नत्वमखण्डोपाधिरूपमेकं निरुक्तापादानत्वसमनियतं धर्मं कल्पयित्वा तत्रैव पञ्चम्याः शक्तिं कल्पयित्वा तस्मिंश्च प्रकृत्यर्थान्वयायैकाम् तस्य चाख्यातार्थे-ऽन्वयाय एकां व्युत्पत्तिं कल्पयितुमुचितम्। प्रकृत्यर्थस्य पञ्चम्यर्थेऽपादनत्वे आधेयतासंसर्गेणान्वयः। अपादानत्वस्य स्वनिरूपकधात्वर्थानुकूलत्वसंबन्धेन आख्यातार्थकृतावन्वयः। वृक्षनिष्ठापादानत्वनिरूपकपतनानुकूला पर्णनिष्ठा भावना इति बोधः। तादृशपतननिरूपितं पर्णनिष्ठमाश्रयत्वमिति यावत्। तदेवं प्रचुरप्रयो-गात् अपादानत्वे पञ्चम्याः शक्तिः — इति।

**यत्र तु इत्यादि।** एवं च प्रचुरप्रयोगात् तत्क्रियानाश्रयत्वे सति तत्क्रिया-जन्यविभागाश्रयत्वसमनियतः अखण्डोपाधिः अपादानत्वमिति सिद्धम्। परं तु यत्र धात्वर्थक्रियाजन्यविभागः अप्रसिद्धः, अपि तु धात्वर्थ एव विभागः, तत्र धात्वर्थविभागजन्यविभागस्याभावात् अखण्डोपाधिरूपमपादानत्वं न संभवति, यथा वृक्षात् विभजते इति, तत्र पञ्चम्याः नापादानत्वमर्थः। अपि तु अवधित्वमर्थः लक्षणया। वृक्षनिष्ठावधितानिरूपकविभागाश्रयः पर्णमिति शाब्दबोधः। वृक्षा-

वधिकविभागाश्रयत्वं पर्णवृत्तीति बोध इति यावत्। तस्मिन् पक्षे सूत्रस्यायमर्थः — अपाये = विभागे अवधिभूतमपादानसंज्ञकं स्यादिति।

स्वस्माद्विभजते पर्णमिति तु प्रयोगो न संभवति। स्वनिष्ठिभागावधित्वस्य स्वस्मिन् बाधात्। पक्षान्तरमाह — **सर्वेष्वपीति**। पूर्वोक्तेषु सर्वेषु पक्षेषु अवधित्वमेव पञ्चम्यर्थः। तस्य च क्वचित् वृक्षात् पर्णं पतति इत्यादौ धात्वर्थजन्यविभागद्वारकः भावनायामन्वयः, स्वनिरूपकविभागानुकूलपतनानुकूलत्वसंबन्धेनान्वयः इति यावत्। वृक्षनिष्ठावधितानिरूपकविभागानुकूलपतनानुकूला कृतिः इति बोधः।

क्वचित् वृक्षाद्विभजते इत्यादौ धात्वर्थद्वारकोऽन्वयः। स्वनिरूपकधात्वर्थभूतविभागानुकूलत्वसंबन्धेन भावनायामन्वयः। वृक्षनिष्ठावधितानिरूपकविभागानुकूला कृतिः इति बोधः। स्वनिष्ठो यो विभागः तन्निरूपितमवधित्वं अपादानत्वमित्युक्तं भवति। स्वनिष्ठविभागावधित्वस्य स्वस्मिन्नभावात् न स्वस्मात् विभजते इति प्रयोगापत्तिः। **वाक्यपदीये इति**

अपाये यदुदासीनं चलं वा यदि वाचलम्।
ध्रुवमेवातदावेशात्तदपादानमुच्यते।।

पततो ध्रुव एवाश्वो यस्मादश्वात् पतत्यसौ।
तस्याप्यश्वस्य पतने कुड्यादि ध्रुवमुच्यते।।

उभावप्यध्रुवौ मेषौ यद्यप्युभयकर्मजे।
विभागे प्रविभक्ते तु क्रिये तत्र विवक्षिते।।

मेषान्तरक्रियापेक्षमवधित्वं पृथक् पृथक्।
मेषयोः स्वक्रियापेक्षं कर्तृत्वं च पृथक् पृथक्।।

इति वाक्यपदीयस्थश्लोकाः अत्र अभिसंहिताः। अपाये = विभागे, सतीति शेषः। उदासीनं कर्मकर्त्रादिभिन्नम् कारकं चलं धावदश्वादि। अचलं तरुपर्वतादि। अतदावेशात् = क्रियाशून्यत्वात्। स्पष्टमन्यत्।

**धातुजन्येति**। धात्वर्थक्रियाजन्यविभागद्वारक इत्यर्थः। धात्वर्थद्वारक इति। धात्वर्थविभागद्वारक इत्यर्थः। वृक्षात् पर्णं पततीति आद्यस्योदाहरणम्। वृक्षात् विभजते पर्णम् इति द्वितीयस्योदाहरणम्।

**बलाहकात् विद्योतते विद्युदिति**। बलाहको मेघः। मेघात् निस्सृत्य विद्युत् प्रकाशते इत्यर्थः। अत्र द्युतधातोः लक्षणया निस्सरणजन्यं विद्योतनमर्थः। तदेकदेशे निस्सरणे पञ्चम्यर्थस्यावधित्वस्यान्वयः। बलाहकनिष्ठावधितानिरूपक-निस्सरणजन्यद्योतनानुकूला भावना विद्युत्कर्तृका इति शाब्दबोधः।

कुसूलात् पचति इत्यत्र आदानजन्यः पाकः धात्वर्थः। अवधित्वं पञ्चम्यर्थः। कुसूलावधिकतण्डुलादानजन्यपाकानुकूला भावनेति बोधः। परकीयाः इति। भूषणसारकारादयः इत्यर्थः। तथा हि भूषणसारे यदुक्तं तत् लिख्यते — न च बलाहकात् विद्योतते विद्युत् इत्यत्र कथमपादानता। विभागजनकव्यापारबोधक-पदाभावेन विभागाश्रयत्वरूपापादानत्वासंभवात् इति वाच्यम्। तत्र निःसृत्य इत्यध्याहृत्य अपादानत्वस्य उपपादनीयत्वात्। एतदुक्तं भवति — तत्र निःसरण-पूर्वकं विद्योतनं द्युतधातोरर्थः। धूममरुज्ज्योतिस्समूहो बलाहकः। ततोऽवयवभूत-ज्योतिषामेव विभागविवक्षया सोऽवधिः। बलाहकावधिकनिस्सरणोत्तरकालिकं विद्युत्कर्तृकं विद्योतनमिति बोधः।

एवं रसात् पृथक् इत्यत्र बुद्धिकल्पितं विभागावधित्वमाश्रित्य अपादानत्वं द्रष्टव्यम्। पृथग्विना इति सूत्रेण वा पञ्चमी। इदं चापादानत्वम् —

निर्दिष्टविषयं किंचित् उपात्तविषयं तथा।
अपेक्षितक्रियं चेति त्रिधापादानत्वमिष्यते।।

इति वाक्यपदीयात् त्रिविधम्। यत्र साक्षात् धातुना विभागजनकक्रिया निर्दिश्यते — तन्निर्दिष्टविषयम्। यथा अश्वात् पतति। यत्र धात्वन्तरार्थाङ्गकं स्वार्थं धातुराह तदुपात्तविषयम्। यथा बलाहकात् विद्योतते विद्युत्। अत्र निस्सरणाङ्गके विद्योतने द्युतिर्वर्तते। अनुपात्तधात्वर्थक्रियासाकाङ्क्षम् अपेक्षितक्रियम् इत्युच्यते। यथा कुतो भवान्, पाटलिपुत्रात् इत्यत्र आगमनरूपमर्थमध्याहृत्य अन्वयः कार्यः इति।

**स्वमते तु** = स्वस्य खण्डदेवस्य मते तु इत्यर्थः। लक्षणायां द्युतधातोः निस्सरणपूर्वकविद्योतने लक्षणायां, एकदेशान्वये = धातुलक्ष्यार्थैकदेशे निस्सरणे।

## जुगुप्साविरामेत्यादिवार्तिकविवरणम्

**यत्तु — जुगुप्साविरामप्रमादार्थानामुपसंख्यानम् (वा. 1079) इति वार्तिकमेतेषां योगे पञ्चमी वाच्येत्यर्थकम्, तत् लाक्षणिकानुशासनम्, अतः 'पापाज्जुगुप्सते, विरमति, धर्मात्प्रमाद्यती'त्यादौ पञ्चमी। अत्राद्ये निन्दा धात्वर्थः, तच्च विगानम्। पञ्चम्यर्थो विषयित्वम्। प्रकृत्यर्थश्च निरूपितत्वसंसर्गेण तत्राऽन्वेति। तच्च स्वाश्रयविगानवत्त्वसम्बन्धेनाख्यातार्थे आश्रयत्वे। द्वितीये करणानन्तरमकरणं धात्वर्थः, पञ्चम्यर्थः पूर्ववत्, आख्यातार्थ आश्रयत्वम्, पञ्चम्यर्थस्य च कृतिद्वारकोऽन्वयः। पापविषयककृत्यनन्तरकालीनपापविषयककृत्यभावाश्रयत्वमिति शाब्दबोधः। तृतीये पञ्चम्यर्थो विषयित्वमेव। अनवधानं धात्वर्थः, आख्यातार्थ आश्रयत्वमेव। स्वाश्रयानवधानवत्त्वमाश्रयत्वे पञ्चम्यर्थस्य संसर्गः।**

अथ जुगुप्साविरामेत्यादिवार्तिकं व्याचष्टे — **यत्तु इत्यादिना**। जुगुप्साविरामप्रमादार्थानामुपसंख्यानम् इति वार्तिकम्। जुगुप्साद्यर्थकधातुभिर्योगे जुगुप्सादिविषयस्यापादानत्वमित्यर्थः। पापात् जुगुप्सते = पापविषये कुत्सितत्वबुद्ध्या न रमत इत्यर्थः। धर्मात् प्रमाद्यति = धर्मविषये मुह्यतीत्यर्थः।

वास्तवसंयोगविश्लेषयोरभावात् सूत्रेणापादानसंज्ञा न भवतीति वार्तिकमिदम्। यदा तु जुगुप्सत इत्यादेः निवर्तते इत्यर्थः आश्रीयते, तदा बुद्धिकृतविश्लेषावधित्वमादाय अपादानत्वादेव सिद्धमिति वार्तिकमिदं भाष्ये प्रत्याख्यातम्। खण्डदेवस्त्वेवं व्याख्याति — यत्तु जुगुप्साविरामप्रमादार्थानामुपसंख्यानमिति वार्तिकम्, एतेषां धातूनां योगे पञ्चमी वाच्येत्यर्थकम्, तत् लाक्षणिकानुशासनम्। अतः पापात् जुगुप्सते इत्यादौ पञ्चमी। तत्र आद्ये निन्दा धात्वर्थः। निन्दा अनिष्टजनकत्वम्। पञ्चम्यर्थो विषयित्वम्। तत्र निरूपितत्वसंबन्धेन पापस्यान्वयः। विषयित्वस्य स्वाश्रयविगानवत्त्वसंबन्धेन आख्यातार्थे आश्रयत्वेऽन्वयः। पापनिरूपितविषयित्वाश्रयविगानवत्त्वसंबन्धावच्छिन्नमाश्रयत्वं चैत्रवृत्ति इति बोधः। पापविषयकनिन्दावानिति फलितोऽर्थः।

द्वितीये विपूर्वकरमुधातोः करणानन्तरमकरणम् अर्थः। पञ्चम्यर्थः विषयित्वम्। आश्रयत्वम् आख्यातार्थः विषयित्वस्य धात्वर्थकृतिघटितसंबन्धेन (स्वाश्रयकृत्यनन्तरकालीनस्वाश्रयकृत्यभाववत्त्वसंबन्धेन) आख्यातार्थे आश्रयत्वे अन्वयः। तथा च पापविषयककृत्यनन्तरकालीनपापविषयककृत्यभावाश्रयत्वं चैत्रवृत्तीति बोधः।

तृतीये धर्मात् प्रमाद्यति इत्यत्र धर्मपदोत्तरपञ्चम्याः विषयत्वमर्थः। अनवधानं धात्वर्थः। आख्यातार्थः आश्रयत्वम्। धर्मविषयकानवधानाश्रयत्वं चैत्रवृत्तीति बोधः।

## भीत्रार्थानां भयहेतुः (पा.सू 1.4.25)

एवम् — 'भीत्रार्थानां भयहेतुः' (पा.सू 1.4.25) इत्यनुशासनाद् भयार्थानाम्, त्राणार्थानाञ्च धातूनां योगे भयहेतुरपादानसंज्ञस्स्यादित्यर्थकेन चोराद्बिभेति, चोराद्धनिकं त्रायते, इत्यत्र पञ्चमी। अत्र हेतुमत्त्वं पञ्चम्यर्थः, आद्ये भयं धात्वर्थः। द्वितीये भयाभावानुकूलो व्यापारः, न तु भयाभावमात्रं कैश्चिदुक्तम्। तथात्वे धनिकस्य त्वन्मते धात्वर्थतावच्छेदकफलाभावेन तदाश्रयत्वस्य कर्मत्वानुपपत्तेः। अस्मन्मते तु व्यापारस्य भयाभाव एव कर्मेति तदुपपत्तिः। आख्यातार्थ आश्रयत्वम्। स्वाश्रयधात्वर्थवत्त्वमुभयत्र संसर्गः। चोरहेतुकभयाश्रयत्वं चोर-हेतुकभयाभावानुकूलव्यापाराश्रयत्वमिति शाब्दबोधः।

---

एवमिति। 'भीत्रार्थानां भयहेतुः' (पा.सू 1.4.25) भयार्थकानां त्राणार्थकानां च धातूनां योगे भयहेतुः अपादानसंज्ञः स्यात् इति सूत्रार्थः। चोरात् बिभेति, चोरात् धनिकं त्रायते इत्युदाहरणम्। आद्ये भयं धात्वर्थः। पञ्चम्याः हेतुमत्वमर्थः। हेतुमत्त्वं नाम जनकतानिरूपकत्वम्। आख्यातस्य आश्रयत्वमर्थः। पञ्चम्यर्थस्य जनकतानिरूपकत्वस्य स्वाश्रयधात्वर्थवत्त्वसंबन्धेन आख्यातार्थे आश्रयत्वेऽ-न्वयः। चोरनिष्ठजनकतानिरूपक (चोरजन्य) भयाश्रयत्वं चैत्रवृत्तीति बोधः। द्वितीये चोरात् धनिकं त्रायते इत्यत्र पञ्चम्यर्थः जनकतानिरूपकत्वम्। धातोः भयाभावानुकूलव्यापारोऽर्थः। तत्र भये पञ्चम्यर्थस्य आश्रयत्वसंबन्धेनान्वयः। धात्वर्थस्य निरूपितत्वसंबन्धेन आख्यातार्ते आश्रयत्वेऽन्वयः। धनिकमित्यत्र द्वितीयायाः आधेयत्वमर्थः। तस्य भयाऽभावे धात्वर्थघटकेऽन्वयः। चोरनिष्ठ-जनकतानिरूपकधनिकनिष्ठभयाभावानुकूलव्यापाराश्रयत्वं चैत्रनिष्ठमिति बोधः।

कैश्चित् चोरात् धनिकं त्रायते इत्यत्र भयाभावमात्रं धात्वर्थः इत्युक्तम्। तन्न युक्तम्। यदि भयाभावमात्रं धात्वर्थः स्यात् तदा धात्वर्थतावच्छेदकं फलं किमपि न स्यात् यदाश्रयत्वेन धनिकस्य कर्मत्वं स्यात्। अतः धनिकस्य कर्मत्वोपपादनाय भयाभावानुकूलो व्यापारः तत्र धात्वर्थः। धात्वर्थतावच्छेदकफलं भयाभावः तदाश्रयत्वेन धनिकस्य कर्मत्वात् धनिकपदोत्तरं कर्मणि द्वितीयायाः साधुत्वमिति भावः। स्वाश्रयेति। स्वं = पञ्चम्यर्थहेतुमत्वम्। तदाश्रयो यो धात्वर्थः तन्निरूपितत्वमित्यर्थः।

ननु 'कस्य बिभ्यति देवाश्च जातरोषस्य संयुगे' इत्यत्र भयार्थकधातुयोगसद्भावात् किंशब्दोत्तरम् अपादानार्थकपञ्चम्यां कस्मात् बिभ्यति इत्येव प्रयोगः साधुः। कस्येति षष्ठ्यन्तप्रयोगस्य कथं साधुत्वमित्याशङ्क्य तत्र षष्ठ्यन्तस्य किंशब्दस्य न बिभ्यतिना अन्वयः। अपि तु संयुगे इत्यनेनान्वयः। कस्य संयुगे युद्धे देवाः बिभ्यतीत्यन्वयः। अत्र षष्ठ्यर्थः संबन्धः संयुगान्वयी। अर्थात् संयुगघटितः संबन्धः षष्ठ्यर्थः भावनायामन्वेति। किंसंबन्धियुद्धाधारकभयाश्रया देवाः इति बोधः। न च किंपदार्थस्य भयं प्रति अपादानत्वाभावेऽपि, संयुगस्य भयं प्रति अपादानत्वविवक्षायां संयुगपदोत्तरं पञ्चमी स्यादिति वाच्यम्। अपादानसंज्ञापेक्षया परया अधिकरणसंज्ञया अपादानसंज्ञायाः बाधात् न पञ्चमी। अधिकरणत्वाविवक्षायां तु संयुगपदोत्तरं अपादानपञ्चमी भवत्येव। विवक्षातः कारकाणि भवन्तीति न्यायात् इत्याह — **अधिकरणाविवक्षायामिति।**

## पराजेरसोढः (पा.सू 1.4.26)

**एवम् — 'पराजेरसोढः' (पा.सू 1.4.26) इति सूत्रात् पराजेर्धातोर्योगे असह्योऽर्थोऽपादानसंज्ञस्स्यादित्यर्थकात् अध्ययनात्पराजयते इत्यत्र पञ्चमी। अत्र**

धात्वर्थोऽरिष्टम्, पञ्चम्यर्थो जन्यत्वम्., अध्ययनजन्यारिष्टाश्रयत्वमिति शाब्द-बोधः। 'शत्रून्पराजयते' इत्यत्र तु शत्रुनिष्ठानिष्टसाधनानुकूलकृत्याश्रयत्वमिति बोधाद्द्वितीया। केचित्तु — असहनं धात्वर्थः, अध्ययनं न सहत इति विवरणात्-इत्याहुः।

---

एवं 'पराजेरसोढः' (पा.सू 1.4.26) इति सूत्रात् परा इत्युपसर्गपूर्वकजिधातोर्योगे असह्योऽर्थः अपादानसंज्ञः स्यात् इत्यर्थकात् अध्ययनात् पराजयते चैत्रः इत्यत्र पञ्चमी। अत्र धात्वर्थः अनिष्टम्। पञ्चम्यर्थः जन्यत्वम्। तत्र निरूपितत्वसंबन्धेन अध्ययनस्यान्वयः। जन्यत्वस्य आश्रयत्वसंबन्धेन धात्वर्थेऽनिष्टेऽन्वयः। तस्य निरूपितत्वेन आख्यातार्थ आश्रयत्वेऽन्वयः। अध्ययननिरूपितजन्यत्वाश्रया-निष्टनिरूपितमाश्रयत्वं चैत्रनिष्ठमिति शाब्दबोधः। शत्रून् पराजयते इत्यत्र तु न अनिष्टं धात्वर्थः। अपि तु अनिष्टसाधनानुकूलकृतिः धात्वर्थः। आश्रयत्वमाख्या-तार्थः। धात्वर्थतावच्छेदकफलम् अनिष्टसाधनं, तदाश्रयत्वात् शत्रूणां कर्मत्वम्। अतः शत्रून् इति द्वितीया। तथा च शत्रुनिष्टं यत् अनिष्टसाधनं तदनुकूलव्यापारा-श्रयत्वं चैत्रनिष्ठमिति बोधः।

केचित्तु तत्र अध्ययनात् पराजयते इत्यत्र असहनं धात्वर्थः। अध्ययनं न सहते इति विवरणात्। असहनं नाम सहनाभावः। सहनान्वयि विषयत्वं पञ्चम्यर्थः। तथा च अध्ययनविषयकसहनाभावाश्रयत्वं चैत्रनिष्ठम् इति बोध इत्याहुः।

## वारणार्थानामीप्सितः (पा.सू 1.4.27)

एवम् — 'वारणार्थानामीप्सितः' (पा.सू 1.4.27) इति सूत्रात् वारणार्थानां योगे ईप्सितोऽर्थोऽपादानसंज्ञः स्यादित्यर्थकात् 'यवेभ्यो गां वारयती'त्यादौ पञ्चमी। अत्र

**पञ्चम्यर्थः प्रतियोगित्वम्, द्वितीयार्थो वृत्तित्वम्, धात्वर्थश्च विनाशानुकूलव्यापाराभावानुकूलव्यापारः, यत्नश्चाऽऽख्यातार्थः, पञ्चम्यर्थस्य स्वनिरूपकविनाशघटितः संसर्गः। द्वितीयार्थस्य धात्वर्थतावच्छेदकीभूतव्यापाराभावद्वारकः। तथा च यवप्रतियोगिकविनाशानुकूलो भक्षणादिरूपो यो व्यापारः, तस्य गोवृत्तिर्योऽभावः, तदनुकूलव्यापारनुकूला कृतिर्देवदत्तवृत्तिरिति बोधः पर्यवसितः। अत्र च यवानां वस्तुत ईप्सितत्वात्पञ्चमी। न चैवं गोरीप्सितत्वात्पञ्चम्यापत्तिः, तस्य ईप्सिततमत्वेन कर्मत्वोपपत्तेः। एतदर्थमेव हि 'कर्तुरीप्सिततममि'त्यत्र तमब्ग्रहणमित्युक्तं कौस्तुभे। धात्वर्थतावच्छेदकीभूतस्य विनाशानुकूलव्यापारध्वंसस्य गोमात्रवृत्तित्वात्तत्रैव द्वितीया।**

---

अथ वारणार्थानामिति सूत्रं व्याचष्टे — एवं वारणार्थानामिति। वारणार्थानामीप्सितः (पा.सू 1.4.27) इति सूत्रस्य वारणार्थकानां धातूनां योगे ईप्सितः अर्थः अपादानसंज्ञकः स्यात् इत्यर्थः। यवेभ्यो गां वारयति चैत्रः इति उदाहरणम्। अत्र पञ्चम्यर्थः प्रतियोगित्वं, तत्र आधेयतासंबन्धेन यवस्य अन्वयः। गोपदोत्तरद्वितीयायाः वृत्तित्वमर्थः। तत्र निरूपितत्वसंबन्धेन गोरन्वयः। विनाशानुकूलव्यापाराभावानुकूलव्यापारः धात्वर्थः। पञ्चम्यर्थस्य प्रतियोगित्वस्य यवनिष्ठस्य धात्वर्थतावच्छेदके विनाशानुकूलव्यापाराभावे घटको यो विनाशः तत्रान्वयः। द्वितीयान्तार्थस्य गोवृत्तित्वस्य धात्वर्थतावच्छेदके विनाशानुकूलव्यापाराभावेऽन्वयः। धात्वर्थस्य विनाशानुकूलव्यापाराभावानुकलव्यापारस्य आख्यातार्थकृतावन्वयः।

तथा च यवनिष्ठप्रतियोगितानिरूपक (यवप्रतियोगिक) विनाशस्य अनुकूलः यः भक्षणादिरूपो व्यापारः तत्प्रतियोगिको यो गोवृत्तिरभावः (ध्वंसः) तदनुकूल-

व्यापारानुकूला कृतिः चैत्रनिष्ठा इति बोधः। अत्र च यवानां वस्तुत ईप्सितत्वात् पञ्चमी। न चैवं गोः अपि ईप्सितत्वात् पञ्चम्यापत्तिरिति वाच्यम्। तस्याः गोः ईप्सिततमत्वेन कर्मत्वात् द्वितीयोपपत्तेः। एतदर्थमेव 'कर्तुरीप्सिततमं कर्म' इति सूत्रे तमप्ग्रहणम्। धात्वर्थतावच्छेदकीभूतस्य विनाशानुकूलभक्षणरूपव्यापार-ध्वंसस्य गोमात्रवृत्तित्वात् गोरूपकर्मण्येव द्वितीयेति भावः। अर्थं बुद्ध्वा सावधानं पठन्तु छात्राः।

पञ्चम्यर्थः = यवपदोत्तरपञ्चम्यर्थः प्रतियोगित्वम्। द्वितीयार्थः = गोपदोत्तर-द्वितीयायाः अर्थः वृत्तित्वम् = आधेयत्वम्। विनाशानुकूलव्यापाराभावानुकूल-व्यापार इति विनाशानुकूलव्यापारः — प्रकृते भक्षणादि तदभावानुकूलव्यापारः वारयितृनिष्ठः ताडनादिरूपः तद्वारकः संसर्गः तदनुकूलत्वम्।

भक्षणाभाव इत्यनेन भक्षणध्वंसोऽभिप्रेत इति मूलग्रन्थात् प्रतीयते। भक्षण-प्रागभावासमानाधिकरणः भक्षणध्वंसः विवक्षितः। अत्रेदं बोध्यम् —

ईप्सितमित्यस्य क्रियाजन्यफलाश्रयतया इच्छाविषय इत्यर्थः। ईप्सिततम इत्यस्य प्रधानक्रियाजन्यफलाश्रयतया इच्छाविषय इत्यर्थः। कर्मसंज्ञासूत्रे तमपो ग्रहणेन प्रधानक्रियाया एव ग्रहणम्। प्रकृतसूत्रे तमपोऽभावेन क्रियासामान्यस्य ग्रहणम्। तेन गोनिष्ठाप्रधानक्रियाजन्यफलाश्रये यवादावपादानत्वस्य चरिता-र्थतया, चैत्रनिष्ठप्रधानक्रियाजन्याभावरूपफलाश्रये गवादौ परत्वात्कर्मत्वमेव प्रवर्तत इति प्राहुः।

एवम् — 'कूपादन्धं वारयती'त्यत्र वृत्तित्वं पञ्चम्यर्थः, पतनानुकूलव्या-पाराभावानुकूलो व्यापारो धात्वर्थः। तथा च कूपवृत्ति अधःप्रदेशावच्छिन्न-

**संयोगानुकूलक्रियारूपं यत् पतनम्, तदनुकूलो योऽन्धवृत्तिव्यापारः, तदभावानुकूलः यो व्यापारः, तदनुकूलकृतिश्चैत्रवृत्तिरिति बोधः पर्यवसितः।**

---

कूपादन्धं वारयतीति। तत्र पञ्चम्याः वृत्तित्वमर्थः। पतनानुकूलव्यापाराभावानुकूलव्यापारः वारयतेरर्थः। अत्र पतनं नाम अधः प्रदेशावच्छिन्नसंयोगानुकूलक्रिया। कूपस्य अधः प्रदेशेन साकम् अन्धस्य यः संयोगस्तदनुकूलक्रिया अन्धनिष्ठा अभिमुखगमनरूपा तदनुकूलो व्यापारः कृतिरूपः अन्धनिष्ठ एव। तदनुकूलो व्यापारः वारयितृनिष्ठः अन्धाकर्षणादिरूपः। तदनुकूला कृतिः चैत्रवृत्तिः इति बोधः। संयोगे कूपवृत्तित्वस्य पञ्चम्यन्तार्थस्यान्वयः। द्वितीयान्तार्थस्य अन्धवृत्तित्वस्य अधस्संयोगावच्छिन्नक्रियायामन्वयः।

एतदुक्तं भवति — वारयतेः अधःप्रदेशावच्छिन्नसंयोगानुकूलक्रियानुकूलव्यापाराभावानुकूलव्यापारः अर्थः। आख्यातार्थःकृतिः। पञ्चम्याः वृत्तित्वमर्थः। तस्याश्रयतासंबन्धेन संयोगेऽन्वयः। अन्धम् इति द्वितीयान्तार्थस्य अन्धवृत्तित्वस्य संयोगानुकूलक्रियायां तदनुकूलकृतौ च अन्वयः। चैत्र इत्यध्याहार्यम्। तस्याख्यातार्थभावनायां आधेयतया अन्वयः। तथा च कूपवृत्तिः यः अधःप्रदेशावच्छेदेन अन्धस्य संयोगः तदनुकूलक्रियानुकूलव्यापारोऽन्धनिष्ठः तदनुकूलव्यापारः कृतिरूपः तदभावानुकूलव्यापारनुकूलकृतिः चैत्रनिष्ठेति बोधः।

अत्र मूले कूपवृत्तिः अधः प्रदेशावच्छिन्नसंयोगानुकूलक्रियारूपं पतनम् इति पाठो दृश्यते। अत्रेयमनुपपत्तिः भाति पतनस्य कूपवृत्तित्वं कथम् इति। न हि कूपः पतति इति। कूपवृत्त्यधःप्रदेशावच्छिन्नसंयोगानुकूलक्रियारूपं इति समासरूपं पदं साधु। कूपवृत्तीत्यस्य संयोगेऽन्वयः। कूपवृत्तिः यः अधःप्रदेशावच्छेदेन

अन्धसंयोगः तदनुकूलक्रिया अभिमुखगमनरूपा क्रिया तदनुकूलो यो व्यापारः अन्धनिष्ठा कृतिः तदनुकूलकृतिः चैत्रनिष्ठेति बोध इति प्रतिभाति।

**एवम् — 'पुष्पेभ्य आतपं वारयती'त्यत्रापि शुष्कीभावानुकूलव्यापाराभावानुकूलव्यापारो धात्वर्थः। पुष्पवृत्तिशुष्कीभावानुकूलव्यापाराभावो य आतपनिष्ठः, तदनुकूलेत्यादिः पूर्ववद्बोधः। 'अग्नेर्माणवकं वारयती'त्यादौ जन्यत्वं पञ्चम्यर्थः, दाहानुकूलेत्यादिर्धात्वर्थः। न चैवमननुगमः। अनुभवानुरोधेन लक्षणायामननुगमस्य अदोषत्वात्। 'यवेभ्यो गां वारयति, अन्यथा भक्षयिष्यती'ति कूपादन्धं वारयति पतिष्यतीति, 'पुष्पेभ्यः आतपं वारयति शुष्काणि भविष्यन्ती'ति, अग्नेर्माणवकं वारयति दग्धो भविष्यतीति, प्रयोजनस्य भेदेन विवरणात्।**

---

**एवमिति।** उदाहरणान्तरम् — **पुष्पेभ्यः आतपं वारयति।** तत्र शुष्कीभावानुकूलव्यापाराभावानुकूलव्यापारो धात्वर्थः। शुष्कीभावान्वयि वृत्तित्वं पञ्चम्यर्थः। व्यापाराभावान्वयि वृत्तित्वं द्वितीयाया अर्थः। तथा च पुष्पवृत्तिर्यः शुष्कीभावः तदनुकूलो यः आतपवृत्तिः व्यापाराभावः तदनुकूलव्यापारानुकूला कृतिरिति बोधः। व्यापाराभावः किरणसंयोगाभावः तदनुकूलव्यापारानुकूला कृतिः वारयितृचैत्रनिष्ठेति तात्पर्यम्।

अग्नेर्माणवकं वारयतीत्यत्र जन्यत्वं पञ्चम्यर्थः। दाहानुकूलव्यापाराभावानुकूलव्यापारो धात्वर्थः। द्वितीयार्थः वृत्तित्वम्। तथा च अग्निजन्यस्य दाहस्य अनुकूलो यो व्यापारः तदभावः माणवकनिष्ठः तदनुकूलव्यापारानुकूला कृतिः वारयितृचैत्रनिष्ठेति बोधः।

**न चैवमननुगम इति।** उक्तोदाहरणेषु वारयतेः अनेकेऽर्थाः प्रदर्शिताः। तत्र शक्यतावच्छेदकस्यैकस्यानुगतस्याभावात् अननुगम इति शङ्का। समाधत्ते —

अनुभवानुरोधेनेति। ध्रुवमपायेऽपादानम् (पा.सू 1.4.24) इति सूत्रमेव शक्तिग्राहकम्। अन्यानि अपादानसंज्ञाविधायकसूत्राणि लक्षणाग्राहकाणि। अनेकत्र शक्तिरेव अननुगमाय। लक्षणायास्तु अनेकेष्वर्थेषु अनेकत्वं नाननुगमाख्यदोषापादकम्। यवेभ्यो गां वारयति अन्यथा भक्षयिष्यति, कूपादन्धं वारयति अन्यथा पतिष्यति, पुष्पेभ्यः आतपं वारयति अन्यथा शुष्कानि भविष्यन्ति, अग्नेर्माणवकं वारयति अन्यथा दग्धो भविष्यति इत्येवं प्रयोजनभेदेन वारणमपि भिन्नमेवेति न दोष इति भावः।

**अन्ये त्वनुगमरसिकाः सर्वत्र संयोगजनकव्यापाराभावस्य कर्मकारकवृत्तेरनुकूलो यो व्यापारः, स एव धात्वर्थः, वृत्तित्वञ्च पञ्चम्यर्थ इत्याहुः। तन्न। 'यवेभ्यो गोसंयोगं वारयति, यवेभ्यः कार्मणिकं वारयती'त्यादावनुगमानुपपत्तेः।**

## अत्रैव सूत्रे ईप्सितपदस्य निवार्यनिवारकान्यतरपरता

**ननु 'वारणार्थानामीप्सितः' (पा.सू 1.4.27) इति सूत्रे न तावदीप्सिते वारयतिक्रियायोगे एवापादानत्वनियमः, इष्टादन्नादंशं ददातीत्यादौ तदभावेऽपि दर्शनात्। नापि वारणार्थयोगे इप्सित एवेति नियमः, सर्पाद्वारयति, 'गङ्गास्नानाद्वारयति' इत्यादौ अनीप्सितेऽपि दर्शनादिति चेत्। न। निवार्यनिवारकान्यतरस्येप्सित इति तदर्थात्। सर्पादयो हि निवारकस्यानिष्टा अपि पुरोवृत्तित्वादिना निवार्यस्येष्टा एव। पुष्पेभ्य आतपं वारयतीत्यादौ निवार्यस्याचेतनत्वान्निवारकग्रहणम्।**

**अथवा धात्वर्थतावच्छेदकीभूतस्य विनाशानुकूलव्यापाराभावरूपस्य फलस्य यत्फलं विनाशादि, तत्सम्बन्धित्वेन प्रसक्तस्य यवादेस्तद्विपरीतत्वेन निवारकेच्छाविषय इति तदर्थ इति, न कश्चिद्विरोधः।**

**अन्ये तु अनुगमरसिकाः** — अनुगतार्थप्रयुक्तानुगतकार्यकारणभावलोलुपाः पूर्वोक्तेषु सर्वेषु उदाहरणेषु कर्मकारकवृत्तेः संयोगजनकव्यापाराभावस्य अनुकूलो यो व्यापारः स एव धात्वर्थः। वृत्तित्वं पञ्चम्यर्थः। तथा च चैत्रः यवेभ्यः गां वारयति इत्यत्र यवनिष्ठो यः संयोगः तज्जनकव्यापाराभावो गोवृत्तिः तदनुकूल-व्यापारश्चैत्रवृत्तिः इति बोधः इति रीत्या बोध इत्याहुः।

तन्न। यवेभ्यो गां वारयतीत्यस्य स्थाने यवेभ्यो गोसंयोगं वारयतीत्यपि प्रयोगोऽस्ति। तत्र संयोगानुकूलव्यापाराभावानुकूलव्यापारः धात्वर्थः कथं स्यात्। संयोगनिष्ठस्य संयोगस्याप्रसिद्धेः। अतस्तत्रार्थान्तरमेव वाच्यम्। संयोगाघटितः अनुकूलव्यापाराभावानुकूलव्यापारः धात्वर्थ इति वक्तव्यम्।

एवम् — यवेभ्यः कार्मणिकं वारयति इत्यत्र उक्तरीत्यनुपपत्तेश्च। 'मूलकर्म तु कार्मणम्' इत्यमरः। मूले क्रियमाणं कर्म कार्मणम्। 'कार्मणं मन्त्रकर्मादियोजने कर्मणि स्मृतम्' इति विश्वप्रकाशः। कार्मणेन जीवतीत्यर्थे "वेतनादिभ्यो जीवति" (पा.सू 1.4.12) इति सूत्रेण ठकि कार्मणिकः इति रूपम्। तं यवेभ्यो वारयति इति पूर्वोक्तवाक्यार्थः। यवान् विहाय अन्यत्र भवता कार्यं कर्तव्यमिति वाक्यार्थः। अत्र यवनिष्ठसंयोगस्यैवाप्रसक्तत्वात् तन्निवारणरूपो वाक्यार्थः अप्रसिद्ध इति भावः।

सूत्रोपरि शङ्कते — **ननु वारणार्थानामित्यादिना**। वारणार्थानामीप्सितः इति सूत्रे ईप्सिते वारयतिक्रियायोग एवापादानत्वमिति नियमः कर्तुं न शक्यते। इष्टादन्नात् अंशं ददाति इत्यादौ वारणक्रियायोगाभावेऽपि अपादानत्वदर्शनात्। नापि वारयत्यर्थयोगे ईप्सित एवापादानमिति नियमः।सर्पात् वारयतीत्यादौ अनीप्सितेऽपि सर्पादौ अपादानत्वदर्शनात्। समाधत्ते — **निवार्येति**। निवार्य-निवारकयोरन्यतरस्य निवार्यस्य निवारकस्य वा ईप्सितः अपादानमिति सूत्रार्थः।

सर्पादयो हि निवारकस्य अनिष्टा अपि निवार्यस्य पुरुषस्य इष्टा एव अभिमुखत्वादिना। एवमेव माणवकं गङ्गास्नानात् वारयतीत्यत्र निवारकस्यानिष्टमपि गङ्गास्नानं निवार्यस्य माणवकस्येष्टमेव। अत्र निवारकस्येष्टत्वं पुष्पेभ्य आतपं वारयति इत्यत्र साधुत्वार्थमुक्तम्। अत्र निवार्यस्य आतपस्याचेतनत्वात् पुष्पाणि तस्येष्टानि न भवन्ति। अतो निवारकस्येष्टमित्युक्तम्।

अथवा यवेभ्यो गां वारयतीत्यत्र यवानां निवारकेष्टत्वमेवमुपपादनीयम् — तत्र विनाशानुकूलव्यापाराभावानुकूलव्यापारो धात्वर्थः। धात्वर्थतावच्छेदकं फलं विनाशानुकूलव्यापाराभावः, तस्य फलं विनाशः, तत्संबन्धित्वेन प्रसक्तो यवः विनाशसंबन्धरहितत्वेन निवारकस्येष्टो भवतीति रीत्या यवस्य ईप्सिततत्वमुपपादनीयमिति भावः। तद्विपरीतत्वेन — विनाशसंबन्धरहितत्वेन।

## सूत्राणां प्रत्याख्यानाभिप्रायः

**वस्तुतस्तु बहुधैतानि सर्वाणि सूत्राणि भाष्यकारेण प्रत्याख्यातानि। तस्याऽयमाशयः — 'ध्रुवमपाये' (पा.सू 1.4.24) इति सूत्रे हि न वस्तुत एव क्रियाजन्यो विभागोऽभिप्रेतः, अपि तु तर्कितोऽपि, यदीयं क्रिया न स्यात्, तदा कर्मकारकेणाऽपादानस्य सम्बन्धः, स्यात्। क्रियया तु स निवारित इति। तदभावो जनित इति, तदभिप्रायमेव चापायपदम्। आवश्यकञ्चैतादृशं व्याख्यानं 'असंयुक्तादेव चोरात्पलायितः' इत्येतदर्थम्। ततश्च तत्सूत्रेणैव यवादेरप्यपादानत्वसिद्ध्या सूत्रान्तरवैयर्थ्यमिति। न चैवं गवादेरपि तादृशाभावाश्रयत्वादपादानत्वापत्तिः। ईप्सिततमत्वादिप्रयुक्तकर्मसंज्ञया परत्वेनापादानत्वसंज्ञाया बाधात्। वैपरीत्येन विवक्षायामिष्टापत्तेश्च। न च विवक्षायामुभयोरपादानत्वापत्तिः, वारयतेः सकर्मकत्वेन अन्यतरस्य कर्मत्वविवक्षाया आवश्यकत्वात्।**

**वस्तुत इत्यादि**। भीत्रार्थानां भयहेतुः इत्यारभ्य सप्त सूत्राणि सवार्तिकानि महाभाष्यकारेण पतञ्जलिना प्रत्याख्यातानि। भाष्यकारस्य आशयं संगृह्णाति — तस्यायमाशय इति। सूत्राणि तानि लाक्षणिकानुशासनानि लक्ष्यार्थबोधकानि न शक्यार्थबोधकानि इति पूर्वमुक्तम्। परं तु तत्र सर्वत्र 'ध्रुवमपायेऽपादानम्' (पा.सू 1.4.24) इति सूत्रेणैवापादानत्वं समर्थयितुं शक्यते। तस्मिन् शक्तिग्राहकसूत्रे वास्तविकक्रियाजन्यो विभाग एव नाभिमतः। अपि तु तर्कितोऽपि बुद्ध्या ऊहितो विभागोऽपि अभिप्रेतः। तथा हि — यदीयं क्रिया न स्यात् तदा कर्मकारकेणापादनस्य संबन्धः स्यात् क्रियया तु स संबन्धो निवारित इति तदभावः संबन्धाभावः जनितः। अयमभावोऽपि विभागपदेनोच्यते। अतो यवेभ्यो गां वारयतीत्यत्र ध्रुवमपाय इति सूत्रेणैवापादानत्वं सम्पादनीयम्। आवश्यकं चैवं व्याख्यानम्। असंयुक्ताच्चोरात् पलायित इत्यत्र अपादानत्वसमर्थनार्थम्। तत्र हि यदि वास्तविको विभागोऽभिप्रेतः स्यात् तर्हि संयोगाभावात् संयोगजनकव्यापाराभावानुकूलव्यापारोऽपि तत्र नास्तीति तादृशस्थले मुख्यमपादानत्वं न स्यात्। तादृशस्थले सूत्रान्तरस्याप्यभावात् ध्रुवमपायेऽपादानम् इत्यनेनैव अपादानत्वं निर्वहणीयम्। तदर्थं च तर्कितो विभागोऽपि सूत्राभिप्रेत इति भावः।

ननु यवेभ्यो गां वारयति इत्यत्र संयोगजनकव्यापाराभावानुकूलव्यापारो धात्वर्थः। धात्वर्थतावच्छेदकं फलं व्यापाराभाव एव। अत्र वारणक्रियया विभागः जायते। स च संबन्धाभाव एवेत्युक्तम्। यथा संबन्धो द्विनिष्ठो भवति, तथा संबन्धाभावोऽपि द्विनिष्ठ इति तदाश्रयत्वं यवस्यापि वर्तते। गोरपि वर्तते। तत्र यवस्यैवापदानत्वमिति कुतः। गोरपादानत्वं कुतो न संभवतीति शङ्का। तदाह — **न चैवं गवादेरपीति**। तत्र समाधानमाह — **ईप्सिततमत्वादीति**। ईप्सिततमत्व-

प्रयुक्तया परया बाधात् अपादानसंज्ञायाः बाधादिति। ततश्च गोः यवान् वारयतीति प्रयोगः साधुरेवेति भावः।

ननु यवानां गोश्च युगपत् अपादानत्वविवक्षायामुभयोरपादानत्वं इति शङ्कते — **न च विवक्षायामिति**। समाधानमाह — **वारयतेः सकर्मकत्वेन अन्यतरस्य कर्मत्वविवक्षायाः आवश्यकत्वादिति**। ततश्च वारयतेः एककर्मकत्वात् द्विकर्मक-धातौ परिगणनाभावात् पर्यायेण एकस्य कर्मत्वं विवक्षणीयम्। अपरस्य अपादानत्वमिति। ततश्च यवेभ्यो गां वारयति, गोः यवान् वारयति इति प्रयोग-द्वयमपि साधु इति भावः।

## अन्तर्धौ येनादर्शनमिच्छति (पा.सू 1.4.28)

**एवम् — 'अन्तर्धौ येनाऽदर्शनमिच्छति' (पा.सू 1.4.28) इत्यनेनान्तर्धौ व्यव-धाने सति, यत्कर्तृकस्यात्मनो दर्शनस्याऽभावमिच्छति, तदपादानं स्यादित्यर्थकेन 'मातुर्निलीयते कृष्णः' इत्यादौ पञ्चमी। अत्र च प्रत्यक्षाभावेच्छापूर्वकः प्रत्यक्ष-विरोधिव्यापारो धात्वर्थः, वृत्तित्वं पञ्चम्यर्थो धात्वर्थतावच्छेदके प्रत्यक्षे अन्वेति। विरोधित्वं तज्जनकलौकिकसन्निकर्षाभावानुकूलत्वम्। कृतिराख्यातार्थः। तथा च मातृवृत्तिस्वविषयकप्रत्यक्षाभावेच्छापूर्वको यः प्रत्यक्षजनकलौकिकसंनिकर्षा-भावानुकूलव्यापारः तदनुकूलकृतिः कृष्णवृत्तिरिति शाब्दबोधः। व्युत्पत्तिबलेन च प्रत्यक्षे कृष्णविषयत्वस्य बोधः पार्ष्ठिकः।**

---

एवम् अन्तर्धौ इति। "अन्तर्धौ येनादर्शनमिच्छति" (पा.सू 1.4.28) अन्तर्धौ व्यवधाने सति यत्कर्तृकस्य आत्मनः दर्शनस्याभावमिच्छति तदपादानं स्यादि-त्यर्थः। व्यवधानेनेति यावत्। मातुर्निलीयते कृष्णः। कृष्णः मातृकर्तृकस्व-

विषयकदर्शनविरहाय कुड्यादिना प्रच्छन्नो भवतीत्यर्थः। अत्र व्यवधानमाश्रित्य मातृकर्तृकस्वविषयकदर्शनविरहस्य कृष्णेन इष्यमाणतया मातुरपादानत्वात् पञ्चमी। कर्तृतृतीयापवादोऽयम्, षष्ठ्यपवादो वा। भाष्ये तु बुद्धिकृतमपादानत्वमाश्रित्य सूत्रमिदमपि प्रत्याख्यातम्। इति कौमुद्यादौ। तदेवाह — **अन्तर्धौ इत्यादिना**। मातुर्निलीयते कृष्णः। अत्र निपूर्वकस्य लीङ् श्लेषणे इति धातोः ली इत्यस्य प्रत्यक्षेच्छाभावपूर्वकः प्रत्यक्षविरोधिव्यापारः अर्थः। वृत्तित्वं पञ्चम्यर्थः धात्वर्थतावच्छेदके प्रत्यक्षेऽन्वेति। विरोधित्वं तज्जनकलौकिकसंनिकर्षाभावानुकूलत्वम्। कृतिः आख्यातार्थः। तथा च मातृनिष्ठं यत् स्वविषयकं प्रत्यक्षं तदभावेच्छापूर्वकः यः स्वविषयकप्रत्यक्षजनकलौकिकसंनिकर्षाभावानुकूलव्यापारः (कुड्यादिना प्रच्छन्नत्वरूपः) तदनुकूलकृतिः कृष्णवृत्तिः इति शाब्दबोधः।

व्युत्पत्तिबलेन च प्रत्यक्षे कृष्णविषयकत्वबोधः पार्ष्ठिकः। एतदुक्तं भवति — मातृचक्षुस्संनिकर्षः स्वस्मिन् यदि भवेत् तदा स्वविषयकं प्रत्यक्षं मातुः भवेत्। अतो मातृचक्षुस्संनिकर्षो यथा स्वस्य न स्यात् तथा कृष्णो व्याप्रियते कुड्यादिव्यवहितो भवतीति भावः। अत्र प्रत्यक्षे कृष्णविषयकत्वबोधकः शब्दः मातुर्निलीयते कृष्णः इति वाक्ये नास्ति। **व्युत्पत्तिबलेनेति**। पार्ष्ठिकबोधविषयविषयककार्यकारणभावबलेनेत्यर्थः।

## आख्यातोपयोगे (पा.सू 1.4.29)

**एवम् — नियमपूर्वकविद्यास्वीकारे वक्ता अपादानसंज्ञः स्यादित्यर्थकेन 'आख्यातोपयोगे' (पा.सू 1.4.29) इति सूत्रेणोपाध्यायादधीत इत्यत्र पञ्चमी। अत्रोच्चारणोत्तरकालीनमनभ्यस्तोच्चारणं धात्वर्थः। वृत्तित्वं पञ्चम्यर्थः। इदमपि सूत्रं भाष्यकारेण प्रत्याख्यातम्। उच्चारणक्रियाजन्यशब्दजनकस्वसमानजातीयशब्दा-**

**नामुपाध्यायमुखनिःसृतत्वेन उपाध्यायस्य क्रियाजन्यविभागाश्रयत्वात् ध्रुवमपाये इति सूत्रेणैव तत्सिद्धेः।**

**न चैवंविधस्य विभागस्य मुख्यविभागत्वाभावान्नैकविधत्वमपादानत्वस्येति वाच्यम्। नानाविधानामेवञ्जातीयकानामपादानत्वानां व्यापकीभूताखण्डोपाधिरूपापादानत्व एव तात्पर्यात्। अत एवैवंविधाः प्रयोगाः सर्वे शक्ताः एवेत्यपि शक्यं वक्तुम्। तज्ज्ञापनमेव च प्रत्याख्यानफलम्। उक्तविधतत्तद्रूपेण निरूढलक्षणया बोधसिद्ध्यर्थं तत्तत्सूत्राणीति मत्वाऽस्माभिः, अन्यैश्च तत्तत्सूत्राणि व्याख्यायन्ते।**

---

"आख्यातोपयोगे" (पा.सू. 1.4.29) इति सूत्रं व्याचष्टे एवमित्यादिना। उपयोगे — नियमपूर्वकविद्यास्वीकारे, आख्याता — वक्ता अध्यापकः अपादानसंज्ञः स्यात् इति सूत्रार्थः। नियमः ब्रह्मचर्यं प्रणामपूर्वकाभिवादनादिकम्। उपाध्यायादधीते इत्युदाहरणम्। पूर्वमनभ्यस्तस्य वेदस्य आचार्योच्चारणानन्तरं यत् शिष्यकर्तृकं उच्चारणं तत् अध्ययनमिति कथ्यते। ततश्च उच्चारणोत्तरकालीनानभ्यस्तोच्चारणं धात्वर्थः। पञ्चम्याः वृत्तित्वमर्थः। उच्चारणेऽन्वेति। तथा च आचार्यवृत्ति यत् उच्चारणं तदुत्तरकालीनं यत् अनभ्यस्तोच्चारणं तदनुकूला कृतिः माणवकनिष्ठेति बोधः।

**इदमपीत्यादि।** इदं सूत्रमपि महाभाष्यकारेण प्रत्याख्यातम्। ध्रुवमपायेऽपादानम् इति सूत्रेणैवापादानत्वस्य सिद्धत्वात्। अत्र उपाध्यायस्य मुखात् शब्दः निस्सरति। उपाध्यायक्रियया शब्दस्य उपाध्यायात् विभागो जायते। ततः तं शब्दं श्रुत्वा माणवकः श्रुतशब्दसमानजातीयं शब्दमुच्चारयति — इदमुच्चारणमेवाध्ययनम्। तत्र निस्सरणं नाम विभागानुकूलो व्यापारः। एवं च निस्सरणक्रियाजन्यविभागाश्रयत्वात् उपाध्यायस्य ध्रुवमपायेऽपादानम् इति सूत्रेणैव

अपादानत्वं सिद्धमिति आख्यातोपयोगे इति सूत्रम् अनावश्यकमिति भावः। **उच्चारणक्रियेति**। शिष्यकर्तृकोच्चारणक्रियया जन्याः ये शब्दाः तज्जनकाः तत्समानजातीयाः ये शब्दाः तेषामुपाध्यायमुखान्निस्सृतत्वेन उपाध्यायस्य क्रियाजन्यविभागाश्रयत्वात् निस्सरणक्रियाजन्यविभागाश्रयत्वात् उपाध्यायस्या-पादानत्वं सिद्धमित्यर्थः।

ननु यदा द्वयोः द्रव्ययोः विभागो भवति तदैव स विभागः मुख्यः। प्रकृते तु शब्दस्य द्रव्यत्वाभावात् उपाध्यायमुखाच्छब्दस्य यो विभागः सोऽमुख्यः। एवं च यत्र मुख्यविभागाश्रयत्वं तत्रैव मुख्यमपादानत्वम्। अन्यत्र तु सर्वत्र लाक्षणिकम् इति कृत्वा अपादानत्वमनेकविधम्। तदर्थं लाक्षणिकानुशासनमावश्यकमिति शङ्का।

समाधानं तु — भवदुक्तरीत्या मुख्यामुख्यरूपेण अनेकविधानि अपादानत्वानि भवन्ति। तेषु सर्वेषु अपादानेषु अपादानत्वमिति कश्चन अपादानमित्यनुगत-प्रतीतिसिद्धः अखण्डधर्मो वर्तते। ध्रुवमपाये इत्यादिसर्वसूत्राणां तत्र तात्पर्यम्। अत एवंविधाः प्रयोगाः सर्वे मुख्याखण्डपादानत्वविषयका एव। अतः सर्वे तत्तत्सूत्रबोधिताः पञ्चम्यन्तप्रयोगाः शक्ता एव। तत्तत्सूत्रप्रत्याख्यानस्यापि अखण्डोपाधिरूपापादानत्वज्ञापन एव तात्पर्यम्।

एवं प्रत्याख्यानभाष्याशयमुपवर्ण्य सूत्रकारवार्तिककारयोराशयं विशद-यति — **उक्तविधतत्तद्रूपेणेति**। विषयित्वहेतुमत्वजन्यत्वप्रतियोगित्ववृत्तित्वादि-रूपेण निरूढलक्षणया बोधार्थं तत्तत्सूत्राणि। "भीत्रार्थानां भयहेतुः" (पा.सू. 1.4.25) इत्यादीनि सप्त सूत्राणि जुगुप्साविरामेत्यादिवार्तिकद्वयं च व्याख्यातानि मया अन्यैश्च नैयायिकैश्चेत्यर्थः।

## जनिकर्तुः प्रकृतिः (पा.सू 1.4.30)

**एवम् — जायमानस्य हेतुरपादानसंज्ञः स्यादित्यर्थकेन जनिकर्तुः प्रकृतिः (पा.सू 1.4.30) इति सूत्रेण 'ब्रह्मणः प्रजाः प्रजायन्ते' इत्यत्र पञ्चमी। अत्र जन्यत्वम् पञ्चम्यर्थः, स च स्वाश्रयवृत्त्युत्पत्तिकत्वसम्बन्धेनाख्यातार्थे आश्रयत्वेऽन्वेति। अत्र हेतुत्वमुपादाननिमित्तोभयसाधारण्येन विवक्षितम्। तेन पुत्रात्प्रमोदो जायते, 'मृदो घटो जायते' इत्यादौ पञ्चमी। ब्रह्मणस्तूभयरूपत्वात्पञ्चमी।**

---

अथ "जनिकर्तुः प्रकृतिः" (पा.सू 1.4.30) इति सूत्रं व्याचष्टे — **एवमिति।** जनिकर्तुः जायमानस्य प्रकृतिः हेतुः अपादानसंज्ञकः स्यात् इति सूत्रार्थः। ब्रह्मणः प्रजाः प्रजायन्ते इति उदाहरणम्। अत्र ब्रह्मशब्दः चतुर्मुखब्रह्मवाची अथवा परब्रह्मवाची। ब्रह्मशब्दोत्तरपञ्चम्याः जन्यत्वमर्थः। तत्र निरूपितत्वसंबन्धेन ब्रह्मणोऽन्वयः। प्रपूर्वकजनिधातोः उत्पत्तिरर्थः। आख्यातस्य आश्रयत्वमर्थः। पञ्चम्यन्तार्थस्य ब्रह्मनिरूपितजन्यत्वस्य स्वाश्रयवृत्त्युत्पत्तिकत्वसंबन्धेनाश्रयत्वेऽन्वयः प्रजानामाधेयत्वसंबन्धेन आख्यातार्थे आश्रयत्वेऽन्वयः। ब्रह्मजन्यत्वाश्रयाः प्रजाः तद्वृत्तिः या उत्पत्तिः तदाश्रयत्वमिति शाब्दबोधः। प्रजानां संबन्धघटकतयापि भानम्।

अत्र प्रजानां ब्रह्मजन्यत्वात् प्रजाहेतुत्वं ब्रह्मणः। अत्र हेतुत्वम् उपादानकारणनिमित्तकारणोभयसाधारणतया विवक्षितम्। पुत्रात् प्रमोदो जायते इति निमित्तकारणस्योदाहरणम्। मृदो घटो जायते इति उपादानकारणस्योदाहरण्। कारणं हि द्विविधम् उपादानकारणं निमित्तकारणं चेति।

ब्रह्मणः प्रजा जायन्ते इत्यत्र ब्रह्मशब्दस्य परब्रह्मवाचकत्वात् तस्य उपादानकारणत्वं निमित्तकारणत्वं च वेदान्तिभिराश्रितम्। तदभिप्रेत्य ब्रह्मणस्तूभयरूपत्वात् इत्युक्तम्। उपादाननिमित्तोभयरूपत्वात् इत्यर्थः। अत्र जन्यत्वं पञ्चम्यर्थः। धातोः उत्पत्तिः अर्थः। आख्यातस्य आश्रयत्वमर्थः। पञ्चम्यर्थस्य जन्यत्वस्य स्वाश्रयवृत्त्युत्पत्तिकत्वसंबन्धेन आश्रयत्वे अन्वयः। तथा च ब्रह्मजन्यत्वाश्रयप्रजावृत्त्युत्पत्तिनिरूपकमाश्रयत्वं प्रजावृत्ति इति बोधः।

## भुवः प्रभवः (पा.सू 1.4.31)

**एवम् — 'भुवः प्रभवः' (पा.सू 1.4.31) इत्यनेन भवनस्य प्रकर्षविशिष्टस्य यः कर्ता, तस्य यः प्रभवनप्रतियोगी, सोऽपादानसंज्ञस्स्यादित्यर्थकेन 'हिमवतो गङ्गा प्रभवती'त्यत्र पञ्चमी। अत्र प्रकर्षः संयोगध्वंसक्षणाव्यवहितोत्तरक्षणवृत्तित्वम्। धात्वर्थश्चैतत्सर्गीयभारतवर्षस्थभूसंयोगध्वंसासमानकालीनस्तादृशभूसंयोगः। प्रतियोगित्वं पञ्चम्यर्थः। तस्य च प्रकर्षार्थसंयोगद्वारक आख्यातार्थान्वयः, आख्यातार्थः आश्रयत्वम्। धातूपसर्गार्थभूतसर्वसंयोगेषु गङ्गावृत्तित्वञ्च व्युत्पत्तिबललभ्यम्। तथा च हिमवत्प्रतियोगिकगङ्गासंयोगध्वंसक्षणाव्यवहितोत्तरक्षणवृत्त्येतत्सर्गीयभारतवर्षस्थभूगङ्गासंयोगध्वंसासमानकालीनतादृशभूसंयोगाश्रयत्वं गङ्गावृत्तीति बोधः पर्यवसितः।**

**अत्र वैकुण्ठसंयोगध्वंसक्षणोत्तरं तादृशभूगङ्गासंयोगस्याऽऽद्यस्य जायमानतया 'वैकण्ठात् भुवि प्रभवति गङ्गे'ति प्रयोगापत्तिः। अतोऽव्यवहितेति। काशीसंयोगध्वंसाव्यवहितोत्तरक्षणे उक्तविधभूगङ्गासंयोगानां केषाञ्चिज्जायमानत्वात् 'काशीतो गङ्गा भुवि प्रभवती'ति प्रयोगापत्तेस्तादृशसंयोगध्वंसासमानकालीनेति। एवञ्चाद्यस्यापि संयोगस्य तदव्यवहितपूर्वक्षणवृत्तिवैकुण्ठसंयोगध्वंसाद्यव्यवहितोत्तरत्वा-**

**द्वैकुण्ठात्प्रभवतीति प्रयोगापत्तेरनिवारणात्, प्रकर्षार्थसंयोगध्वंसक्षणस्याप्याद्यत्व-विशेषणं देयम्।**

**वस्तुतस्तु — 'वैकुण्ठात् भुवि प्रभवती'ति प्रयोगस्येष्टापत्त्यैव परिहर्तुं शक्यत्वात्, न तन्निवारणाय पदद्वयदानम्।**

---

अथ "भुवः प्रभवः" (पा.सू 1.4.31) इति सूत्रं व्याचष्टे। पूर्वसूत्रे जनिकर्तुः प्रकृतिः इत्यत्र समासनिर्दिष्टमपि कर्तृपदं समासैकदेशे स्वरितत्वप्रतिज्ञाबलात् इहानुवर्तते। भवनं भूः। प्रभवति प्रथमं प्रकाशतेऽस्मिन्निति प्रभवः — प्रथमप्रकाशस्थानमित्यर्थः। तथा च भवनकर्तुः प्रथमप्रकाशस्थानमपादानसंज्ञकं स्यादिति सूत्रार्थः। हिमवतो गङ्गा प्रवहति। गङ्गा हिमालये प्रथमं प्रकाशते इत्यर्थः। प्रथमप्रकाशोऽत्र धात्वर्थः। तदाधारः हिमवान् अपादानम्। हिमवद-पादानकः गङ्गाकर्तृकः प्रथमप्रकाशः प्रभवत्यस्मादिति वा प्रभवः। हिमवद्धेतुकः गङ्गाकर्तृकः प्रथमप्रकाशः इति बोध इति व्याकरणग्रन्थे व्याख्यानम्।

अत्र खण्डदेवस्य व्याख्यानम् — प्रकर्षविशिष्टस्य भवनस्य यः कर्ता, तस्य यः प्रभवनप्रतियोगी सोऽपादानसंज्ञः स्यात् इति। अत्र प्रकर्षविशिष्टं भवनं नाम उत्पत्तिः। तस्याः कर्त्री गङ्गा। तथा च गङ्गानिष्ठं यत् प्रभवनं तस्य प्रतियोगी यो हिमवान् तस्यापादानसंज्ञा भवति। यस्मात् प्रभवति स एव प्रतियोगी इत्युच्यते। अत्र भवने प्रकर्षो नाम संयोगध्वंसक्षणाव्यवहितोत्तरक्षणवृत्तित्वम्। भूधात्वर्थश्च एतत्सर्गीयभारतवर्षस्थभूसंयोगध्वंसासमानकालीनः तादृशभूसंयोगः। पञ्चम्याः प्रतियोगित्वमर्थः। तस्य प्रकर्षघटकसंयोगेऽन्वयः। तद्द्वारा च आख्यातार्थे आश्रयत्वेऽन्वयः। हिमवत्प्रतियोगिकः यः संयोगः तद्ध्वंसक्षणाव्यवहितोत्तरक्षण-वृत्तित्वविशिष्टः भूसंयोगः। अत्र प्रकर्षपदार्थे धात्वर्थे च घटकतया संयोगः

अस्ति। प्रकर्षः संयोगध्वंसक्षणाव्यवहितोत्तरक्षणवृत्तित्वम् धात्वर्थश्च एतत्सर्गीय-भारतवर्षस्थभूमिसंयोगध्वंसासमानकालीनस्तादृशभूसंयोगः इति हि मूलम्। धात्वर्थघटकसंयोगयोः उपसर्गार्थसंयोगे च गङ्गावृत्तित्वं भासते। तच्च भानं न शब्दात् अपि तु समभिव्याहाररूपाकाङ्क्षाबलात्। तदुक्तं **व्युत्पत्तिबललभ्यमिति।** तथा च पर्यवसितः शाब्दबोधः इत्थं भवति — हिमवत्प्रतियोगिको यः गङ्गासंयोगः तद्ध्वंसक्षणाव्यवहितोत्तरक्षणवृत्तिः यः एतत्सर्गीयभारतवर्षस्थभूगङ्गा-संयोगध्वंसासमानकालीनतादृशभूसंयोगः एतद्वर्षीयभारतवर्षस्थभूसंयोगः तदा-श्रयत्वं गङ्गावृत्तीति शाब्दबोधः।

तत्र प्रकर्षपदार्थघटकस्य अव्यवहितेत्यस्य प्रयोजनमाह — **अत्र श्रीवैकुण्ठेति।** संयोगध्वंसक्षणाव्यवहितोत्तरक्षणवृत्तित्वं प्रकर्षः इत्युक्तम्। तत्र अव्यवहितेति पदाभावे — वैकुण्ठात् भुवि प्रभवति गङ्गा इत्यत्र यदा वैकुण्ठे विद्यमाना गङ्गा वैकुण्ठान्निस्सरति तदा वैकुण्ठगङ्गयोः विद्यमानस्य संयोगस्य ध्वंसो जायते, तदनन्तरं गङ्गायाः भुवा साकं संयोगो जायते। तत्र वैकुण्ठगङ्गासंयोगध्वंसक्षणस्य भूगङ्गासंयोगक्षणस्य च मध्ये बहवः क्षणाः भवन्ति। परं तु वैकुण्ठसंयोग-ध्वंसक्षणोत्तरक्षणवृत्तित्वं भूसंयोगेऽस्तीति वैकुण्ठात् भुवि गङ्गा प्रभवति इति प्रयोगापत्तिः। तद्वारणाय अव्यवहितत्वनिवेशः। तथा सति भूसंयोगे तद्ध्वंसाव्य-वहितक्षणवृत्तित्वं नास्तीति नापत्तिः।

धात्वर्थे प्रविष्टस्य भूसंयोगध्वंसासमानकालीन इति विशेषणस्य प्रयोजन-माह — **काशीसंयोगेत्यादिना।** काश्याः गङ्गायाश्च यः संयोगः तद्ध्वंसोत्तरक्षणे तदुत्तरभूप्रदेशेन साकं गङ्गायाः संयोगस्य जायमानतया काशीतो गङ्गा भुवि प्रभवति इति प्रयोगापत्तिः। तद्वारणाय तादृशसंयोगध्वंसासमानकालीनेति

भूसंयोगे विशेषणम्। काशीतो भुवि गङ्गा प्रभवति इति तेन विशेषणेन व्यावर्त्यते। कथमिति चेत् — गङ्गायाः काशीसंयोगध्वंसोत्तरकाले एव काश्यनन्तरप्रदेशेन संयोगो जायत इति तस्य संयोगस्य काशीसंयोगध्वंससमानकालिकतया तदसमानकालिकत्वं नास्तीति नोक्तप्रयोगापत्तिरिति भावः।

नन्वेवमपि वैकुण्ठात् भुवि प्रभावति गङ्गा इति प्रयोगापत्तिः। हिमवान् पर्वतोऽपि भूरेवेति हिमवद्रूपभुवो गङ्गायाश्च यः संयोगः स वैकुण्ठगङ्गासंयोग-ध्वंसक्षणाव्यवहितोत्तरं जायते अतः उक्तप्रकर्षसत्वात् उक्तप्रयोगापत्तिः इत्या-शङ्क्य — प्रकर्षशब्दस्य योऽर्थः पूर्वमुक्तः संयोगध्वंसक्षणाव्यवहितोत्तरक्षण-वृत्तित्वमिति तत्र संयोगध्वंसक्षणे आद्येति विशेषणं देयम्। तथा च आद्यः यः संयोगध्वंसक्षणः तदव्यवहितोत्तरक्षणवृत्तित्वं प्रकर्षः। यदा वैकुण्ठात् गङ्गा प्रच्यवते तदा वैकुण्ठात् हिमवत्पर्यन्तं अनेकैः प्रदेशैः सह गङ्गायाः संयोगाः उत्तरोत्तरसंयोगेभ्यः पूर्वपूर्वसंयोगध्वंसा जायन्ते। तत्र हिमवद्गङ्गयोः यः संयोगः सः आद्यो यः वैकुण्ठगङ्गासंयोगध्वंसः तदव्यवहितोत्तरत्वं नास्तीति वैकुण्ठपदेन हिमवन्तमभिसन्धाय वैकुण्ठात् भुवि प्रभवति गङ्गा इति प्रयोगस्य नापत्तिः कार्या इति भावः।

स्वमतमाह — **वस्तुतस्तु इति**। पदद्वयम् — अव्यवहितेति तादृशसंयोग-ध्वंसासमानकालीनेति च पदद्वयं नोपादेयमित्यर्थः।

## ल्यब्लोपे कर्मण्यधिकरणे च

एवम् — 'ल्यब्लोपे कर्मण्यधिकरणे च' (वा. 1474) इत्यनेन वार्तिकेन अर्थाध्याहारादिना गम्यमाने ल्यबन्तकर्मणि, अधिकरणे वा पञ्चमी स्यादित्यर्थेकेन 'प्रासादात्प्रेक्षते' इत्यादौ पञ्चमी। प्रासादमारुह्य प्रेक्षते, प्रासादे स्थित्वा प्रेक्षत

**इत्यर्थः। अत्र कर्मत्वम्, अधिकरणत्वं वा पञ्चम्यर्थः। तस्य च स्वनिरूपकारोहणादिभावनोत्तरकालिकत्वादिसंसर्गेण प्रेक्षणभावनायामन्वयः। न च गम्यभानक्रियायाः कथं संसर्गघटकत्वम्, 'कस्मात्त्वम्, नद्याः' इत्यादौ आगतादिपदाध्याहारेण गम्यमानक्रियादेर्विशेष्यत्वाद्युपपत्तौ संसर्गघटकत्वस्य सुतरामुपपत्तेः।**

---

एवं ल्यब्लोप इत्यादि। 'ल्यब्लोपे कर्मण्यधिकरणे च' (वा. 1474) इति वार्तिकेन अर्थाध्याहारादिना गम्यमाने ल्यबन्तकर्मणि अधिकरणे वा पञ्चमी स्यात् इत्यर्थकेन प्रासादात् प्रेक्षते इत्यादौ पञ्चमी। प्रासादमारुह्य प्रेक्षते, प्रासादे स्थित्वा प्रेक्षते इत्यर्थः। अत्र कर्मत्वमधिकरणत्वं वा पञ्चम्यर्थः। तत्र आधेयत्वसंबन्धेन प्रासादस्यान्वयः। प्रासादनिष्ठकर्मत्वस्य स्वनिरूपकारोहणानुकूलभावनोत्तरकालिकत्वसंबन्धेन, प्रासादनिष्ठाधिकरणतानिरूपकस्थित्यनुकूलभावनोत्तरकालिकत्वसंबन्धेन वा प्रेक्षणभावनायामन्वयः। प्रासादकर्मकारोहणभावनोत्तरकालीना प्रेक्षणभावना देवदत्तनिष्ठा, प्रासादाधिकरणकस्थितिभावनोत्तरकालीना प्रेक्षणभावना देवदत्तनिष्ठेति शाब्दबोधः।

न च गम्यमानक्रियायाः कथं संसर्गघटकत्वमिति वाच्यम्। कस्मात् त्वम्, नद्याः इत्यादौ आगतादिपदाध्याहारेण गम्यमानक्रियादेः विशेष्यत्वादिकं यथा स्वीक्रियते तथा संसर्गघटकत्वस्वीकारे दोषाभावात् इति।

कर्मणि — ल्यबन्तार्थकर्मणि, अधिकरणे — ल्यबन्तार्थाधिकरणे। गम्यमाने इति लोपशब्देन सूच्यते। केषुचित् व्याकरणग्रन्थेषु प्रासादे उपविश्य प्रेक्षते इत्यर्थः इति लिखितम् तदपेक्षया प्रासादे स्थित्वा प्रेक्षत इति विवरणे औचित्यं सूचयति खण्डदेवः।

**एवम् — 'यतश्चाऽध्वकालनिमानं तत्र पञ्चमी', (वा. 1477) तद्युक्तादध्वनः प्रथमासप्तम्यौ (वा. 1479) 'कालात्सप्तमी वक्तव्या', (वा. 1478) इत्यादिवार्तिकात्, वनाद् ग्रामो योजनम्, योजने वा, कार्तिक्या आग्रहायणी मासः इत्यादौ पञ्चमी। अत्राऽवधित्वं पञ्चम्यर्थः, वनावधिकयोजनपरिमितदेशवृत्तिः ग्राम इति बोधः फलितः प्रथमार्थोऽप्यधिकरणत्वमेव।**

---

**एवं यतश्चेत्यादि।** "यतश्चाध्वकालनिमानम् तत्र पञ्चमी, (वा. 1477) तद्युक्तादध्वनः प्रथमासप्तम्यौ, (वा. 1479) कालात् सप्तमी च वक्तव्या" (वा. 1478) इति वार्तिकानि। यत इति तृतीयार्थे तसिः। येन अवधिना अध्वनः कालस्य वा विमानं परिच्छेदः इयत्ता गम्यते ततः पञ्चमी इत्येकं वाक्यम्। तद्युक्तादिति। तेन पञ्चम्यन्तेन युक्तात् अन्वितात् अध्ववाचिनः पञ्चमीसप्तम्यौ वाच्ये इति द्वितीयं वाक्यम्। कालात् सप्तमी च वक्तव्येति तृतीयं वाक्यम्। तद्युक्तात् इत्यनुषज्यते। तेन पञ्चम्यन्तेन अन्वितात् कालवाचिनः सप्तमी वक्तव्येत्यर्थः।

वनात् ग्रामो योजनं योजने वा। अत्र योजनात्मकम् अध्वपरिमाणं वनेन पूर्वावधिना परिच्छिद्यते। कस्मात् आरभ्य योजनम् इत्याकाङ्क्षायाः उत्थानात्। योजनं योजने इति प्रथमासप्तम्योरपि स्वोत्तराव्वहितदेशवृत्तित्वमर्थः। अत्रावधित्वं पञ्चम्यर्थः। वनावधिकाव्यवहितोत्तरयोजनपरिमितदेशवृत्तिः ग्राम इति बोधः इति प्रथमवार्तिकतदुदाहरणे।

कालात् सप्तमी इत्यस्योदाहरणम् — कार्तिक्याः मासे आग्रहायणी। अत्र मासात्मकं कालपरिमाणम् कार्तिक्या पूर्वावधिना परिच्छिद्यते। कस्मादारभ्य मासे इत्याकाङ्क्षायाः उत्थानात्। अत्रापि अवधित्वं पञ्चम्यर्थः। मासे इति सप्तम्याः

स्वाव्यवहितोत्तरकालवृत्तित्वमर्थः। तथा च कार्तिकपौर्णमास्यात्मकपूर्वावधिक-मासाव्यवहितोत्तरकाले मार्गशीर्षपौर्णमासी इत्यर्थः। प्रथमार्थोऽपीति। अपिना सप्तम्यर्थः ग्राह्यः। योजने इत्यत्र सप्तम्या इव योजनं इत्यत्र प्रथमाया अपि अधिकरणत्वमर्थः इति भावः। उक्तोदाहरणेषु निःसृत्य, प्रभृति, गते इत्येतेषा-मध्याहारेण विभागप्रतीत्या तदवधित्वमाश्रित्य ध्रुवमपायेऽपादानम् इति सूत्रेणैव अपादानसंज्ञया पञ्चम्याः सिद्धत्वात् वार्तिकमिदं नावश्यकमिति भाष्ये प्रत्या-ख्यातम्।

## अन्यारादितरर्ते इत्यादिसूत्रम्

**एवम् — 'अन्यारादितरर्तेदिक्शब्दाञ्चूत्तरपदाजाहियुक्ते' (पा.सू 2.3.29) इत्यनेन एभिश्शब्दैर्योगे पञ्चमीत्यर्थैकेन कृष्णादन्य इत्यादौ पञ्चमी। प्रतियोगि-त्वञ्चाऽत्र पञ्चम्यर्थः, तस्य च स्वनिरूपकान्योन्याभावद्वारकपरम्परया अध्याहृता-ख्यातार्थेऽन्वयः। अन्य इत्यर्थग्रहणमिति सूचनार्थं पृथगितरपदोपन्यासः। अत एव कृष्णादितरः, कृष्णात्पृथगित्यपि द्रष्टव्यम्।**

---

अथ अन्यारादित्यादिसूत्रं व्याचष्टे — एवमित्यादिना। "अन्यारादितरर्ते-दिक्शब्दाञ्चूत्तरपदाजाहियुक्ते" (पा.सू 2.3.29) इति सूत्रम्। अन्य, आरात्, इतर, ऋते, दिक्शब्द, अञ्चूत्तरपद, आच्, आहि एभिरष्टभिर्योगे सति पञ्चमी स्यात् इति सूत्रार्थः।

तत्र अन्यशब्दयोगे पञ्चम्याः उदाहरणम् — कृष्णादन्यः गोपः इति। अत्र अस्तीत्यध्याहार्यम्। पञ्चम्याः प्रतियोगित्वमर्थः। तत्र आधेयत्वसंबन्धेन कृष्ण-स्यान्वयः। कृष्णनिष्ठं प्रतियोगित्वम्। तस्य स्वनिरूपकान्योन्याभावाश्रय-

निष्ठत्वसंबन्धेन आख्यातार्थाश्रयत्वेऽन्वयः। तथा च कृष्णप्रतियोगिकभेदवन्निष्ठं सत्ताश्रयत्वमिति बोधः। अत्र अन्य इत्यर्थग्रहणमिति सूचनाय पृथक् इतर अनयोरुपादानम्। अत एव कृष्णादितरः। कृष्णात् पृथक् इत्यपि द्रष्टव्यम्। अर्थस्तु समानः।

**न चैवं 'घटः पटो न, घटस्याऽन्योन्याभावः, घटस्य संयोगाभावः, घटस्य तादात्म्याभावः' इत्यादावपि पञ्चम्यापत्तिः, घटाद्विभागः, घटाद्भेदः पटस्येत्यादाविव धर्ममात्रवाचित्वेपि पञ्चम्यापत्तेर्दुर्वारत्वात्, धर्मिविवक्षायामपि घटस्य अन्योन्याभाववानित्यादौ तदापत्तेदुर्वारत्वाच्चेति वाच्यम्। पञ्चम्यर्थो हि प्रतियोगित्वं स्वनिरूपकभेदादिघटितसंसर्गेणास्मन्मते आख्यातार्थान्वयी। तत्र चाऽन्यादिपदं संसर्गतात्पर्यग्राहकम्। परमते तु तदुपस्थापिते भेदादावेवाऽन्वयः इति विशेषः। तदिहान्यादिपदैः भेदादेर्विशिष्य भेदत्वादिनोपस्थितत्वाद्युक्ता तद्योगे पञ्चमी। अन्योन्याभावादिपदैस्त्वन्योन्यादिपदवाच्यतादात्म्याद्यभावत्वेन बोधान्न तद्योगे पञ्चमी। नञोऽपि लाघवेनाऽभावत्वेनैव वाचकता, न तु भेदत्वादिना, अनेकशक्तिकल्पनापत्तेः। अत एव 'तदन्यतद्विरुद्धतदभावेषु नञ्' इत्यनुशासनमपि न वृत्तिपरम्, अन्यलभ्यत्वात्। अतो विशेषबोधः समभिव्याहारविशेषादिनेति, न तत्रापि पञ्चमीप्रसक्तिः। अत एव 'घटात् पृथक्त्वम्' इत्यादिप्रयोगा निरपवादाः। न चैवं 'घटः पटो ने'त्यादौ पञ्चम्यनापत्तावपि षष्ठ्यापत्तिर्दुर्वारेति वाच्यम्। नियतप्रयोगा हि केचिदव्ययाः इत्यनुशासनान्तरेण तदनापत्तेः, नेयं विभाषा इत्यादिभाष्यप्रयोगाच्च।**

---

ननु सूत्रे यदि अन्यशब्दः अर्थपरः — अन्योन्याभावार्थकशब्दपरः, तदा घटः पटो न इत्यत्रापि अन्योन्याभावार्थकत्वात् नञः, तद्योगात् पटशब्दोत्तरं पञ्चमी स्यात्, तथा च घटः पटान्न इत्यपि प्रयोगः साधुः स्यात्। एवं घटस्यान्यो-

न्याभावः इत्यत्र अन्योन्याभाव इति शब्दस्यापि अन्योन्याभावार्थकत्वात् तद्योगे घटपदोत्तरं पञ्चम्यापत्त्या घटादन्योन्याभावः इति प्रयोगः साधुः स्यात्। न च सूत्रे अन्यशब्दः अन्योन्याभाववद्धर्मिवाचकः। अतः तद्वाचकैः अन्य, भिन्न, इतर इत्यादिशब्दैर्योगे एव पञ्चमी। नञ्, अन्योन्याभावः, तादात्म्याभावः इत्यादि-शब्दास्तु भेदरूपधर्मवाचकाः। अतो न तैर्योगे पञ्चम्यापत्तिः इति वाच्यम्। अन्यपदेन धर्मिपर्यन्तविवक्षायामपि घटस्य अन्योन्याभाववान् पटः इत्यत्र अन्योन्याभाववच्छब्दस्य भेदाश्रयधर्मिवाचकत्वात् तद्योगे घटपदात् पञ्चम्यापत्तेः, षष्ठ्याः असाधुत्वापत्तिः। एवम् अन्योन्याभावार्थकत्वं विभागपदस्यापि वर्तते। संयोगाभावरूपत्वात् विभागस्य घटस्य संयोगाभावः इत्यत्रापि पञ्चमी स्यात् इति शङ्का — न चैवम् इत्यारभ्य वाच्यम् इत्यन्तेन ग्रन्थेन। तत्र समाधानमाह — **पञ्चम्यर्थो हीत्यादिना**। अस्माकं मते पटः घटादन्यः अस्ति इत्यादौ पञ्चम्यर्थः प्रतियोगित्वम्। तस्य भेदघटितसंबन्धेन — स्वनिरूपकभेदवद्वृत्तित्वसंबन्धेन आख्यातार्थेऽन्वयः इति स्वीक्रियते। अत्र संसर्गमध्ये भेदत्वेन भेदो निविष्टः। अन्यादिपदं संसर्गघटकभेदस्य भेदत्वेन बोधतात्पर्यग्राहकम्। अतः अन्यशब्द-योगे पञ्चमी भवति। घटस्यान्योन्याभावः इत्यत्र तु अन्योन्याभावपदं न भेदत्वेन भेदं बोधयति, किं तु तादात्म्याभावत्वेन भेदं बोधयति। अतः अन्योन्याभाव-पदयोगे न पञ्चमी इति भावः।

एवं घटः पटो न इत्यत्र नञ्पदं अभावत्वेन सामान्यरूपेणैव भेदं बोधयति न तु भेदत्वेन रूपेण। अतः नञ्योगे न पञ्चमी। तदाह — **नञोऽपीति**। घटः पटो न इतिवत् भूतले घटो न इति प्रयोगो दृश्यते। आद्ये भेदः, द्वितीयेऽत्यन्ताभावः बोध्यते। अत उभयसाधारण्येन अभावत्वावच्छिन्नबोधकत्वं नञः। अतो भेदत्वावच्छिन्नभेदबोधकपदयोग एव पञ्चमी। एवं विभागत्वेन विभागपदयोग एव

पञ्चमी घटाद्विभागः इति। न तु संयोगाभावत्वेन विभागपद्योगे। अतः घटस्य संयोगाभाव इत्यत्र घटपदान्न पञ्चमी इति भावः। अत एव अनेकशक्तिकल्पना-भयादेव नञः तदन्यतद्विरुद्धाद्यर्थेषु अनुशासनमपि न शक्तिपरम्। तेषामर्थानां समभिव्याहाररूपाकाङ्क्षालभ्यत्वात्। घटः पटो नेति प्रतियोग्यनुयोगिवाचक-पदयोः समानविभक्तित्वे नञा अन्योन्याभावो बोध्यते। भूतले घटो न इत्यादौ अनुयोगिवाचकभूतलपदस्य सप्तम्यन्तत्वम्, प्रतियोगिवाचकघटपदस्य प्रथमान्त-त्वमिति उभयोः समानविभक्तिकत्वाभावात् तत्र नञः न भेदबोधकत्वम्, अपि तु अत्यन्ताभावबोधकत्वम्। अत एव उक्तव्यवस्थाबलादेव घटात् पृथक्त्वं पटस्य, घटात् पृथक् पटः इत्यादौ पृथक्पदस्य भेदत्वेन भेदबोधकत्वात् तद्योगे पञ्चमी भवति।

अत्र मध्ये विभागः संयोगाभावरूपः, अन्योन्याभावः तादात्म्याभावरूपः इति स्वीकृत्य विभागत्वसंयोगाभावत्वयोः अन्योन्याभावत्वतादात्म्याभवत्वयोः भेदः स्वीकृत इति प्रतीयते। परं तु पर्यायपदद्वयवाच्ययोः घटकलशयोः एकत्वात् घटत्वकलशत्वयोरपि एकत्वमेवेति घटपदात् घटत्वेन बोधः, न कलशत्वेन बोधः इति न वक्तुं शक्यते। तद्वत् विभागसंयोगाभावयोः एकत्वात् विभागत्वेन बोधः न संयोगाभावत्वेनेति कथं वक्तुं शक्यते इति शङ्का जायेत।

तत्रैवं प्रतिभाति — एकधर्मावच्छिन्नैकार्थवाचकत्वं पर्यायत्वं घटकलश-पदयोः। भेद — तादात्म्याभावपदयोः एकार्थवाचकत्वेऽपि नैकधर्मावच्छिन्न-वाचकत्वम्। भेदत्वतादात्म्याभावत्वयोर्भेदात् इति ग्रन्थकारो मन्यते। भेदत्व-मखण्डोपाधिः, तादात्म्याभावत्वं नाखण्डोपाधिः अभेदाभावरूपत्वात् इति।

**न चैवमिति।** नञ्योगे घटः पटो न इत्यादौ पूर्वोक्तरीत्या पञ्चम्याः अप्रसक्तावपि पटस्य नञर्थे प्रतियोगित्वादिसंबन्धस्य संबन्धत्वेन विवक्षायां षष्ठी स्यात् इति शङ्कते — न चैवमिति। केचित् अव्ययाः — अव्ययानि नियतप्रयोगा भवन्ति — क्वचित् प्रथमान्तसमभिव्याहृतानि भवन्ति। क्वचिदन्यथा इति भाष्यकारेण उक्ततया लोकप्रयोगानुसारेण नञ्योगे प्रथमैव, न षष्ठी इति भावः। प्रयुक्तानामिदमन्वाख्यानम् इति असकृत् भाष्यकारोक्तेः। अत एव नेयं विभाषा इति प्रयुक्तं भाष्यकारेण, न तु नेयं विभाषायाः इति प्रयुक्तमिति भावः।

**वनादारात् ग्रामः, ऋते कृष्णान्न किञ्चित्, अत्राऽपि प्रतियोगित्वम् पञ्चम्यर्थः। यस्तु 'पुरुषाराधनमृते' इति प्रयोगः, स 'ऋते द्वितीया च' इति चान्द्रसूत्रादवगन्तव्यः। दिशि दृष्टः शब्दो दिक्शब्दः, तेनाऽत्र लक्षणया देशकालवाचिना योगे पञ्चमीत्यर्थः। पूर्वो ग्रामाद्देशः, चैत्रात्पूर्वः फाल्गुन इत्यादौ, अत एवावयववाचिना योगे न, 'पूर्वं कायस्य'। अञ्चूत्तरपदयोगेऽपिप्राक्, प्रत्यग्वा ग्रामात्। आच्योगेऽपि- दक्षिणा ग्रामात्, आहियोगेऽपि दक्षिणाहि ग्रामात्।**

**एवम् — 'कार्तिक्याः प्रभृतीति भाष्ये' प्रयोगात्, प्रभृत्यर्थयोगेऽपि पञ्चमी। भवात् प्रभृति सेव्यो हरिः।**

**एवम् — 'अपपरिबहिरञ्चवः पञ्चम्या' (पा.सू 2.1.12) इति समासविधि- सामर्थ्यात् बहिर्योगेऽपि सा, ग्रामाद्बहिः।**

---

आरात् शब्दयोगे ऋतेशब्दयोगे च शाब्दबोधमाह — **वनादिति।** वनादारात् ग्रामः। आराद्दूरसमीपयोः इत्यमरः। वनादित्यत्र पञ्चम्याः प्रतियोगित्वमर्थः। वनप्रतियोगिकदूरदेशवृत्तिः, वनप्रतियोगिकसमीपदेशवृत्तिर्वा ग्रामः इति बोधः।

ऋते कृष्णात् न किंचित् ऋते इत्यस्य विना इत्यर्थः। पञ्चम्याः प्रतियोगित्वमर्थः। कृष्णप्रतियोगिकाभाववद्वृत्ति न किंचित् इत्यर्थः। ननु ऋतेशब्दयोगे यदि पञ्चमी तदा पुरुषाराधनमृते इत्यत्र द्वितीया कथं साधुः पुरुषाराधनात् ऋते इति हि भाव्यमित्याशङ्क्य, ऋते द्वितीया च इति चान्द्रव्याकरणसूत्रात् समर्थनीय इत्याह — **यस्तु इति।**

दिक्शब्दो नाम दिशि दृष्टः शब्दः दिग्वाचकत्वेन लोके प्रयुक्तः शब्दः। दिक्शब्दः कालवाचकशब्दस्याप्युपलक्षणम्। ततश्च देशकालवाचकशब्दाभ्यां योगे पञ्चमी स्यादित्यर्थः। लक्षणया — अजहल्लक्षणया। पूर्वो ग्रामाद्देशः, चैत्रात् पूर्वः फाल्गुनः। उभयत्र अवधित्वं पञ्चम्यर्थः। ग्रामावधिकपूर्वत्ववान् देशः चैत्रावधिकपूर्वत्ववान् कालः। अत एव — दिक्कालवाचकपूर्वादिशब्दयोग एव पञ्चमीति कथनादेव, अवयववाचकपूर्वशब्दयोगे पञ्चमी न भवति, अपि तु षष्ठी। यथा — पूर्वं कायस्य इति। शरीरस्य पूर्वावयव इत्यर्थः।

**एवं अञ्चूत्तरपदेति।** अञ्चधातूत्तरपदकदिक्शब्दयोगेऽपि पञ्चमी इत्यर्थः। **प्राक् प्रत्यग्वा ग्रामात् इति उदाहरणम्।** प्राचीशब्दात् सप्तम्यन्तात् पञ्चम्यन्तात् प्रथमान्ताद्वा "दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यो दिग्देशकालेष्वस्तातिः" (पा.सू 5.3.27) इति सूत्रेण अस्तातिप्रत्ययः। "अञ्चेर्लुक्" (पा.सू 5.3.30) इत्यनेन तस्य लुक्। "लुक् तद्धितलुकि" (पा.सू 1.2.49) इति सूत्रेण स्त्रीप्रत्ययस्य लुक्। प्राक् इति रूपम्। एवं प्रतीचीशब्दात् प्रत्यक् इति रूपम्। आभ्यां अञ्चूत्तरपदाभ्यां योगे अनेन अन्यारादिति सूत्रेण ग्रामात् इत्यत्र पञ्चमी। ग्रामस्य प्राच्यां दिशि, प्राच्याः दिशः प्राची दिक् इति वा अर्थः। अञ्चूत्तरपदस्य दिक्शब्दत्वादेव सिद्धे पृथक् तन्न कार्यमिति षष्ठीप्रकरणे "षष्ठ्यतसर्थप्रत्ययेन" (पा.सू 2.3.30) इत्यत्र वक्ष्यते इति पेरिसूर्यनारायणशास्त्रिणः।

**आच् योगेऽपि दक्षिणा ग्रामात् इति।** आच् प्रत्ययान्तस्य आहिप्रत्ययान्तस्य च योगेऽपि पञ्चमी भवति। तेन दक्षिणा ग्रामात् दक्षिणाहि ग्रामात् इति प्रयोगः। तत्र अवधित्वं पञ्चम्यर्थः।

एवं भवात् प्रभृति सेव्यो हरिः इति प्रयोगो दृस्यते। प्रभृतिशब्दयोगे पञ्चमी-विधायकं सूत्रं तु नास्ति। अथापि महाभाष्यकारेण कार्तिक्याः प्रभृति इति प्रयोगात् तत् भाष्यमेव प्रभृतिशब्दयोगे पञ्चम्यां प्रमाणम्। एवं ग्रामात् बहिः इति बहिः-शब्दयोगे पञ्चमी। बहिर्योगे पञ्चमीविधायकसूत्राभावेऽपि "अपपरिबहिरञ्चवः पञ्चम्या" (पा.सू 2.1.12) इति सूत्रेण बहिः शब्दस्य पञ्चम्यन्तेन सह समास-विधानात् ज्ञापकात् बहिर्योगे पञ्चमी साधुः इति भावः।

## पञ्चम्यपाङ्परिभिः (पा.सू 2.3.10)

**एवम् — 'पञ्चम्यपाङ्परिभिः' (पा.सू 2.3.10) इति सूत्रात् एतैः कर्मप्रवचनीय-संज्ञकैर्योगे पंचमीत्यर्थकात् अपहरेः संसारः, परिहरेः संसारः, आमुक्तेः संसारः, इत्यादौ पञ्चमी। अत्र 'अपपरी वर्जने' (पा.सू 1.4.88) इति सूत्रादनयोः कर्मप्रवचनीयसंज्ञा। अत एव वर्जनार्थकापपरियोग एव पंचमी, लक्षणाद्यर्थयोगे तु द्वितीयैवेत्युक्तम्। आङस्तु 'आङ्मर्यादावचने' (पा.सू 2.3.89) इत्यनेन कर्मप्रवच-नीयसंज्ञा। वचनग्रहणादभिविधावपि।**

---

एवं "पञ्चम्यपाङ्परिभिः" (पा.सू 2.3.10) इति सूत्रात् अप, आङ्, परि इत्येतैः कर्मप्रवचनीयसंज्ञकैः योगे पञ्चमी इत्यर्थकात् अप हरेः संसारः, परि हरेः संसारः, आमुक्तेः संसारः इत्यादौ पञ्चमी। अपपर्योः वर्जनार्थे "अपपरी वर्जने" (पा.सू

1.4.88) इति सूत्रेण कर्मप्रवचनीयसंज्ञा विहिता। हरिं वर्जयित्वा संसारः। हरिस्मरणत्यागे संसारः इत्यर्थः। मुक्तेः प्राक् संसारः।

## प्रतिनिधिप्रतिदाने च यस्मात् (पा.सू 2.3.11)

**एवम् — "प्रतिनिधिप्रतिदाने च यस्मात्" (पा.सू 2.3.11) इति सूत्रादेतदर्थक-कर्मप्रवचनीययोगे पंचमीत्यर्थकात् पञ्चमी। स च 'प्रतिः प्रतिनिधिप्रतिदानयोः' (पा.सू 1.4.92) इति सूत्रात् प्रतिरेव, प्रद्युम्नः कृष्णात् प्रति, कृष्णप्रतिनिधिरित्यर्थः। मुख्याभावे यस्तत्सदृश उपादीयते, स प्रतिनिधिः। प्रतियोगित्वञ्चाऽत्र पंचम्यर्थः। प्रतिदानम्-दत्तस्य प्रतिनिर्यातनम्, दानजन्योपकारः प्रत्युपकार इति यावत्, तिलेभ्यः प्रतियच्छति माषान्। अत्र कर्मत्वम् पञ्चम्यर्थः, तस्य च निपातोपात्तदान-भावनायामन्वयः। तथा च तिलकर्मकदानभावनाजन्योपकारप्रत्युपकारजनकीभूता माषकर्मिका दानभावना चैत्रवृत्तिरिति शाब्दबोधः।**

---

एवं प्रतिनिधीत्यादि। यस्मात् प्रतिनिधिः यतश्च प्रतिदानं तत्र कर्मप्रवच-नीयसंज्ञकप्रतिशब्दयोगे पञ्चमी। प्रद्युम्नः कृष्णात् प्रति। प्रद्युम्नः कृष्णस्य प्रतिनिधिः इत्यर्थः। मुख्यस्य अभावे तस्य स्थाने तत्सदृशः यः उपादीयते स प्रतिनिधिः। पञ्चम्याः प्रतियोगित्वमर्थः। कृष्णप्रतियोगिकप्रतिनिधित्ववान् प्रद्युम्नः इत्यर्थः। प्रतिदानं नाम दत्तस्य प्रतिनिर्यातनम्। दानजन्योपकारप्रत्युपकार इति यावत्। तिलेभ्यः प्रतियच्छति माषान्। तिलशब्दोत्तरपञ्चम्याः कर्मत्वमर्थः। प्रतेः दानभावनेत्यर्थः। यच्छतीत्यस्य प्रत्युपकारजनकीभूतदानभावना अर्थः। निपातो-पात्तदानभावनायां तिलकर्मकत्वस्यान्वयः। यच्छत्यर्थभावनायां माषकर्मकत्व-स्यान्वयः। तथा च तिलकर्मकदानभावनाजन्योपकारप्रत्युपकारजनकीभूता माष-कर्मकदानभावना चैत्रवृत्तिरिति बोधः।

## अकर्तर्यृणे पञ्चमी (पा.सू 2.3.24)

**एवम् — अकर्तर्यृणे पञ्चमी (पा.सू 2.3.24) इति सूत्रात् कर्तृवर्जितं यदृणम् हेतुभूतम्, ततः पञ्चमीत्यर्थकात् ऋणाद्बद्धः, शताद्बद्ध इत्यादौ पञ्चमी। अत्र हेतुत्वं पञ्चम्यर्थः, शतमिह उत्तमर्णाय धार्यमाणत्वादृणरूपमेव। तस्य कर्तृत्वे तु शतेन बन्धित इत्येवं तृतीयैव। अत्र हि णिजन्तत्वात् बन्धनप्रयोजके ऋणे हेतुत्ववत् तत्प्रयोजको हेतुश्च (पा.सू 1.4.55) इति चकारेण कर्तृसंज्ञाया अपि करणात्, कर्तृत्वावश्यकतया तृतीयान्तत्वमेव।**

---

एवम् "अकर्तर्यृणे पञ्चमी" (पा.सू 2.3.24) इति सूत्रस्य कर्तृवर्जितं कर्तृ-संज्ञारहितं यत् ऋणं हेतुभूतं तद्वाचकात् पञ्चमी इत्यर्थः। अत्र हेतौ इति सूत्रमनुवर्तते। तृतीयायाः अपवादोऽयम्। ऋणात् बद्धः शतात् बद्धः इति उदाहरणम्। अत्र पञ्चम्याः हेतुत्वमर्थः। अत्र ऋणं बन्धनहेतुः न तु कर्तृ। अतः पञ्चमी। नियमितकाले प्रत्यर्पणाभावे सति सुवर्णादिशतेन ऋणेन हेतुना अधमर्णो बद्ध इत्यर्थः। शतमिह उत्तमर्णाय धार्यमाणत्वात् ऋणमेव। तस्य कर्तृत्वे तु शतेन बन्धित इति तृतीयैव। अत्र हि णिजन्तत्वात् बन्धनप्रयोजके ऋणे हेतुत्ववत् "तत्प्रयोजको हेतुश्च" (पा.सू 1.4.55) इति चकारेण कर्तृसंज्ञाया अपि करणात् कर्तृत्वस्य आवश्यकतया तृतीयान्तत्वमेव।

एतदुक्तं भवति — शतात् बद्धः इति उदाहरणे केवलबन्धधातोः कर्मणि क्तः। बन्धने शतस्य हेतुत्वम्। बन्धनं च अस्वातन्त्र्यम्। तथा च चैत्रः शतात् मैत्रेण बद्धः इति संपूर्णं वाक्यम्। शतेन बन्धितः इति प्रत्युदाहरणे तु चैत्रः शतेन मैत्रेण बन्धितः इति संपूर्णं वाक्यम्। उत्तमर्णः प्रयोज्यकर्ता, शतं प्रयोजककर्तृ उत्तमाय

धार्यमाणत्वात् ऋणं च। उभयोरपि कर्त्रोः क्तेन अभिधानात् उभयत्रापि तृतीया। शतात् अकर्तरि इत्यनेन पञ्चमी वार्यते। रज्वा बद्ध इत्यादौ पञ्चमीवारणाय ऋण-ग्रहणमिति।

## विभाषा गुणेऽस्त्रियाम् (पा.सू 2.3.25)

**एवम् — 'विभाषा गुणेऽस्त्रियाम्' (पा.सू 2.3.25) इति सूत्रात् गुणे हेतौ अस्त्रीलिङ्गे पञ्चमी वा स्यादित्यर्थकात् 'जाड्यात् जाड्येन वा बद्धः' इत्यत्र विकल्पेन पञ्चमी। गुणत्वाभावे, स्त्रीलिङ्गे वा धनेन कुलम्, 'बुद्ध्या युक्तः' इत्यादौ तृतीयैव, 'हेतावि'ति पूर्वोदाहृतसूत्रात्। गुणत्वञ्च 'नेह परतन्त्रत्वमात्रम्, तेन वह्निमान् धूमादि'त्यादौ पञ्चमी। 'नास्तीह घटः, अनुपलब्धेरि'त्यादौ स्त्रीलिङ्गे तु पञ्चमी 'बाहुलकं प्रकृतेस्तनुदृष्टेरि'ति वार्तिकप्रयोगादनुसन्धेया।**

---

**एवमित्यादि।** "विभाषा गुणेऽस्त्रियाम्" (पा.सू 2.3.25) हेतुभूतगुणवाचकात् अस्त्रीलिङ्गात् पदात् पञ्चमी विकल्पेन भवतीति सूत्रार्थः। जाड्यात् जाड्येन वा बद्धः इत्युदाहरणम् हेतुत्वं पञ्चम्यर्थः। जाड्यहेतुकबन्धवान् इत्यर्थः। गुणत्वाभावे तु धनेन कुलम् इति तृतीयैव। एवं हेतुभूते गुणे स्त्रीलिङ्गेऽपि पञ्चमी न भवति। यथा बुद्ध्या युक्तः। बुद्धिशब्दस्य स्त्रीलिङ्गत्वात्। अत्र गुणशब्देन परतन्त्रत्वमात्रं विवक्षितम्। न तु द्रव्यकर्मादिभिन्नत्वम्। परतन्त्रत्वं नाम आश्रितत्वम्। तेन "पर्वतो वह्निमान् धूमात्" इत्यत्र धूमस्य द्रव्यत्वेन द्रव्यभिन्नत्वरूपगुणत्वाभावात् धूमपदात् कथं पञ्चमी इति शङ्कायाः नावकाशः। धूमस्य द्रव्यत्वे सत्यपि पर्वतरूपद्रव्याश्रितत्वात् गुणत्वमस्तीति धूमपदोत्तरं हेतौ पञ्चम्याः साधुत्वात्। एवं "नास्ति घटोऽनुपलब्धेः" इत्यत्र अनुपलब्धेः स्त्रीलिङ्गात् कथं हेतौ पञ्चमीति

नाशङ्कनीयम्। "बाहुलकं प्रकृतेस्तनुदृष्टेः" इति वार्तिककारेण स्त्रीलिङ्गात् तनुदृष्टि-शब्दात् हेतुत्वार्थकपञ्चमीप्रयोगात् स्त्रियामपि क्वचित् हेतौ पञ्चम्याः ज्ञापनात्।

## पृथग्विनानानेत्यादिसूत्रम्

**एवम् — 'पृथग्विनानाभिस्तृतीयाऽन्यतरस्याम्' (पा.सू. 2.3.32) इति सूत्रा-देभिर्योगे तृतीया स्यात्, पञ्चमी, द्वितीया चेत्यर्थकात् पृथग्ग्रामात्, रामेण, राममि'त्यादौ द्वितीया-तृतीयाभ्यां विकल्पेन पञ्चमी। एवम् विनानानायोगेऽपि अत्र प्रतियोगित्वं सर्वविभक्त्यर्थः। तत्र द्वितीया सन्निहितत्वादेवाऽनुवर्तते, पञ्चमी तु मण्डूकप्लुत्याऽनुवर्तनीया, भाष्यकृता तथैव व्याख्यातत्वात्।**

---

**एवमित्यादि।** "पृथग्विनानानाभिस्तृतीयान्यतरस्याम्" (पा.सू. 2.3.32) इति सूत्रस्य पृथक् विना नाना इति शब्दैर्योगे विकल्पेन तृतीया भवतीत्यर्थः। पक्षे पञ्चमी द्वितीया च। पृथक् रामेण रामात् रामं वा इति उदाहरणम्। प्रतियोगित्वं विभक्तीनामर्थः। रामप्रतियोगिकभेदवानित्यर्थः। तृतीयायाः विकल्पेन विधानात् तदभावपक्षे पञ्चमीद्वितीये इति कथं निर्णीयते इति शङ्कायामाह — **तत्र द्वितीया संनिहितत्वादेवेत्यादिना।** "अपादाने पञ्चमी" (पा.सू 2.3.28) "षष्ठ्यतसर्थप्रत्ययेन" (पा.सू. 2.3.30) एनपा द्वितीया (पा.सू. 2.3.31) "पृथग्विनानानाभिः" (पा.सू. 2.3.32) इति सूत्रक्रमः। तत्र षष्ठीति अस्वरितत्वान्नानुवर्तते। पञ्चमी द्वितीया इति चानुवर्तते। तथा च तृतीयायाः अभावपक्षे पञ्चमी द्वितीया चेति भावः। **मण्डूक-प्लुत्येति।** मध्ये एकसूत्रं परित्यज्य अनन्तरसूत्रेऽनुवर्तनात् मण्डूकप्लुत्येत्युक्तम्। यथा मण्डूकः मध्ये कंचित् प्रदेशं विसृज्य उत्प्लुत्य उत्प्लुप्य गच्छति तद्वदित्यर्थः।

अन्ये तु तृतीया चेत्येतावतैव संनिहितद्वितीयासमुच्चयसिद्धेः अन्यतरस्याम् इति गुरुयत्नकरणं व्यवहिताया अपि पञ्चम्याः समुच्चयार्थमित्याहुः।

विना वातं विना वृष्टिं विद्युत्प्रपतनं विना।
विना हस्तिकृतान् दोषान् केनेमौ पातितौ द्रुमौ।।

नाना नारीं निष्फला लोकयात्रा इत्यादयः प्रयोगा अपि सन्ति।

## करणे च स्तोकाल्पेत्यादिसूत्रम्

**एवम् — 'करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्त्ववचनस्य' (पा.सू 2.3.33) इति सूत्रादेभ्यः करणे तृतीयापञ्चम्यौ स्यातामित्यर्थकात् 'स्तोकेन स्तोकाद्वा मुक्तः' इत्यादौ तृतीयया सह पञ्चमी, करणत्वं पञ्चम्यर्थः। द्रव्यरूपसत्त्ववचने तु 'स्तोकेन विषेण हतः' इत्यादौ तृतीयैव।**

---

**एवं करणे चेत्यादि।** "करणे च स्तोकाल्पकृच्छ्रकतिपयस्यासत्ववचनस्य" (पा.सू 2.3.33) इति सूत्रस्य स्तोक अल्प कृच्छ्र कतिपय एतेभ्यः अद्रव्यवाचकेभ्यः करणे अर्थे तृतीयापञ्चम्यौ भवतः इत्यर्थः। स्तोकेन स्तोकाद्वा मुक्तः। लघुना आयासेन मुक्त इत्यर्थः। द्रव्यवचने तु स्तोकेन विषेण हतः। एवम् अल्पेन अल्पाद्वा मुक्तः। कृच्छ्रेण कृच्छ्राद्वा मुक्ता कष्टेनेत्यर्थः। कतिपयेन कतिपयाद्वा मुक्तः। अकृत्स्नेन साधनेनेत्यर्थः। अत्र सर्वत्र करणत्वं पञ्चम्यर्थः। भावनायामन्वयस्तु पूर्ववत्।

## दूरान्तिकार्थेभ्यो द्वितीया च

**एवम् — 'दूरान्तिकार्थेभ्यो द्वितीया च' इति (पा.सू 2.3.35) सूत्रादेभ्यो द्वितीया, चात् पञ्चमीतृतीये, इत्यर्थकात् ग्रामस्य दूरम्, दूरात्, दूरेण वेत्यादौ द्वितीया-**

तृतीयाभ्यां सह पञ्चमी। प्रातिपदिकमात्रार्थे विधिरयम्, नत्वत्र विभक्त्यर्थोऽन्यः कश्चित्। इह सप्तम्यपि। "सप्तम्यधिकरणे च" (पा.सू 2.3.36) इति सूत्रे चकारेण दूरान्तिकार्थेभ्य इत्यनुकर्षणात्। तेन ग्रामस्य दूरेऽस्तीति प्रयोगोऽपि नाऽनुपपन्नः। अत्र असत्त्ववचनस्यानुवर्तनात्, सत्त्ववचनत्वे नैतद्विभक्तिचतुष्टयनियमः। सत्त्ववचनत्वञ्चेह सामानाधिकण्येन प्रातिपदिकार्थविशेषणत्वम्, तेन 'दूरः पन्थाः' इत्यादौ दूरशब्दस्य पथो विशेषणत्वेन तद्विभक्तयैव विभक्तिः।

यद्यपि चाऽस्मन्मते विशेषणानामप्याख्यातेनैवान्वयः तथापि यत्र दूरत्वविशिष्टाभेदः संसर्गघटकः, तत्र प्रथमा, यत्र दूरत्वाधारता संसर्गघटिका, तत्र विभक्तिचतुष्टयमिति न कोऽपि विरोधः। तत्सिद्धं पञ्चम्यर्थः सर्वत्र भावनान्वयीति।

इति श्रीमदाचार्यखण्डदेवविरचिते भाट्टतन्त्ररहस्ये
पञ्चमीविभक्त्यर्थविचारः समाप्तः।

---

एवं 'दूरान्तिकार्थेभ्यो द्वितीया च' (पा.सू 2.3.35) इति सूत्रात् दूरान्तिकार्थकेभ्यः शब्देभ्यः द्वितीया चकारात् पञ्चमीतृतीये इत्यर्थकात् ग्रामस्य दूरं दूरात् दूरेण वा इत्यादौ द्वितीया विभक्तिः चकारात् पञ्चमी तृतीया भवन्ति। तेन दूरं दूरेण दूराद्वा ग्रामस्य। प्रातिपदिकार्थमात्रे विधिरयम्। तेन विभक्तेः प्रातिपदिकार्थादन्योऽर्थो नास्ति। अत्र सप्तम्यपि। 'सप्तम्यधिकरणे च' (पा.सू 2.3.36) इति सूत्रे चकारेण दूरान्तिकार्थेभ्यः इत्यस्यानुकर्षणात्। तेन ग्रामस्य दूरेऽस्तीति प्रयोगोऽपि साधुः। अत्र असत्ववचनस्य इत्यनुवर्तते। अद्रव्यवाचकस्येति तदर्थः। तेन दूरादिशब्दानां द्रव्यवाचकत्वे विभक्तिचतुष्टयनियमो नास्ति। यथा दूरः पन्थाः इत्यत्र दूरशब्दार्थः अभेदसंबन्धेन पथिशब्दार्थविशेषणम्। तेन यस्य द्रव्यस्य दूरशब्दार्थो विशेषणं तद्द्रव्यवाचकशब्दोत्तरं या विभक्तिः सैव दूरशब्दादपि भवति।

**यद्यपीत्यादि।** अस्मन्मते मीमांसकानां मते विशेषणानामप्याख्यातार्थमुख्यामुख्यभवनायामेवान्वयः। तथापि यत्र दूरत्वविशिष्टाभेदः संसर्गघटकः दूरत्वविशिष्टाभिन्नकर्तृवृत्तिर्भावना इत्यन्वयबोधः तत्र प्रथमा। यथा दूरः पन्थाः इति। यत्र दूरत्वाधारता संसर्गघटिका तत्र विभक्तिचतुष्टयम् द्वितीया तृतीया पञ्चमी सप्तमी चेति। दूरत्वनिरूपिताधारत्वाश्रयकर्तृवृत्तिर्भावना इति बोधः। तत् सिद्धं सर्वत्र पञ्चम्यर्थः भावनान्वयीति।

**इति सारप्रकाशिकायां पञ्चमीविभक्त्यर्थविचारः**

## षष्ठीविभक्त्यर्थविचारः

एवम् — षष्ठ्यर्थोऽपि तत्रैवान्वेति। स च 'षष्ठी शेषे' (पा.सू 2.3.50) सूत्रानुशिष्टः। तथा हि — उक्तादन्यः शेषः, उक्तानि च पूर्वं कर्मत्वादीनि, तद्भिन्नाश्च सजातीयत्वात् स्वस्वमिभावादयः सम्बन्धाः। तेषु षष्ठी स्यादिति सूत्रार्थः। तेषु च न प्रत्येकं शक्तिः, अनेकशक्तिकल्पनापत्तेः। अपि तु सम्बन्धत्वेन। सम्बन्धत्वञ्च सम्बद्धाविति प्रतितिसाक्षिको धर्मविशेषः। एवञ्च शक्यतावच्छेदकस्य सम्बन्धत्वस्य कर्तृत्वकर्मत्वादिष्वपि सत्त्वात्, तेषामपि सम्बन्धत्वेन रूपेण षष्ठ्यर्थताऽस्त्येव। अत एव 'सतां गतम्, सर्पिषो जानीते, मातुः स्मरति, एधोदकस्योपस्कुरुते, शम्भोर्भजे चरणयोः, फलानां तृप्तः' इत्यादयः प्रयोगाः। अत एवोक्तशक्यतावच्छेदकातिरिक्तशक्यतावच्छेदकावच्छिन्नसम्बन्धाः एव शेषपदार्थः।

---

अथ षष्ठ्यर्थं निरूपयति — **एवं षष्ठ्यर्थोऽपीति।** तत्रैवेति। भावनायामेवेत्यर्थः। स च षष्ठ्यर्थश्च 'षष्ठी शेषे' (पा.सू 2.3.50) इति सूत्रेणानुशिष्टः। उक्तादन्यः शेषः। उक्तानि च पूर्वं कर्मत्वकरणत्वादीनि। तद्भिन्नाश्च तत्सजातीयाः स्वस्वामिभावादयः संबन्धाः। संबन्धत्वरूपसमानधर्मवन्तः। ततश्च पूर्वोक्तकर्मत्वकरणत्वादिभिन्नाः संबन्धत्वरूपसमानधर्मवन्तः स्वस्वामिभावादयः ये संबन्धाः तद्वाचिका षष्ठी इति सूत्रार्थः। तेषु च स्वस्वामिभावादिषु न प्रत्येकं शक्तिः। स्वस्वामिभावत्वादिरूपविशेषधर्मावच्छिन्नेषु षष्ठ्याः न शक्तिः। शक्यतावच्छेदकनानात्वेन शक्तिनानात्वप्रसङ्गात्। अपि तु संबन्धत्वरूपानुगतधर्मावच्छिन्नेषु शक्तिः। संबन्धत्वं च इमौ संबद्धौ इत्याकारकप्रतीतिसाक्षिकः अनुगतधर्मविशेषः।

एवं च संबन्धत्वरूपस्य शक्यतावच्छेदकस्य कर्तृत्वकर्मत्वादिष्वपि सत्वात् तेषामपि संबन्धत्वेन रूपेण षष्ठ्यर्थत्वमस्त्येव। अत एव सतां गतम् इत्यत्र सत्सु विद्यमानस्य गमनकर्तृत्वस्य संवन्धत्वविवक्षया षष्ठीप्रयोगः संगच्छते। कर्तृत्वत्वेन कर्तृत्वविवक्षायां तु सद्भिर्गतम् इति कर्तरि तृतीया भवति। कृद्योगे षष्ठी तु न भवति "न लोकाव्ययनिष्ठाखलर्थतृनाम्" (पा.सू 2.3.69) इति सूत्रेण निष्ठासंज्ञकक्तप्रत्यय-योगे कर्तरि षष्ठ्याः निषेधात्। एतदनन्तरं अष्टाध्याय्यां सप्तसूत्राणि सन्ति। तत्र शेषे इत्यनुवर्तते। यथा "ज्ञोऽविदर्थस्य करणे" (पा.सू 2.3.51) "अधीगर्थदयेशां कर्मणि" (पा.सू 2.3.52) "कृञः प्रतियत्ने" (पा.सू 2.3.53) "रुजार्थानां भाव-वचनानामज्वरेः" (पा.सू 2.3.54) "आशिषि नाथः" (पा.सू 2.3.55) "जासि-निग्रहणनाटक्राथपिषां हिंसायाम्" (पा.सू 2.3.56) "व्यवहृपणोः समर्थयोः" (पा.सू 2.3.57) इति। तैरपि कर्मत्वस्य संबन्धत्वेन विवक्षायां षष्ठी विधीयते। सर्पिषो जानीते इत्यादीन्युदाहरणानि।

एवं चैतत् सिद्धम् — उपरि पूर्वं च यानि कारकाणि अधिकृत्य विभक्तयो विहिताः तेषां संबन्धत्वेन विवक्षायां षष्ठी। एवं कारकातिरिक्तानां स्वस्वामिभावानां संबन्धत्वविवक्षायां च षष्ठी इति। तदभिसन्धायाह — **उक्तशक्यतावच्छेदकेति।** उक्तानि यानि शक्यतावच्छेदकानि कर्मत्वत्वकरणत्वत्वादीनि तदतिरिक्तं यत् संबन्धत्वरूपं शक्यतावच्छेदकं तदवच्छिन्नाः संबन्धाः शेषशब्दार्थ इति।

**स च यथैव 'राज्ञः पुरुषः' इत्यादौ स्वस्वामिभावः, तथैव 'सतां गतमि'त्यादौ कर्तृत्वादिकमपि। सम्बन्धत्वञ्च सर्वत्र शक्यतावच्छेदकम्, अत एव कर्तृत्वत्वादिना तद्बोधे लक्षणेति वक्ष्यते। न चैवं सम्बन्धत्वेन रूपेण सर्वसम्बन्धानां शक्यत्वे महाभाष्यकारीयवचनानुपपत्तिः। पार्थशब्दस्य अर्जुन इव प्रचुरप्रयोगेण तत्त-**

त्सम्बन्धग्रहणे सम्भवति, अन्यसम्बन्धग्रहणस्यान्याय्यत्वमिति सूचनार्थत्वात्। तदिह 'राज्ञः पुरुषः' इत्यत्र सेवकत्वं षष्ठ्यर्थः, तत्र निरूपकतासंसर्गेण राज्ञोऽन्वयः। आधेयत्वसंसर्गेण च तस्य पुरुषेऽन्वयः। 'सर्पिषो जानीते' इत्यत्र वक्ष्यमाणरीत्या सम्बन्धत्वेन करणत्वं षष्ठ्यर्थः, तस्य धात्वर्थे, इत्येवं तत्र तत्र योग्यतानुसारेण समभिव्याहृतमात्र एवऽन्वय इति, नाऽत्र कारकविभक्तिवत् क्रियान्वयनियम इति तार्किकाः, शाब्दिकाः मीमांसकाश्च।

---

**तदिहेति**। तस्मात् संबन्धत्वेन संबन्धानां षष्ठ्यर्थत्वात् इति एतत्सूत्रस्य षष्ठी शेषे इति सूत्रस्य उदाहरणभूते राज्ञः पुरुषः इत्यत्र षष्ठ्याः सेवकत्वमर्थः। तत्र षष्ठ्यर्थे सेवकत्वे प्रकृत्यर्थस्य राज्ञो निरूपकतासंबन्धेन स्वनिष्ठनिरूपकतानिरूपितनिरूपितत्वसंबन्धेन स्वनिरूपितत्वसंबन्धेनेति यावत् अन्वयः। तथा च राजनिरूपितसेवकत्वाश्रयः पुरुष इति बोधः। **आधेयत्वसंबन्धेनेति**। तस्य सेवकत्वस्य आश्रयः पुरुषः। अतः आश्रयत्वसंबन्धेनेति पाठः साधुः। अथवा आधेयत्वसंबन्धेनेत्यस्य स्वनिष्ठाधेयत्वनिरूपकत्वसंबन्धेनेत्यर्थः। तच्च आश्रयत्वे पर्यवस्यति। आश्रयत्वं हि किंचिन्निष्ठाधेयतानिरूपकत्वम्।

सर्पिषो जानीते इत्यत्र वक्ष्यमाणरीत्या षष्ठ्याः संबन्धत्वेन रूपेण करणत्वमर्थः। सर्पिस्संबन्धि ज्ञानम्। अत्र शेषषष्ठ्याः संबन्धार्थकत्वात् कारकविभक्तित्वाभावात् तत्र तत्र योग्यतानुसारेण समभिव्याहृतपदार्थे नामार्थे धात्वर्थे वा अन्वयः कारकविभक्तिवत् धात्वर्थक्रियायां वा आख्यातार्थभावनायां वा अन्वय इति नियमो नास्ति इति तार्किकाः वैयाकरणाः मीमांसकाश्च केचित्।

## अत्र सिद्धान्तकथनम्

**वस्तुतस्तु — योग्यताद्यनुसारेण साक्षात्परम्परासाधारण्येन षष्ठ्यर्थस्यापि क्रियायामेवान्वयः। सुबर्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति भावनाविशेष्यतासंबन्धेन लिङ्गानन्वयिपदजन्योपस्थितिः कारणमित्येककार्यकारणभावेनान्वयोपपत्तेः।**

**इतरथा षष्ठीभिन्नसुबर्थस्थल एका व्युत्पत्तिः, षष्ठीस्थले चान्येति, व्युत्पत्तिद्वयकल्पनापत्तेः। इष्यते च परैरपि स्थाल्यां तण्डुलं पचति, गृहे चैत्रः पचतीत्यादौ सप्तम्यर्थस्य तण्डुलचैत्रद्वारकः क्रियान्वयः, न तु तण्डुलादावेव, ततश्च राज्ञः षष्ठ्यर्थे, तस्य च पुरुषद्वारकोऽस्त्यादिक्रियायाम्, इत्येव युक्तमुत्पश्यामः।**

---

तत्र स्वमतमाह — **वस्तुतस्तु इति।** सुबर्थस्य सर्वस्यापि भावनायामेवान्वयः इति प्रथमार्थान्वयनिरूपणावसरे निर्णीतत्वात् षष्ठ्यर्थस्यापि योग्यतानुसारेण साक्षात् परंपरया वा भावनायामेवान्वयः। क्रियायामित्यस्य भावनायामित्यर्थः। **सुबर्थेति।** सुबर्थप्रकारकशाब्दबुद्धित्वावच्छिन्नं प्रति भावनानिष्ठविशेष्यतासंबन्धेन लिङ्गानन्वयिपदजन्योपस्थितिः कारणमिति एकेनैव कार्यकारणभावेन उपपत्तेः। इतरथा षष्ठीभिन्नविभक्तिस्थले एका व्युत्पत्तिः कार्यकारणभावः, षष्ठीस्थले तु अन्या व्युत्पत्तिः इति कार्यकारणभावद्वयकल्पनापत्तेः गौरवं स्यात्। अपि च परैरपि वैयाकरणैरपि स्थाल्यां तण्डुलं पचति इत्यत्र सप्तम्यर्थस्य आधारत्वस्य कर्मभूततण्डुलद्वारा पाकक्रियायामन्वयः। न तु तण्डुले। गृहे चैत्रः पचति इत्यत्र आधारत्वस्य कर्तृभूतचैत्रद्वारा क्रियायामन्वयः, न तु चैत्रे इति व्युत्पत्तिभेदस्वीकारात् व्युत्पत्तिभेदापत्तेः। एवं च षष्ठ्यतिरिक्तस्थलेऽपि किंचिद्द्वारैव यदि

क्रियायामन्वयः, तर्हि षष्ठीस्थलेऽपि साक्षाद्वा किंचिद्द्वारा वा भावनायामन्वये न किंचित् बाधकम्।

एवं च राज्ञः पुरुष इत्यत्र अस्तीति पदमध्याहृत्य षष्ठ्यर्थस्य सेवकत्वस्य स्वाश्रयपुरुषवृत्तित्वसंबन्धेन सत्ताश्रयत्वरूपभावनायामन्वयः। राजनिरूपितसेवकत्वस्य आश्रयः पुरुषः तद्वृत्तिः सत्ताश्रयत्वमिति बोध इति।

## ज्ञोऽविदर्थस्य करणे

**एवम् — करणत्वादिकमपि यत्र सम्बन्धत्वेन षष्ठ्यर्थः, तत्र धात्वर्थद्वारकः, अत एव तत्प्रतिपादकम् 'ज्ञोऽविदर्थस्य करणे' (पा.सू. 2.3.51) इति सूत्रम्। अत्र भाष्यव्याख्यानात् शेष इत्यनुवर्तते। तेन ज्ञानभिन्नार्थस्य जानातेर्धातोः करणे शेषत्वेन विवक्षिते षष्ठी स्यादिति सूत्रार्थः। सर्पिषो जानीते। सर्पिषो ज्ञानम्। अत्र लक्षणया ज्ञानपूर्विका प्रवृत्तिर्धात्वर्थः। तस्यां यत्र सर्पिषः करणत्वमेव शेषत्वेन विवक्षितम्, तदा सर्पिष इति षष्ठी। करणत्वत्वेन करणत्वविवक्षायां तृतीयैव, अज्ञानार्थके तु विषयत्वार्थिका द्वितीया। तस्य सम्बन्धत्वेन बोधे तु षष्ठ्येव। न चैवं 'शेषे षष्ठी' इत्यनेनैव सिद्धेः पृथक्सूत्रवैयर्थ्यम्, षष्ठीपुनर्विधिः षष्ठ्येव, न तु लुक् इत्येवंपरः। तेन तद्व्याप्यः समासो निवर्तते। ततश्च सम्बन्धत्वेन उक्तधात्वर्थकरणत्वविवक्षायां न षष्ठीसमासः।**

---

अथ "ज्ञोऽविदर्थस्य करणे" (पा.सू. 2.3.51) इति सूत्रव्याख्यानम्। एवं — यथा राज्ञः पुरुषः इत्यत्र षष्ठ्यर्थस्य सेवकत्वस्य पुरुषद्वारा अस्त्यादिक्रियायामन्वयः, तथा करणत्वादिकारकमपि यत्र संबन्धत्वेन षष्ठ्यर्थः तत्रापि धात्वर्थद्वारा भावनायामन्वयः। द्वारभेदेऽपि भावनायामन्वयः समान इति यावत्। अत

एव धात्वर्थद्वारकान्वयादेव तत्प्रतिपादकं संबन्धत्वेन करणत्वादिप्रतिपादकं सूत्रजातं ज्ञोऽविदर्थस्य करणे (पा.सू 2.3.51) इत्यादिकम्। अत्र सूत्रे शेषे इत्यनुवर्तते। शेषे इति वर्तते इति भाष्यवाक्यात् इत्यर्थः। तथा च अविदर्थस्य — ज्ञानभिन्नार्थकस्य ज्ञाधातोः करणे शेषत्वेन संबन्धत्वेन विवक्षिते षष्ठी स्यात् इति सूत्रार्थः। सर्पिषो जानीते सर्पिषो ज्ञानम् इति उदाहरणम्। अत्र ज्ञाधातोः ज्ञानपूर्वकप्रवृत्तिरर्थः। तस्यां सर्पिषः यत् करणत्वमस्ति न तत् करणत्वत्वेन विवक्षितम्, अपि तु संबन्धत्वेन। सर्पिस्संबन्धविषयकज्ञानपूर्विका प्रवृत्तिरिति बोधः। यदा तु करणत्वस्य करणत्वत्वेन विवक्षा तदा तृतीयैव भवति। कर्तृकरणयोस्तृतीया इति सूत्रात्। सर्पिःकरणकप्रवृत्तिः इति सर्पिषा जानीते इति वाक्यात् बोधः। अविदर्थस्य इत्युक्तत्वात् ज्ञाधातोः ज्ञानार्थकत्वे तु सर्पिः जानीते इति द्वितीयैव। सर्पिर्विषयकं ज्ञानमिति बोधः। एवं ज्ञाधातोः विदर्थकत्वेऽपि विषयत्वरूपस्य कर्मत्वस्य संबन्धत्वेन विवक्षायां शेषे षष्ठ्या सर्पिषो जानीते इति प्रयोगः साधुः इति भावः। तस्य — विषयत्वस्य।

ननु ज्ञानभिन्नार्थकस्य ज्ञाधातोर्योगेऽपि करणत्वस्य संबन्धत्वेन विवक्षायां षष्ठी शेषे इत्यनेनैव षष्ठ्याः सिद्धेः पृथक् सूत्रमिदं व्यर्थमिति शङ्कते — **न चैवमिति।** सिद्धे सत्यारभ्यमाणो विधिः नियमाय भवतीति न्यायेन शेषे षष्ठ्येव स्यात् न तु तस्याः लुक् इत्यें लुको निवृत्तिः अस्य सूत्रस्य प्रयोजनम्। तेन लुको निवृत्त्या तद्व्याप्यः समासोऽपि अनेन निवर्त्यते। यत्र यत्र समासः तत्र समासावयवसुपो लुक् इति व्याप्तिः। अत्र लुक् व्यापकः। समासः व्याप्यः। अतश्च ज्ञानभिन्नार्थकस्य प्रवृत्त्यर्थकस्य ज्ञानशब्दस्य योगे करणत्वस्य संबन्धत्वविवक्षायां सर्पिर्ज्ञानमिति समासो न भवति। षष्ठीसमासनिवृत्तिरेव प्रयोजनमिति भावः।

'सुपो धातुप्रातिपदिकयोः' (पा.सू 2.4.71) इति सूत्रेण कृदन्ततद्धितान्त-समासरूपप्रातिपदिकावयवस्य क्यजन्तादिधात्ववयवस्य च सुपो लुक् विधीयते। **सर्वशास्त्रमर्मज्ञः खण्डदेवः।**

अत्र भट्टोजीदीक्षितवर्याणां प्रौढमनोरमाग्रन्थोऽपि संवादार्थं लिख्यते — ज्ञोऽविदर्थस्य करणे इत्याद्यष्टसूत्री नेह व्याख्याता। तस्याः अष्टसूत्र्याः समासनिवृत्ति-फलकत्वात्। तथा हि — तत्र शेषे इत्यनुवर्तते। शेषत्वेन विवक्षिते करणादौ षष्ठी शेषे इति सूत्रेण षष्ठी सिद्धैव। तदयमर्थः — इह षष्ठ्येव न तु लुक्। तथा च लुकः प्रयोजकीभूतः समास एवेति सिध्यति। तथा च वार्तिकम् — प्रतिपदविधाना षष्ठी न समस्यते इति। हरिरप्याह —

कारकैर्व्यपदिष्टे च श्रूयमाणक्रिये पुनः।
प्रोक्ता प्रतिपदं षष्ठी समासस्य निवृत्तये।।

इति। तेन शेषत्वविवक्षायां सर्पिषः ज्ञानम् मातुः स्मरणम् इत्यादीन्यसम-स्तान्येव साधूनि। हरिस्मरणम् इत्यादीनि तु शेषत्वाविवक्षायां कृद्योगषष्ठ्या समासे बोध्यानि। तत्र च कारकपूर्वकत्वात् कृदुत्तरपदप्रकृतिस्वरः। शेषषष्ठ्या समासे तु अन्तोदात्तत्वं स्यात्। तच्चानिष्टम्। तथा च स्वरार्थमष्टसूत्री इति निष्कर्षः।

किं च मातुः स्मृतम् इत्यादौ समासाभावोऽपि फलम्। न हि तत्र कारकषष्ठी लभ्यते। न लोकाव्यय इति निषेधात्। आह च हरिः —

निष्ठायां कर्मविषया षष्ठी च प्रतिषिध्यते।
शेषलक्षणया षष्ठ्या समासस्तत्र नेष्यते।।इति।

अत्रेदमन्यदप्यवधेयमस्ति। षष्ठी शेषे इत्येव सिद्धे सूत्रमिदं षष्ठीसमासाभावमात्रफलकम्। तथा च समसाप्रवृत्तियोग्यं सर्पिषो ज्ञानमित्यादिकृदन्तघटितमेवास्य मुख्यमुदाहरणं भवितुमर्हति, न तिङन्तघटितम्। तत्र समासप्रवृत्त्ययोगात्। एवं प्रत्युदाहरणान्यपि कृदन्तघटितान्येव समासरूपाणि। तथैवोदाहृतं प्रत्युदाहृतं च सिद्धान्तकौमुद्यां भट्टोजीदीक्षितैः। यद्यपि काशिकाकारैः तिङन्तघटितानि प्रदर्शितानि, तथापि तत् कृदन्तोपलक्षणमिति हरदत्तेन व्याख्यातम्। संभवमात्रेण तु प्रकृतग्रन्थकृता तिङन्तघटितानि उदाहरणानि प्रदर्शितानीति प्राहुः।

पूर्वं प्रौढमनोरमायामुक्तत्वेन यन्मया लिखितं तदेव शङ्कातत्समाधानपूर्वकं स्पष्टयति — **न चैवमित्यादिना।**

## अधीगर्थदयेशां कर्मणीत्यादौ षष्ठीविधानफलकथनम्

**एवम् — उत्तरेष्वपि सप्तसु सूत्रेषु षष्ठीपुनर्विधिः 'मातुस्स्मरणमि'त्यादौ शेषषष्ठीसमासनिषेधार्थ एव। तत्र हि — 'अधीगर्थदयेशां कर्मणि' (पा.सू 2.3.52) इति सूत्रादेषां कर्मणि शेषत्वेन विवक्षिते षष्ठी स्यादित्यर्थकात् 'मातुरध्येति, मातुस्स्मरति, मातुस्स्मरणम्, सर्पिषो दयते, सर्पिषो दयनम्, जगतामीष्टे, जगतामीशनमित्यादौ षष्ठी विहिता। अधीगर्थाः — स्मृत्यर्थाः। अत्र शेषत्वादेव षष्ठीप्राप्तौ पुनःषष्ठीविधिः षष्ठीसमासप्रतिषेधार्थः।**

**न चैवं — हरिस्मरणमिति प्रयोगानुपपत्तिः। तस्य कृद्योगे कर्मत्वत्वेन कर्मत्वबोधकषष्ठीसमासत्वेनोपपत्तेः। तत्फलञ्च कारकपूर्वकत्वात् कृदुत्तरपदप्रकृतिस्वरः मकारोत्तराकारस्योदात्तः, शेषषष्ठीसमासत्वे अन्तोदात्तत्वापत्तेः। तथा च स्वरार्थेयमष्टसूत्रीति फलितम्।**

**किञ्च यत्र 'मातुः स्मृतमि'त्यादौ 'न लोकाव्यये'त्यनेन कर्मषष्ठी प्रतिषिद्धा, तत्र शेषषष्ठ्या समासप्रसक्तौ तन्निषेधार्थं षष्ठीपुनर्विधिः।**

---

**एवमुत्तरेष्वपीत्यादि।** अधीगर्थदयेशां कर्मणि (पा.सू 2.3.52) इत्यादिषु सप्तसु सूत्रेषु षष्ठी शेषे इति सूत्रेणैव षष्ठीप्राप्तौ सत्यां पुनः षष्ठीविधिः मातुः स्मरणम् इत्यादौ षष्ठीसमासप्रतिषेधार्थ एव। तथा हि अधीगर्थेत्यादि — सूत्रस्य स्मरणार्थकधातूनां दयधातोः ईशधातोश्च कर्मणि षष्ठी स्यात् कर्मणः संबन्धत्वविवक्षायाम् इत्यर्थः। मातृसंबन्धि स्मरणम् इत्यादिरीत्या बोधः। सर्पिषो दयनम् सर्पिस्संबन्धि दयनम् — दानम्। दय दानगतिरक्षणहिंसादानेषु इति धातुः। सर्पिषः ईशनम् सर्पिः संबन्धि ईशनम् यथेष्टविनियोगः। अत्र सर्वत्र कर्मत्वं संबन्धत्वेन भासते।

**न चैवमिति।** न चोक्तोदाहरणेषु शेषषष्ठ्यां प्राप्तायां षष्ठीपुनर्विधानात् यदि षष्ठीसमासो न भवति, तदा हरिस्मरणमित्यत्र कथं षष्ठीसमासः इति शङ्का। तत्र समाधानमाह — तस्य कृद्योग इत्यादिना। हरिस्मरणमित्यत्र हरेः स्मरणमिति विग्रहे हरेः स्मरणं प्रति कर्मत्वत्वेन कर्मत्वविवक्षायां कर्तृकर्मणोः कृति इति सूत्रेण षष्ठी भवति। तादृशषष्ठ्यन्तस्य षष्ठी (पा.सू 2.2.8) इति सूत्रेण समासो भवति।

तादृशसमासस्य किं फलमिति शङ्कायामाह — **कारकपूर्वकत्वादित्यादिना।** हरिस्मरणम् उत्तरपदं स्मरणपदं स्मृधातोः भावे ल्युटा निष्पन्नत्वात् कृदन्तम्। हरिः कर्मकारकम्। अतोऽयं समासः कारकपूर्वपदकः। उत्तरपदं स्मरणपदं लिति इति सूत्रेण आद्युदात्तस्वरकम्। तेन कर्मषष्ठ्यन्तस्य हरिपदस्य समासे 'गतिकारकोपपादात् कृत' इति (पा.सू 6.2.139) सूत्रेण स्मरणशब्दः प्रकृतिस्वरं लभते। तस्य सूत्रस्य — गतिसंज्ञकात् कारकात् उपपदाच्च परं कृदन्तं प्रकृतिस्वरं

स्यात् तत्पुरुषे सति इत्यर्थः। स्मरणशब्द आद्युदात्त इति पूर्वमुक्ततया मकारोत्तराकारः उदात्तः। स एव समासे सत्यपि तिष्ठतीति प्रकृतिस्वर इति कथ्यते। ततश्च हरिस्मरणशब्दो मध्योदात्तः। यदि हरिस्मरणशब्दः शेषषष्ठीसमासः स्यात् तदा कृदन्तस्य स्मरणशब्दस्य कारकपूर्वकत्वाभावात् कृत्स्वरस्याप्राप्त्या 'समासस्य' (पा.सू 6.1.123) इति सूत्रेण अन्तोदात्तत्वमेव स्यात्। ततश्च स्वरविशेषसिद्ध्यर्थं सूत्रसप्तकारम्भ इति फलितम्।

**किं चेति।** मातुः स्मृतम् इत्यत्र 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' (पा.सू 2.3.69) इति सूत्रेण निष्ठासंज्ञक्तप्रत्ययान्तेन स्मृतशब्देन योगे कर्मणि षष्ठ्याः निषेधात् शेषे षष्ठ्येव मातृशब्दात् प्राप्ता। शेषषष्ठ्यास्तु समासो वारयितुं न शक्यते। अतस्तत्समासप्रसक्तिवारणाय अधीगर्थदयेशां कर्मणि (पा.सू 2.3.52) इति सूत्रेण षष्ठी विधीयते। तेन षष्ठ्येव भवति न तु समास इति लभ्यत इति भावः।

## कृञः प्रतियत्ने

**एवम् — 'कृञः प्रतियत्ने' (पा.सू 2.3.53) इति सूत्रात् गुणाधाने विद्यमानस्य करोतेः कर्मणि शेषत्वेन विवक्षिते षष्ठी स्यादित्यर्थकात् 'एधोदकस्योपस्कुरुते, एधोदकस्योपस्करणमि'त्यत्र षष्ठी। प्रयोजनं पूर्ववत्।**

---

**एवमिति।** कृञः प्रतियत्ने (पा.सू 2.3.53) इति सूत्रस्य गुणान्तराधानरूपार्थे विद्यमानस्य तद्वाचकस्येति यावत् कृधातोः यत्कर्म तस्य शेषत्वेन विवक्षायां षष्ठी स्यात् इत्यर्थः। एधोदकस्य उपस्कुरुते इति उदाहरणम्। एधांसि काष्ठानि उदकानि च एषां समाहारः एधोदकं तस्य एधोदकस्य। चैत्रः काष्ठानामुदकानां च गुणमाधत्ते इत्यर्थः। कर्मणः शेषत्वविवक्षायां षष्ठी। काष्ठोदकोभयसंबन्धिगुणा-

धानभावनेति बोधः। गुणाधानं नाम उपकरणसंनिधापनम्। एधोदककर्मकोपकरणसंनिधापनप्रयत्नः चैत्रनिष्ठ इति फलितम्। षष्ठी शेषे इत्यनेनैव सिद्धे एतत्सूत्रारम्भप्रयोजनं पूर्ववत् गतिकारकादिसूत्रेण समासस्वरार्थम् इति।

## रुजार्थानां भाववचनानामज्वरेः

**एवम् — 'रुजार्थानां भाववचनानामज्वरेः' (पा.सू 2.3.54) इति सूत्रात् रूजा व्याधिः तदर्थानां भाव एव यत्र कर्ता, तेषां ज्वरिवर्जितानां कर्मणि शेषत्वेन विवक्षिते षष्ठी स्यादित्यर्थकात् 'चोरस्य रुजति रोगः, चोरस्य रोगस्य रुजा' इत्यादौ चोरे षष्ठी। अत्र रोगाख्यव्याधेरेव व्याध्यन्तरं प्रति कर्तृत्वात् भावकर्तृत्वम्। तस्य कर्मणि चोरे सम्बन्धत्वेन विवक्षिते कर्मत्वे षष्ठी, कर्मत्वत्वेन विवक्षिते तु तिङन्ते द्वितीयैव, कृदन्ते तु षष्ठीसमासोऽपि। सम्बन्धत्वेन विवक्षायां न षष्ठीसमास इत्यादि पूर्ववत्। अत्र अज्वरिसन्ताप्योरिति वाच्यमिति वार्तिकात् 'रोगस्य चौरज्वरः चौरसन्तापः' इत्यादौ समासो भवत्येव, भावकर्तृकत्वग्रहणाच्च 'नद्याः कूलरुजा, नदीकूलं रुजतीत्यादिप्रयोगः।**

---

एवमित्यादि। 'रुजार्थानां भाववचनानामज्वरेः' (पा.सू 2.3.54) इति सूत्रम्। रुजा व्याधिः। व्याध्यर्थकधातूनां भाव एव यत्र कर्ता तेषां ज्वरिवर्जितानां कर्मणि शेषत्वेन विवक्षिते षष्ठी स्यात् इति तदर्थः। तेन चोरस्य रुजति रोगः, चोरस्य रोगस्य रुजा इत्यादौ षष्ठी। चोरस्य रोगः रोगान्तरं जनयतीत्यर्थः। अत्र रोगान्तरस्य कर्ता अयं रोगः भवति। स च रोगः धात्वर्थः भाव एव। एवं च भावरूपस्य रोगस्य व्याध्यन्तरं प्रति कर्तृत्वात् भावकर्तृकत्वम्। तस्य धातोः कर्म चोरः। तस्य संबन्धत्वेन विवक्षायां षष्ठी। रोगनिष्ठं चोरसंबन्धिरोगान्तरकर्तृत्व-

मिति बोधः। भावकर्तृत्वम् — भावकर्तृकत्वम् व्याध्यन्तरं — रुजधात्वर्थरूपम्। कर्मत्वस्य संबन्धत्वेन विवक्षायां षष्ठी। कर्मत्वत्वेन विवक्षायां तु चोरशब्दात् द्वितीयैव। चोरं रुजति रोग इति।

कृदन्ते तु चोररोगस्य रुजा इति षष्ठीसमासोऽपि भवति। संबन्धत्वेन कर्मत्वविवक्षायां तु न समासः। अत्र — सूत्रे अज्वरिसंताप्योरिति वाच्यम् इति वार्तिकम्। अज्वरेः इत्यनेन संतापेरपि ग्रहणं कर्तव्यमित्यर्थः। तेन संतापार्थकानां धातूनां कर्मणि षष्ठी न भवति। तद्योगे या षष्ठी सा तु शेषषष्ठी इति कृत्वा तस्याः समासोऽपि भवत्येव रोगस्य चोरज्वरः, चोरसंतापः इति। भावकर्तृकमिति किमर्थम्, नद्याः कूलरुजा, नदीकूलं रुजति। रुजिरत्र नदीरूपद्रव्यकर्तृकः, न तु भावकर्तृकः। नद्याः द्रव्यत्वात्। अतोऽत्र संबन्धसामान्ये षष्ठी न भवति। प्रथमैव भवति।

## आशिषि नाथः

**एवम् — 'आशिषि नाथः' (पा.सू 2.3.55) इति सूत्रात् आशीरर्थकस्य नाथतेः कर्मणि शेषत्वेन विवक्षिते षष्ठी स्यादित्यर्थकात् सर्पिषो नाथते, सर्पिषो नाथनमित्यादौ षष्ठी। 'सर्पिस्ते बहुळं भूयादि'त्याशास्त इत्यर्थः। आशीरर्थकत्वाभावे तु माणवकनाथनमिति समासः।**

---

एवम् 'आशिषि नाथः' (पा.सू 2.3.55) इति सूत्रात् आशीरर्थकस्य नाथृ इति धातोः कर्मणि शेषत्वेन विवक्षिते षष्ठी स्यात् इत्यर्थकात् सर्पिषो नाथते, सर्पिषो नाथनम् इत्यादौ षष्ठी। नाथृ याञ्ञोपतापैश्वर्याशीष्षु इति अभियुक्तैः पठ्यते। तन्मध्ये आशीरर्थकनाथतेः कर्मणि षष्ठी भवति। सर्पिस्ते बहुलं भूयात् इत्यर्थः।

कर्मीभूतसर्पिस्संबन्धि आशासनम् इत्यर्थः। आशीरर्थकत्वाभावे तु माणवकनाथनमिति समासः। शेषषष्ठ्या समासः। माणवकसंबन्धिनी याञ्चेत्यर्थः।

## जासिनिप्रहणेत्यादिसूत्रम्

**एवम् — 'जासिनिप्रहणनाटनाथक्राथपिषां हिंसायाम्' (पा.सू 2.3.56) इति सूत्रात् हिंसार्थानामेषां कर्मणि शेषत्वेन विवक्षिते षष्ठी स्यादित्यर्थकात् चौरस्योज्जासनम्, निप्राभ्यामुपसर्गाभ्यां समस्ताभ्याम्, व्यस्ताभ्यां वा युक्तो हनः निप्रहणः। चौरस्य निप्रहणनम्, प्रणिहननम्, निहननं वा चैरस्योन्नाटनम्, चौरस्य क्राथनम्, चौरस्य पेषणमित्यादौ षष्ठी। हिंसात्वाभावे तु धानापेषणमिति समासः पूर्ववत्।**

---

'जासिनिप्रहणनाटक्राथपिषां हिंसायाम्' (पा.सू 2.3.56) जासि इत्यनेन जस् ताडने, जस् हिंसायाम् इति चौरादिकयोः ग्रहणम्, जास् इति दीर्घनिर्देशात्। न तु जस् मोक्षणे इति दैवादिकस्य। तस्य दीर्घरूपायोगात्। निप्रहण इति धातूपसर्गनिर्देशमात्रमिह विवक्षितम्, न तूपसर्गयोः संघातः, नाप्यानुपूर्वी तयोरविवक्षितत्वात् इत्याशयेन व्याचष्टे — **निप्राभ्यामुपसर्गाभ्यामिति। समस्ताभ्यामिति।** निप्र इति प्रनि इति वा समस्ताभ्यामित्यर्थः। व्यस्ताभ्याम् असमस्ताभ्यां, प्रत्येकमिति यावत्। एवं च चत्वारि रूपाणि उदाहरणानि भवन्ति। तानि दर्शयति — हिंसार्थानामेषां कर्मणि शेषत्वेन विवक्षिते षष्ठी स्यात्। चोरस्योज्जासनम्, चोरस्य निप्रहणनम् प्रणिहननम् निहननम् प्रहणनमिति सर्वत्र कर्मणः शेषत्वविवक्षायां षष्ठी। एवं चोरस्य उन्नाटनम् चोरस्य क्राथनम् चोरस्य पेषणम् उन्नाटनम् इत्यत्र नट अवस्कन्दने इति धातोः ग्रहणम्। क्राथनम् — क्रथ हिंसायाम्। पेषणं पिष्लृ संचूर्णने चूर्णीकरणम्। हिंसात्वाभावे तु धानापेषणमिति षष्ठीसमासो भवति।

## व्यवहृपणोस्समर्थयोः

एवम् — 'व्यवहृपणोस्समर्थयोः' (पा.सू 2.3.57) इति सूत्रादेकार्थयोरनयोः कर्मणि शेषत्वेन विवक्षिते षष्ठी स्यादित्यर्थकात् शतस्य व्यवहरणम्, शतस्य पणनमित्यादौ षष्ठी। अत्र हि व्यवहृधातोः पणनापरपर्यायं द्यूतमप्यर्थः। पणधातोश्च क्रयविक्रयव्यवहारोऽपि। अतो द्वयोस्तुल्यार्थकत्वम्। अर्थान्तरत्वे तु षष्ठीविध्यभावान्न समासप्रतिषेधः। शलकाव्यवहारः गणनेत्यर्थः। ब्राह्मणपणनम् — स्तुतिरित्यर्थः।

---

एवं व्यवहृपणोः समर्थयोः (पा.सू 2.3.57) इति सूत्रस्यायमर्थः — समौ तुल्यौ अर्थौ ययोस्तौ समर्थौ तयोः समर्थयोः, शकन्ध्वादित्वात् पररूपम्। एकार्थकस्य वि अव इत्युपसर्गद्वयपूर्वकहृञ्धातोः पणधातोश्च कर्मणि शेषत्वेन विवक्षिते षष्ठी स्यादित्यर्थः। इदमपि समासनिवृत्त्यर्थमेव। अक्षैः क्रीडने क्रयविक्रयविषयकमूल्यसंवादे चानयोः व्यवहृपणोः एकार्थकत्वम्। शतस्य व्यवहरणं पणनं वा। द्यूतव्यवहारेण क्रयविक्रयव्यवहारेण वा शतं गृह्णातीत्यर्थः। वस्तुतः कर्मीभूतशतसंबन्धि अक्षक्रीडनेन ग्रहणम्, क्रयविक्रयविषयकमूल्यव्यवहारेण ग्रहणं वा इति शाब्दबोधः।

समर्थयोः किम्। शलाकाव्यवहारः। गणनेत्यर्थः। वस्तुतः कर्मीभूतशलाकासंबन्धिगणनेति फलितम्। ब्राह्मणपणनं स्तुतिरित्यर्थः। कर्मीभूतब्राह्मणसंबन्धिनी स्तुतिः। उभयत्र षष्ठ्याः पुनर्विध्यभावात् अस्त्येव समासः।

## कृत्वोऽर्थप्रयोगे

एवम् — 'कृत्वोऽर्थप्रयोगे कालेऽधिकरणे' (पा.सू 2.3.64) इति सूत्रात् कृत्वोऽर्थानां शब्दानां प्रयोगे कालवाचिन्यधिकरणे शेषत्वेन विवक्षिते षष्ठी

**स्यादित्यर्थकात् पञ्चकृत्वोऽह्नो भुङ्क्ते, पञ्चकृत्वोऽह्नो भोजनम्, द्विरह्नो भोजनमित्यत्र षष्ठी। अत्र षट्सूत्र्या विच्छिन्नमपि शेषग्रहणं व्याख्यानतो मण्डूकप्लुत्याऽनुवर्तते। अधिकरणत्वेन विवक्षायां तु 'द्विरहनि भुङ्क्ते' इति सप्तम्येव तत्सिद्धम् — इयमष्टसूत्री शेषत्वविवक्षायां समासप्रतिषेधार्थेति।**

---

**एवमित्यादि।** कृत्वोऽर्थानां शब्दानां प्रयोगे कालवाचिनि अधिकरणे शेषत्वेन विवक्षिते षष्ठी स्यात्। तेन पञ्चकृत्वोऽह्नो भुङ्क्ते, पञ्चकृत्वोऽह्नो भोजनम् इत्यत्र षष्ठी। अत्र अहन्शब्दः कालवाची। कालः अधिकरणम्। तस्य शेषत्वेन विवक्षायां षष्ठी। प्रकृतसूत्रेऽपि शेषे इत्यस्यानुवृत्तिर्वर्तते। अत्र षड्सूत्र्या विच्छिन्नमपि शेषग्रहणं पूर्वव्याख्यानवशात् मण्डूकप्लुप्या अनुवर्तते। अधिकरणत्वेन विवक्षायां तु द्विरहनि भुङ्क्ते इति सप्तमी। षड्सूत्री — 'दिवस्तदर्थस्य' (पा.सू 2.3.58) 'विभाषोपसर्गे' (पा.सू 2.3.59) 'द्वितीया ब्राह्मणे' (पा.सू 2.3.60) प्रेष्यब्रुवोर्हविषो देवता संप्रदाने (पा.सू 2.3.61) चतुर्थ्यर्थे बहुलं छन्दसि (पा.सू 2.3.62) यजेश्च करणे (पा.सू 2.3.63) इति।

**विच्छिन्नमिति।** इदं च दिवस्तदर्थस्य (पा.सू 2.3.58) इति सूत्रव्याख्यानावसरे ग्रन्थकृता प्रदर्शयिष्यते। व्याख्यानत इति। अधीगर्थ इति सूत्रे कर्मादीनामविवक्षा शेषः इति भाष्ये कर्मादीनामिति बहुवचनरूपात् व्याख्यानात् इत्यर्थः। अष्टसूत्री — 1. ज्ञोऽविदर्थस्य, 2. अधीगर्थ, 3. कृञः प्रतियत्ने 4. रुजार्थानाम् 5. आशिषि नाथः 6. जासिनिप्रहणन 7. व्यवहृपणो 8. कृत्वोऽर्थप्रयोगे इति एतावत्पर्यन्तं व्याख्यातम् सूत्राष्टकम् शेषत्वविवक्षायां षष्ठ्येव न समास इति समासप्रतिषेधार्थम् इत्यर्थः। इदं च तत्तत्सूत्रव्याख्यानावसरे प्रतिपादितमेव।

## षष्ठी हेतुप्रयोगे

यानि तु 'षष्ठी हेतुप्रयोगे' (पा.सू 2.3.26) इत्यादीन्यनुशासनानि, तानि लाक्षणिकानुशासनानि। तथा हि — 'षष्ठी हेतुप्रयोगे' (पा.सू 2.3.26) इति सूत्रात् हेतुशब्दप्रयोगे हेतुत्वत्वेन हेतौ बोध्ये षष्ठी स्यादित्यर्थकात् 'अन्नस्य हेतोः वसती'त्यत्र षष्ठी। अत्र हेतुत्वत्वेन हेतुत्वं लक्षणयां षष्ठ्यर्थः, तच्च पूर्वं निरुक्तम्। हेतुशब्दप्रयोगस्तात्पर्यग्राहकः, तदुत्तरषष्ठ्यास्सामानाधिकरण्यसिद्ध्यर्थं स एवार्थः, अन्नहेतुकवासाश्रयत्वमित्यादि शाब्दबोधः। अत्र हेतुप्रयोगाभावे तत्त्वेन हेतुत्वविवक्षायां पूर्वोक्तविधया तृतीयैव, शेषत्वेन हेतुत्वविवक्षायां तु हेतुशब्दप्रयोगाभावेऽपि शक्त्यैव षष्ठ्यन्तः प्रयोगः, सर्वनाम्नस्तु हेतुशब्दप्रयोगे हेतुत्वेन हेतुत्वविवक्षायां षष्ठी वैकल्पिकी 'सर्वनाम्नस्तृतीया च' (पा.सू 2.3.27) इति सूत्रात् केन हेतुना वसति, कस्य हेतोर्वसति।

तृतीयेत्युपलक्षणम् 'निमित्तकारणहेतुषु सर्वासां प्रायदर्शनम्' (वा. 1473) इति वार्तिकात्। तेन 'को हेतुर्वसति चैत्रः कं हेतुं वसति, कस्मै हेतवे वसति, कस्माद्धेतोर्वसति, कस्मिन् हेतौ वसती'त्यादयोऽपि प्रयोगास्साधवः। तत्र सर्वत्र हेतुत्वमेव विभक्त्यर्थः, अनुशासनबलात्। कीदृशहेतुकं वासाश्रयत्वमित्यादिरेव च शाब्दबोधः। 'वसति चैत्रः' इत्यत्र को हेतुः, कं हेतुमुररीकृत्य वसतीत्यादियोग्यपदान्तराध्याहारेण व्याख्याने तु विभक्तीनां तत्तदर्थकत्वमेवेति ध्येयम्।

एवम् — 'किन्निमित्तं वसति, केन निमित्तेन वसति, कस्मै निमित्ताय, इत्यादौ। किं कारणं वसति, केन कारणेने'त्यादौ। निमित्तादिशब्दानामेकार्थकत्वेऽपि पृथगुपादानं उपलक्षणार्थम्। तेन प्रयोजनादिपदप्रयोगेऽपि सर्वा विभक्तयो भवन्ति। असर्वनाम्नोपि हेत्वादिशब्दप्रयोगे सर्वा विभक्तयः। अन्नाद्धेतोर्वसति, अन्नेन कारणेन

**वसति। वृत्तिकारेण 'सर्वनाम्नस्तृतीया' च (पा.सू 2.3.37) इति सूत्रे पठित-स्याप्यस्य वार्तिकस्य 'हेताविति सूत्रे' भाष्यकारेण पाठात्। प्रायग्रहणं असर्वनाम्नः प्रथमाद्वितीये न स्तः, इत्येतदर्थकम्। तेनाऽन्नं कारणं वसतीत्यप्रयोगः।**

---

एतावता षष्ठीशक्यार्थबोधकानि सूत्राणि व्याख्यातानि। अथ तल्लक्ष्यार्थबोध-कानि सूत्राणि व्याचष्टे — **यानि तु इत्यादिना।** षष्ठी हेतुप्रयोगे (पा.सू 2.3.26) इति सूत्रस्य हेतुशब्दप्रयोगे हेतुत्वत्वेन हेतुत्वे बोध्ये षष्ठी स्यात् इत्यर्थः। तेन अन्नस्य हेतोः वसतीत्यत्र अन्नशब्दोत्तरषष्ठ्याः हेतुत्वत्वेन हेतुत्वं लक्षणया अर्थः। उक्तार्थानामप्रयोगः इति न्यायेन षष्ठ्यैव हेत्वर्थलाभात् हेतुशब्दप्रयोगः तात्पर्य-ग्राहकः। हेतुशब्दोत्तरषष्ठ्याः अन्नशब्देन सामानाधिकरण्यसिद्ध्यर्थं प्रयोगः। अन्न-शब्दोत्तरषष्ठ्यर्थस्य हेतुत्वस्य आख्यातार्थे आश्रयत्वे स्वनिरूपकवासनिरूपितत्व-संबन्धेनान्वयः। ततश्च चैत्रः अन्नस्य हेतोः वसतीति वाक्यात् अन्ननिष्ठहेतु-तानिरूपकवासाश्रयत्वं चैत्रनिष्ठमिति बोधः।

अत्र हेतुपदप्रयोगाभावे तत्त्वेन हेतुत्वत्वेन हेतुत्वविवक्षायां हेतौ इति सूत्रेण तृतीयैव अन्नेन वसतीति। संबन्धत्वेन हेतुत्वविवक्षायां तु हेतुशब्दप्रयोगाभावेऽपि शक्त्यैव षष्ठ्यन्तः प्रयोगः अन्नस्य वसतीति। अन्नसंबन्धिवासाश्रयत्वम् इति प्रयोगः।

यदा तु हेतुशब्देन सह सर्वनामशब्दप्रयोगः हेतुत्वत्वेन हेतुत्वविवक्षा च तदा सर्वनाम्नस्तृतीया च (पा.सू 2.3.27) सूत्रेण षष्ठी वैकल्पिकी, अर्थात् पक्षे तृतीया च भवति। यथा केन हेतुना वसति, कस्य हेतोर्वसति। सूत्रे तृतीयेति द्वितीयादीनामपि उपलक्षणम्। एतत्तात्पर्यकमेव — निमित्तकारणहेतुषु सर्वासां प्राय-दर्शनम् इति वार्तिकम्। तेन को हेतुः वसति, कं हेतुं वसति, केन हेतुना वसति,

कस्मै हेतवे वसति, कस्मात् हेतोः वसति, कस्य हेतोर्वसति, कस्मिन् हेतौ वसति इति प्रयोगा अपि साधवः। अत्र सर्वत्र हेतुत्वमेव विभक्त्यर्थः। कीदृशहेतुकं वासाश्रयत्वमिति शाब्दबोधः। कीदृशहेत्वङ्गीकारपूर्वकं वासाश्रयत्वमिति बोधः। शिष्टं स्पष्टम्।

## षष्ठ्यतसर्थप्रत्ययेन

**एवम् — 'षष्ठ्यतसर्थप्रत्ययेन' (पा.सू 2.3.30) इति सूत्रात् अतसर्थप्रत्ययः, अतसुच्प्रत्ययादिः 'दक्षिणोत्तराभ्यामतसुच्' (पा.सू 5.3.28) इत्यादिसूत्रविहितः। तेन योगे षष्ठीत्यर्थकात् ग्रामस्य दक्षिणतः ग्रामस्योत्तरतः, ग्रामस्योपरि, ग्रामस्योपरिष्ठादित्यादौ षष्ठी। अत्र प्रतियोगित्वं षष्ठ्यर्थः। तत्त्वेन बोधार्थं पृथगनुशासनम्, न तु पञ्चम्यपवादार्थम्, विन्ध्यात् दक्षिणत इत्यादिप्रयोगस्य दृष्टत्वात्। अत एव 'ततः पश्चात् स्रंस्यते, ध्वंस्यते इत्यादिर्भाष्यप्रयोगः सामान्येन ज्ञापक इति केचित्। तन्न।**

**'प्रकृतायाः पञ्चम्या द्वितीया-षष्ठ्यौ बाधिके भविष्यतः' 'इति पृथग्विने'ति सूत्रभाष्यविरोधात्। अतः पञ्चम्यपवादार्थमप्येतदनुशासनम्। विन्ध्यादित्यादिप्रयोगस्त्वपप्रयोगः। ज्ञापकञ्च पश्चाद्योगमात्रविषयम्। श्रुतस्यैव चात्रातसुच्प्रत्ययस्य निमित्तता, न तु लुप्तस्य, प्राग्ग्रामादित्यादौ प्रत्ययलोपे षष्ठ्यभावस्य कैयटसिद्धत्वात्।**

---

षष्ठ्यतसर्थप्रत्ययेन (पा.सू 2.3.30) अतसुच् इत्यादयो ये प्रत्ययाः तैः योगे षष्ठी स्यात्। तेन ग्रामस्य दक्षिणतः, उत्तरतः, उपरि, उपरिष्टात् इत्यादौ षष्ठी। प्रतियोगित्वं षष्ठ्यर्थः। ग्रामप्रतियोगिकदक्षिणदेशवृत्तिः इत्यादिरीत्या बोधः।

ननु 'षष्ठी शेषे' इत्यनेनैव षष्ठीविभक्तिसिद्धेः प्रकृतसूत्रेण षष्ठीविधानं किमर्थमित्यत्राह — **तत्वेनेति**। यद्यपि संबन्धत्वेन प्रतियोगित्वरूपसंबन्धविवक्षायां तेन सूत्रेण षष्ठी भवितुमर्हति। तथापि तत्त्वेन प्रतियोगित्वत्वेन प्रतियोगित्वस्य बोधार्थमिदं सूत्रम्। न तु पञ्म्यपवादार्थम्। विन्ध्यात् दक्षिणतः इत्यादिप्रयोगस्य दृष्टत्वात्। अत एव — एतत्सूत्रस्य पञ्चम्यपवादत्वाभावादेव यत् केचिदाहुः — नायं योगः पञ्चम्यपवादः। ततः पश्चात् स्रंस्यते ध्वंस्यते इति भाष्यप्रयोगात्। तस्य सामान्येन ज्ञापकत्वात्। अत्र पश्चात् शब्दः अतसर्थकप्रत्ययान्तः तद्योगे पञ्चमी ततः इति भाष्ये प्रयुक्ता। एतेन सामान्येन ज्ञाप्यते यत् अतसर्थकप्रत्ययान्तेन पञ्चमी भवतीति, न तु विशेषापेक्षमिदं ज्ञापकं यत् पश्चात् शब्देन योग एव पञ्चमी इति। तेन विन्ध्यात् दक्षिणतः इत्यादिप्रयोगोऽपि साधुः इति।

तत् खण्डयति — **तन्नेति**। भाष्यकृता पृथग्विनानानेति सूत्रे प्रकृतायाः पञ्चम्याः द्वितीयाषष्ठ्यौ बाधिके भवतः इति। यद्ययं योगो न पञ्चम्या अपवादः तदा षष्ठी कथं बाधिका स्यात्। अतो भाष्यवचनेन ज्ञायते यत् अयं योगः पञ्चम्या अप्यपवादः तत्त्वेन च बोधार्थ इति विन्ध्यात् दक्षिणतः इत्यादयः प्रयोगास्तु असाधवः इति।

ततः पश्चात् इति भाष्यं तु पश्चाच्छब्दयोग एव पञ्चमीति ज्ञापयति, न तु अतसर्थकप्रत्ययान्तयोगेऽपि इति।

ननु षष्ठ्यतसर्थेन इत्येव सिद्धे अतसर्थप्रत्ययेन इति प्रत्ययग्रहणं किमर्थम्, तत्राह — श्रुतस्यैवेति। श्रुतस्यैव चातसुच् प्रत्ययस्य निमित्तता, न तु लुप्तस्य, प्राग् वनात् इत्यादौ इति। श्रुतस्यैव — प्रयोगे श्रूयमाणस्यैव। अत्र — एतत्सूत्रप्रवृत्तौ। अतसुच्-प्रत्ययस्य तदर्थकप्रत्ययस्य। प्राक् ग्रामादिति। प्राच् इति

शब्दात् स्त्रियां 'उगितश्च' इति ङीपि प्राची इति रूपम्। ततो दिग्वाचकात् दिक्शब्देभ्यः सप्तमीपञ्चमीप्रथमाभ्यः 'दिग्देशकालेष्वस्तातिः' इति अस्ताति-प्रत्ययः। प्राची+अस्तात् इति जाते तस्य च 'अञ्चेर्लुक्' इत्यनेन लुकि लुक् तद्धितलुकि प्राचीशब्दे स्त्रीप्रत्ययस्य लुकि प्राक् इति भवति। तस्य प्राच्यां दिशि, प्राच्याः दिशः, प्राची दिक् इति वा अर्थः। अत्र अतसर्थप्रत्ययस्य अस्तातेः लुप्ततया न ग्रामशब्दात् अनेन षष्ठी। किंतु दिक्शब्दयोगे अन्यारात् इति सूत्रेण पञ्चम्येव भवति। प्रकृतसूत्रे अतसर्थप्रत्ययेन इति प्रत्ययग्रहणाभावे प्राक् इत्यादेरपि प्रत्ययलक्षणेन अतसर्थप्रत्ययान्ततया षष्ठी प्रवर्तेत। ग्रामस्य दक्षिणतः इत्यादौ प्रत्ययस्य श्रुतत्वात् षष्ठी प्रवर्तते इति। एवं च प्रकृतसूत्रे प्रत्ययग्रणेनैव प्राक् ग्रामात् इत्यादौ षष्ठीवारणात् दिक्वाचकशब्दप्रयोगे पञ्चम्याः प्रवृत्त्या अन्यारात् इति सूत्रे अञ्चूत्तरपदं चिन्त्यप्रयोजनम् इत्येव युक्तमिति खण्डदेवस्य आशयः। आदिपदेन प्रत्यक् ग्रामात् उदक् ग्रामात् इत्यादेः ग्रहणम्। उक्तार्थे भाष्यं प्रमाणयति — प्रत्ययलोपे षष्ठ्यभावस्य भाष्यकैयटादिसिद्धत्वादिति। तथा च प्रकृतसूत्रे भाष्यम् — अथ प्रत्ययग्रहणं किमर्थं इह माभूत् प्राक् ग्रामात् प्रत्यक् ग्रामात् इति। अत्र प्रत्ययग्रहणेन षष्ठी वारितेति स्पष्टं प्रतीयते। अन्यत् पेरि सूर्यनारायणशास्त्रिणां व्याख्याने द्रष्टव्यम्।

## एनपा द्वितीया

**एवम् — 'एनपा द्वितीया' (पा.सू 2.3.31) इति सूत्रादेनबन्तेन योगे द्वितीया, योगविभागात् षष्ठी चेत्यर्थकात् दक्षिणेन ग्रामम्, ग्रामस्य वा इत्यत्र षष्ठी। प्रतियोगित्वं विभक्तिद्वयार्थः। पञ्चम्यपवादः पूर्वलिखितभाष्यात्। अत एव — 'तत्रागारं धनपतिगृहादुत्तरेणास्मदीयमि'त्यादिरपप्रयोगः। हरदत्तादयोऽप्येवम्।**

लाक्षणिकं सूत्रान्तरं व्याचष्टे — **एनपा द्वितीयेति।** एनबन्तेन शब्देन योगे द्वितीया स्यात् इत्यर्थः। एनप् प्रत्ययः अतसर्थकः। तदन्तेन योगे षष्ठ्यतसर्थ-प्रत्ययेन इति पूर्वसूत्रेण षष्ठ्यां प्राप्तायामनेन द्वितीया विधीयते। दक्षिणेन ग्रामम् इति प्रयोगः। क्वचित् तद्योगे षष्ठ्या अपीष्टत्वात् तत्सिद्धये सूत्रस्य एनपा द्वितीया इति विभागः कर्तव्यः। प्रथमसूत्रे षष्ठी इत्यनुवर्तते। एनबन्तेन योगे षष्ठी स्यादिति तदर्थः। दक्षिणेन ग्रामस्य इत्युदाहरणम्। द्वितीया इति सूत्रेण एनबन्तेन योगे द्वितीया विधीयते। दक्षिणेन ग्रामम् इत्युदाहरणम्। प्रतियोगित्वं विभक्ति-द्वयस्यार्थः। ग्रामप्रतियोगिकदक्षिणदेशवृत्तिः इति बोधः। इदं सूत्रं पञ्चम्यपवादः। तेन एनबन्तेन योगे पञ्चमी न भवति। पञ्चम्याः प्राप्तिस्तु ध्रुवमपाये इति सूत्रेण दक्षिणदिगवधित्वात् ग्रामस्य। अपवादत्वं तु — पूर्वलिखितभाष्यात्। षष्ठ्यतसर्थ-प्रत्ययेन इति समनन्तरपूर्वसूत्रे लिखितात् — प्रकृतायाः पञ्चम्याः द्वितीयाषष्ठ्यौ बाधिके भविष्यतः इति पृथग्विनेत्यादिसूत्रस्थात् भाष्यादित्यर्थः। **अत एव** — एतत्सूत्रविहितविभक्तेः पञ्चम्यपवादत्वादेवेत्यर्थः। तत्रागारम् इति मेघदूते कालि-दासस्य प्रयोगः। धनपतिगृहात् इतिपञ्चम्यन्तप्रयोगः अपप्रयोगः इति भावः।

**अत्राहुः — मूले इत्यादिः इति।** आदिशब्देन स्त्र्यधिकारात् परेण वासरूप-विधिर्न भवति। ततः परेण नायमनुवर्तते इति महाभाष्यकारवचनयोः ग्रहणम्। उत्तरशब्दात्, उत्तराधरदक्षिणात् इत्यनुवृत्तौ 'एनबन्यतरस्यामदूरेऽपञ्चम्याः' (पा.सू 5.3.35) इति सूत्रेण एनप् प्रत्ययः तद्योगे एनबन्तेन उत्तरशब्देन उत्तरेण इत्यनेन योगे प्रकृतस्य एनपा द्वितीया इति सूत्रस्य प्रवृत्त्या दिग्योगनिमित्तक-पञ्चम्ययोगात् कालिदासप्रयोगस्यासाधुत्वमिति ग्रन्थकारो मन्यते। एवं परशब्दा-दपि एनपः प्रवृत्त्या एनबन्तेन परेण इत्यनेन योगे षष्ठ्या एव प्रवृत्त्या ततः परेण इति महाभाष्यकारप्रयोगोऽप्यसाधुरेवेति मन्यते। तत्र हरदत्तादीनां संवादमपि

हरदत्तादयोऽप्येवम् इत्यनेन प्रदर्शितवान्। प्रकृतसूत्रकाशिकावृत्तिव्याख्याने हरदत्तोऽपि — तत्रागारं धनपतिगृहादुत्तरेणास्मदीयं स्त्र्यधिकारात् परेण वास-रूपविधिर्न ततः परेण नायमनुवर्तते इत्यादीनां साधुत्वं चिन्त्यम् इत्याह — वस्तुतस्तु कालिदासपद्ये धनपतिगृहान् इति द्वितीयाबहुवचनशसन्तः पाठः। अत एव मल्लिनाथः एनपा द्वितीया इति व्याख्यत्। हरदत्तेन तु पञ्चम्यन्तः पाठः उपलब्धः स्यात्। किं च तत्पाठेऽपि उत्तरेणेति न एनबन्तम्। किं तु तत्पद्यस्थेन तोरणेन इत्यनेन समानाधिकरणं (अभेदान्वयि) तृतीयैकवचनान्तम्। तथा च अन्यारात् इत्यादिना दिक्शब्दयोगे धनपतिगृहादिति पञ्चमी सुलभा।

एवं स्त्र्यधिकारात् परेण इति भाष्यप्रयोगे परेणेत्यत्र सहयुक्तेऽप्रधाने (पा.सू 2.3.19) इति तृतीया। स्त्र्यधिकारात् परेण शास्त्रेण सह वासरूपसंबन्धो नेति तदर्थः। ततः परेण इति वाक्ये एनपा इति योगविभागात् विहितषष्ठ्यन्तात् सार्वविभक्तिकस्तसिः, न तु पञ्चम्यन्तात्तसिरिति न दोषः।

## दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्

**एवम् — दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्** (पा.सू 2.3.34) **इति सूत्रादेतैर्योगे षष्ठी वा स्यात्, पञ्चमी वेत्यर्थकात्, दूरमन्तिकं वा ग्रामस्य, ग्रामाद्वा, इत्यत्र पञ्चम्या सह वैकल्पिकी षष्ठी, अत्र प्रतियोगित्वमेव तदर्थः।**

---

एवं 'दूरान्तिकार्थैः षष्ठ्यन्यतरस्याम्' (पा.सू 2.3.34) इति सूत्रात् दूरान्ति-कार्थकशब्दैर्योगे षष्ठी वा स्यात् पञ्चमी चेत्यर्थकात् दूरमन्तिकं वा ग्रामस्य ग्रामाद्वा इत्यत्र पञ्चम्या सह विकल्पेन षष्ठी विधीयते। अत्रापि पञ्चम्यर्थः प्रतियोगित्वम्। ग्रामप्रतियोगिकदूरदेशवृत्तिः, ग्रामप्रतियोगिकान्तिकदेशवृत्तिः इति बोधः।

## दिवस्तदर्थस्य

**एवम् — 'दिवस्तदर्थस्य' (पा.सू 2.3.58) इति सूत्रात् 'व्यवहृपणोः समर्थयोः' (पा.सू 2.3.57) इति पूर्वसूत्रोक्तपरामर्शितच्छब्दबलेन द्यूताद्यर्थस्य, क्रयविक्रयरूपव्यवहारार्थस्य च दिवः कर्मणि कर्मत्वत्वेन विवक्षिते षष्ठी स्यादित्यर्थकात् 'शतस्य दीव्यती'त्यादौ षष्ठी। स्तुत्यादिरूपार्थान्तरपरत्वे तु 'ब्राह्मणं दीव्यती'ति द्वितीयैव। अत्र न शेषत्वेन कर्मत्वविवक्षा। अन्यथा दिवः पूर्वसूत्र एव पाठापत्तौ पृथक् सूत्रारम्भवैयर्थ्यात्। दिवेरूपसर्गयोगे तु विकल्पेन षष्ठी, 'विभाषोपसर्गे' (पा.सू 2.3.59) इति सूत्रात्। शतस्य, शतं वा प्रतिदीव्यति, इदञ्च लोके। ब्राह्मणे तु 'द्वितीया ब्राह्मणे' (पा.सू 2.3.60) इति सूत्रात् छन्दसि उपसर्गयोगाभावेपि द्वितीयैव। 'ग्रामस्य तदहस्सभायां दीव्येयुः' (श.ब्र 13 का.) इत्यादौ।**

---

एवं 'दिवस्तदर्थस्य' (पा.सू 2.5.58) इत्यतः पूर्वतनं सूत्रं 'व्यवहृपणोः समर्थयोः' (पा.सू 2.3.57) इति। अत्र सूत्रे तदर्थस्य इत्यत्र तच्छब्देन पूर्वसूत्रस्थौ व्यवहृपणौ परामृश्येते। तौ च द्यूते क्रयविक्रयव्यवहारे च तुल्यार्थौ पूर्वसूत्रे गृहीतौ। अतोऽत्रापि तदर्थकस्य दिवुधातोः ग्रहणमित्याशयेन तदर्थस्येति पदं व्याचष्टे — **व्यवहृपणोरित्यादिना**। तथा च तयोः व्यवहृपणोः अर्थ एवार्थो यस्य तस्य दिवुधातोः द्यूतार्थकस्य क्रयविक्रयरूपव्यवहारार्थकस्य च दिवः कर्मणि षष्ठी स्यादित्यर्थः। इह शेषे इति नानुवर्तते व्याख्यानात्। ततश्च कर्मणः शेषत्वविवक्षाविरहात् षष्ठी शेषे इत्यनेनाप्राप्तौ तत्प्रापकमिदं सूत्रम्। शतस्य दीव्यतीति उदाहरणम्। शतम् अक्षक्रीडनेन क्रयविक्रयविषयकमूल्यव्यवहारेण वा शतकर्मकं ग्रहणम् इति बोधः। अत्र शेषे इत्यस्य अनुवृत्त्यभावात् कर्मत्वप्रकारक एव बोधः न तु कर्मत्वसंसर्गकः। अर्थात् कर्मत्वत्वेन कर्मत्वबोधः, न तु संबन्धत्वेन

कर्मत्वबोधः। अत्र मूले दिवः कर्मणि शेषत्वेन विवक्षिते इति पाठः असाधुः। कर्मत्वत्वेन विवक्षिते इति पाठः साधुः। उपरि च स्वयं अत्र न शेषत्वेन कर्मत्व-विवक्षा अन्यथा पूर्वसूत्र एव पाठापत्तौ पृथक् सूत्रारम्भवैयर्थ्यात् इति वक्ष्यति।

दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिमोदस्वप्नकान्तिगतिषु इति धातुः। ब्राह्मणं दीव्यति — ब्राह्मणकर्मकस्तुतिरित्यर्थः।

अत्र सूत्रेऽपि यदि शेषे इत्यनुवृत्तिः स्यात् तदा पूर्वसूत्र एव दिवुधातोरपि पाठापत्तौ पाठस्य कर्तव्यत्वात् व्यवहृपणदिवां समर्थानाम् इति एकसूत्रस्यैव कर्तव्यतया पृथक्सूत्रारम्भवैयर्थ्यात् भिन्नसूत्रारम्भस्य वैयर्थ्यात् इत्यर्थः।

लाक्षणिकमनुशासनान्तरं व्याचष्टे — **दिवेः उपसर्गयोगे तु इति।** पूर्वसूत्रेण नित्यं षष्ठ्यां प्राप्तायां विकल्पेनेदं षष्ठीविधायकम्। शतं शतस्य वा प्रतिदीव्यति इति उदाहरणम्। अत्र दिवस्तदर्थस्येत्यनुवर्तते। द्यूतार्थस्य क्रयविक्रयरूपव्यव-हारार्थस्य च सोपसर्गस्य दिवुधातोः योगे विकल्पेन षष्ठीति सूत्रार्थः। लोके — पूर्वोक्तमुदाहरणम्। सोपसर्गस्येति विशेषणस्य शतस्य दीव्यतीति व्यावर्त्यम्। तदर्थस्येत्यस्य शलाकां दीव्यतीति व्यावर्त्यम्।

ब्राह्मणे तु वेदभागरूपब्राह्मणस्य प्रयोगे तु 'द्वितीया ब्राह्मणे' (पा.सू 2.3.60) इति सूत्रेण तदर्थस्य दिवः कर्मणि कर्मत्वत्वेन विवक्षिते द्वितीया स्यात्। ग्रामस्य तदहः सभायां दीव्येयुः (शतपथब्राह्मणं 13 काण्ड) इति उदाहरणम्। इदं सूत्रं दिवस्तदर्थस्य इत्यस्यापवादः।

## प्रेष्यब्रुवोर्हविषो देवतासंप्रदाने

**एवम् — 'प्रेष्यब्रुवोर्हविषो देवतासंप्रदाने'** (पा.सू 2.3.61) **इति सूत्राद्देवता-सम्प्रदानेऽर्थे वर्तमानयोः प्रेष्यब्रुवोः कर्मणो हविर्विशेषस्य वाचकात् षष्ठीत्यर्थकात्**

**'अग्नये छागस्य हविषो वपाया मेदसोऽनुब्रूहि, प्रेष्य वा इत्यत्र कर्मत्वत्वेन विवक्षिते षष्ठी। अत्र शेषग्रहणं न सम्बध्यते। प्रेष्येति लोडन्तेन समासस्याप्रसक्तत्वेन तन्निषेधार्थत्वानुपपत्तेः। हविषः 'प्रस्थितत्वेन विशेषणे प्रतिषेधो वक्तव्यः' इति वार्तिकात् प्रस्थितत्वेन विशेषणे द्वितीयैव। अत एव 'इन्द्राग्निभ्यां छागस्य हविर्वपां मेदः प्रस्थितं प्रेष्ये'ति प्रयोगः। इदञ्च लोकवेदसाधारणम्, उत्तरत्र छन्दोग्रहणात्।**

---

'प्रेष्यब्रुवोर्हविषो देवतासंप्रदाने' (पा.सू. 2.3.61) इष गतौ इति दिवादिः श्यन्नन्तः उपसर्गवशात् प्रेरणे वर्तते। प्रेष्यश्च ब्रूश्च प्रेष्यब्रुवौ, तयोः प्रेष्यब्रुवोः देवतासंप्रदानकेऽर्थे वर्तमानयोः कर्मणः हविषो वाचकात् शब्दात् षष्ठी स्यात्। द्वितीयायाः अपवादोऽयम्। अग्नये छागस्य हविषो वपायाः मेदसः प्रेष्य अनुब्रूहि वा इति उदाहरणम्। मैत्रावरुणं प्रति अध्वर्युकर्तृकोऽयं संप्रैषः। हे मैत्रावरुण, अग्न्युद्देशेन प्रदास्यमानं छागसंबन्धि यत् वपाख्यं हविः मेदोरूपं तत् प्रेष्य — होता यक्षदग्निं छागस्य वपाया मेदसः प्रेष्य इति प्रैषेण प्रकाशयेत्यर्थः। मेदःशब्देन वस्त्रखण्डतुल्यो मांसविशेषः उच्यते। **अनुब्रूहि वेति।** अग्नये छागस्य हविषो वपाया मेदसोऽनुब्रूहि इति पूर्णं वाक्यम्। हे मैत्रावरुण, अग्न्युद्देशेन प्रदास्यमानं छागसंबन्धि यत् हविः मेदोरूपं तत्पुरोऽनुवाक्यया प्रकाशयेत्यर्थः। अत्र हविषः कर्मत्वत्वेन कर्मत्वविवक्षया षष्ठी। अत्र सूत्रे शेषे इति नानुवर्तते। वपायाः इत्यादेः सुबन्तस्य प्रेष्य इत्यादितिङन्तेन समासस्य अप्रसक्तत्वेन तन्निषेधार्थकत्वाभावात् अनुवृत्तेः। समासनिषेधार्था शेषे इत्यस्यानुवृत्तिरिति पूर्वं सम्यक् उपपादितम्।

यदा हविः प्रस्थितत्वेन विशेष्यते तदा 'प्रस्थितत्वेन विशेषणे प्रतिषेधो वक्तव्यः' इति वार्तिकेन षष्ठीप्रतिषेधात् द्वितीयैव भवति। अत एव 'इन्द्राग्निभ्यां छागस्य

हविर्वपां मेदं प्रस्थितं प्रेष्य' इति प्रयोगः। इदं सूत्रं लोकवेदसाधारणम्। उत्तरसूत्रे छन्दोग्रहणात् चतुर्थ्यर्थे बहुलं छन्दसि (पा.सू 2.3.62) इति।

## चतुर्थ्यर्थे बहुलं छन्दसि

**यत्तुः 'चतुर्थ्यर्थे बहुलं छन्दसि' (पा.सू 2.3.62) इत्यनुशासनं 'दार्वाघाटस्ते वनस्पतीनामि'त्यादौ वनस्पतिभ्य इत्यर्थे षष्ठीविधायकम्, तद् व्यत्ययवचनादेव सिद्धेः प्रत्याख्यातम्।**

**एवम् 'करणे यजः' (पा.सू 3.2.85) इति सूत्रमपि छन्दसि बहुलमित्यनुवृत्त्या 'घृतस्य, घृतेन वा यजेते'त्यादौ षष्ठीविधायकं प्रत्याख्यातमेव।**

---

**यत्तु इत्यादि।** 'चतुर्थ्यर्थे बहुलं छन्दसि' (पा.सू 2.3.62) चतुर्थ्यर्थे षष्ठी बहुलं भवति। यथा – 'दार्वाघाटस्ते वनस्पतीनाम्' इत्यत्र वनस्पतिभ्यः इत्यर्थविवक्षया षष्ठी भवति। इदं तु सूत्रं भाष्ये प्रत्याख्यातम्। व्यत्ययो बहुलम् इति सूत्रादेव सिद्धेः। **शिष्टं स्पष्टम्।**

अथ कर्तृकर्मणोः कृति इति सूत्रार्थविचारः। कृदन्तेन योगे कर्तरि कर्मणि च षष्ठी स्यात्। कृष्णस्य कृतिः, जगतः कर्ता कृष्ण इति उदाहरणम्। कृष्णस्य कृतिः। अत्र कर्तरि षष्ठी। षष्ठ्याः कर्तृत्वत्वेन कर्तृत्वमर्थः। तत्र आधेयत्वेन प्रकृत्यर्थस्य कृष्णस्यान्वयः। कृष्णनिष्ठं कर्तृत्वं, तस्य निरूपकतासंबन्धेन कृधातूत्तरक्तिन् प्रत्ययार्थकृतौ अन्वयः। कृधातुः प्रयोगसाधुत्वार्थो। न केवला प्रकृतिः प्रयोक्तव्या, नापि प्रत्ययः इति न्यायात्। कृष्णनिष्ठकर्तृत्वनिरूपिका कृतिः इति बोधः। अत्र षष्ठ्या कर्तृत्वत्वेन कर्तृत्वं बोध्यते, न तु संबन्धत्वेन। व्याख्यानवशात्। शेषे इत्यस्य अनुवृत्तौ शेषषष्ठ्यैव सिद्धे एतत्सूत्रारम्भवैयर्थ्य

स्यात्। ततश्च एतत्सूत्रारम्भमूलकव्याख्यानेन कर्तृत्वत्वादिना कर्तृत्वादिकं षष्ठ्यर्थः। ततश्च कर्तृत्वस्य कर्मत्वस्य च षष्ठ्यर्थस्य कृदुपात्तकृतावन्वयः। कृष्णकर्तृककृतिः जगत्कर्मककृष्णकर्तृककृतिः इति बोधः। कर्ता इत्यत्रापि तृचः कर्तरि शक्तिः कृतौ लक्षणा। लक्ष्यार्थकृतौ कर्मत्वस्य निरूपकतया अन्वयः इत्युक्तं भवति। ओदनस्य पाक इत्यादावपि घञर्थकृतावेव धात्वर्थस्यान्वयः। ओदनकर्मिका पाककृतिः इति बोधः। ननु षष्ठ्यर्थकर्तृत्वकर्मत्वयोः धात्वर्थ एवान्वयोऽस्तु किमर्थमेतावान् श्रम इत्यत आह — एतच्चानुपदमेवेति। कृतपूर्वी कटमिति वाक्यार्थविचारेऽनुपदं करिष्यमाणे वक्ष्यत इत्यर्थः। धातुस्तु साधुत्वार्थ इति। 'न केवला प्रकृतिः प्रयोक्तव्या नापि प्रत्यय' इति न्यायादिति भावः। ओदनस्य पाकः इत्यत्रापि धातोः पाकोऽर्थः। घञः कृतिरूपा भावना अर्थः। तत्रैव ओदनकर्मकत्वस्यान्वय इति भावः।

## कर्तृकर्मणोः कृति

**एवम् — 'कर्तृ-कर्मणोः कृति' (पा.सू 2.3.65) इति सूत्रात् कृद्योगे कर्तरि, कर्मणि च षष्ठी स्यादित्यर्थकात् 'कृष्णस्य कृतिः, जगतः कर्ता कृष्णः' इत्यादौ षष्ठी। अत्र कर्तृत्वत्वेन कर्तृत्वम्, कर्मत्वत्वेन कर्मत्वञ्च लक्षणया षष्ठ्यर्थः, न तु शेषत्वेन, व्याख्यानवशेन शेष इत्यस्य निवृत्तिप्रतीतेः। अत्रोभयत्र कर्तृत्वकर्मत्वयोः कृदुपात्तकृतावेवान्वयः, ओदनस्य पक्तेत्यादिवत्। न तु धात्वर्थे, प्रधानक्रियायां वा। एतच्चानुपदमेव स्पष्टीकरिष्यते। धातुस्तु साधुत्वार्थः। 'ओदनस्य पाकः' इत्यादौ तु धात्वर्थस्य कृदर्थकृतावेवान्वय इत्यपि वक्ष्यते।**

**न चैवमपि सूत्रे कृद्ग्रहणवैयर्थ्यम्, 'न लोकाव्यये'ति वक्ष्यमाणसूत्रेण लादेशरूपतिङादियोगे षष्ठीनिषेधेन परिशेषादेव कृद्योगे षष्ठीविधिप्राप्तेरिति**

**वाच्यम्। 'कृतपूर्वी कटम्' इत्यादौ पूर्वीति तद्धितयोगे षष्ठीव्यावृत्त्यर्थम् तदुपपत्तेः, अत्र कृतः पूर्वं कटोऽनेनेति कृतपूर्वी देवदत्तः। 'सपूर्वाच्च' (पा.सू 5.2.87) इति सूत्रेण सोपपदात् पूर्वशब्दात् कर्त्रर्थे इनि प्रत्ययविधानात्। अतस्तत्र षष्ठीव्यावृत्त्यर्थं कृद्ग्रहणमर्थवत्।**

---

ननु 'कर्तृकर्मणोः कृति' (पा.सू 2.3.65) इति सूत्रे कृति इत्यस्य नास्ति आवश्यकता। कर्तृत्व — कर्मत्वनिरूपकत्वं कृतेः इति अविवादम्। सा च कृतिः कृत्प्रत्ययेन तिङा चोपस्थाप्या भवति। तत्र लादेशरूपतिङ्योगे न लोकाव्यय-निष्ठाखलर्थतृनाम् इति सूत्रेण षष्ठ्याः निषिध्यमानतया परिशेषात् कृद्योग एव षष्ठ्याः प्रवृत्त्या कृद्ग्रहणं व्यर्थमिति शङ्कते — **न चैवमपि सूत्रे इति।** न लोकेति सूत्रे लशब्देन लडादिः न विवक्षितः केवलस्य लकारस्य क्वापि प्रयोगाभावेन तत्र लशब्दः लादेशपर इत्याशयेनाह — **लादेशरूपतिङ्योगे इति।**

## कृतपूर्वी कटमित्यत्र द्वितीयाक्षेपः

**नन्वेवं न तत्र द्वितीयापि, निष्ठाप्रत्ययेन कर्मकारकस्याभिहितत्वेन तस्य अप्राप्तेः। अत एव अनभिहिताधिकारविहितषष्ठ्या अपि तत्राऽप्रसक्तत्वेन न तद्व्यावृत्त्यर्थं कृद्ग्रहणम्, वैयर्थ्याच्च। किञ्च कृतादिशब्दस्य कटादिरूपविशेषणवत्त्वेन पूर्वशब्देन समासानुपपत्तिः, 'सविशेषणानां वृत्तिर्नेष्यते' इति निषेधादिति चेत्।**

---

समाधत्ते — **कृतपूर्वीति।** कृतपूर्वी कटम् इत्यादौ इत्यत्र आदिपदेन भुक्तपूर्वी ओदनम् इत्यस्य परिग्रहः। पूर्वीति तद्धितयोगे इति। पूर्वशब्दोत्तर इनिप्रत्ययः तद्धितः। तस्य कृतिरर्थः। तथा च कृत्यर्थकतादृशेनिप्रत्यययोगे षष्ठीव्यावृत्यर्थं कर्तृकर्मणोः कृति इति सूत्रे कृत् ग्रहणमित्यर्थः। तथा च कृत्संज्ञकप्रत्यययोगे एव

कर्मणि षष्ठी न तु तद्धितयोगे। अतः कृतपूर्वी कटम् इत्यत्र कटशब्दोत्तरं कर्मणि षष्ठी न भवतीत्यर्थः।

## अत्र वैयाकरणसमाधानम्

अत्र वैयाकरणनव्याः — पूर्वं कृतशब्दः कर्मविशेषरूपकटान्वयमप्रतिपद्यमान एव कर्मसामान्यवाचिक्तप्रत्ययान्ततया, भावार्थकक्तप्रत्ययान्ततया वा व्युत्पादितः पूर्वपदेन समस्यत इति, न तावत्समासानुपपत्तिः। पश्चाच्च 'कटम् कृतवानि'तिवत् कटं कृतपूर्वीत्यत्रापि द्वितीयान्तस्य कृञर्थेऽन्वयः। कृत्प्रत्ययेन तस्यानभिधानाच्च द्वितीयोपपत्तिः — इति।

## वैयाकरणसमाधानाक्षेपः

तन्न। तथात्वे राजपदस्यापि ऋद्धपदापेक्षस्य पुरुषपदेन समासे कृते, पश्चादेव तस्मिन् ऋद्धपदान्वयापत्तेः। क्तप्रत्ययस्य कर्मसामान्याभिधानमात्रेण कटानभिधानाद् द्वितीयान्तत्वोपपादने, 'ओदनः पच्यतेतमाम्, गुरुर्धरित्री क्रियतेतराम् त्वये'त्यादावपि द्वितीयान्तत्वापत्तेश्च। क्तप्रत्ययस्य भावार्थकत्वे कृञः अविवक्षित-कर्मतया, पश्चादपि कर्मान्वयानुपपत्तेश्च, इतरथा 'ओदनः पच्यते' इति भावाख्याते द्वितीयापत्तेश्च। अनयैव दिशा ओदनं पाचकतमः ओदनं पाकग्रहणमित्यादि-प्रयोगाणामप्यापत्तेश्च। सविशेषणत्वेन षष्ठ्यन्तरप्रयोगस्याप्यनापत्तेश्च। अतश्च कट-मित्यस्य कथमपि न धात्वर्थान्वयः सम्भवी। एतेन कारकाणां धात्वर्थान्वयवादिनो नैयायिका अपि परास्ताः।

---

तथा हि — सपूर्वाच्च (पा.सू 5.2.87) इति तद्धितप्रकरणे सूत्रम्। तत्र श्राद्धमनेन भुक्तमिनिठनौ (पा.सू 5.2.85) इति सूत्रात् अनेन इति, पूर्वादिनिः

(पा.सू 5.2.86) इति सूत्रात् पूर्वात् इति चानुवर्तते। तेन सपूर्वात् विद्यमान-पूर्वपदात् अर्थात् सोपपदात् पूर्वशब्दात् कर्तरि इनिप्रत्ययो भवतीति सपूर्वाच्चेति सूत्रार्थः। उदाहरणम् कृतपूर्वी कटम् इति। अत्र पूर्वशब्दात् पूर्वं कृतशब्दः अस्ति। कृत इति पूर्वपदसहितात् पूर्वशब्दात् अर्थात् कृतपूर्वशब्दात् इनिप्रत्यये कृतपूर्वी इति शब्दो निष्पद्यते। देवदत्तः कृतपूर्वी कटम्। अत्र इनि प्रत्ययः कर्तरि अर्थे भवति। पूर्वसूत्रात् अनुवृत्तेन अनेन इति पदेन कर्तुर्विवक्षितत्वात्। एवं च तद्धितेन इनिप्रत्ययेन कर्तुरुक्ततया देवदत्तशब्दात् कर्तृवाचकात् न षष्ठीप्रसङ्गः। कटशब्दात् तु कर्मपरात् षष्ठी मा भूत् इत्येतदर्थं कर्तृकर्मणोः कृति इति सूत्रे कृद्ग्रहणम्। कृतीत्युक्तौ कृत्संज्ञकप्रत्यययोगाभावात् न कटशब्दोत्तरं कर्मणि षष्ठ्याः प्रसङ्गः। अकृते तु कृद्ग्रहणे पूर्वोक्तरीत्या तद्धितार्थान्तर्गतकृत्यन्वयाभिप्रायेण कटशब्दोत्तरं षष्ठी स्यात् इति भावः।

अत्र अवान्तरशङ्कां प्रस्तौति — **नन्वेवम् इति**। कृतपूर्वी कटम् इति प्रयोग एव न संभवति। तत्संभवे हि कर्मणि षष्ठी प्रसजेत्। तथा हि — तत्र कृतपूर्वी इत्यत्र कृतशब्दः कर्मणि क्तप्रत्ययान्तः। क्तप्रत्ययश्च कृत्संज्ञकः। ततश्च कृत्संज्ञकेन क्तप्रत्ययेन कर्मणः अभिहितत्वात् अनभिधाननिमित्तकद्वितीया कर्मवाचककटपदोत्तरं कथमापाद्येत। कथं च तद्व्यावृत्त्यर्थं कृद्ग्रहणम् इत्युच्येत।

अपि च कटः कृतः पूर्वं येन स कृतपूर्वी। अत्र विग्रहवाक्ये कृतशब्दः कटरूपविशेषणपदविशिष्ट इति तस्य कृतशब्दस्य सविशेषणस्य पूर्वशब्देन समासः कथं स्यात्। सविशेषणानां वृत्तिर्नेति निषेधात् इति शङ्का।

निष्ठाप्रत्ययेन — क्तक्तवतू निष्ठा (पा.सू 1.1.26) इति सूत्रोक्तनिष्ठासंज्ञकक्त-प्रत्ययेन कृत इत्यत्र कृधातूत्तरक्तप्रत्ययेन। तस्याः — कटशब्दात् द्वितीयायाः

अप्राप्तेः — तस्या अनभिहिताधिकारीयत्वात्। अत एव — कर्मकारकस्याभिहितत्वादेव। षष्ठ्याः कर्तृकर्मणोः कृति (पा.सू 2.3.65) इति सूत्रविहितायाः अपि। अत्रेमानि महाभाष्यवाक्यानि खण्डदेवेनाभिसंहितानि —

ननु च वाक्येनैवानेन न भवितव्यम्। द्वितीयया तावन्न भवितव्यम्। किं कारणम्। क्तेनाभिहितं कर्मेति कृत्वा। इनिप्रत्ययेन चापि नोत्पत्तव्यम्। किं कारणम्। असामर्थ्यात्। कथमसामर्थ्यम्। सापेक्षमसमर्थं भवतीति।

असामर्थ्ये सामर्थ्यस्याप्रवृत्त्या तन्मूलकस्तद्धितोऽपि न स्यात्। सपूर्वात् खलु पूर्वशब्दादिनिर्विहितः। सपूर्वत्वं च समास एव संभवतीत्याशयः।

पूर्वोक्ताक्षेपे वैयाकरणानां समाधानमाह — **अत्र वैयाकरणा इत्यादिना।** कृतपूर्वी कटम् इत्यत्र कृतः पूर्वं इत्येवं कर्मविशेषरूपकटेनान्वयमप्रतिपद्यमानः भावार्थकक्तप्रत्ययान्ततया वा कर्मसामान्यवाचिक्तप्रत्ययान्ततया वा व्युत्पाद्यते। ततः पूर्वं इति पदेन सुप् सुपा इति सूत्रेण समस्यते। कृतपूर्वं इति समासे निष्पन्ने ततः सपूर्वाच्च इति सूत्रेण इनिप्रत्ययः। कृतपूर्वी इति जाते द्वितीयान्तस्य कटशब्दस्य योऽर्थः कटनिष्ठकर्मत्वरूपः तस्य निरूपकत्वसंबन्धेन समासघटककृधात्वर्थे कृतावन्वयः। एवं च कटनिष्ठकर्मत्वस्य क्तप्रत्ययेनानभिधानात् कटशब्दोत्तरं कर्मत्वे द्वितीया भवति। ततश्च कटकर्मकपूर्वकालीनकृतिमान् इति बोधो जायते। यथा कटं कृतवान् इत्यत्र तद्वत् इति भावः। तदवस्थायां कृता कर्मत्वस्यानभिधानात् षष्ठी प्राप्नोति। तद्वारणार्थं कृद्ग्रहणम्। कृते च कृद्ग्रहणे कृदर्थकर्मण्येव षष्ठी। न धात्वर्थकर्मणीति न षष्ठीति तात्पर्यम्। अत्रेमानि महाभाष्यवाक्यानि —

1. यत्तावदुच्यते द्वितीयया तावन्न भाव्यम्। किं कारणम्। क्तेनाभिहितं कर्मेति कृत्वेति। योऽसौ कृतकटयोरभिसंबन्धः स उत्पन्ने प्रत्यये निवर्तते, अस्ति च करोतेः कटेन सामर्थ्यमिति कृत्वा द्वितीया भविष्यति।

2. यदप्युप्यते इनिप्रत्ययेन चापि नोत्पत्तव्यम्। किं कारणम्। असामर्थ्यात्। कथमसामर्थ्यम्। सापेक्षमसमर्थं भवतीति।

नेदमुभयं युगपत् भवति — वाक्यं प्रत्ययश्च यदा वाक्यं न तदा प्रत्ययः। यदा प्रत्ययः सामान्येन, तदा वृत्तिः। ततश्चावश्यं विशेषार्थिना विशेषोऽप्यनुप्रयोक्तव्यः कृतपूर्वी। किं कटम्। भुक्तपूर्वी। किम् ओदनमिति — इति।

एतावता अनूदितं वैयाकरणनव्यमतं निरस्यति **तन्नेत्यादिना**। अयमाशयः — भवदुक्तरीत्या ऋद्धस्य राज्ञः पुरुष इत्यर्थे ऋद्धस्य राजपुरुष इति प्रयोगस्य साधुत्वापत्तिः। आदौ निरपेक्षस्य राजपदस्य षष्ठ्यन्तस्य पुरुषपदेन समासे कृते पश्चात् ऋद्धपदार्थस्य राजपदार्थे अभेदेनान्वयसंभवात्। समासवेलायां ऋद्धपद-सापेक्षत्वाभावात् राजपदस्य (ऋद्धपदार्थान्वितस्वार्थबोधकत्वाभावात्)। असाम-र्थ्यविरहात्।

किं च कृतपूर्वी कटम् इत्यत्र समासवेलायां क्तप्रत्ययेन कर्मसामान्याभि-धानेऽपि कटरूपस्य कर्मविशेषस्यानभिधानेन कटपदस्य द्वितीयान्तत्वोपपादने ओदनः पच्यतेतमाम् गुरुर्धरित्री क्रियतेतमां त्वया (माघ) इत्यादावपि ते इति आख्यातेन कर्मसामान्याभिधानेऽपि कर्मविशेषस्य ओदनस्य धरित्र्याश्च अनभि-धानात् ओदनपदोत्तरं धरित्रीपदोत्तरं च द्वितीया स्यात्। किं च ओदनः पच्यते इत्यत्रापि आदौ पचधातोः भावे आख्याते कृते पश्चात् ओदनपदोत्तरं कर्मणि द्वितीया स्यात्। आख्यातेन कर्मणः अनभिधानात्।

अपि च क्तप्रत्ययस्य भावार्थकत्वपक्षेऽपि कृञः अविवक्षितकर्मकतया अकर्मकत्वेन पश्चादपि कटरूपकर्मान्वयानुपपत्तेश्च। अनयैव रीत्या ओदनं पाचकतमः ओदनं पाकग्रहणम् इत्यादिप्रयोगाणामप्यापत्तेश्च। अयं भावः — पाचकशब्दः कर्त्रर्थकण्वुल्प्रत्ययान्तः। ततः अतिशायने तमप्प्रत्ययः। अत्र कृद्योगे प्रकृतेन कर्तृकर्मणोः इति सूत्रेण अनभिहिते ओदनरूपकर्मणि षष्ठ्यां ओदनस्य पाचकतमः इति षष्ठ्यन्तप्रयोग इष्टः। एवं — भावघञन्तपाकशब्दस्य भावल्युडन्तग्रहणशब्देन समासे पाकग्रहणम् इति शब्दः सिद्धः। अत्रापि कर्मणोऽनभिधानात् ओदनस्य पाकग्रहणम् इति प्रयोग इष्टः। परं तु त्वदुक्तरीत्या प्रत्ययार्थसंबन्धराहित्येन केवलधात्वर्थेन संबन्धेन कृद्योगाभावात् अनेन षष्ठ्याः अप्राप्त्या धात्वर्थकर्मणि द्वितीयापत्तिः इति भावः।

**प्रयोगाणामप्यापत्तेश्चेति**। एतेषामपि कृतपूर्वी कटम् इति प्रयोगतुल्यत्वात् तत्रेव एतेष्वपि द्वितीयापत्तिरिति भावः। **क्तविशेषणत्वेनेति**। कटादेः क्तप्रत्ययप्रकृतिभूतकृधात्वर्थेनान्वयं स्वीकृत्य कर्मणि द्वितीयायाः समर्थने न लोकाव्ययनिष्ठा इत्यादिसूत्रेण निषेधात् षष्ठ्यन्तप्रयोगोऽपि नोपपद्यते। तथा च कृतपूर्वी कटम् इत्यत्र न लोकेति सूत्रेण निषेधात् षष्ठ्याः प्राप्तेरभावात् तत्र षष्ठीव्यावृत्यर्थं क्रियमाणं कृद्ग्रहणं व्यर्थमापद्येतेति भावः। एतेन कारकाणां धात्वर्थान्वयवादिनो नैयायिका अपि निरस्ताः।

## स्वमते प्रयोगसमर्थनम्

**अतोऽत्रैवं समाधेयम् — न कटस्य कृञर्थेऽन्वयः। धात्वर्थान्वयस्य कारकाणामव्युत्पन्नत्वात्। नापि क्ताद्यर्थे, प्रथमान्तत्वापत्तेः, असमर्थसमासापत्तेश्च। अपि तु तद्धितार्थ एव, कर्तृत्वं हि अत्र तद्धितार्थः। अतश्च पाचकादिकृत्स्विव विशेषणत्वेन,**

**स्वातन्त्र्येण वा लक्षणया कृतिरपि तद्धितार्थः, तस्याञ्च लिङ्गानन्वयिन्यां विशेषण-वाचकपदोपस्थाप्यायाञ्चान्वयः। व्युत्पत्त्यन्तराभावेन गौरवाभावात्। तद्वाचकपदे कर्मकारकस्यानुक्तत्वेन प्रथमाया अप्रसक्तेः। विशेष्यवाचकपदोपस्थाप्यायामन्व-याच्च, ओदनस्य पाचक इतिवत् न समासभङ्गः। यत्र त्वोदनः पच्यतेतरामित्यादौ तद्धितेन अतिशयमात्राभिधानात्, न कृतेरभिधानम्, तत्र लकारार्थकृतावेव कारकान्वयात्, तेन च कर्मत्वस्योक्तत्वेन न द्वितीयापत्तिः। पचतिकल्पमित्यादिवच्च तरामित्यस्य तात्पर्यग्राहकत्वाङ्गीकारात्, पचधातुनैव विशिष्टपाकलक्षणात्, तरा-मित्यस्य निरर्थकत्वेन विशेषणसापेक्षस्यापि तेन सह वृत्त्युपपत्तिः। 'अस्माकं गुरुकुलमि'तिवद्वा नित्यसापेक्षत्वात्तदुपपत्तिः। एवमोदनस्य पाचकतमः, ओदनस्य पाचकग्रहणमि'त्यत्रापि द्रष्टव्यम्।**

---

अथ स्वसिद्धान्तमाह — **अतोऽत्रैवं समाधेयमिति।** अयमत्र समुदायार्थः — कटपदार्थस्य कृतपूर्वीत्यत्र कृधात्वर्थेऽन्वयो न संभवति। कारकाणां प्रत्ययार्थ-भावनायामन्वयस्य भावनावादे विस्तरेण उपपादितत्वात्। अपि च धात्वर्थस्यापि प्रत्ययार्थभावनायामन्वयेन गुणभूततया तत्र गुणभूतकारकाणामन्वयस्य 'गुणानां च परार्थत्वादसंबन्धः समत्वात् स्यात्' इति न्यायेनासंभवात्। नापि क्तप्रत्ययार्थे कर्मणि कटस्याभेदेनान्वयः कटशब्दस्य प्रथमान्तत्वापत्तेः। यथा कटः कृतः इत्यत्र। ततश्च कटः कृतपूर्वी इति प्रयोगापत्तिः। अपि च समासघटककृतशब्दस्य समासाघटककटशब्दार्थान्वये कृतपूर्वी इत्यस्य असमर्थसमासत्वापत्तेः। समासा-घटकपदार्थान्वितार्थबोधकपदघटितसमासो हि असमर्थसमासः।

तस्मात् कृतपूर्वी कटम् इत्यत्र कटपदार्थस्य तद्धितेनिप्रत्ययार्थेऽन्वयः। तद्धितस्य इनि प्रत्ययस्य हि कर्ता अर्थः इति पूर्वमुक्तम्। कर्ता च कृतिमान्। तथा

च तद्विशेषणे कृतौ कटस्य कर्मतया अन्वयः। यद्वा इनिप्रत्ययस्य यथा कर्ता अर्थः शक्त्या तथा स्वातन्त्र्येण लक्षणया कृतिरर्थः। तस्यां च लिङ्गानन्वयिन्यां कट-कर्मकत्वस्यान्वयः। तद्धितान्तेन पूर्वी इत्यनेन कर्तुरेवाभिधानेन कर्मकारकस्या-नभिहिततया कटपदोत्तरं कर्मणि द्वितीयायाः साधुत्वम्। प्रथमायाः असाधुत्वम्। अभिहिते हि प्रथमा। समासाघटकपदसापेक्षत्वात् असमर्थतया समासानुप-पत्तिरिति शङ्काया अपि न प्रसक्तिः। समासघटकविशेषणपदस्य समासाघटक-पदसापेक्षत्व एव असामर्थ्यम्। यथा ऋद्धस्य राजपुरुषः इत्यादौ। प्रकृते कृतपूर्वी इत्यत्र विशेष्यवाचकपूर्वीपदार्थे कृतौ समासाघटकपदार्थस्य कटस्य कर्मतया अन्वयात् नासामर्थ्यम्। यथा सुन्दरः राजपुरुषः इत्यत्र सुन्दरपदार्थस्य पुरुष-पदार्थेऽभेदेनान्वयः तद्वत्। यथा च ओदनस्य पाचक इत्यत्र अकप्रत्ययार्थकृतौ ओदनस्य अन्वयः तद्वत्।

एतदुक्तं भवति — सविशेषणानां वृत्तिर्न। वृत्तस्य वा विशेषणयोगो न इति महाभाष्यकारः। वृत्तिपदेन कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तयः इत्युक्ताः समासादयः पञ्च विवक्षिताः। तत्र तद्धितान्तोऽपि प्रविष्टः। एतत्सर्वं मनसिकृत्य पठनीयम्।

**पाचकादिपदवदिति।** यथा ओदनस्य पाचक इत्यत्र कर्तरि विहितस्य अकप्रत्ययस्य कर्तरि शक्तिः। कृतौ लक्षणा। तत्र कृतौ ओदनकर्मकत्वस्यान्वयः, तथा कृतपूर्वी कटमित्यत्र इनिप्रत्ययलक्ष्यकृतौ कटकर्मकत्वस्यान्वय इति भावः। अत्र इनिप्रत्ययविधायके सपूर्वाच्च इति सूत्रे ततः पूर्वतनसूत्रात् अनेन इत्यस्य अनुवृत्त्या इनिप्रत्ययस्य कर्तृवाचकत्वमिति यत् पूर्वमुक्तं तत् स्मर्तव्यम्।

ननु कृतपूर्वी कटम् इत्यत्रेव ओदनः पच्यतेतराम् इत्यत्र द्वितीया कुतो न भवतीत्याशङ्कायामाह — यत्र तु इत्यादिना। ओदनः पच्यतेतराम् इत्यत्र तद्धितेन

तरप्प्रत्ययेन भावना (कृतिः) नोच्यते। अपि तु अतिशयमात्रं तेनोच्यते। तत्र आख्यातेन कृतिरभिधीयते लक्षणया। शक्त्या कर्माभिधीयते। अतः आख्यातेन कर्मणोऽभिधानात् ओदनरूपकर्मवाचकपदोत्तरं प्रथमा भवति इति एकं समाधानम्। अन्यच्च — यथा पचतिकल्पम् इत्यत्र ईषदसमाप्तिविशिष्टपाकः धात्वर्थः। तत्र कल्पप्प्रत्ययः तात्पर्यग्राहकः। तद्वत् पच्यतेतराम् इत्यत्र तरप्प्रत्ययस्य अर्थ एव नास्ति। पचधारोरेव अतिशयविशिष्टः पाकोऽर्थः। तरप्प्रत्ययस्तु तात्पर्यग्राहकः। एवं च यत्र तद्धितस्य सार्थकत्वं तत्रैव विशेषणान्तरयोगे सविशेषणानां वृत्तिर्न इति निषेधो भवति। अत्र तु निरर्थकत्वात् तद्धितस्य विशेषणान्तरयोगेऽपि वृत्तिर्भवितुमर्हतीति भावः।

अथवा अस्माकं गुरुकुलम् इति प्रयोगोऽस्ति। अस्माकं यः गुरुः तस्य कुलमित्यर्थः। अत्र समासघटकः गुरुशब्दः यद्यपि अस्माकमिति विशेषणसापेक्षः। तथापि तत्र गुरोः कुलं गुरुकुलमिति समासो भवति। एवं च नित्यसापेक्षस्थले अर्थात् वृत्तिघटकपदस्य वृत्त्यघटकपदेन नित्यसाकाङ्क्षत्वे समासो भवतीति निश्चीयते। एवमेव ओदनस्य पाचकतमः इत्यत्र ओदनस्य यः पाचकः सोऽतिशयितः इति एकदेशान्वयेऽपि नित्यसापेक्षत्वान्न दोषः। पाचकः इत्युक्ते कस्य पाचकः इति नियमेनाकाङ्क्षा भवतीति कृत्वा पाचकतम इति तद्धितवृत्तिर्भवत्येवेति भावः।

'कृतपूर्वी कटमि'त्यादौ तु कर्तृत्वस्य इनिप्रत्ययेनैवोक्तेः तदुक्तकृतौ कटमित्यस्यान्वयात् द्वितीयोपपत्तिः। एवं 'व्याकरणं प्राज्ञः' इत्यत्रापि तद्धितेन स्वार्थविहितेन कृदर्थकृतेरप्युपादानेन तत्रान्वयोपपत्तेः।

अत एवोक्तं हरिणा —

ततः क्रियावता कर्त्रा योगो भवति कर्मणाम्।
अविग्रहा गतादिस्था यथा ग्रामादिकर्मभिः॥
क्रिया संबध्यते तद्वत् कृतपूर्व्यादिषु स्थिता। इति।

**अविग्रहा विशेष्यत्वेनानुपस्थितापीत्यर्थः। गतादिस्था गतमित्यादिकृत्पदस्था। धात्वर्थान्वयमादाय तच्छाब्दबोधोपपादनं वैयाकरणनव्यानामसङ्गतमेव। कारकाणां धात्वर्थान्वयस्य क्वाप्यव्युत्पन्नत्वात्।**

---

**कृतपूर्वी कटमित्यादाविति।** कृतपूर्वी इत्यत्र कृतशब्दपूर्वकात् पूर्वशब्दात् कर्तरि इनिप्रत्ययस्य विहितत्वात् कर्ता अर्थः। लक्षणया कृतिरपि तदर्थः। तत्र कृतौ कटस्य कर्मणोऽन्वयो भवति। तद्धितेन कर्मणोऽनुक्तत्वात् कटशब्दोत्तरं द्वितीया भवति इति भावः।

**एवं व्याकरणं प्राज्ञः इत्यत्रापीति।** प्रकर्षेण जानातीति प्रज्ञः। प्रज्ञ एव प्राज्ञः। प्रज्ञशब्दात् स्वार्थे अण् तद्धितः। तेन लक्षणया भावनोच्यते। तस्यां व्याकरण-मित्यस्यान्वयः। व्याकरणविषयकप्रकृष्टज्ञानाश्रय इत्यर्थः।

उक्तनिष्कर्षेषु भर्तृहरेः वाक्यपदीयकारिकामुदाहरति — **ततः क्रियावते-त्यादिना।** अयमर्थः — अविग्रहा — पृथक्ग्रहणरहिता, विशेष्यत्वेनानुपस्थिता-पीत्यर्थः। गतादिस्था – गतमित्यादिकृदन्तपदस्था भावना — ग्रामं गतः इत्यत्र कृदुपात्ता या गतादिस्था भावना, तत्र कर्मणोऽन्वयो भवति। अत्र यद्यपि मीमांसकमते भावनैव मुख्यविशेष्यभूता, अथापि भावना कर्तृनिष्ठैवेति कृत्वा विशेषणत्वेनोपस्थिता भावनेत्युक्तम्। तथा च भावनायामेव कारकाणामन्वयः, न तु धात्वर्थक्रियायामिति भावः।

कारिकार्थः पुनः स्पष्टीक्रियते — तत इति। तद्धितोत्पत्त्यनन्तरमित्यर्थः। क्रियावता — कृतिमता कर्त्रा — इनिप्रत्ययवाच्यकर्त्रा, कर्मणां कटादीनां योगः संबन्धः अन्वयः। विशेषणभूतया कृत्या कर्मणोऽन्वय इति भावः। तत्र दृष्टान्तमाह — **अविग्रहेत्यादिना क्रिया संबध्यत इत्यन्तेन।** अविग्रहेत्यस्य विग्रहरहितेत्यर्थ इति भ्रमवारणायाह — **विशेष्यत्वेनानुपस्थितेति।** न विग्रहः विविच्य ग्रहणं यस्याः सा अविग्रहा विशेषणभूतापीत्यर्थः। गतादिस्थेत्यनेन गमिधातूपात्तेत्यर्थ इति भ्रमवारणायाह — **गतमित्यादि — कृत्पदस्थेति।** गत इत्यत्र क्तप्रत्ययेन लक्षणया उपस्थितेत्यर्थः। क्रिया — कृतिः संबध्यते गतो ग्रामो देवदत्तेन इत्यादौ धात्वर्थक्रिया कर्मणा संबध्यत इत्यर्थः इति। वैयाकरणमतं दूषयति — **धात्वर्थान्वयमिति।**

## ओदनस्य पाक इत्यत्रान्वये आक्षेपः

**नन्वेवम् 'ओदनस्य पाकः, कृष्णस्य कृतिः' इत्यादौ क्व कारकान्वयः। न तावत् धात्वर्थे पाके। तस्मिन् तवाप्यव्युत्पन्नत्वात्। नापि घञर्थे, तस्य लिङ्गान्वयित्वात्। लिङ्गान्वयिन्यामप्यन्वये वस्तुपदाभिधेयायामप्यन्वयापत्तेरिति चेत्, पक्तेत्यादिवत् तत्रापि कारकान्वयार्थं घञैव कृतिविशिष्टपाकस्य स्वातन्त्र्येण शक्तिलक्षणाभ्यां कृति-पाकयोर्वाऽभिधानेन कृत्तौ कारकान्वयोपपत्तेः पाकानुकूलकृतिसाध्यः पाक इति च बोधः।**

---

**नन्वेवमिति।** ओदनस्य पाकः कृष्णस्य कृतिः इत्यादौ क्व कारकाणाम् ओदनादीनामन्वयः। न तावत् धात्वर्थे पाके। मीमांसकेन त्वया कारकाणां धात्वर्थे अन्वयस्य अनङ्गीकारात्। नापि घञर्ते क्तिप्रत्ययार्थे वा। तयोः पुंस्त्रीलिङ्गा-

न्वयित्वात्। लिङ्गान्वयिन्यामपि कृतावन्वयाङ्गीकारे ओदनस्य वस्तु इति वस्तुपदवाच्यायामपि कृतावन्वयप्रसङ्गात् इति शङ्का।

यथा ओदनस्य पक्ता इत्यादौ तृचः कर्ता कृतिमानर्थः तदेकदेशकृतौ ओदनस्य स्वकर्मकपाकानुकूलत्वसंबन्धेनान्वयः इति स्वीक्रियते, तथा ओदनस्य पाकः इत्यत्रापि घञः कृतिविशिष्टपाकार्थकत्वं स्वीकृत्य तदेकदेशकृतौ ओदनस्य स्वकर्मकपाकानुकूलत्वसंबन्धेन अन्वयस्य स्वीकारात्। अथ वा भावार्थकघञः शक्त्या पाकोऽर्थः। लक्षणया कृतिरर्थः। लक्ष्यार्थकृतौ ओदनादिकारकान्वयः। तथा च ओदनकर्मकपाकानुकूलकृतिसाध्यः पाकः इति शाब्दबोधः।

## अत्रैव मतान्तरसमाधानम्

**केचित्तु — न घञा कृतेर्लक्षणा, तद्योगे षष्ठी च न कारकपरा, अपि तु शेषषष्ठ्येव। तस्या अपि अध्याहृतास्तिरूपप्रधानक्रियायामन्वयः परम्परासम्बन्धेनेति, न कश्चित् दोषः। एवञ्च कृष्णस्य कृतिरित्यत्रापि बोधाञ्जस्यम्। न चैवं कृद्योगनिमित्तकषष्ठीविधिवैयर्थ्यम्, तस्य तृजादिकृद्विषयत्वेनाप्युपपत्तेः इत्याहुः।**

**अतस्सिद्धं कृद्योग एव कर्तृकर्मणोः षष्ठी, न तु सार्थकतद्धितयोगे, कारकवाचितद्धितयोगे वेत्येतदर्थकं कृद्ग्रहणमिति। अत एव कृतपूर्वीत्यत्र नित्यसापेक्षत्वात् कृत्प्रत्ययार्थेनान्वयमङ्गीकृत्य कृतपूर्वी कट इत्यस्याप्यापत्तिरपास्ता। उक्ततद्धितयोगे कारकाणां कृतावन्वय इत्येवंविधज्ञापनप्रयोजनकत्वात् कृद्ग्रहणस्य। अतस्सिद्धं तादृशतद्धितासमभिव्याहृतकृद्योग एव षष्ठी, न तु तादृशतद्धितयोगेऽपीति।**

अत्रैव मतान्तरमाह — **केचित्तु इति।** अयं भावः — ओदनस्य पाक इत्यत्र घञः न कृतौ लक्षणा। तद्योगे घञ्योगे या षष्ठी ओदनस्येति सापि न कारकपरा। अपि तु शेषषष्ठी — संवन्धसामान्यार्थकषष्ठी। तादृशषष्ठ्यर्थसंबन्धस्यापि अध्याहृतं यत् अस्ति इति पदं तदर्थप्रधानक्रियायां स्वाश्रयपाककर्तृकत्वरूपपरंपरासंबन्धेनान्वयः। ओदनसंबन्धिपाककर्तृकं (पाकनिष्ठं) सत्ताश्रयत्वम् इति बोधः। एवं कृष्णस्य कृतिः इत्यत्रापि शेषषष्ठ्येव। कृष्णसंबन्धिकृतिनिष्ठं सत्ताश्रयत्वमिति बोधः।

न चैवं सति कृद्योगनिमित्तकषष्ठीविधानवैयर्थ्यमिति वाच्यम्। तस्य तृजादिकृत्प्रत्ययविषयकत्वेनाप्युपपत्तेः इति भावः।

एवं भाष्यसंमतमर्थं प्रतिपाद्य 'कर्तृकर्मणोः कृति' इति सूत्रे कृद्ग्रहणप्रयोजनं विशदयति — **अतः सिद्धमिति। कृद्योग एवेति।** कृत्संज्ञकप्रत्ययोपात्तकृता योगे एव कर्तृकर्मणोः षष्ठी भवति, न तु सार्थकतद्धितयोगे गार्ग्यः वामदेव्यमित्यादिस्थले तद्धितस्य सार्थकत्वात् तद्व्यावृत्तये, कारकवाचितद्धितयोगे वा। कृतपूर्वी कटमित्यत्र कर्तृकारकवाची तद्धितः तादृशस्थले षष्ठीव्यावृत्त्यर्थं कृद्ग्रहणम्। अत एव — **कटादेः** तद्धितलक्ष्यकृतावन्वयस्वीकारादेव नित्यसापेक्षत्वात् — कारकाणां क्रियया नित्यसापेक्षत्वात् कृत्प्रत्ययार्थेन — कृत इत्यत्रत्यक्तप्रत्ययार्थेन कर्मणा अभेदेनान्वयमङ्गीकृत्य कृतपूर्वी कटः इति प्रयोगस्याप्यापत्तिः अपास्ता।

ननु कारकाणां तद्धितार्थेनान्वयस्यैवासिद्धतया कथं तत्र षष्ठीवारकतया कृद्ग्रहणस्य प्रयोजनकथनम् अत आह — **उक्ततद्धितयोग इति।** एतादृशार्थज्ञापनद्वारा कृद्ग्रहणस्य तद्व्यावृत्तिः प्रयोजनमिति भावः।

प्रकरणार्थमुपसंहरति — **अतः सिद्धमिति। तादृशतद्धितासमभिव्याहृतेति।** कारकबाचकतद्धितासमभिव्याहृतकृद्योग एव षष्ठी जगतः कर्ता कृष्ण इत्यादौ। न

तादृशतद्धितयोगेऽपि — कृतपूर्वी कटम् इत्यादौ न षष्ठी इति भावः। तथा च भाष्यम् — कृतो ये कर्तृकर्मणी तत्र यथा स्यात् तद्धितस्य ये कर्तृकर्मणी तत्र मा भूत् कृतपूर्वी कटम् इति।

## कर्तृत्वद्वैविध्यम्

**कर्तृत्वम् — स्वतन्त्रकर्तृत्वम्, प्रयोज्यकर्तृत्वञ्चेत्युभयम् विवक्षितम्। तेन 'राज्ञो याजकः, चैत्रस्य पचनी स्थाली'त्यादावुभयत्र षष्ठी। द्विकर्मके तु मुख्यकर्मणि षष्ठी नियता। द्वितीये गुणभूते त्वनियता। अत एव 'नेता अश्वस्य ग्रामम्, ग्रामस्य वा इत्युभयथापि प्रयोग इत्यन्यत्र विस्तरः।**

**अयञ्च षष्ठीविधिरनित्यः, तदर्हमिति निर्देशात्। अत एव — 'धायैरामोद-मुत्तमम्' इति भट्टिरिति केचित्।**

---

कर्तृत्वं स्वतन्त्रकर्तृत्वमिति। अत्र सूत्रे कर्तृकर्मणोः कृति (पा.सू 2.3.65) इति सूत्रे कर्तृपदेन गौणमुख्यन्यायेन मुख्ये स्वतन्त्रकर्तृत्व एव षष्ठी विवक्षितेति प्रसक्तिं वारयति — **कर्तृत्वमिति**। कर्तृपदेन स्वतन्त्रकर्तृत्वं प्रयोज्यकर्तृत्वं चेत्युभयं विवक्षितम्। इतराप्रयोज्यत्वे सति कर्तृत्वं स्वतन्त्रकर्तृत्वम्। इतरप्रेरणाधीनं कर्तृत्वं प्रयोज्यकर्तृत्वम्। राज्ञो याजकः इत्यत्र राजा स्वतन्त्रकर्ता। अतः राजन्शब्दस्य कृदन्तेन याजकशब्देन योगे कर्तरि षष्ठी भवति। राजकर्तृकयागकर्ता (ऋत्विक्)। चैत्रस्य पचती स्थाली इत्यत्र पचधातोः कर्तरि ल्युट्। पाककर्त्री स्थाली। चैत्रप्रेरणया स्थाली पाककर्त्री।

परं तु अस्मिन्नुदाहरणे किंचिदालोचनीयमस्ति। राज्ञो याजक इत्यत्र या षष्ठी सा स्वतन्त्रकर्तरि इति वक्तुं शक्यते।

एवमेव चैत्रस्य पचनी (स्थाली) इत्यत्रापि स्थाल्याः पाकं प्रति प्रयोज्यकर्तृत्वं, चैत्रस्य प्रयोजककर्तृत्वमित्येवं प्रयोजककर्तर्येव षष्ठी। अत इदमुदाहरणं प्रयोज्य-कर्तर्युदाहरणमिति कथं वक्तुं शक्यते। अतोऽत्र चैत्रशब्देन राजभृत्यः कोऽपि विवक्षितः स्यादिति प्रतीयते।

**द्विकर्मके तु इत्यादि।** द्विकर्मकधातुस्थले मुख्ये कर्मणि कृद्योगे षष्ठी नियता। द्वितीये गुणभूते कर्मणि तु विकल्पेन षष्ठी भवति। गुणकर्मणि वेष्यते इति वार्तिकात्। षष्ठ्यभावपक्षे तत्र द्वितीयैव। यथा — नेता अश्वस्य ग्रामं ग्रामस्य वा इत्यत्र तृजन्तनेतृशब्दयोगे मुख्यकर्मवाचकाश्वशब्दोत्तरं षष्ठी नियता। अमुख्य-कर्मवाचकग्रामपदोत्तरं षष्ठी विकल्पेन भवति, षष्ठ्यभावपक्षे द्वितीया।

अयं षष्ठीविधिः कर्तृकर्मणोः कृति (पा.सू 2.3.65) इति सूत्रं अनित्यं, क्वचिन्न प्रवर्तते। तत्र पाणिनिप्रयोगरूपं सूत्रं ज्ञापकम्। तथा हि — तदर्हम् (पा.सू 5.1.117) इति तद्धितप्रकरणे सूत्रम्। अर्हतीत्यर्हम्, पचाद्यच्। तत् इति कर्मणि द्वितीयान्तम्। लब्धुं योग्यं भवतीति अर्हशब्दार्थः। अत्र सूत्रे "तेन तुल्यं क्रिया चेद्वतिः" इति सूत्रात् वतिः इत्यनुवर्तते। तथा द्वितीयान्तात् अर्हतीत्यर्थे वतिः स्यात् इति तत्सूत्रार्थः। विधिमर्हतीति विधिवत् पूज्यते हरिः इति उदाहरणम्। विधिं लब्धुं योग्यं हरिपूजनमिति तद्वाक्यार्थः।

अत्र अर्हधातोः कर्तर्यर्थे पचाद्यच् कृत् विहितः। तथा च कृदन्तेन योगे तच्छब्दोत्तरं कर्मणि षष्ठ्या आवश्यकतया तस्यार्हम् इति प्रयोक्तव्ये तदर्हम् इति सूत्रे तदिति द्वितीयान्तप्रयोगो ज्ञापयति कर्तृकर्मणोः कृति इत्ययं योगः अनित्य इति। तेन क्वचित् षष्ठीं विनापि प्रयोगः साधुः इति लभ्यते। अत एव "धायै-रामोदमुत्तमम्" इति भट्टिकाव्ये आमोदमिति द्वितीयान्तप्रयोगः साधुः। धायशब्दः

कृदन्तः। तद्योगे तदर्थकर्मवाचकात् आमोदशब्दात् षष्ठ्याः आवश्यकत्वात् इति भावः। धाञ्धातोः "ददातिदधात्योर्विभाषा" (पा.सू 3.2.132) इति सूत्रेण युगागमे धाय इति रूपम्। ततः तृतीयाबहुवचनान्तं धायैरिति। उत्तममामोदं धारयद्भिः वातैः इत्यर्थः।

अत्रायं प्रौढमनोरमाबालमनोरमादिव्याकरणग्रन्थस्य निष्कर्षः — ननु भट्टिकाव्ये —

> ददैर्दुःखस्य मादृग्भ्यो धायैरामोदमुत्तमम्।
> लिम्पैरिव तनोर्वातैश्चेतयः स्यात् ज्वलो न कः।।

इति श्लोकोऽस्ति। श्रीरामस्य विरहार्तस्य वाक्यमेतत्। अत्र दुःखस्येति तनोरिति च कर्मणि षष्ठी। मादृग्भ्यो दुःखं ददैः ददद्भिः, पुष्पादीनाम् आमोदं परिमलं धायैः पोषकैः, तनोः तनुं शरीरं लिम्पैः लिम्पद्भिः कः चेतयः प्राणी ज्वलः ज्वलन्निव न स्यात् इत्यर्थः। अत्र आमोदस्य उत्तमस्येति कर्मणि षष्ठ्या भाव्यम्। धायशब्दस्य पोषणार्थकधाञ्धातोः "ददातिदधात्योर्विभाषा" (पा.सू 3.2.132) इति सूत्रविहितणप्रत्ययात्मककृदन्तत्वात् इति चेत् — न। उत्तममामोदं पुष्पादीनां गृहीत्वा दुःखस्य पोषकैः इत्येवं गृहीत्वा इत्यध्याहार्य तद्योगे द्वितीयायाः उपपत्तेः इति।

## उभयप्राप्तौ कर्मणि

एवम् — 'उभयप्राप्तौ कर्मणि' (पा.सू 2.3.66) इति सूत्रात् यस्मिन् कृति उभयोः प्राप्तिः, तद्योगे कर्मण्येव षष्ठी स्यात्, कर्तरि तु तृतीयैवेत्यर्थकात् 'आश्चर्यो गवां दोहोऽगोपेने'त्यादौ कर्तरि न षष्ठी। अत्र दोह इत्ययं भावे कृत्। स च सकर्मकाकर्मकधातुसाधारणः। न तु लकारनिष्ठादिवदकर्मकधातुपरः एवेति

**तत्रोभयप्राप्तिः। अतस्तत्र पूर्वोक्तप्रकारेणैव कृतिबोधोऽनुसन्धेयः। शेषे षष्ठी-प्रकारस्तु कृष्णस्य कृतिरित्यादावेवेति ध्येयम्।**

---

अथ उभयप्राप्तौ कर्मणि (पा.सू 2.3.66) इति सूत्रव्याख्यानम्। यस्मिन् कृति कृत्संज्ञकप्रत्यये सति उभयोः कर्तरि कर्मणि च उभयोः षष्ठीप्राप्तिः तादृशकृद्योगे कर्मण्येव षष्ठी स्यात् न तु कर्तरि इति नियमार्थमिदं सूत्रम्। यथा आश्चर्यो गवां दोहोऽगोपेन। दुहधातोः भावे घञ् । स च कृत्। तथा च कृदन्तेन दोहशब्देन योगे कर्मवाचकात् गोशब्दात् कर्मणि षष्ठी। अगोपः दोहस्य कर्ता। अतः अगोपशब्दात् कर्तरि षष्ठी। गोपभिन्नकर्तृकं गोकर्मकं दोहनं अद्भुतमित्यर्थः। उभयप्राप्तिशब्दः बहुव्रीहिसमासः कृतः विशेषणम्। अतः उभयोः प्राप्तिः यस्मिन् तस्मिन् कृति इति व्याख्यातम्। उभयोः प्राप्तिः उभयप्राप्तिः तस्याम् इति षष्ठीसमासे तु ओदनस्य पाकः ब्राह्मणानां च प्रादुर्भावः इत्यत्रापि कर्मण्येव षष्ठी स्यात् न तु कर्तरि ब्राह्मणे। उभयप्राप्तिशब्दः बहुव्रीहिः कृति विशेषणम् इति आश्रयणे तु एकस्यैव कृतो निमित्तत्वलाभात् भिन्नक्रियानिरूपितकर्तृकर्मणोः षष्ठीप्राप्तौ नायं नियमः इति फलति। कृत् — कृत्संज्ञकः घञ्। तथा च दोहशब्दः भावार्थकघञ्रूपकृदन्तः। कर्मण्येवेति नियमेन कर्तुः वारणात् तत्र अनभिहिताधिकारीया कर्तरि तृतीया प्रवर्तते इति भावः।

**अथवा सर्वत्रैव घञन्ते धात्वर्थेनैव कर्माद्यन्वयः। न चैवं व्युत्पत्यन्तर-कल्पनाभिया सर्वत्रैव तदापत्तिः। 'कृतपूर्वी कटमि'त्यादौ तत्र तदनन्वयस्योप-पादितत्वात्। न चैवं व्युत्पत्त्यन्तरकल्पना। तिबर्थधात्वर्थाद्यनेकसाधारण्येन लिङ्गानन्वयिभावनाविशेष्यतासम्बन्धेन पदजन्योपस्थितेर्हेतुत्वमित्येकयैव तत्सिद्धेः। तत्पदञ्च यथाख्यातकृन्निपाततद्धितादि, तथा घञन्तो धातुरपीति, युक्तस्तस्यामपि**

**तत्र कर्माद्यन्वयः। अत्र हि भावनापदं फलप्रयोजककारकभिन्नव्यापारपरम्, नातो लडाद्यर्थे, लिङाद्यर्थे वा विशेष्यत्वापत्तिः। स चाख्यातादौ कृत्यादिरूपा भावना, घञन्तादौ तु धात्वर्थ एव, उभयोः फलप्रयोजकत्वात्। कारकभिन्नेत्युपादानात् यत्र घञन्तभिन्ने आख्यातादौ धात्वर्थस्य कारकत्वम् विवरणसिद्धम्, तत्र धात्वर्थे कारकान्वयनिवारणम्। तत्रानन्वये च 'पचत्योदनमि'त्यस्य पाकेनौदनं करोतीति विवरणे द्वितीयान्तौदनपदस्य करोत्यर्थान्वयः एव बीजम्, करोत्यर्थस्याख्यातार्थत्वेन स्थापितत्वात्। अत्रापि धात्वर्थान्वये 'ओदनं पचती'त्यस्य, ओदनस्य पाकं करोतीत्येव नियमेन विवरणापत्तिः। घञन्तस्थले च धात्वर्थस्याकारकत्वात्, लिङ्गानन्वयाच्च, सत्यपि घञा अभिहितस्य तस्योभयरूपत्वे धात्वभिहिते तस्मिन् कारकान्वयो न विरुद्धः। धातुप्रत्ययाभ्यां पाकाभिन्नः पाक इति बोधात्। अतश्चानुभवानुरोधेनैकयैव व्युत्पत्त्या तत्र तत्राख्यातार्थे, धात्वर्थे वा व्यवस्थया कारकान्वयोपपत्तेः, आश्चर्यो गवां दोहः अगोपेनेत्यत्रापि धात्वर्थे कारकान्वयो निराबाधः।**

---

अथवेत्यादि। इतः पूर्वं घञन्तस्थलेऽपि घञ्प्रत्ययलक्ष्यार्थकृतौ कारकाणामन्वय उपपादितः। इदानीं घञन्ते कारकाणां धात्वर्थे एवान्वय इति प्रतिजानीते।

नन्वेवं सति घञन्तस्थले कारकाणां धात्वर्थेऽन्वयः, अन्यत्र च प्रत्ययार्थभावनायामन्वयः इति व्युत्पत्तिद्वयं कल्पनीयं भवति। तदपेक्षया सर्वत्र घञन्ते इतरत्र च धात्वर्थ एव कारकाणामन्वयोऽस्तु इति शङ्कते — **न चैवमिति**। तत्र समाधत्ते — कृतपूर्वी कटमित्यादाविति। कृतपूर्वी कटमित्यत्र कृधात्वर्थे कर्मणः कटस्यान्वयः न संभवति। अतस्तस्य कर्मणः तद्धितार्थकृतावन्वय इति पूर्वं सप्रमाणमुपपादितम्। तेन घञतिरिक्तस्थले कारकाणां धात्वर्थे नान्वय इति स्थितम्।

नन्वेवमपि व्युत्पत्तिद्वयकल्पनापत्तिरित्याशङ्क्य एकयैव व्युत्पत्त्या कारकाणां यथायोग्यं धात्वर्थे तिङाद्यर्थे चान्वयस्य पूर्वमेवोक्तत्वादिति समाधत्ते — **तिङर्थ-धात्वर्थादीति।** अयं भावः — कारकाणां सर्वेषां तिङर्थभावनायां धात्वर्थक्रियायां तद्धितलक्ष्यार्थभावनायां चान्वयः यथायोग्यं पाश्चात्यबोधे भासते। प्राथमिकबोधे तु सर्वेषां लिङ्गानन्वयिपदोपस्थाप्यायां भावनायामन्वयः। ततश्च लिङ्गानन्वयि-भावनानिष्ठविशेष्यतासंबन्धेन पदजन्योपस्थितिः कारणमिति कल्प्यते। अत्र पदशब्देन धातुः आख्यातं तद्धितः सुब्विभक्तिः इति सर्वं ग्राह्यम्। यथा ओदनस्य पाकः इति घञन्तस्थले पदजन्योपस्थितिर्नाम धातुजन्यव्यापारोपस्थितिः सैव कारणम्। सा च विशेष्यतासंबन्धेन लिङ्गानन्वयिनि धात्वर्थे व्यापारे वर्तते। अतस्तत्र कारकान्वयो भवति, ओदनस्य पाकः ओदनकर्मकः पाकः इति। अत्र भावनापदेन किं गृह्यते इति शङ्कायामाह — अत्र हि भावनापदं फलप्रयोजक-कारकभिन्नव्यापारपरमिति। फलस्य हेतुभूतो यः कारकभिन्नो व्यापारः स एवात्र भावनापदवाच्यः। यथा — आश्चर्यो गवां दोहोऽगोपेन इत्यत्र दुहधातोः अर्थः दोहनम्। सः क्षीररूपस्य फलस्य प्रयोजको (हेतुः) भवति, तथा कारकभिन्नोऽपि भवति। अतो भावनापदेन धात्वर्थो दोहनरूपव्यापार एव गृह्यते। एवं च लडाद्यर्थो वर्तमानकालादिरपि व्यापाररूपत्वाभावात्भावनापदेन नोच्यते। नापि लिङाद्यर्थाः प्रेरणादयोऽपि भावनापदेन गृह्यन्ते।

ननु भावनालक्षणे फलप्रयोजकत्वे सति कारकभिन्नत्वे सति व्यापारत्वम् इति पूर्वोक्ते कारकभिन्नत्वे सतीति विशेषणं किमर्थम्। तत्राह — **कारकभिन्नेत्युपा-दानादिति।** यत्र घञन्तभिन्ने आख्यातादौ धात्वर्थस्य कारकत्वं विवरणसिद्धं तत्र धात्वर्थे कारकान्वयवारणम् इति। यथा ओदनं पचति इत्यत्र घञन्तभिन्ने पचति इत्यत्र धात्वर्थस्य पाकस्य यद्यपि विक्लित्तिरूपफलप्रयोजकत्वं वर्तते, तथापि तस्य

पाकेन ओदनं करोति इति विवरणात् करणकारकत्वमस्ति। कारकभिन्नव्यापारस्यैव भावनापदार्थत्वात् पाकस्य न भावनात्वम्। अपि तु तत्र तिङर्थभूता कृतिरेव भावना। एतदर्थमेव कारकभिन्नेति विशेषणम्। एवं च कारकाणां घञतिरिक्तस्थले कृतावेवान्वयः, न तु धात्वर्थे। यदि तु तिङन्तस्थलेऽपि धात्वर्थे कारकान्वयः स्यात् तदा ओदनस्य पाकं करोतीत्येव विवरणं स्यात्, न तु ओदनं पाकेन करोतीति।

**घञन्तस्थले चेति**। ओदनस्य पाकः इत्यत्र पच्धातोः पाकोऽर्थः, घञ्प्रत्ययस्यापि पाक एवार्थः। तथापि धात्वर्थे पाक एव कारकस्य कर्मणः ओदनस्यान्वयः, न तु घञर्थे। धात्वर्थस्यैव लिङ्गानन्वयित्वात्। घञर्थस्य तु लिङ्गान्वयित्वात्। तत्र धात्वर्थे ओदनस्य कर्मतयान्वयः, पाकस्य अभेदेन घञर्थे। तथा च ओदनकर्मकपाकाभिन्नः पाक इत्यन्वयबोधः। निगमयति — अतश्चेति। एवं च धात्वर्थस्य पाकस्य। घञर्थे पाकेऽभेदेनान्वयो भवति। अतश्चोभयानुरोधेन तिङन्तधातुघञन्तधातूभयानुसारेण एकयैव व्युत्पत्या लिङ्गानन्वयिभावनानिष्ठविशेष्यतासंबन्धेन पदजन्योपस्थितिः हेतुः इति एकेनैव कार्यकारणभावेन तत्र तत्र आख्यातार्थे धात्वर्थे वा व्यवस्थया कारकाणामन्वयः इति सिद्धम्। अतश्चेति। घञन्तस्थलेऽपि घञ्प्रकृतिधात्वर्थे व्यापारे एव गोकर्मकत्वस्यान्वयः। लिङ्गानन्वयित्वात्। गोकर्मकं अगोपकर्तृकं च दोहनम् आश्चर्यमिति बोध इति भावः।

**वस्तुतस्तु लिङ्गानन्वयित्वं न कारणतावच्छेदककोटिप्रविष्टम्, अपि तु प्रत्ययजन्योपस्थितित्वम्, अतश्च घञर्थकृतावेवान्वयः, वस्तुपदाभिधेयायाञ्च अनन्वयः कारकाणामिति न कोपि विरोधः। अयञ्चोभयप्राप्तौ कर्तरि षष्ठ्या निषेधः, अकप्रत्यय-अकारप्रत्ययरूपयोः स्त्रीप्रत्यययोर्योगे न भवति 'अकाकारयोः प्रयोगे प्रतिषेधो नेति वक्तव्यमि'ति वचनात्। भेदिका, विभित्सा वा रुद्रस्य जगतः।**

**भेदिका - भेदनम्। भावे अकः। बिभित्सेत्यत्र भावे अकारः। 'या तु सुटा यासुटो बाधा नेति काशिका, तस्यां सुटेति करणत्वे तृतीया। उभयविधप्रत्ययभिन्नकृति उभयप्राप्तौ तु विकल्पः कर्तरि, शेषे विभाषेति वचनात्। शोभना व्याकरणस्य कृतिः पाणिनेः पाणिनिना वा। स्त्रीप्रत्ययविषयमेवेदम्। केचिदविशेषेण विकल्पमिच्छन्ति। शब्दानामनुशासनमाचार्यस्य, आचार्येण वा। तन्मते आश्चर्यो गवां दोहोऽगोपेन, अगोपस्येत्यपि भवतीति ध्येयम्।**

---

एतावता घञन्तस्थले घञ्प्रकृतिधात्वर्थ एव कारकस्यान्वय इति निरूपितम्। अथ तत्र घञर्थकृतावन्वय इति स्वमतमाह — **वस्तुतस्त्विति**। एवं च ओदनस्य पाक इत्यत्र भावार्थकघञः लक्षणया कृतिरर्थः। तत्रैव कर्मकारकस्यान्वयः। ओदनकर्मककृतिरिति बोधः।

ननु ओदनस्य पाक इत्यादौ यदि घञर्थकृतौ कर्मकारकान्वयः, तदा तस्याः लिङ्गान्वयितया (स्त्रीलिङ्गतया) लिङ्गानन्वयिपदोपस्थापितायां भावनायामेवान्वय इति पूर्वोक्तनियमभङ्ग इत्याशङ्क्य लिङ्गानन्वयिपदजन्योपस्थितिरित्येवं कारणतावच्छेदककोटौ लिङ्गानन्वयित्वं न पदविशेषणतया निवेश्यते, अपि तु प्रत्ययजन्योपस्थितित्वमेव कारणतावच्छेदकम्। कारकादिप्रकारकभावनाविशेष्यकशाब्दबोधं प्रति विशेष्यतासंबन्धेन प्रत्ययजन्योपस्थितिः कारणमिति कार्यकारणभाव इति भावः।

**अयं चेत्यादि**। 'उभयप्राप्तौ कर्मणि' (पा.सू 2.3.66) इति सूत्रस्य नियमार्थत्वात् 'कर्तृकर्मणोः कृति' (पा.सू 2.3.65) इति सूत्रेण कर्मणि कर्तरि चोभयोः षष्ठीप्राप्तौ कर्मण्येव षष्ठी इति योऽयं नियमः प्रोक्तः अर्थात् कर्तरि षष्ठीनिषेधः तस्य प्रतिप्रसवरूपं वार्तिकम् 'स्त्रीप्रत्यययोरकाकारयोः प्रतिषेधो न' इति।

भेदिका बिभित्सा वा रुद्रस्य जगतः इति उदाहरणम्। भेदिका — भेदनम्। भिद्धातोः भावे (धात्वर्थनिर्देशे) ण्वुल्, अकादेशः। टाप्। प्रत्ययस्थात् इति सूत्रेण अकारस्य इकारादेशः। विभित्सा — भिदेः सन्नन्तात् अ प्रत्ययात् इति सूत्रेण अकारप्रत्ययः। पररूपम्। टाप्। भेदनेच्छा बिभित्सा। रुद्रकर्तृकं जगत्कर्मकं भेदनं, भेदनेच्छा वा इत्यर्थः।

ननु सुट् तिथोः (पा.सू 3.4.107) इति सूत्रे काशिकावृत्तौ — सुटा सीयुटो बाधो न इति वाक्यं दृश्यते। तत्र बाधशब्दः अकाररूपकृत्प्रत्ययान्तः। बाधस्य कर्म सीयुट्। कर्ता सुट्। ततश्च कृदन्तबाधशब्दयोगे उभयोः कर्तृकर्मणोः षष्ठीप्राप्तौ कर्मण्येव षष्ठीति नियमस्य अपवादरूपेण स्त्रीप्रत्यययोरकाकारयोर्नायं नियमः इति वार्तिकप्रवृत्त्या कर्तर्यपि षष्ठ्याः संभवेन सुटः सीयुटो बाधो नेति प्रयोक्तव्यम्। सुट्-कर्तृकसीयुट्-कर्मकबाधो नेति बोधसंभवात् इति शङ्काया-माह — **या तु सुटा इति**। तत्र काशिकाकारस्य सुटः करणत्वं विवक्षितम्। सुट्करणकसीयुट्कर्मकबाधो नेति बोधः। विवक्षातः कारकाणि भवन्तीति न्यायात् इति समाधानम्। तथा च सुटेति करणे तृतीया। सीयुट इति कर्मणि षष्ठीति भावः।

अपि च अकाकारभिन्नप्रत्यययोगे शेषे विभाषा इति वचनेन उभयप्राप्तौ विकल्पेन षष्ठी भवति, षष्ठ्यभावे कर्तरि तृतीया। यथा शोभना व्याकरणस्य कृतिः पाणिनेः पाणिनिना वा इति। अत्र कर्तृत्वस्य संबन्धत्वविवक्षायां षष्ठी। कर्तृत्वत्वेन विवक्षायां तृतीया। इदं शेषे विभाषा इति वचनमपि स्त्रीप्रत्ययविषयकमेव। अत एव कृतिः इति प्रयुक्तम्।

केचित् शेषे विभाषा इति सूत्रेण अविशेषेण अकाकाररूप एव कृत् इति विशेषं विना सामान्येन कृद्योगे कर्तृकर्मोभयप्राप्तिस्थले विकल्पम् इच्छन्ति — यथा

शब्दानामनुशासनमाचार्यस्य आचार्येण वा इति। तन्मते आश्चर्यो गवां दोहोऽगोपेन अगोपस्य वा इत्युभयं साधु।

## क्तस्य च वर्तमाने

एवम् — 'क्तस्य च वर्तमाने' (पा.सू 2.3.37) इति सूत्रात् वर्तमानार्थकक्तस्य योगे षष्ठी स्यादित्यर्थकात्, राज्ञां मतः, बुद्धः, पूजितो वेत्यत्र षष्ठी। अत्र "मतिबुद्धिपूजार्थेभ्यश्च" (3.2.188) इत्यनेन वर्तमाने क्तः, तद्योगात् राज्ञामिति कर्तरि षष्ठी। कर्मणः क्तप्रत्ययेनाभिहितत्वात्। राज्ञो मतमित्येवं नपुंसके, भावेऽपि च अनेनैव सूत्रेण षष्ठी।

न च 'कर्तृकर्मणोः कृति' (पा.सू 2.3.65) इत्यनेन गतार्थत्वम्। 'न लोकाव्ययनिष्ठा (पा.सू 2.3.69) इति' वक्ष्यमाणवचनेन निष्ठाविषये पर्युदस्ताया निष्ठाविशेषप्रतिप्रसवार्थत्वात्। नचैवं पूजितो यस्सुरासुरैरिति तृतीयानापत्तिः। तत्रत्यक्तप्रत्ययस्य भूतार्थकत्वेनोपपत्तेः। न हि मतिबुद्धिपूजार्थेभ्यो वर्तमान एव क्तः। अतीतार्थे धात्वर्थे उक्तधातूनां क्तान्तानां लोके प्रयोगदर्शनेन तद्वचनस्य भूतार्थकक्तबाधकत्वायोगात्। न चैवं वर्तमानार्थकमत्यादिधातूत्तरक्तप्रत्ययभिन्नप्रत्यययोगे 'छात्रस्य हसितमि'त्यादौ षष्ठ्यनापत्तिः। तस्याश्शेषषष्ठीत्वेनोपपत्तेः। अत एव कर्तृत्वत्वेन कर्तृत्वविवक्षायां तृतीयैव।

---

एवं क्तस्य च वर्तमाने (पा.सू 2.3.67) इति सूत्रस्य वर्तमानार्थकक्तप्रत्ययान्तेन योगे षष्ठी स्यात् इत्यर्थः। राज्ञां मतः बुद्धः पूजितो वा इति उदाहरणम्। 'मतिबुद्धिपूजार्थेभ्यश्च' (पा.सू 3.2.188) इति सूत्रेण वर्तमानेर्थे मतिबुद्धिपूजार्थकेभ्यो धातुभ्यः क्तप्रत्ययो विहितः। तद्योगे च कर्तरि षष्ठी भवति। तत्र मतिशब्देन

इच्छा गृह्यते, न तु बुद्धिः। बुद्धेः पृथगुपादानात्। राजकर्तृकवर्तमानेच्छाविषयः, राजकर्तृकवर्तमानबुद्धिविषयः, राजकर्तृकवर्तमानपूजाविषयः इति बोधः। अत्र क्तप्रत्ययेन कर्मणः अभिहितत्वात् राज्ञः मत इत्यादौ कर्मणि षष्ठी न भवति।

अपि च 'नपुंसके भावे क्तः' (पा.सू 3.3.114) इत्यनेन विहितो यः क्तप्रत्ययः तद्योगेऽप्यनेनैव सूत्रेण षष्ठी भवति। न च कर्तृकर्मणोः कृति इत्यनेनैव उक्तस्थलेषु षष्ठ्याः प्राप्तेः इदं सूत्रं व्यर्थमिति वाच्यम्। 'न लोकाव्ययनिष्ठा' इति सूत्रेण निष्ठासामान्ययोगे निषिद्धायाः षष्ठ्याः निष्ठाविशेषरूपे वर्तमानार्थकक्तप्रत्यये प्रतिप्रसवार्थत्वात्।

न चैवं पूजितो यः सुरासुरैः इति तृतीयानुपपत्तिरिति वाच्यम्। तत्रत्यक्तप्रत्ययस्य भूतकालार्थकत्वेन तद्योगे कर्तरि तृतीयायाः उपपत्तेः। सुरासुरकर्तृकभूतकालिकपूजाविषयो यः इति विवक्षणात्। अपि च गतिबुद्धिपूजार्थेभ्यो धातुभ्यो वर्तमानकाल एव क्तः इति नियमो नास्ति। अतीतकालिकधात्वर्थे उक्तधातूनां क्तान्तानां लोके प्रयोगदर्शनेन तत्सूत्रस्य क्तस्य च वर्तमाने इत्यस्य भूतार्थकक्तप्रत्ययबाधकत्वायोगात्।

न चैवं वर्तमानार्थकमत्यादिधातूत्तरक्तप्रत्ययभिन्नप्रत्यययोगे छात्रस्य हसितम् इत्यादौ षष्ठ्यनापत्तिरिति वाच्यम्। तस्याः शेषषष्ठीत्वेनोपपत्तेः। छात्रकर्तृकहासः इति न बोधः, अपि तु छात्रसंबन्धी हास इति बोध इति तात्पर्यात्। अत एव कर्तृत्वस्य संबन्धत्वविवक्षायां षष्ठी, कर्तृत्वत्वेन विवक्षायां तु तृतीयैवेति भावः।

भूतार्थकक्तप्रत्ययस्याप्यधिकरणवाचित्वे पूर्ववत् षष्ठीप्रतिप्रसवः अधिकरणवाचिनश्च (पा.सू 2.3.68) इति सूत्रात्। तत्राप्यकर्मकेभ्यः कर्तर्येव षष्ठी। इदमेषां शयितमिति। शयितम् — शयनाधिकरणम्। क्तप्रत्ययेनोक्तत्वात्, इदमिति प्रथमा,

**सकर्मकेभ्यस्तु अधिकरणे क्तप्रत्यये कृते कर्तृकर्मणोर्द्वयोरपि षष्ठी, अनभिहितत्वाविशेषात्। इदमेषां भुक्तमोदनस्य। भुक्तम्-भोजनस्थानम्, न तु कर्मण्येव। 'उभयप्राप्तौ कर्मणि' इत्यस्य 'कर्तृकर्मणोः कृतीत्येतदुत्तरपाठेन तत्सूत्रविहितषष्ठ्या एव तेन नियमात्।**

---

अथ 'अधिकरणवाचिनश्च' (पा.सू 2.3.68) इति सूत्रव्याख्यानम् — भूतार्थक्तप्रत्ययस्यापि अधिकरणवाचित्वे पूर्ववत् षष्ठीप्रतिप्रसवः अधिकरणवाचिनश्चेति सूत्रम्। तत्रापि अकर्मकेभ्यः कर्तर्येव षष्ठी — इदमेषां शयितम् इति। इदम् एतत्कर्तृकशयनाधिकरणम् इति। शयिनं शयनाधिकरणम्। क्तप्रत्ययेनाधिकरणस्योक्तत्वात् इदम् इति प्रथमा। अधिकरणे कृदादिभिरनभिहित एव सप्तम्या अनुशासनात्।

सकर्मकेभ्यस्तु धातुभ्यः अधिकरणे क्तप्रत्यये कृते कर्तृकर्मणोर्द्वयोरपि षष्ठी अनभिधानाविशेषात्। यथा — इदमेषां भुक्तमोदनस्य। भुक्तं — भोजनाधिकरणम्। इदं एतत्कर्तृक — ओदनकर्मक — भोजनाधिकरणम् इति बोधः। न तु कर्मण्येव षष्ठीति नियमोऽत्र प्रवर्तते। उभयप्राप्तौ कर्मणि इति सूत्रस्य कर्तृकर्मणोः कृति इत्येतदुत्तरं पाठेन तत्सूत्रविहितषष्ठ्या एव तेन नियमकरणात् इति।

## न लोकाव्ययनिष्ठाखलर्थतृनाम्

**तदेवम्-कृद्योगे सर्वत्र कर्तृकर्मणोः कृति इत्यनेन षष्ठीप्राप्तौ न लोकाव्ययनिष्ठाखलर्थतृनाम् (पा.सू 2.3.69) इति सूत्रेण तत्पर्युदासः। लः — तदादेशाः, ते च कृत्संज्ञकाः, शतृ-शानजादय एवेह गृह्यन्ते, तिङः कृद्ग्रहणेनैव निवृत्तत्वात्, तेन ओदनं पचन्, पचमानः इत्यादौ न षष्ठी, अपि तु द्वितीयैव। अत्र च लकारग्रहणेन**

तत्कार्यापन्नानामपि ग्रहणम्। तेन किकिनोर्लादेशत्वाभावेऽपि लिट्कार्यापन्नत्वात् विशेषातिदेशे च सामान्यातिदेशस्यावश्यकत्वात्, तयोरपि ग्रहणम्। अत एव च 'बभ्रिर्वज्रमि'त्यादिप्रयोगा अपि सङ्गच्छन्ते। उ, कटं चिकीर्षुः कन्यामलङ्करिष्णुः। उक — दैत्यान् घातुकः। कमेर्भाषायामनिषेधः इति वचनात्तु लक्ष्म्याः कामुको हरिरित्यत्र षष्ठी। अव्ययम्-कटं कृत्वा। तोसुन्कसुनोरप्रतिषेधः इति वचनाच्च — पुरा वत्सानामपाकर्तोः, पुरा क्रूरस्य विसृपो विरप्सिन् (तै.सं 1-5-3 मा.सं 1-26 का.सं 1-45) इत्यादौ षष्ठी। निष्ठा-ओदनं भुक्तवान्, चैत्रेण कृतम्। खलर्थः — सुकरः प्रपञ्चो हरिणा। तृन्निति-प्रत्याहारः, स च शतृ-शानचाविति तृशब्दादारभ्यातृनो नकारात्। तेन शानन् प्रभृतीनामपि ग्रहणम्। शानन् - 'सोमं पवमानः'। चानश् — 'आत्मानं मण्डयमानः। शतृ - वेदमधीयन्'। तृन् — 'लोकान् कर्ता। द्विषधातूत्तरशतृयोगे तु विकल्पेन षष्ठी। 'द्विषश्शतुर्वा' (वा. 1522) इति वचनात्। मुरस्य, मुरं वा द्विषन्। सर्वश्चायं कारकषष्ठ्याः पर्युदासः, न तु शेषषष्ठ्याः। आनन्तर्येण तदेकवाक्यताया एव न्याय्यत्वात्। अत एव ब्राह्मणस्य कुर्वन्, नरकस्य जिष्णुः, छात्रस्य हसितमित्यादिप्रयोगा अपि सङ्गच्छन्ते।

---

अथ न लोकाव्ययनिष्ठा (पा.सू 2.3.69) इति सूत्रं व्याचष्टे — तदेवं कृद्योगे सर्वत्र कर्तृकर्मणोः कृति इति सूत्रेण षष्ठीप्राप्तौ न लोकाव्ययनिष्ठाखलर्थतृनाम् (पा.सू 2.3.69) इति सूत्रेण तत्पर्युदासः। ल, उ, उक, अव्यय, निष्ठा, खलर्थ, तृन् एतेषां प्रयोगे षष्ठी न स्यात् इति सूत्रार्थः। लः — लादेशाः। ते च कृत्संज्ञकाः शतृशानजादय एव गृह्यन्ते। तिङः कर्तृकर्मणोः कृति इति सूत्रे कृद्ग्रहणेनैव निवृत्तत्वात। तिङा योगे कर्तृकर्मणोः षष्ठ्याः अप्रसक्तेः। एवं च कृत्संज्ञकला-

देशयोगे कर्तृकर्मणोः षष्ठी न स्यात् इति फलितम्। तेन ओदनं पचन् पचमानः इत्यादौ ओदनपदोत्तरं कर्मणि षष्ठी न भवति।

अत्र च लकारग्रहणेन तत्कार्यापन्नानामपि ग्रहणं भवति। यत्र केचन प्रत्ययाः लादेशा न भवन्ति, किं तु लकारनिमित्तककार्यातिदेशस्तत्र वर्तते तादृशप्रत्ययानामपि लकारपदेन ग्रहणं भवति। यथा — आदृगमहनजनकिकिनौ लिट् च (पा.सू 3.2.171) इत्यत्र किकिनौ प्रत्ययौ, तयोश्च लिड्वमतिदिश्यते। तदतिदेशस्य द्वित्वादिकं प्रयोजनम्। अत्र किकिनोः लिड्कार्यापन्नत्वात् लादेशत्वाभावेऽपि सामान्यलकारकार्यापन्नत्वं भवत्येव। तत्र विशेषातिदेशे सामान्यातिदेशस्य आवश्यकत्वात् तयोः किकिनोरपि ग्रहणं भवति। अत एव च 'बभ्रिर्वज्रम्' इत्यत्र वज्रशब्दात् षष्ठी न भवति, अपि तु द्वितीयैव।

उ-उ इत्यनेन सनाशंसभिक्ष उः (पा.सू 3.2.168) इत्यनेन विहितस्य उप्रत्ययस्य ग्रहणम्। तेन कटं चिकीर्षुः इत्यत्र षष्ठीप्रतिषेधः।

उक — दैत्यान् धातुकः इत्यत्र उकप्रत्ययेन योगेऽपि कर्मणि षष्ठ्याः प्रतिषेधः। उकप्रतिषेधस्य प्रतिषेधः 'उकप्रतिषेधे कमेर्भाषायामप्रतिषेधः' इति वार्तिकेन उच्यते। अत एव लक्ष्म्याः कामुको हरिः इत्यत्र षष्ठी।

अव्ययम् — कटं कृत्वा इत्यत्र क्त्वाप्रत्ययान्तेन अव्ययेन योगात् कर्मणि षष्ठी न भवति। परं तु "अव्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेधः" (वा. 1520) इति वार्तिकात् "पुरा वत्सानामपाकर्तोः" इति तोसुन् प्रत्ययान्तयोगे वत्सानामिति कर्मणि षष्ठ्येव भवति, न तु तत्प्रतिषेधः।

एवं "पुरा क्रूरस्य विसृपो विरप्सिन्" इत्यत्र विसृपः इति कसुनन्तयोगेऽपि क्रूरस्येति षष्ठी भवति।

निष्ठा ओदनं भुक्तवान्, चैत्रेण कृतम्। खलर्थः सुकरः प्रपञ्चो हरिणा। तृन् — अयं प्रत्याहारः। स च लटः शतृशानचावप्रथमासमानाधिकरणे (पा.सू 3.2.124) इति मध्ये ये तृन् इति सूत्रपर्यन्तं विहिताः तेषामपि ग्रहणं भवति। शानच् — सोमं पवमानः। चानश् — आत्मानं मण्डयमानः। शतृ — वेद-मधीयन्। तृन् — लोकान् कर्ता।

द्विषधातूत्तरशतृयोगे तु विकल्पेन षष्ठी। द्विषः शतुर्वा इति वचनात्। मुरं मुरस्य वा द्विषन्।

सर्वश्चायं कारकषष्ठ्याः पर्युदासः, न तु शेषषष्ठ्याः। 'अनन्तरस्य विधिर्वा भवति प्रतिषेधो वा' इति न्यायात्। अत एव ब्राह्मणस्य कुर्वन्, नरकस्य जिष्णुः छात्रस्य हसितम् इत्यादिप्रयोगा अपि संगच्छन्ते। अत्र संबन्धार्थे षष्ठी।

## अकेनोर्भविष्यदाधमर्ण्ययोः

**एवम् — 'अकेनोर्भविष्यदाधमर्ण्ययोः' (पा.सू 2.3.70) इति सूत्रात् भविष्यत्यकस्य भविष्यदाधमर्ण्यार्थेनश्च योगे षष्ठी न स्यादित्यर्थकात् 'एधानाहारकः व्रजति, व्रजं गामी शतं दायी'त्यादौ द्वितीयैव, न षष्ठी। अत्र भविष्यत्कालविहिताकस्यैव ग्रहणान्न कालसामान्यविहिताके ओदनस्य पाचकः इत्यादौ द्वितीया। अत्र च व्याख्यानवशात् न यथासंख्यमन्वयः, अपितु अकस्य भविष्यत्येव। इनस्तु उभयोः। तेन गामीत्ययं भविष्यतीनिः, दायीत्ययमाधमर्ण्ये णिनिः।**

---

अकेनोर्भविष्यदाधमर्ण्ययोः (पा.सू 2.3.70) इति सूत्रस्य अयमर्थः — "न लोक" इति सूत्रात् नेत्यनुवर्तते। अकश्च इन् च तयोः इति विग्रहः। भविष्यच्च आधमर्ण्यं च तयोः इति द्वन्द्वः। यथासंख्यं नेष्यते, भाष्यात्। भविष्यति आधमर्ण्ये

च वर्तमानयोः अकेनोर्योगे षष्ठी नेति फलितम्। तत्र आधमण्यांशः अकेन नान्वेति। "आवश्यकाधमर्ण्ययोर्णिनिः" (पा.सू 3.3.170) इत्युक्तेः। अतो भविष्यदंश एवाकेनान्वेति। इनस्तु भविष्यदाधमर्ण्यकस्याकस्य, भविष्यदर्थकस्य आधमर्ण्यार्थकस्य च इनश्च योगे षष्ठी न स्यात् इति सूत्रार्थः।

उदाहरणम् — "सतः पालकोऽवतरति"। सज्जनान् पालयिष्यन् हरिः प्रादुर्भवतीत्यर्थः। तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम् (पा.सू 3.3.10) इति भविष्यति ण्वुल्। तत्र भविष्यति गम्यादयः (पा.सू 3.3.3) इति सूत्रात् भविष्यतीत्यस्यानुवृत्तेः।ओदनस्य पाचकः इत्यत्र तु न षष्ठीनिषेधः। ण्वुल्तृचौ इत्यस्य भविष्यति विधानाभावात्।

व्रजं गामी — "गमेरिनिः" इति औणादिकः इनिः। स च भविष्यति विहितः। व्रजकर्मकभविष्यत्कालिकगमनाश्रय इति बोधः। व्रजः — गोष्ठम्।

शतं दायी। ऋणत्वेन गृहीतं शतमृणं प्रत्यर्पयतीत्यर्थः। "आवश्यकाधमर्ण्ययोः" (पा.सू 3.3.170) इति आधमर्ण्ये णिनिः। तस्य भविष्यति विधानाभावात् भविष्यदर्थकतया गतार्थत्वं न शङ्क्यम्।

अथ मूलार्थः संगृह्यते। भविष्यति काले विहितस्याकस्य भविष्यति आधमर्ण्ये च विहितस्य इनश्च प्रयोगे षष्ठी न भवतीत्यर्थः। अत्र यथासंख्यानुदेशो न भवति व्याख्यानात्। तेन एधान् आहारको व्रजतीत्यत्र भविष्यदर्थकाकप्रत्यययोगात् षष्ठी न भवति, अपि तु द्वितीयैव। व्रजं गामीत्यत्र भविष्यत्यर्थे इनिप्रत्ययः। तेन योगे षष्ठी न भवति। शतं दायी इत्यत्र "आवश्यकाधमर्ण्ययोर्णिनिः" (पा.सू 3.3.170) इत्यनेन आधमर्ण्ये णिनिः। तेनापि योगे षष्ठी न भवति। अपि तु द्वितीयैव। अत्र सूत्रे भविष्यत्कालविहिताकस्यैव ग्रहणात् कालसामान्ये विहितो योऽकः ओदनस्य पाचकः इत्यादौ तत्र प्रकृतसूत्रेण षष्ठीप्रतिषेधो न भवतीति भावः।

## कृत्यानां कर्तरि वा

एवम् — 'कृत्यानां कर्तरि वा' (पा.सू 2.3.71) इति सूत्रे भाष्यकारेण योगविभागकरणात् कृत्यानामित्यस्य भिन्नसूत्रत्वप्रतीतेः, तत्र चोभयप्राप्तौनेति पूर्वसूत्रस्थद्वयानुकर्षणात्, उभयोः कर्तृकर्मणोरनभिधानप्रयुक्तषष्ठीप्रसक्तौ कृत्यानां योगे षष्ठी नेत्यर्थकात् 'नेतव्या व्रजं गावः कृष्णेने'त्यत्र न षष्ठी, अपि तु द्वितीया, तृतीया च। अत्र हि नयतेर्द्विकर्मकत्वात् मुख्यकर्मणः कृत्येन अभिधानात् गोषु प्रथमा। अमुख्यकर्मणो व्रजस्य त्वनभिधानात् तत्र द्वितीया। यत्र तु कर्तृकर्मणोर्मध्येऽन्यतरस्य कृत्प्रत्ययेनाभिधानान्नोभयत्र प्राप्तिः, तादृशकृत्प्रत्ययस्य योगे कृद्योगनिमित्तकषष्ठ्या नियमेन प्रसक्तौ कृत्यानां कर्तरि वा इति सूत्रेण कर्तृषष्ठ्या विकल्पविधानात्, कर्तव्यमिदं कृष्णेन कृष्णस्य वा। न च भावकर्मणोरेव कृत्यविधानात्। तत्र च कर्मणः कृत्येनाभिधानादेव परिशेषात् कर्तर्येव विकल्पविध्युपपत्तेः कर्तृग्रहणवैयर्थ्यम्। 'भव्यगेय' (पा.सू 3.4.68) ति सूत्रेण कर्तर्यपि यत्प्रत्याख्यकृत्यविधानात् तद्योगे कर्मण्यनभिहितत्वेन षष्ठीप्राप्तेः। तन्न। विकल्पव्यावृत्त्यर्थं कर्तृग्रहणोपपत्तेः। यथा गेयो माणवकः साम्नाम्। अत्र गेयेति कर्तरि कृत्यः। सामकर्मकगानकर्ता माणवकः इति शाब्दबोधः।

---

अथ 'कृत्यानां कर्तरि वा' (पा.सू 2.3.71) इति सूत्रव्याख्यानम् "कृत्यानां कर्तरि वा" (पा.सू 2.3.71) इति सूत्रे भाष्यकारेण योगविभागकरणात् कृत्यानाम् इत्यस्य भिन्नसूत्रत्वम्, कर्तरि वा इत्यस्य भिन्नसूत्रत्वं चावगम्यते। तत्र प्रथमसूत्रे "उभयप्राप्तौ कर्मणि" (पा.सू 2.3.66) इति सूत्रात् उभयप्राप्तौ इति "न लोक" (पा.सू 2.3.69) इति सूत्रात् नेति च अनुवर्तते। उभयोः कर्तृकर्मणोः अनभिधानप्रयुक्तषष्ठी प्रसक्तौ कृत्यानां योगे षष्ठी न स्यात् इत्युच्यते। ततश्च "नेतव्या व्रजं

गावः कृष्णेन" इत्यत्र व्रजपदोत्तरं न षष्ठी, अपि तु द्वितीया। एवं कृष्णपदोत्तरं न कर्तरि षष्ठी, अपि तु तृतीया। अत्र हि नयतेः द्विकर्मकत्वात् मुख्यकर्मणः कृत्येनाभिधानात् गोशब्दोत्तरं प्रथमा। अमुख्यकर्मणो व्रजस्य तु अनभिधानात् तत्र द्वितीया।

यत्र तु कर्तृकर्मणोर्मध्येऽन्यतरस्य कृत्प्रत्ययेनाभिधानात् नोभयत्र प्राप्तिः, तादृशकृत्प्रत्यययोगे कृद्योगषष्ठ्याः नियमेन प्रसक्तौ "कृत्यानां कर्तरि वा" इति द्वितीययोगेन कर्तरि षष्ठी विकल्पेन विधीयते। कर्तव्यमिदं कृष्णेन कृष्णस्य वा इति उदाहरणम्।

न च भावकर्मणोरेव कृत्यप्रत्ययविधानात् तत्र च कर्मणः कृत्प्रत्ययेनाभिधानादेव षष्ठ्याः अप्राप्तेः परिशेषात् कर्तर्येव विकल्पविधेरुपपत्तेः कर्तृग्रहण-वैयर्थ्यम् इति वाच्यम्। "भव्यगेय" (पा.सू 3.4.68) इत्यादिसूत्रेण कर्तर्यपि यत्प्रत्ययाख्यकृत्यविधानात् तद्योगे अनभिहिते कर्मणि षष्ठीप्राप्तेः, तत्र विकल्प-व्यावृत्त्यर्थं कर्तृग्रहणोपपत्तेः। यथा "गेयो माणवकः साम्नाम्" इति। अत्र गेय इति कर्तरि कृत्यः। सामकर्मकगानकर्ता माणवक इत्यर्थः।

## तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्

एवम् — 'तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्' (पा.सू 2.3.72) इति सूत्रात् तुल्यार्थकैस्तुलोपमाशब्दभिन्नैश्शब्दैर्योगे तृतीया स्यात्, पक्षे षष्ठीत्यर्थकात् तुल्यः, सदृशः, समो वा कृष्णेन, कृष्णस्य वेत्यत्र पक्षे षष्ठी। अत्रातुलोपमाभ्यामिति द्विवचनं छान्दसम्। अन्यथा विशेषणविभक्तित्वेन बहुवचनापत्तेः। अयञ्च — मण्डूकप्लुत्या शेषषष्ठ्या एव पाक्षिकत्वकल्पको विधिः, न तु कारकषष्ठ्याः। तुल्यशब्दस्य तद्धितान्तत्वेन कारकषष्ठया अप्राप्तेः। तुलोपमाशब्दयोगे तु

शेषषष्ठयेव। अत एव तुला, उपमा वा कृष्णस्य नास्तीत्यत्र शेषे तृतीयाया अविधानान्न तृतीया।

कथं तर्हि तुलां यदारोहति दन्तवाससा (कु.सं. 5-35)

'स्फुटोपमं भूतिसितेन शम्भुना' मा.1-4 इत्यादिकाव्ये तुलादिशब्दयोगे तृतीयेति चेत्, तस्याः तोलनोपमानादिरूपधात्वर्थं प्रति करणत्वेनोपपत्तेः, सहयोगनिमित्तिका वेयं तृतीया। साहित्यञ्च निरूपकत्वम्, तस्य च तत्त्वेन तृतीयातो बोधः। प्रकृते तु शेषत्वार्थकतृतीयायाः पर्युदास इति, न कश्चिद्विरोधः।

अत्र तुल्यार्थैरिति बहुवचननिर्देशेनैव तुल्यपर्यायाणां ग्रहणेपपत्तौ अर्थग्रहणं पदान्तरनैरपेक्ष्येण बोधकपरम्। तेन गौरिव गवयः, यथा गौः, तथा गवय इत्यादौ न षष्ठ्यादिः। प्रथमोत्पत्तिप्रयोजकन्तु पूर्वमेवोक्तम्।

---

एवं "तुल्यार्थैरतुलोपमाभ्यां तृतीयान्यतरस्याम्" (पा.सू 2.3.72) इति सूत्रात् तुल्यार्थकैः तुला उपमा इत्यादिशब्दभिन्नैः शब्दैर्योगे तृतीया स्यात् पक्षे षष्ठी इत्यर्थकात् "तुल्यः सदृशः समो वा कृष्णेन कृष्णस्य वा" इत्यत्र विकल्पेन षष्ठी। तुल्यार्थैः इति विशेष्यवाचकं पदम्। अतुलोपमाभ्यामिति तद्विशेषणम्। विशेष्यविशेषणवाचकपदयोः समानवचनकत्वमिति नियमात् अतुलोपमैः इति बहुवचनेन भाव्यम्। द्विवचनप्रयोगः छान्दसः। छन्दोवत्सूत्राणि भवन्तीति न्यायात् व्यत्ययो बहुलमिति सूत्रेण द्विवचनस्य छान्दसत्वान्न दोषः।

इदं च सूत्रं मण्डूकप्लुत्या शेषषष्ठ्या एव विकल्पविधायकम्। न तु कारकषष्ठ्याः। तुल्यशब्दस्य यत्प्रत्ययरूपतद्धितान्तत्वेन कारकषष्ठ्याः अप्राप्तेः। "कर्तृ-

कर्मणोः कृति" (पा.सू 2.3.65) इत्यादिना कृदन्तयोग एव कारकषष्ठ्याः प्राप्तेः। अत एव तुला उपमा वा कृष्णस्य नास्तीत्यत्र शेषे संबन्धसामान्ये तृतीयायाः अविधानात् न तृतीया।

ननु यदि तुला उपमा इति शब्दाभ्यां योगे तृतीया न साधुः, तदा "तुलां यदारोहति दन्तवाससा" (कुमारसंभवम् 5-35) इति तृतीयाप्रयोगः तुलाशब्दयोगे दन्तवाससा इति कालिदासस्य कथम्। एवम् उपमा इति शब्दयोगे "स्फुटोपमं भूतिसितेन शम्भुना" इति तृतीयान्तप्रयोगः कथं माघकवेः इत्याशङ्क्य, तत्र तृतीयायाः तोलनोपमानरूपधात्वर्थं प्रति करणत्वविवक्षया तृतीया, न तु तुलोपमारूपशब्दयोगनिमित्तकतृतीयेति समाधत्ते — कथं तर्हीत्यादिना।

एतदुक्तं भवति — "तुल उन्माने" इति चौरादिकात् धातोः णिचि अस्मिन्नेव सूत्रे णेर्लुक् भावे अङ्प्रत्ययस्च निपात्येते। तोलनं तुला। एवम् उपपूर्वकात् माङ्माने इति धातोः "आतश्चोपसर्गे" इति सूत्रेण भावे अङ् – उपमा – उपमितिः। ततश्च तोलनोपमितिरूपधात्वर्थं प्रति करणत्वविवक्षया तृतीया समर्थनीयेति।

अथवा महाकविप्रयोगे सह इति शब्दमध्याहृत्य तद्योगनिमित्तिका तृतीयेति समर्थनीयम्। साहित्यं च निरूपकत्वम्। दन्तवासोनिष्ठनिरूपकताकतुला-मित्यर्थः। निरूपकत्वत्वेन निरूपकत्वं तृतीयया बोध्यते। प्रकृतसूत्रे तु तुलोपमाभ्यां योगे शेषत्वार्थकतृतीयायाः पर्युदासः, न तु साहित्यार्थकतृतीयाया इति न कश्चित् विरोधः।

ननु तुल्यैः इति बहुवचननिर्देशेनैव तुल्यपर्यायाः ये तुल्यः सदृशः समः इत्यादयः शब्दाः तेषां ग्रहणे सिद्धे सति अर्थग्रहणस्य किं प्रयोजनमिति शङ्का।

तत्र समाधानं — अर्थग्रहणं पदान्तरनैरपेक्ष्येण बोधपरमिति। अयमाशयः — अत्र बहुवचननिर्देशेनैव तुल्यपर्यायाणां ग्रहणे सिद्धे सति पुनरर्थग्रहणं ज्ञापयति यत् समभिव्याहृतपदान्तरापेक्षां विना सादृश्यबोधकाः ये शब्दाः तुल्यसदृशसम-शब्दादयः त एव गृह्यन्ते। ये तु इव तथा इत्यादयः सादृश्यबोधकाः शब्दाः ते तु तात्पर्यग्राहकत्वात् पदान्तरसमभिव्याहारेणैव बोधयन्ति। तेषामर्थग्रहणेन ग्रहणं न भवति। अत एव गौरिव गवयः, यथा गौस्तथा गवय इत्यत्र तृतीया षष्ठी च न भवतः। प्रथमैव भवति। प्रथमा प्रयोजकं तु "यद्वृत्ति कारकत्वं स्वान्वयि-क्रियाप्रतिपादकेन पदेन वृत्त्या बोध्यते तत्त्वमभिहितत्वमिति" पूर्वमेवोक्तमिति भावः। निपातानाम् इवादीनां द्योतकत्वमिति नये तेषां सादृश्यबोधकत्वाभावात् न तद्योगे तृतीयापत्तिरिति फलितम्।

## चतुर्थी चाशिष्यायुष्येत्यादिसूत्रम्

**एवम् — 'चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः' (पा.सू 2.3.73) इति सूत्रादायुष्याद्यार्थकशब्दयोगे आशिषि शेषे चतुर्थी, पक्षे षष्ठीत्यर्थकात् आयुष्याद्यस्मै, अस्य वा भूयादिति चतुर्थी, पक्षे षष्ठी। आयुष्यम्-चिरंजीवितम्, भद्रम्-भद्रमेव, उभयोः पर्यायत्वेऽपि आयुष्यादिपदानामर्थपरत्वख्यापनाय उभयो-पादानम्।**

**यत्तु — व्याख्यानात् सर्वत्रार्थग्रहणोपपत्तेर्मद्रभद्रयोरन्यतरन्न पठनीयमिति कैश्चिदुक्तम्। तद् भाष्यकारेण एतत्सूत्रस्याऽव्याख्यानादुपेक्षितम्। कुशलम्-निरामयम्, सुखम्-शम्। अर्थः-प्रयोजनम्। हितम्-पथ्यम्। न च 'हितयोगे चतुर्थी वक्तव्ये'ति वार्तिकादेव तत्सिद्धेः हितग्रहणवैयर्थ्यम्। अनाशिषि तेन तन्नियमेऽपि**

**एतस्याशिषि विकल्पविधायकत्वोपपत्तेः। अत एव आयुष्यादौ अनाशिषि षष्ठ्येव। चैत्रस्य आयुष्यमस्तीति। सर्वथा षष्ठ्यर्थः सर्वोऽप्याख्यातार्थेऽन्वेतीति सिद्धम्।**

**इति श्रीमदाचार्यखण्डदेवविरचिते भाट्टतन्त्ररहस्ये**
**षष्ठीविभक्त्यर्थविचारः समाप्तः**

---

एवं 'चतुर्थी चाशिष्यायुष्यमद्रभद्रकुशलसुखार्थहितैः' (पा.सू 2.3.73) इति सूत्रात् आयुष्याद्यर्थकशब्दयोगे आशिषि शेषे चतुर्थी स्यात्, अन्यतरस्याम् इत्यनुवृत्त्या पक्षे षष्ठी स्यात् इत्यर्थकात् आयुष्यादि अस्मै अस्य वा भूयात् इति चतुर्थी, पक्षे षष्ठी। आयुष्यं चिरं जीवनम्। मद्रं भद्रमेव। उभयोः मद्रभद्रशब्दयोः पर्यायत्वेऽपि आयुष्यादिपदानामर्थपरत्वख्यापनादुभयोपादानम्।

यत्तु व्याख्यानात् सर्वत्रार्थपरत्वोपपत्तेः मद्रभद्रयोः अन्यतरन्न पठनीयमिति कैश्चिदुक्तम्, तत् भाष्यकारैः एतत्सूत्रस्याव्याख्यानात् उपेक्षितम्। कुशलम् - निरामयम्। सुखं - शम्। अर्थः प्रयोजनम्। हितं - पथ्यम्।

न च "हितयोगे चतुर्थी वक्तव्या" वार्तिकादेव तत्सिद्धेः हितग्रहणवैयर्थ्यमिति वाच्यम्। अनाशिषि तेन वार्तिकेन चतुर्थीनियमनेऽपि अस्य सूत्रस्य आशिषि विकल्पविधायकत्वोपपत्तेः। अत एव आयुष्यादौ अनाशिषि षष्ठ्येव चैत्रस्य आयुष्यमस्तीति।

एवं च षष्ठ्यर्थः पूर्वोक्तः सर्वोऽपि आख्यातार्थमुख्यगौणभावनायां तत्तत्संबन्धेनान्वेतीति सिद्धम्।

**इति सारप्रकाशिकायां षष्ठीविभक्त्यर्थविचारः**

# सप्तमीविभक्त्यर्थविचारः

एवम् — सप्तम्यर्थोऽपि तत्रैवान्वेति। स च 'सप्तम्यधिकरणे चेति' (पा.सू 2.3.36) सूत्रानुशिष्टमधिकरणत्वम्। तच्च आधारोऽधिकरणमिति (पा.सू 1.4.45) सूत्रनिरुक्तम्।

---

'आधारोऽधिकरणम्' (पा.सू 1.4.45) इति सूत्रम्। कारके इत्यधिकृतं प्रथमान्ततया विपरिणमते। तच्च आधारस्य विशेषणम्। आधारः कारकम् अधिकरणमिति लभ्यते। क्रियान्वयि कारकम्। कस्य आधार इत्याकाङ्क्षायाम् उपस्थितत्वात् क्रियाया इति लभ्यते। क्रिया च कर्तृकर्मगता विवक्षिता। तदाधारत्वं च न साक्षात्, किं तु कर्तृकर्मद्वारैव, व्याख्यानात्। तथा च कर्तृकर्मद्वारा तन्निष्ठक्रियायाः आधारभूतं कारकम् अधिकरणसंज्ञकं स्यात् इति सूत्रार्थः।

"सप्तम्यधिकरणे च" (पा.सू 2.3.36) अधिकरणे सप्तमी स्यात्, चकारात् दूरान्तिकार्थेभ्यः। औपश्लेषिकः वैषयिकः अभिव्यापकश्चेति आधारस्त्रिविधः। उपश्लेषः संयोगादिसंबन्धः। तत्प्रयोज्यः आधारः औपश्लेषिकः। विषयतासंबन्धकृत आधारः वैषयिकः। सकलावयवव्याप्तिकृत आधारः अभिव्यापकः।

'कटे आस्ते देवदत्तः'। अत्र साक्षात् देवदत्तरूपकर्तृगतामासनक्रियां प्रति कटस्य संयोगसंबन्धं पुरस्कृत्य देवदत्तद्वारा तदाधारत्वात् अधिकरणत्वम्।

"स्थाल्यां पचति तण्डुलम्"। अत्र साक्षात् कर्मभूततण्डुलगतां पाकक्रियां प्रति स्थाल्याः संयोगसंबन्धं पुरस्कृत्य तण्डुलद्वारा आधारत्वात् अधिकरणत्वम्।

"रूपे रूपत्वमस्ति, शरीरे चेष्टा अस्ति" इत्यादौ समवायेन औपश्लेषिकमाधारत्वम्।

मोक्षे इच्छास्ति। अत्र कर्तृभूतेच्छागतां सत्तां प्रति मोक्षस्य विषयतासंबन्धपुरस्कारेण इच्छाधारत्वात् अधिकरणत्वम्।

"सर्वस्मिन् आत्मा अस्ति"। अत्र आत्मरूपकर्तृगतां सत्ताक्रियां प्रति कृत्स्नव्याप्तिं पुरस्कृत्य आत्मद्वारा सत्ताधारत्वात् सर्वस्याधिकरणत्वम्। इयं प्रमेयस्थितिः। अथ ग्रन्थव्याख्यानम्।

एवमित्यादि। पूर्वोक्तरीत्या सप्तम्यर्थस्यापि भावनायामन्वयः। सप्तम्यर्थश्च "सप्तम्यधिकरणे च" (पा.सू 2.3.36) इति सूत्रानुशिष्टमधिकरणत्वम्। तच्च "आधारोऽधिकरणम्" (पा.सू 1.4.45) इति सूत्रनिरुक्तम्।

## अधिकरणत्वनिर्वचनम्

**ननु — अधिकरणत्वं नाम न येन केन चित्सम्बन्धेन सम्बन्धित्वम्। रूपरसादीनामपि परस्पराश्रयत्वापत्तेः। नापि स्वाधेयसम्बन्धित्वम्, आधेयत्वस्यैव निर्वक्तुमशक्तेः। तस्य स्वाश्रयसम्बन्धित्वरूपत्वेऽन्योन्याश्रयप्रसङ्गाच्च। नापि कारणत्वम्। निमित्तकारणादावतिव्याप्तेः। नापि समवायिकारणत्वम्। संयोगेन घटाद्याश्रये, जात्याश्रये, समवायाश्रये च भूतलादावव्याप्तेः।**

---

अत्रेदं विचार्यते। किं नाम अधिकरणत्वम्। न तावत् येन केनचित संबन्धेन संबन्धित्वम्। रूपरसादीनामपि परस्परमधिकरणत्वापत्तेः "रूपे रसः", "रसे रूपम्" इति कालिकसंबन्धेन संबन्धित्वात् तयोः।

नापि अधिकरणत्वं स्वाधेयसंबन्धित्वं, यथा भूतलस्य स्वाधेयघटसंबन्धित्वात् घटाधारत्वम् इति वक्तुं शक्यते। आधेयत्वस्यैव निर्वक्तुमशक्यत्वात्। आधेयत्वस्य स्वाधिकरणसंबन्धित्वरूपेऽन्योन्याश्रयात्।

न च कारणत्वम् आधारत्वम्, यथा कपालस्य घटकारणत्वात् घटाधारत्वमिति वाच्यम्। निमित्तकारणदण्डादौ घटकारणत्वसत्त्वात् घटाधारत्वापत्तेः।

नापि समवायिकारणत्वम् आधारत्वम्। कपालस्य घटसमवायिकारणत्वात् घटाधारत्वं निमित्तकारणे दण्डादौ घटसमवायिकारणत्वाभावात् न घटाधारत्वमिति वाच्यम्। संयोगसंबन्धेन घटाधारे भूतले घटसमवायिकारणत्वाभावेन अव्याप्तेः। घटत्वादिजात्याश्रये घटादौ, घटसमवायाश्रये च घटादावव्याप्तेः, घटत्वादिजातेः घटसमवायस्य च नित्यत्वेन घटत्वसमवायिकारणत्वस्य घटसमवायकारणत्वस्य च घटादावभावात् इति भावः।

## केषांचिन्मतेनाधिकरणत्वनिरुक्तिः

**यत्तु — तद्भिन्नत्वे सति तत्पतनप्रतिबन्धकसंयोगवन्मूर्तत्वं पतनवन्निरूपिताधिकरणत्वम्, पतमानपर्णादावाश्रयत्ववारणाय सत्यन्तम्। ब्रह्माण्डादिधारकसंयोगाश्रयेश्वरवारणाय मूर्तपदोपादानम्। वस्तुतस्तु यस्मिन् सर्वं प्रतिष्ठितम्, येनेदं धार्यते जगदित्यादिवचनात् ईश्वरेऽप्यस्त्येवाधिकरणत्वम्। इतरथा ब्रह्माण्डादिधारकत्वस्यैवानुपपत्तेः। अतो मूर्तपदं नैव देयम्। लक्ष्यं द्रव्यनिरूपिताधिकरणत्वम्, आकाशादीनान्तु प्रमाणाभावादेव न द्रव्याधारत्वम् आधेयत्ववत्, ईश्वरे तु उक्तवचनादाधारत्ववत्, आधेयत्वेऽपि यः पृथिव्यां तिष्ठन् पृथिवीमन्तरो यमयति, अन्तर्यामीत्यादिश्रुतिस्मृतिवशान्न क्षतिः। गुणादिनिरूपिताधिकरणत्वं समवायित्वम्। समवायादिनिरूपितञ्च तत्तत्स्वरूपसम्बन्धित्वमिति मतम्।**

यत्तु इत्यादि। वृक्षः पतनवत्पर्णाधिकरणमिष्यते। यदि तद्भिन्नत्वे सति तत्पतनप्रतिबन्धकसंयोगवत्त्वे सति मूर्तत्वं तदधिकरणत्वम्। वृक्षे पर्णाधारत्वमस्ति, कथमिति चेत् पर्णपतनप्रतिबन्धकपर्णसंयोगवत्त्वात् मूर्तत्वाच्च। तथा पर्णभिन्नत्वं च वृक्षस्यास्ति। अतः वृक्षः पर्णाधारः। पर्णपतनप्रतिबन्धकः यः वृक्षपर्णसंयोगः तस्य वृक्षपर्णोभयनिष्ठतया पर्णस्यापि पर्णाधिकरणत्वापत्तिः। तद्वारणाय तद्भिन्नत्वे सतीत्युक्तम्।

ब्रह्माण्डादिधारकस्येश्वरस्य ब्रह्माण्डादिपतनप्रतिबन्धकसंयोगाश्रयत्वात् ब्रह्माण्डाधारत्ववारणाय मूर्तपदम्। ईश्वरस्य मूर्तत्वाभावान्नातिव्याप्तिः।

वस्तुतस्तु मूर्तपदं न देयम्। ईश्वरस्यापि श्रुतिबलात् ब्रह्माण्डाधारत्वस्येष्टत्वात्। "यस्मिन् सर्वं प्रतिष्ठितं", "येनेदं धार्यते जगत्" इति श्रुतिः। पूर्वोक्ताधारलक्षणस्य लक्ष्यं तु द्रव्यादिनिरूपितमधिकरणत्वम्।

आकाशादीनां तु प्रमाणाभावादेव न द्रव्याधारत्वम्। अतो मूर्तत्वाभावात् तत्राव्याप्तिरिति नाशङ्कनीयम्।

ईश्वरस्य तु पूर्वोक्तवचनबलात् "ईश्वरः सर्वभूतानां हृद्देशेऽर्जुन तिष्ठति" इति स्मृतेश्च आधारत्वमाधेयत्वं चोभयमस्ति।

## उक्तमतनिराकरणम्

तदपि न। अननुगमात्, सप्तम्या नानार्थकत्वापत्तेश्चेति चेत्। न। अनुगताकारप्रतीत्या प्रतियोगित्वादिवत् अधिकरणत्वाधेयत्वयोश्चाखण्डोपाधित्वस्यैव स्वीकारात्। शक्यतावच्छेदकैक्यानुरोधेनापि करणत्वादिवत्पदार्थान्तरकल्पनेन बाधकाभावाच्च। यत्र हि सखण्डपदार्थस्यैव शक्यतावच्छेदकविधया प्रतीतिरानुभविकी न

**तत्र कल्पनम्। यथा विश्वादिपदेषु। यत्र तु तद्घटकपदार्थाप्रतीतावपि तत्प्रतीतिः, तत्र शाब्दव्यवहारानुरोधादपि तत्कल्पनमसकृदावेदितम्।**

---

एतावता द्रव्यनिरूपिताधारत्वस्य लक्षणमुक्तम्। गुणादिनिरूपितमधिकरणत्वं तु गुणादिसमवायित्वम् गुणादिप्रतियोगिकसमवायानुयोगित्वमिति यावत्। समवायादिनिरूपितमधिकरणत्वं तु तत्तत्स्वरूपसंबन्धित्वम् समवायप्रतियोगिकस्वरूपसंबन्धानुयोगित्वमिति यावत्।

एतावता यत्तु इत्यादिना उपन्यस्तं मतं निराकरोति — **तदपि नेति। अननुगमादिति।** द्रव्यनिरूपितमधिकरणत्वमन्यत्, गुणादिनिरूपितमन्यत्, समवायनिरूपितमधिकरणत्वम् अन्यत् इत्युक्ततया अननुगमो दोषः। तथा सप्तम्याः नानार्थकत्वप्रसङ्गश्च।

## तार्किकमतेन सप्तम्यर्थनिरूपणम्

**तत्राधेयत्वमाधेयत्वत्वेन सप्तम्यर्थः, तत्र च निरूपकतासम्बन्धेन प्रातिपदिकार्थस्य भूतलादेरन्वयः, तस्य चानुयोगितासम्बन्धेन घटादावन्वयः। तेन 'भूतले घटः' इत्यत्र भूतलवृत्तिर्घट इत्येवं शाब्दबोध इति तार्किकाः।**

## तार्किकमतनिराकरणम्, स्वमतोपपादनञ्च

**तन्न। 'सप्तम्यधिकरणे च' (पा.सू. 2.3.36) इत्यनुशासनविरोधात्। 'भूतले घटः', गृहे पचतीत्यादौ सर्वत्रैकरुप्येणान्वयानङ्गीकारेणाऽनेकव्युत्पत्तिकल्पनापत्तेश्च। अतोऽधिकरणत्वमेव सप्तम्यर्थः। यद्यपि संयोगसमवायाद्यवच्छिन्नाधिकरणत्वानि नाना, तथाप्यधिकरणत्वत्वस्य शक्यतावच्छेदकस्यैकत्वान्न नानार्थकत्वम्। तत्र 'भूतले घटः' इत्यत्रास्तीत्याध्याहारात् सप्तम्यर्थाधिकरणत्वस्य**

**स्वनिरूपकघटवृत्तित्वसंसर्गेणाख्यातार्थे सत्ताश्रयत्वेऽन्वयः। भूतलनिष्ठाधिकरणत्वनिरूपकघटवृत्तिवर्तमानसत्ताश्रयत्वं घटवृत्तीति च शाब्दबोधः। न च पूर्वं घटे भूतलस्थे, सम्प्रति चाधिकरणान्तरस्थे 'भूतले घटोऽस्ती'ति प्रयोगापत्तिः। यादृशकालबोधकप्रत्ययबोध्यक्रियायां सप्तम्यर्थाधिकरणत्वान्वयः तद्बलेन तादृशकालावच्छिन्नाधिकरणत्वस्यैव व्युत्पत्तिविशेषेण सप्तम्या बोधनात्। 'गृहे चैत्रः पचती'त्यत्र स्वनिरूपकचैत्रवृत्तित्वसंसर्गेण तस्यामेव। अत एव स्थाल्यामोदनं पचतीत्यत्र स्वनिरूपकौदनकर्मत्वसंसर्गेण तस्यामेव। अत एव सर्वत्र सप्तम्यर्थस्य स्वनिरूपककर्तृकर्मान्यतरद्वारकः एवाख्यातार्थान्वयः, न तु कारकान्तरद्वारकः, साक्षाद्वा। 'काश्यां ब्राह्मणेभ्यः प्रयच्छती'त्युक्ते, कर्तुरेव झटिति काशीस्थत्वप्रतीतिः। यत्र तु 'पाटलीपुत्रे स्थितो राजा काश्यां ब्राह्मणेभ्यः प्रयच्छती'त्यादौ ब्राह्मणेषु काशीवृत्तित्वप्रतीतिः, तत्र स्थितेभ्य इति पदाध्याहारेण, स्थितिकर्तृद्वारैवेति न विरोधः। अत एव 'भूभृति वृक्षात्पर्णं पतती'त्यत्र स्थितादिति पदाध्याहारं विना, न झटिति भूभृद्वृत्तित्वप्रतीतिः साक्षात्तु सप्तम्यर्थस्य भावनान्वयो गृहादौ बाधित एव। चैत्रादौ तु परया कर्तृसंज्ञया बाधितः। अतस्सिद्धं कर्तृकर्मान्यतरद्वारक एव सप्तम्यर्थान्वयः — इति।**

---

अथ स्वसिद्धान्तमाह — **न, अनुगताकारप्रतीत्या इत्यादिना।** सिद्धान्तलक्षणे अन्ते दीधितिकारेण यदुक्तं तत् सर्वं मनसिकृत्य ब्रवीति खण्डदेवः। इदं प्रतियोगि इदं प्रतियोगि इत्यनुगतप्रतीत्या यथा प्रतियोगित्वमखण्डोपाधिः आदिपदेन विषयत्वं गृह्यते। तथा इदमधिकरणं इदमधिकरणं अयमाधेयः इति अनुगतप्रतीतिबलात् अधिकरणत्वम् आधेयत्वं चाखण्डोपाधिरूपम्। यथा च करणत्वत्वरूपं शक्यतावच्छेदकमेकमिति मत्वा करणत्वमखण्डोपाधिः इति पूर्वमुक्तं तद्वत्।

यत्र हि सखण्डपदार्थस्यैव शक्यतावच्छेदकतया प्रतीतिः न तत्र पदार्थान्तर-कल्पनम्, यथा विश्वादिपदेषु। अयमाशयः — विश्वे ब्राह्मणाः इत्यत्र विश्वपदस्य उद्देश्यतावच्छेदकव्यापकविधेयव्याप्यसमुदायत्वावच्छिन्ने शक्तिः। तादृशसमुदायः शक्यः। समुदायत्वं शक्यतावच्छेदकम्। समुदायत्वं च एकविशिष्टापररूपमिति न पदार्थान्तरम्।

तर्हि कुत्र अखण्डपदार्थान्तरकल्पनमित्यत्राह — **यत्र तु इति।** यथा त्यज्य-मानद्रव्योद्देश्यत्वे सति स्वीकारवत्त्वं संप्रदानत्वम्। तद्घटकाः द्रव्यत्याग-उद्देश्यत्वादयः तदप्रतीतावपि ब्राह्मणाय गां ददातीत्यतः ब्राह्मणसंप्रदानकगो-कर्मकदानमिति बोधोदयात् संप्रदानत्वस्याखण्डत्वं स्वीकार्यम्। तदाह – शाब्द-व्यवहारानुरोधादिति शाब्दबोधः, शब्दप्रयोगः एतदनुरोधादपीत्यर्थः।

सिद्धान्तलक्षणान्ते — विषयतातत्त्वादिवत् प्रतियोगिताधिकरणतातत्त्वसंबन्ध-त्वादयोऽपि अतिरिक्ता एव पदार्थाः इत्येकदेशिनः इति दीधितग्रन्थः।

तत्र गादाधरी — एवमधिकरणत्वम् नाधिकरणस्वरूपमाधेयस्वरूपं वा भूतले घटसंयोगदशायामिव परस्परासंयुक्तघटभूतलसत्त्वदशायामपि इदानीं भूतलं घटवत् इत्यादिप्रत्ययप्रसङ्गात्। संयोगस्वरूपत्वे आधेयत्वस्यापि तुल्ययुक्त्या तद्रूपतया आधारत्वाधेयत्वयोरभेदप्रसङ्गेन वैपरीत्येनधाराधेयभावप्रसङ्गादिति तद-प्यतिरिक्तः पदार्थः इति।

एतावता अधिकरणत्वमाधेयत्वं चातिरिक्तः पदार्थ इति साधितम्। अथ सप्तम्याः आधेयत्वमर्थ इति तार्किकमतं निरस्यति — **तत्राधेयत्वमिति।** भूतले घट इत्यत्र आधेयत्वत्वेन आधेयत्वं सप्तम्यर्थः। तत्र निरूपितत्वसंबन्धेन भूतल-स्यान्वयः। आधेयत्वस्य आश्रयत्वसंबन्धेन घटेऽन्वयः। भूतलनिरूपताधेय-

त्वाश्रयो घट इति बोधः। **निरूपकतासंबन्धेनेति**। स्वनिष्ठनिरूपकताकत्वसंबन्धेनेत्यर्थः। निरूपितत्वसंबन्धेनेति यावत्। तस्य — आधेयत्वस्य अनुयोगितासंबन्धेन — आश्रयत्वसंबन्धेन घटेऽन्वयः। भूतलवृत्तिर्घट इति पर्यवसितम्।

तन्नेति। सप्तम्याः आधेयत्वमर्थ इति न युक्तम्। "सप्तम्यधिकरणे च" (पा.सू 2.3.36) इति सूत्रविरोधात्। अधिकरणत्वं सप्तम्यर्थ इति हि सूत्रात् अवगम्यते।

अपि च भूतले घट इत्यत्र सप्तम्यर्थस्य आधेयत्वस्य नामार्थे घटेऽन्वयः। गृहे पचतीत्यत्र तस्य धात्वर्थपाके अन्वयः इति अङ्गीकारेण अनेककार्यकारणभावकल्पनापत्तिः। अथवा भूतले घट इत्यत्र साक्षात् घटे आधेयत्वान्वयः। गृहे पचतीत्यत्र स्थालीद्वारा अन्वय इति वैरूप्यम्।

अतोऽधिकरणत्वमेव सप्तम्यर्थः। ननु अधिकरणत्वमपि संयोगसमवायादिसंबन्धभेदेन भिन्नम्। भूतले घट इत्यत्र संयोगसंबन्धावच्छिन्नमधिकरणत्वमर्थः। घटे रूपमित्यत्र समवायसंबन्धावच्छिन्नमधिकरणत्वमर्थः। भूतले घटाभावः इत्यत्र स्वरूपसंबन्धावच्छिन्नमधिकरणत्वमर्थः। ततश्च अनेकव्युत्पत्तिकल्पनं भवन्मतेऽप्यस्तीत्याशङ्क्य संबन्धभेदेन अधिकरणत्वानां भेदेऽपि अधिकरणत्वत्वरूपशक्यतावच्छेदकस्यैकत्वात् न नानार्थकत्वं सप्तम्याः।

अथ भूतले घट इत्यत्र स्वमतरीत्या शाब्दबोधं वर्णयति — **तत्र भूतल इत्यादिना**। भूतले घट इत्यत्र अस्तीति क्रियापदमध्याह्रियते। सप्तम्याः अधिकरणत्वमर्थः। तत्र भूतलस्य आधेयतासंबन्धेनान्वयः। सप्तम्यर्थस्य अधिकरणत्वस्य स्वनिरूपकघटवृत्तित्वसंबन्धेन आख्यातार्थे धात्वर्थसत्तानिरूपिते आश्रयत्वेऽन्वयः। तथा च भूतलनिष्ठाधिकरणतानिरूपकघटवृत्ति वर्तमानकालिकसत्ताश्रयत्वमिति बोधः।

तत्र शङ्कते — **न च पूर्वं घट इति।** पूर्वं घटे भूतलस्थे संप्रति चाधिकरणान्तरस्थे सति भूतले घटोऽस्तीति प्रयोगापत्तिः। भूतलनिष्ठाधिकरणतानिरूपकसत्ताश्रयत्वस्य घटस्यान्यत्र नयनेऽपि घटे सत्त्वात् इति शङ्का।

तत्र समाधानं तु यादृशकालबोधकप्रत्ययबोध्यक्रियायां सप्तम्यर्थाधिकरणत्वस्यान्वयः तद्बलेन तादृशकालावच्छिन्नाधिकरणत्वस्यैव व्युत्पत्तिविशेषेण सप्तम्या बोधनात् इति।

एतदुक्तं भवति — यः कालः लप्रत्ययेनोच्यते (लकारेणोच्यते) स एव कालः अवच्छेदकतया सप्तम्यर्थे अधिकरणत्वे निवेशनीयः। अर्थात् तादृशकालावच्छिन्नमधिकरणत्वं सप्तम्यर्थ इति यावत्। भूतले घटवर्तमानतादशायां भूतले घटोऽस्तीति प्रयोगः। ततः शाब्दबोधस्तु – भूतलनिष्ठवर्तमानकालावच्छिन्नाधिकरणतानिरूपकघटवृत्तिसत्ताश्रयत्वमिति। घटस्य प्रदेशान्तरं प्रति नयनानन्तरं वर्तमानकालावच्छिन्नभूतलनिष्ठाधिकरणतानिरूपकत्वं घटस्य नास्तीति तदा भूतले घटोऽस्तीति प्रयोगस्य नापत्तिः इति।

गृहे चैत्रः पचति इत्यत्र सप्तम्यर्थस्याधिकरणत्वस्य स्वनिरूपकचैत्रवृत्तित्वसंबन्धेन आख्यातार्थपाकभावनायामन्वयः। गृहनिष्ठाधिकरणतानिरूपकचैत्रवृत्तिः पाकानुकूला भावना इति बोधः।

स्थाल्यामोदनं पचतीति वाक्यात् स्थालीनिष्ठाधिकरणतानिरूपकौदनकर्मकपाकानुकूला चैत्रवृत्तिः कृतिः इति बोधः।

अत एव सर्वत्र सप्तम्यर्थस्य स्वनिरूपककर्तृकर्मान्यतरद्वारक एव आख्यातार्थेऽन्वयः, न तु कारकान्तरद्वारकः, न वा साक्षात् अन्वयः। महाभाष्यादिव्याख्यानानुसारात्।

ननु "काश्यां ब्रह्मणेभ्यः प्रयच्छति" इत्यत्र काशीस्थाः ये ब्राह्मणाः तेभ्यः प्रयच्छतीति विवरणसंभवात् अधिकरणत्वस्य संप्रदानद्वारैव भावनायामन्वयः प्रतीयते। तत् कथं कर्तृकर्मद्वारैव सप्तम्यर्थाधिकरणत्वस्य भावनायामन्वयः इति नियन्तुं शक्यते इति शङ्कायामाह — **काश्यामिति**। तत्र आपाततः काश्यधिकरणकेभ्यो ब्राह्मणेभ्यः प्रयच्छतीत्यर्थस्य प्रतीतावपि न तत्र वाक्यस्य तात्पर्यम्। अपि तु स्थितः इति पदमध्याहृत्य काश्यां स्थितो राजा ब्राह्मणेभ्यः प्रयच्छतीत्यर्थो वर्णनीयः। काश्यधिकरणकस्थितिमद्राजकर्तृकं ब्राह्मणसंप्रदानकं दानमिति बोधः। अतः तत्र अधिकरणत्वस्य कर्तृद्वारैव भावनायामन्वय इति समाधानम्।

यद्वा तत्र स्थित इति पदाध्याहाराभावेऽपि आख्यातलक्ष्यार्थकर्तृद्वारा अधिकरणत्वस्य भावनायामन्वयः। काश्यधिकरणकराजाभिन्नकर्तृकं ब्राह्मणसंप्रदानकं दानम् अथवा दानभावना इति बोधः सुवचः।

नन्वेवमपि "पाटिलपुत्रे स्थितो राजा काश्यां ब्राह्मणेभ्यः प्रयच्छति" इत्यत्र कथं कर्तृकर्मान्यतरद्वारा सप्तम्यर्थस्य अधिकरणत्वस्य भावनायामन्वयः इत्यत्राह — **यत्र तु इति**। तत्रापि स्थितेभ्य इति पदमध्याहृत्य स्थितिकर्तृद्वारैव भावनायामन्वयः। अयं भावः — स्थित इति कर्तरि क्तप्रत्ययः। तदेकदेशकृतिरूपभावनायां सप्तम्यर्थस्याधिकरणत्वस्य कर्तृद्वारा अन्वयः। यद्यपि दानक्रियायां ब्राह्मणः संप्रदानं भवति, तथापि स्थितिक्रियायां ब्राह्मणः कर्तैव। तथा च काशीनिष्ठाधिकरणतानिरूपककर्तृवृत्तिस्थित्याश्रयत्वमिति बोधः। ब्राह्मणेभ्यः इति चतुर्थ्यर्थस्य संप्रादनत्वस्य प्रयच्छति इति भावनायामन्वयः। तथा च स्वनिरूपकब्राह्मणवृत्तिसंबन्धेन काशीनिष्ठाधिकरणताविशिष्टं यत् स्थित्याश्रयत्वं तदाश्रयब्राह्मणसंप्रदानकं पाटलीपुत्राधिकरणकस्थितिकर्तृराजकं दानम् इति शाब्दबोधः।

अतः स्थितेभ्यः इति पदाध्याहारेण अत्रापि कर्तृद्वारैव क्रियायां भावनायां वा अन्वय इति भावः।

एवं "भूभृति वृक्षात् पर्णं पतति" इत्यात्रापि "स्थितात्" इति पदमध्याहृत्य भूभृति स्थितात् वृक्षात् पर्णं पतति इति वाक्यं कल्पयित्वा कर्तृद्वारैव अधिकरणत्वस्य भावनायामन्वयः बोध्यः।

ननु "गृहे चैत्रः पचति" इत्यत्र पाकभावनायाः चैत्रवृत्तित्वमस्तीति चैत्रे पचतीति प्रयोगः स्यात् इत्याशङ्क्य तत्र अधिकरणसंज्ञापेक्षया कर्तृसंज्ञायाः परत्वात् कर्तुश्च आख्यातेनाभिहितत्वात् प्रथमैव भवतीत्याह — **चैत्रादौ तु इति।** कर्तृद्वारा पाकाधिकरणत्वात् गृहपदात् अधिकरणे सप्तमीति भावः।

**नन्वेवम्-कर्माविवक्षायाम्, ग्रामे गच्छति, ग्रामे गम्यते इति प्रयोगानापत्तिः, ग्रामाधिकरणत्वस्य कर्तृकर्मद्वारकत्वासम्भवात्। लक्षणयोद्देश्यत्वं तत्र सप्तम्यर्थ इति चेत्, ओदने पचतीत्यपि प्रयोगापत्तिः। अत एव धात्वर्थावच्छेदकफलद्वारक एवान्वय इत्यप्यपास्तम्, ओदनस्यापि तदापत्तेरिति चेत्। तत्रापि कर्तृद्वारकत्वस्य संभवात्।**

**ग्रामाधिकरणकचैत्रवृत्तिगमनानुकूलकृतिमत्त्वस्य चैत्रे संभवात् अन्यावच्छेदेन — ग्रामप्राप्तिफलकक्रियावत्यपि चैत्रे ग्रामाधिकरणत्वस्य भावित्वात् ग्रामाधिकरणचैत्रवृत्तिगमनानुकूलकृतिमत्त्वस्य चैत्रे नानुपपत्तिः। पाककर्तुस्तु ओदनाधिकरणत्वाभावात्, न तथा प्रयोगः।**

---

नन्वेवमित्यादि । कर्मत्वाविवक्षायां ग्रामे गच्छति, ग्रामे गम्यते इति प्रयोग इष्यते, तस्यानुपपत्तिः। ग्रामस्य कर्तृकर्मद्वारा गमनाधिकरणत्वाभावात्। न च

तत्र लक्षणया सप्तम्याः उद्देश्यत्वमर्थः। ग्रामोद्देश्यकत्वं गमनेऽस्तीति नानुपपत्तिरिति वाच्यम्। तथापि पाके ओदनोद्देश्यकत्वविवक्षया ओदने पचतीति प्रयोगापत्तेः।

अत एव ग्रामे गच्छतीत्यत्र धात्वर्थतावच्छेदकसंयोगरूपफलद्वारा क्रियाधिकरणत्वं ग्रामस्येत्यपि निरस्तम्। ओदनस्य विक्लित्तिरूपफलद्वारा क्रियाधिकरणत्वेन ओदने पचतीति प्रयोगापत्तेः इति चेत् — न। ग्रामे गच्छति इत्यत्र ग्रामस्य कर्तृद्वारा गमनाधिकरणत्वसंभवात्।

यद्यपि गमनकाले ग्रामः न कर्तुः चैत्रस्याधिकरणम्, अपि तु अन्यः प्रदेशः। तथापि ग्रामस्य चैत्राधिकरणत्वं भावीति चैत्रस्य भाविग्रामाधिकरणकत्वमादाय ग्रामाधिकरणकचैत्रवृत्तिगमनानुकूलकृतिमत्त्वस्य चैत्रे अबाधात् ग्रामे गच्छति चैत्रः इति प्रयोगे नानुपपत्तिः कापि।

**नन्वेवमपि अग्नौ पचति आतपे तिष्ठति, आकाशे पक्षी गच्छति, आकाशे तिष्ठन्नाकाशमन्तरो यमयतीत्यादिप्रयोगानुपपत्तिः, अग्न्याद्यधिकरणत्वस्य कर्तृकर्मान्यतरद्वारकत्वायोगात्। न चाग्नौ पचतीति प्रयोगो नास्त्येवेति केषाञ्चिदुक्तं युक्तम्। यस्मिन्नग्नौ पचेदन्नं तस्मिन् होमो विधीयते। इति बहुतरप्रयोगवचनात्। न हि वृत्त्यनियामकसंयुक्तसंयोगादिसम्बन्धस्याधिकरणतानिरूपकत्वं सम्भवति। अन्यथा आकाशे मनुष्यस्तिष्ठति, चैत्रो मैत्रात्मनि तिष्ठतीत्यादिप्रयोगापत्तेरिति चेत्।**

**तादृशस्थले 'गङ्गायां घोषः' इतिवदग्न्यादिपदे तत्सम्बन्धिस्थाल्यादिलक्षणया तन्निष्ठाधिकरणत्वस्य कर्तृकर्मान्यतरद्वाराऽन्वयोपपत्तेः। तेन 'अग्नौ पचती'त्यादेः अग्निसंयुक्तस्थाल्यां पचति, आतपसंयुक्ते गृहे तिष्ठतीत्यर्थः।**

पाककर्तुस्तु सर्वदा ओदनाधिकरणकत्वाभावात् न ओदने पचतीति प्रयोगापत्तिः।

नन्वेवमपीत्यादि "अग्नौ पचति", "आतपे तिष्ठति", "आकाशे पक्षी गच्छति" इति प्रयोगाणामनुपपत्तिः। चैत्रः अग्नौ पचति इत्यत्र चैत्रनिष्ठपाकानुकूलकृतौ चैत्रद्वारकमग्न्यधिकरणकत्वं बाधितम्। चैत्रः अग्नौ तिष्ठन् पचेत् चेत तत् भवितुमर्हति। चैत्रस्याग्न्यधिकरणकत्वायोगात् चैत्रद्वारकमग्न्यधिकरणकत्वं पाकानुकूलकृतौ बाधितमिति अग्नौ चैत्रः पचतीति प्रयोगानुपपत्तिरिति भावः।

एवम् आकाशे पक्षी गच्छतीति प्रयोगानुपपत्तिः पक्षिनिष्ठा या गमनानुकूला कृतिः तस्यां पक्षिद्वारा आकाशाधिकरणकत्वाभावात्। रूपशून्यस्य आकाशस्य अधिकरणत्वाभावात्।

एवम् "आकाशे तिष्ठन्नाकाशमन्तरो यमयति" इति प्रयोगानुपपत्तिः। रूपशून्यस्य आकाशस्याधिकरणत्वासंभवादेव।

न च अग्नौ पचतीति प्रयोग एव नास्तीति वाच्यम्। "यस्मिन्नग्नौ पचेदन्नं तस्मिन् होमो विधियते" इति प्रयोगदर्शनात्।

न चाग्निसंयुक्तस्थालीसंयोगः पाककर्मणः ओदनस्य वर्तते। ततश्च संयुक्तसंयोगसंबन्धेन अग्न्यधिकरणकौदनकर्मकत्वात् पाकस्य कर्मद्वारा पाकाधिकरणत्वमस्तीति नानुपपत्तिरिति वाच्यम्। संयुक्तसंयोगस्य वृत्त्यनियामकतया अधिकरणतावच्छेदकत्वासंभवात्। अन्यथा "आकाशे मनुष्यस्तिष्ठति","चैत्रो मैत्रात्मनि तिष्ठति" इत्यादिप्रयोगप्रसङ्गात्। आकाशसंयुक्तभूतलादिसंयोगस्य मनुष्ये मैत्रात्मसंयुक्तप्रदेशसंयोगस्य चैत्रे च सद्भावात् इति चेत्।

तत्र समाधानमुच्यते। "अग्नौ पचति" इत्यादिस्थले "गङ्गायां घोषः" इत्यत्रेव अग्न्यादिपदस्य अग्न्यादिसंबन्धिस्थाल्यादिलक्षणया तन्निष्ठाधिकरणत्वस्य स्वनिरूपककर्तृकर्मद्वारा क्रियान्वयोपपत्तेः। तेन "अग्नौ पचति" इत्यस्य अग्निसंयुक्तस्थाल्यां पचतीत्यर्थः "आतपे तिष्ठति" इत्यस्य आतपसंयुक्ते गृहे तिष्ठतीत्यर्थः।

**आकाशपदेन गमनप्रतिबन्धकभूप्रदेशानवच्छिन्नप्रदेशो लक्ष्यते। यमन्तरिक्षमिति व्यवहरन्ति। सप्तम्या अवच्छेदकत्वम्। विषयत्वादिवत् तस्य विभक्त्या लक्षणायामपि न दोषः। तस्याद्देश्यत्वादिवत्सप्तम्यर्थस्यापि साक्षात्सम्बन्धेनैव गमनसम्बन्धित्वम्। न हि सप्तम्यर्थमात्रे तन्नियमः। अपि तु सप्तमीवाच्य एव। तच्च प्रचुरप्रयोगादधिकरणत्वमेवेति, तत्रैवायं नियमः। धातुना च निराधारं गमनम्। तथा चोक्तविधभूतप्रदेशानवच्छिन्ननिराधारगमनानुकूलकृतिः पक्षिनिष्ठेति शाब्दबोधः।**

**आकाशे तिष्ठन्नित्यादौ संयुक्तसंयोगावच्छिन्नसम्बन्धत्वं लक्षणया सप्तम्यर्थः। षष्ठ्यर्थस्यापि सुपां सुलुक् इत्येवं लक्षणा। तस्यापि पूर्ववद्धात्वर्थद्वारकः, कर्तृद्वारक एव वा संसर्गः।**

**वस्तुतस्तु आकाशस्यापि ईश्वरोपादानकत्वादुपादानत्वमेव सप्तम्यर्थः उपादानकर्तृद्वारकोऽन्वेति। आकाशे उपादानकारणत्वादनुगतः तिष्ठन्नित्यर्थः। अस्तु वा एतद्वचनबलादेवाकाशेपि शब्दनिरूपिताधारत्ववत्, अन्तर्यामिनिरूपिताधारत्वमपीति, न तत्र लक्षणापि।**

---

आकाशे पक्षी गच्छतीत्यत्र आकाशपदस्य गमनप्रतिबन्धकभूतप्रदेशानवच्छिन्नप्रदेशे लक्षणा। स प्रदेशः अन्तरिक्षमित्युच्यते। सप्तम्याः अवच्छेदक-

त्वमर्थः। विषयत्वादिवत् तस्य विभक्त्या लक्षणायामपि न दोषः। तस्य अवच्छेदकत्वस्य उद्देश्यत्वादिवत् साक्षात्संबन्धेनैव गमनसंबन्धित्वम्। सप्तम्यर्थस्य कर्तृकर्मद्वारा धात्वर्थसंबन्धित्वमिति नियमस्तु सप्तमीवाच्यस्य अधिकरणत्वस्यैव, न तु सप्तमीलक्ष्यस्य अवच्छेदकत्वादेः। गम्-धातुना च निराधारं गमनमुच्यते। तथा च गमनप्रतिबन्धकभूप्रदेशानवच्छिन्नप्रदेशनिष्ठावच्छेदकताकनिराधारगमनानुकूलकृतिः पक्षिनिष्ठेति बोधः।

"आकाशे तिष्ठन्नाकाशमन्तरो यमयति" इत्यत्र सप्तम्याः लक्षणया संयुक्तसंयोगावच्छिन्नसंबन्धित्वमर्थः। षष्ठ्यर्थस्यापि तस्य "सुपां सुलुक्" इत्यनुशासनसंमतं सप्तमीलक्ष्यत्वम्। सुपां सुलुक् इति सूत्रेण छन्दसि विभक्त्यन्तरार्थे विभक्त्यन्तरं भवतीत्युक्तम्। आकाशे तिष्ठन्नित्यस्य श्रुतिवाक्यत्वात् सप्तम्याः संबन्धार्थकत्वेऽपि न दोषः। सप्तम्यर्थस्य तस्यापि धात्वर्थद्वारा कर्तृद्वारा वा भावनायामन्वयः। तथा च आकाशसंयुक्तसंयोगावच्छिन्नसंबन्धिस्थित्यनुकूलभावना इति वा आकाशसंयुक्तसंयोगावच्छिन्नसंबन्धि ईश्वरकर्तृका स्थित्यनुकूला भावना इति वा बोधः।

वस्तुतस्तु आकाशस्यापि ईश्वरोपादानकत्वात् आकाशे तिष्ठन् इत्यत्र सप्तम्याः उपादानकारणत्वमर्थः। तस्य कर्तृद्वारा भावनायामन्वयः। आकाशनिरूपितोपादानकारणत्वाश्रयेश्वरकर्तृका स्थितिभावना इति बोधः। आकाशे उपादानकारणत्वादनुगतः तिष्ठन् इति फलितोऽर्थः।

अस्तु वा "आकाशे तिष्ठन्" इति श्रुतिबलादेव आकाशेऽपि शब्दनिरूपिताधारतावत् अन्तर्यामीश्वरनिरूपितमाधारत्वमपीति सप्तम्याः आधारत्वमेवार्थः, न तु लक्षणया अन्योऽर्थः। आकाशनिष्ठाधारतानिरूपकेश्वकर्तृका स्थितिभावनेति शाब्दबोधः।

## अत्र पक्षेऽतिप्रसंगापादनम्, तन्निवाराणञ्च

न चैवमग्नौ पचतीत्यादिप्रयोगाणां लक्षणयोपपदाने, आकाशे मनुष्यः तिष्ठतीत्यादिप्रयोगापत्तिः। यत्र प्रयोगः, तत्र लक्षणयोपपादनम्, न तु क्वचिल्लक्षणाङ्गीकरणमात्रेण प्रयोगापत्तिः। तथात्वे 'गङ्गायां घोषः' इत्यादौ गङ्गापदेन गङ्गासम्बन्धितीरलक्षणायास्सर्वसम्मतत्वेन भवदुक्तप्रयोगापत्तेरनिवारणात्। अतस्सिद्धं सप्तम्यर्थाधिकरणत्वस्य कर्तृकर्मान्यतरद्वारकोऽन्वयः — इति।

यस्तु गृहाद्बहिः स्थितेन कर्त्रा दीर्घदण्डादिना काष्ठचलनद्वारा गृहमध्ये पाककरणे गृहे पचतीति प्रयोगः, स कर्मकारकस्य तण्डुलादेः परम्परया गृहाधिकरणत्वाद् नानुपपन्नः।

---

न चैवम् "अग्नौ पचति" इत्यादिप्रयोगाणां लक्षणयोपपादने "आकाशे मनुष्यस्तिष्ठति" इत्यादिप्रयोगापत्तिरिति वाच्यम्। यत्र प्रयोगः प्रामाणिकः, तत्र लक्षणया उपपादनम्। न तु क्वचित् लक्षणाङ्गीकारमात्रेण अन्यत्रापि तथा अङ्गीकारेण प्रयोगापत्तिः। आरोपे सति निमित्तानुसरणं न तु निमित्तमस्तीत्यारोपः इति न्यायात्। अन्यथा गङ्गायां घोषः इत्यादौ गङ्गापदेन गङ्गासंबन्धितीरलक्षणायाः सर्वसंमतत्वात् आकाशे मनुष्यस्तिष्ठतीति प्रयोगोऽपि लाक्षणिकः कथं वार्येत। नीलं वस्त्रमिति रूपं वस्त्रमिति प्रयोगोऽपि कथं वारयितुं शक्यते इति भावः।

ननु यत्र कर्ता चैत्रः गृहात् बहिः तिष्ठन् दीर्घदण्डेन काष्ठचालनद्वारा पाकं संपादयति तत्र कर्तुः गृहाधिकरणकत्वं नास्ति। तत्र गृहे पचति चैत्रः इति प्रयोगः कथमुपपादनीयः, कर्तृद्वारा अधिकरणत्वान्वयासंभवात् इति शङ्कायामाह —

यस्तु इति। तत्र कर्मकारकस्य तण्डुलादेः स्थाल्यादिद्वारा गृहाधिकरणकत्वात् कर्मद्वारा गृहाधिकरणकत्वस्य भावनायामन्वयः। गृहाधिकरणको यस्तण्डुलः तत्कर्मकपाकानुकूला कृतिरिति बोधः इति समाधानम्।

## भूतले घटो नास्तीत्यादौ बोधविचारः

नन्वेवमपि 'भूतले घटो नास्ति, चैत्रो गृहे न पचती'त्यादौ कथं कर्तृ-कर्मान्यतरद्वारकोऽन्वयः। न हि तत्र भूतलनिष्ठाधिकरणत्वनिरूपकघटवृत्तिसत्ता-श्रयत्वमभावप्रतियोगीत्येवं शाब्दबोधस्सम्भवति। भूतले घटदशायामपि तथा प्रयोगापत्तेः। उक्ताश्रयत्वस्य घटातिरिक्तवृत्त्यभावप्रतियोगित्वात्, नञा घटादि-निष्ठाभावलक्षणायामपि प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिनः अप्रसिद्धेश्च। तद्वाक्यादनुभूयमानघटत्वावच्छिन्नप्रतियोगिताकभूतलनिष्ठाभावबोधस्याऽपलापा-पत्तेश्च। न ह्युक्तविधाभावोऽस्तीत्येतादृश एव बोधोऽनेन जनयितुं शक्यः। भूतल-निष्ठाधिकरणत्वस्य सप्तम्यर्थस्याभाववद्-द्वारकत्वापत्त्या कर्तृकर्मद्वारकत्वनियम-भङ्गापत्तेः। घटस्य प्रतियोगितासंसर्गेणाऽन्वये धात्वर्थाश्रयत्वाभावेन कर्तृत्वा-भावात् प्रथमानुपपत्तेश्च। भूतलवृत्तिघटप्रतियोगिताकाभावस्य कर्तृत्वोक्तौ, तस्यैक-त्वात् 'घटौ न स्तः' इति द्विवचनानुपपत्तेश्च। 'घटौ नास्तीति प्रयोगापत्तेश्च। घट एव प्रतियोगितासम्बन्धेनाभावान्वये, अभावे च भूतलाधिकरणत्वमङ्गीकृत्य, भूतल-वृत्त्यभावप्रतियोगी घटोऽस्तीति शाब्दबोधाङ्गीकारे तु, अतीते भाविनि वा घटेऽ-स्तीति वर्तमानकालान्वयानुपपत्तेः 'घटो नास्ती'ति प्रयोगानुपपत्तिः।

---

अथ "भूतले घटो नास्ति" इति वाक्यार्थं विचारयति — **नन्वेवमपीत्यादिना**। "भूतले घटो नास्ति, चैत्रो गृहे न पचति" इत्यादौ सप्तम्यर्थस्य आधारत्वस्य कथं कर्तृकर्मान्यतरद्वारकः क्रियान्वयः।

न च भूतले घटो नास्ति इत्यत्र घटः कर्ता भवति। सप्तम्या आधारत्वमर्थः। तत्र आधेयतासंबन्धेन भूतलस्यान्वयः भूतलनिष्ठमाधारत्वम्। तस्य स्वनिरूपक-घटरूपकर्तृवृत्तित्वसंबन्धेन अस्त्यर्थे सत्ताश्रयत्वेऽन्वयः। नञः अभावोऽर्थः। तस्य प्रतियोगितासंबन्धेन सत्ताश्रयत्वेऽन्वयः। तथा च भूतलनिष्ठाधारता-निरूपकघटवृत्ति सत्ताश्रयत्वम् अभावप्रतियोगि इति शाब्दबोधः इति वाच्यम्।

भूतले घटसत्तादशायामपि भूतले घटो नास्ति इति प्रयोगप्रसङ्गात्। भूतलाधि-करणकघटवृत्तिसत्ताश्रयत्वे भूतलावृत्तिर्यः पटः तद्वृत्त्यभावप्रतियोगित्वसत्त्वात्। नञर्थाभावपदेन पटवृत्त्यभावं गृहीत्वा तत्प्रतियोगित्वस्य उपपादनात्। न हि घटवृत्तिसत्ताश्रयत्वं पटवृत्ति इति।

न च तत्र नञः लक्षणया घटनिष्ठाभावोऽर्थः। तस्य प्रतियोगित्वसंबन्धेन घट-निष्ठसत्ताश्रयत्वेऽन्वयः। घटनिष्ठसत्ताश्रयत्वे घटवृत्त्यभावप्रतियोगित्वं नास्तीति न भूतले घटसत्तादशायां भूतले घटः नास्तीति प्रयोगापत्तिरिति वाच्यम्।

प्रतियोगितावच्छेदकावच्छिन्नप्रतियोगिनोऽप्रसिद्धेः। घटस्य भूतलेऽसत्त्वे हि घटनिष्ठाभावप्रतियोगित्वं सत्ताश्रयत्वे भवेत्। तथा चेत् भूतलनिष्ठाधिकरणता-निरूपकघटनिष्ठसत्ताश्रयत्वं कथं प्रसिध्येत्।

अपि च पूर्वोक्तरीत्या शाब्दबोधस्वीकारेऽनुभवविरोधः। भूतले घटो नास्तीति वाक्यात् घटत्वावच्छिन्नप्रतियोगिताकभूतलाधिकरणकाभावबोधस्यैव अनुभूय-मानत्वात्।

न च भूतले घटो नास्ति इत्यत्र नञर्थः अभावः। तत्र घटस्य घटत्वाव-च्छिन्नप्रतियोगताकत्वसंबन्धेन अन्वयः। सप्तम्यन्तार्थस्य भूतलनिष्ठाधिकरण-त्वस्य निरूपकतासंबन्धेन नञर्थेभावेन्वयः। तथा च भूतलनिष्ठाधिकरणता-

निरूपकः घटत्वावच्छिन्नप्रतियोगताकः अभावः अस्ति — सत्ताश्रयः इति बोधः इति वाच्यम्।

भूतलनिष्ठाधिकरणत्वस्य सप्तम्यर्थस्य अभावद्वारा अस्तिक्रियायामन्वय इति फलति। एवं सति तस्य कर्तृकर्मद्वारैव क्रियायामन्वय इति नियमस्य भङ्गप्रसङ्गात्।

अपि च घटस्य प्रतियोगितासंबन्धेन अभावेऽन्वये धात्वर्थाश्रयत्वाभावेन कर्तृत्वाभावात् घटपदोत्तरं प्रथमाया अनुपपत्तेश्च।

एतद्दोषभयात् भूतलवृत्तिघटप्रतियोगकाभावस्य कर्तृत्वोक्तौ तस्य एकत्वात् "घटौ न स्तः" इति द्विवचनानुपपत्तेश्च। घटौ नास्तीति प्रयोगापत्तेश्च।

न च भूतले घटो नास्तीत्यत्र नञर्थाभावस्य प्रतियोगितासंबन्धेन घटेऽन्वयः। अभावे च भूतलाधिकरणकत्वस्यान्वयः। भूतलाधिकरणकाभावप्रतियोगी घटः अस्ति इति शाब्दबोधः इति वाच्यम्। भूतलनिष्ठाभावप्रतियगिनि अतीते भाविनि वा घटे अस्तीति व्यवहारानुपपत्तिः। तयोः वर्तमानकालिकसत्ताश्रयत्वाभावात्। घटस्य विशेष्यत्वे अयं दोषः। अभावस्य विशेष्यत्वे तु अभावस्य सार्वदिक-त्वान्नेयमनुपपत्तिः। परं तु पूर्वोक्ताः द्विवचनानुपपत्त्यादि दोषाः भवन्ति।

## भूतले घटो नास्तीत्यत्र शाब्दबोधे प्रकारान्तरम्, तन्निराकरणञ्च

एतेन — भूतलाधेयत्वाभाववान् घटोऽस्तीत्यपि शाब्दबोधः प्रत्युक्तः। अथैत-द्दोषपरिहारार्थं सप्तम्यर्थाधिकरणत्वस्य निरूपकतासम्बन्धेन धात्वर्थे, काल-सम्बन्धेऽन्वयः, तत्रैव लडर्थान्वयोऽपि। तस्य चाश्रयत्वे आख्यातार्थे, तस्य च प्रतियोगितासंसर्गेण नञर्थेऽभावे, तस्य च प्रथमान्तार्थे घटादाविति भूतल-निष्ठाधिकरणतानिरूपकवर्तमानकालसम्बन्धाश्रयत्वप्रतियोगिकाभाववान् घटः

**इति शाब्दबोधः। भावनान्वय्यभावप्रतियोगिनि च संख्यान्वयो नञस्समभिव्याहारस्थले इति मतम्।**

---

एतेन — अतीते भाविनि वेत्यादिना उक्तेन दोषेणेत्यर्थः। अथ प्रकारान्तरमनूद्य निरस्यति — **अथेत्यादिना।** पूर्वोक्तदोषपरिहाराय "भूतले घटो नास्ति" इत्यत्र सप्तम्यर्थस्य अधिकरणत्वस्य निरूपकतासंबन्धेन असधात्वर्थे कालसंबन्धेऽन्वयः। तद्घटककाले लडर्थस्य वर्तमानत्वस्यान्वयः। धात्वर्थस्य कालसंबन्धस्य आख्यातार्थे आश्रयत्वे निरूपितत्वं संबन्धेनान्वयः। आश्रयत्वस्य प्रतियोगितासंबन्धेन नञर्थेऽभावेऽन्वयः। नञर्थस्याभावस्य स्वरूपसंबन्धेन प्रथमान्तार्थे घटे अन्वयः। तथा च भूतलनिष्ठाधिकरणतानिरूपकवर्तमानकालसंबन्धाश्रयत्वप्रतियोगिकाभाववान् घट इति शाब्दबोधः। नञ् समभिव्याहारस्थले भावनान्वय्यभावानुयोगिनि घटे संख्यया: अन्वयः। अत एव "घटौ न स्तः" इत्यत्र घटपदोत्तरं द्विवचनस्योपपत्तिश्च।

**तदपि न। सप्तम्यर्थस्य साक्षाद्धात्वर्थेन्वयाव्युत्पत्तेः। अन्यथा कर्तृत्वाविवक्षायां चैत्रे पच्यत इति भावे प्रयोगापत्तेः। अत एव सप्तम्यर्थस्य धात्वर्थान्वये परम्परापदोपादानम्, कर्तृकर्मान्यतरद्वारकत्वोपादानं वा प्रामणिकानाम्।**

**न च नञ्समभिव्याहारस्थले साक्षात्सम्बन्धेनान्वयव्युत्पत्तिकल्पनमिति केषाञ्चिदुक्तं युक्तम्। चैत्रे न पच्यत इति प्रयोगस्यैवमपि निवारयितुमशक्यत्वात्। आख्यातार्थभावनासंख्यादेर्नञ्समभिव्याहारसत्त्वेऽन्यान्वयबोधकव्युत्पत्त्यन्तरकल्पनापत्तेश्च।**

---

एतन्मतं दूषयति — **तदपि नेत्यादिना।** सप्तम्यर्थस्य कर्मकर्मद्वारैव धात्वर्थान्वयः इति व्युत्पत्तिः। न तु साक्षात् धात्वर्थे इति।

यदि सप्तम्यर्थस्य साक्षात् धात्वर्थेऽन्वयः स्यात् तदा कर्तृत्वाविवक्षायां चैत्रे पच्यते इति प्रयोगापत्तिः। तथा हि — चैत्राधिकरणकः पाकः इति तात्पर्येण चैत्रे पच्यते इति प्रयोगापत्तिः। ननु परया कर्तृसंज्ञया अधिकरणसंज्ञायाः बाधात् नोक्तप्रयोगापत्तिरित्यत आह — **कर्तृत्वाविवक्षायामिति।** प्रयोगापत्तेः — साक्षात् क्रियाश्रयस्यापि अधिकरणत्वात् इति भावः। अत एव — चैत्रे पच्यते इति प्रयोगापत्तिरिति दोषस्य परिहरणीयत्वादेव। पारंपर्यमपि न येन केनापि प्रकारेण अपि तु कर्तृकर्मान्यतरद्वारेति प्रामाणिकानां वचनम्। तथा हि वाक्यपदीये तृतीये काण्डे साधनसमुद्देशे —

"कर्तृकर्मव्यवहितामसाक्षात् धारयत् क्रियाम्।
उपकुर्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम्"।। इति।

न च नञ्समभिव्याहारस्थले साक्षात्संबन्धेन धात्वर्थे सप्तम्यर्थस्यान्वय इति व्युत्पत्तिकल्पनान्न दोष इति वाच्यम्। एवमपि चैत्राधिकरणकपाककर्मत्वाभाववान् इति बोधतात्पर्येण चैत्रे न पच्यते इति प्रयोगस्य वारयितुमशक्यत्वात्।

अपि च तन्मते भावनान्वयिनि संख्यान्वय इति नियममुल्लङ्घ्य नञ्समभिव्याहास्थले भावनाप्रतियोगकाभावान्वयिनि संख्यान्वयस्वीकारेण व्युत्पत्त्यन्तरकल्पनापत्तिश्च।

**एतेन-नञसमभिव्याहारस्थले धातुना शक्यार्थाभावो लक्ष्यते, नञस्तु द्योतकत्वात्तात्पर्यग्राहकत्वमेव। सप्तम्यर्थस्य च व्युत्पत्तिविशेषकल्पनया, धात्वर्थभूताभावप्रतियोगिनि शक्यार्थे कालसम्बन्धादावन्वयः। भूतलनिष्ठाधिकरणतानिरूपक-**

**वर्तमानकालसम्बन्धप्रतियोगिकाभावाश्रयत्वं घटवृत्तीत्यादिश्च शाब्दबोधः। भावनासंख्यादेश्च न व्युत्पत्त्यन्तरकल्पनमिति केषाञ्चिदुक्तम्-अपास्तम्, कल्पनागौरवस्य तदवस्थत्वात्। चैत्रे न पच्यते इति प्रयोगापत्तेश्च, 'गृहे न पचतीति प्रयोगानापत्तेश्च, गृहस्य साक्षात् पाकाधिकरणत्वाभावात्।**

---

मतान्तमनूद्य निराकरोति — **एतेनेत्यादिना**। अयमाशयः — "भूतले घटो नास्ति" इत्यादिनञ्समभिव्याहारस्थले अस् धातुना कालसंबन्धरूपो यः शक्यार्थः तदभावो लक्ष्यते। नञस्तु द्योतकत्वात् तात्पर्यग्राहकत्वमेव। सप्तम्यर्थस्याधिकरणत्वस्य व्युत्पत्तिविशेषकल्पनया धात्वर्थभूताभावप्रतियोगिनि शक्यार्थे कालसंबन्धेऽन्वयः। तथा च "भूतले घटो नास्ति" इति वाक्यात् भूतलनिष्ठाधिकरणतानिरूपकवर्तमानकालसंबन्धप्रतियोगिकाभावाश्रयत्वम् एकत्वं च घटवृत्ति इत्याकारकः शाब्दबोधो जायते। भावनासंख्ययोः अन्वयार्थं न व्युत्पत्त्यन्तरं कल्प्यते इत्याहुः।

व्युत्पत्तिविशेषकल्पना नाम — सप्तम्यर्थाधिकरणत्वनिष्ठप्रकारतानिरूपितविशेष्यतासंबन्धेन शाब्दबोधं प्रति धातुलक्ष्याभावप्रतियोगिनिष्ठविशेष्यतासंबन्धेनोपस्थितिः कारणमिति कार्यकारणभावकल्पना।

इदं मतं खण्डयति — **कल्पनागौरवस्येति**। तदपि न युक्तम्। कल्पनागौरवस्य तदवस्थत्वात्। एवं चैत्रे न पच्यते इति चैत्राधिकरणकपाकाभावविवक्षया प्रयोगापत्तेश्च। गृहे न पचति इति प्रयोगानापत्तेश्च। सप्तम्यर्थस्य यदि साक्षात् धात्वर्थेऽन्वयः तर्हि गृहाधिकरणको यः पाकः तदभाव इति बोधनीयम्। तत्तु न संभवति स्थाल्यधिकरणकस्य पाकस्य गृहाधिकरणकत्वासंभवात् प्रतियोग्यप्रसिद्धेः इति भावः।

**अथ तत्र कर्तृद्वारकान्वयस्वीकारेऽपि 'भूतले घटो नास्ती'त्यत्रैव सप्तम्यर्थस्य धात्वर्थभूताभावप्रतियोगिकालसम्बन्धेऽन्वयः इति मतम्। ततोऽस्त्याख्यधातु-घटितव्युत्पत्तिकल्पनादतिगौरवम्। गृहे न पचतीत्यादौ च गृहाधिकरणकचैत्र-वृत्तिपाकस्याऽप्रसिद्धेः न तदभावो धातुना बोधयितुं शक्यत इति, तत्र शाब्दबोधा-नुपपत्तिस्तदवस्थैवेति चेत्।**

---

पुनः शङ्कते — **अथ मतमिति।** गृहे न पचतीत्यत्र सप्तम्यर्थस्य अधिकरण-त्वस्य कर्तृद्वारा पाकेऽन्वयः स्वीक्रियते। गृहाधिकरणकः यः चैत्रः तत्कर्तृक-पाकाभावः इति तत्र बोध्यते।

भूतले घटो नास्तीत्यत्रैव तु असधात्वर्थः कालसंबन्धः। तत्र नञर्थाभावस्य प्रतियोगित्वसंबन्धेनान्वयः। कालसंबन्धे भूतलाधिकरणकत्वस्यान्वयः। तथा च भूतलाधिकरणककालसंबन्धः घटनिष्ठाभावप्रतियोगी इति बोध इति भावः। तन्मनं खण्डयति — **तदपि नेति।** असधातोः प्रयोगे अभावप्रतियोगिनि लक्ष्यार्थे सप्तम्यर्थान्वय इति एका व्युत्पत्तिः कल्पनीया। अपि च यदा चैत्रः गृहे वर्तते, परं तु न पचति, तदा चैत्रो गृहे न पचतीति प्रयोगानुपपत्तिः। गृहाधिकरणक-चैत्रकर्तृकपाकस्याप्रसिध्देः।

## स्वमते भूतले घटो नास्तीति वाक्याद् बोधप्रकारः

**न। 'इदानीं भतले घटो नास्ती'त्यादावपि भूतलाधिकरणकघटवृत्तिसत्ताश्रयत्वं घटनिष्ठाभावप्रतिचोगीत्येव शाब्दबोधात्। प्रसिद्धं हि घटस्य भूतलाधिकरणकत्वं कालान्तरे। अतो न प्रतियोगिनोऽप्रसिद्धिः, न वा व्युत्पत्त्यन्तरकल्पनम्। तथाहि — सप्तम्यर्थस्य तावन्निरुक्तसंसर्गेणाख्यातार्थेऽन्वयः। प्रथमार्थस्यापि क्लृप्त-**

संसर्गेण तत्रैव, नञा परं लडाद्यर्थकालावच्छिन्नघटनिष्ठाभावलक्षणा। लडादिश्च तात्पर्यग्राहकमात्रम्। इदानीम्पदस्य च निपातत्वान्नञर्थान्वयेऽपि न क्षतिः। संभवति हि, उक्तसत्ताश्रयत्वाभाव एव तत्कालावच्छेदेन घटे। एतस्मिन् काले एतद्भूतले घटाभावात्। अत एव भूतलवृत्तिघटाभावस्याप्यर्थादनुभूयमानस्य नाऽपलापः। यत्र त्वधिकरणे कदापि न कर्त्रादिसत्ता प्रसिद्धा, तत्रापि न कर्तुर्घट-त्वादिना संसर्गघटकता, येन प्रतियोग्यप्रसिद्धिराशंक्येत, अपि तु प्रकृतक्रियाश्रय-त्वेनैव। तथा च भूतलनिष्ठाधिकरणतानिरूपकवृत्ति वर्तमानसत्ताश्रयत्वं भूतलवृत्ति-परमाण्वादावेव प्रसिद्धम्। अयमेव प्रकारः पूर्वत्रानुसन्धेयः।

---

एतावता मतान्तरेषु दोषान् आविष्कृत्य अथ स्वमतेन "इदानीं भूतले घटो नास्ति" इत्यादौ शाब्दबोधप्रकारं दर्शयति — "न, इदानीं भूतले" इत्यादिना। "इदानीं भूतले घटो नास्ति" इत्यत्र भूतले इति सप्तम्यन्तार्थस्य भूतल-निष्ठाधिकरणत्वस्य स्वनिरूपकघटवृत्तित्वसंबन्धेन आख्यातार्थे आश्रयत्वे-ऽन्वयः। नञः परं लडाद्यर्थकालावच्छिन्नाभावे लक्षणा। लडादिश्च तात्पर्य-ग्राहकः। तथा च भूतलाधिकरणकघटवृत्ति सत्ताश्रयत्वं घटनिष्ठाभावप्रतियोगीति शाब्दबोधः। प्रसिद्धं हि घटस्य भूतलाधिकरणकत्वं कालान्तरे। अतो न प्रतियोगिनोऽप्रसिद्धिः। न वा व्युत्पत्त्यन्तरकल्पनम्।

इदानींपदार्थस्यापि वर्तमानकालावच्छिन्नत्वस्य नञर्थे अभावेऽन्वयः। संभवति हि कालान्तरावच्छिन्नभूतलाधिकरणकघटवृत्तिसत्ताश्रयत्वस्याभावः वर्तमान-कालावच्छेदेन घटे। एतस्मिन् काले एतद्भूतले घटाभावात्। अत एव भूतलवृत्तिघटाभावस्यापि अर्थादनुभूयमानस्य नापलापः।

यत्र त्वधिकरणे कदापि न कर्त्रादिसत्ता प्रसिद्धा तत्रापि न कर्तुः घटत्वादिना संसर्गघटकता, किं तु प्रकृतक्रियाश्रयत्वेनैव। अतः प्रतियोग्यप्रसिद्धिशङ्कायाः नावकाशः। तथा च भूतलनिष्ठाधिकरणतानिरूपकवृत्ति वर्तमानसत्ताश्रयत्वं भूतलवृत्तिपरमाण्वादौ प्रसिद्धम्। तस्मिंश्च आश्रयत्वे घटनिष्ठाभावप्रतियोगित्वबोधः। अयमेव प्रकारः "गृहे न पचति" इत्यादावनुसन्धेयः। एवं लडाद्यर्थस्यापि धात्वर्थेऽन्वयो न त्यक्तो भवति। तात्पर्यग्राहकत्वस्यापि लडादौ स्वीकारात्। तथा च तत्कालावच्छिन्नाभावप्रतियोगित्वम् उक्तविधसत्ताश्रयत्वेऽव्याहतम्। तथा च भूतलाधिकरणकवृत्तिवर्तमानसत्ताश्रयत्वं वर्तमानकालावच्छिन्नघटनिष्ठाभावप्रतियोगीति बोधः।

**एवम् — लडाद्यर्थस्यापि धात्वर्थान्वयो न त्यक्तो भवति। तात्पर्यग्राहकत्वस्यापि च स्वीकारात्, तत्कालावच्छिन्नघटनिष्ठाभावप्रतियोगित्वमुक्तविधाश्रयत्वेऽव्याहतम्। यदि त्वस्मिन् पक्षे घटस्याख्यातार्थे साक्षात्सम्बन्धेन अनन्वयात् कर्तृत्वानुपपत्तिराशङ्क्येत, ततोऽस्त्याख्यातस्यैवोक्ताश्रयत्वप्रतियोगिकोक्तविधाभावे सप्तमी-नञुभयसमभिव्याहारे लक्षणा, नङ्पदञ्च तात्पर्यग्राहकमात्रम्। तस्मिंश्चाभावे घटस्याधेयत्वसम्बन्धेनैवान्वयान्न व्युत्पत्त्यन्तरकल्पना। उक्तविधाश्रयत्वावच्छिन्नप्रतियोगिताकाभावश्च घटे, न घटस्य भूतलवृत्तितादशायामित्यर्थात् भूतलाधिकरणकघटाभावबोधः।**

---

यदि तु इत्यादि। ननु उक्तप्रकारेण नञो लक्षणया घटनिष्ठाभावप्रतियोगित्वमर्थः इति स्वीकारे घटपदं तात्पर्यग्राहकमिति लभ्यते। तथा सति घटस्य आख्यातार्थाश्रयत्वे अन्वयाभावात् घटस्य कर्तृत्वानुपपत्तिः इति शङ्का। तत्र समाधानम् — अस्त्याख्यातस्यैव उक्ताश्रयत्वप्रतियोगिकोक्तविधाभावे सप्तमी-

नञुभयसमभिव्याहारे लक्षणा। नञ्-पदं च तात्पर्यग्राहकमात्रम्। अयं भावः प्रकृते ति इत्याख्यातस्य लक्षणया आश्रयत्वप्रतियोगिकवर्तमानकालावच्छिन्नाभावोऽर्थः। नञ् पदं तात्पर्यग्राहकम्। प्रथमान्तार्थस्य घटस्य आख्यातार्थे अभावे आधेयतासंबन्धेन अन्वयः। एवं च आश्रयत्वाभावो घटवृत्तिरिति बोधः। एवं च आख्यातार्थैकदेशेऽभावे घटस्यान्वयात् न कर्तृत्वव्याघातः। व्युत्पत्त्यन्तरं च न कल्पनीयम्। तथा च घटस्य भूतलवृत्तितादशायां भूतलाधिकरणकसत्ताश्रयत्वाभावो घटे न भवितुमर्हति। अर्थात् भूतले घटाभावकाल एव उक्ताश्रयत्वाभावो घटे भवितुमर्हतीति।

तथा च भूतलनिष्ठाधेयतानिरूपकवृत्तिवर्तमानसत्ताश्रयत्वप्रतियोगिताकाभावः घटवृत्तिः इति बोधः। उक्तविधाश्रयत्वत्वावच्छिन्नप्रतियोगिताकाभावश्च घटे, न घटस्य भूतलवृत्तितादशायाम् इति अर्थात् भूतलाधिकरणकघटाभावबोधः।।

### वायौ रूपं नास्तीत्यादौ बोधप्रकारः

**एवम् — 'वायौ रूपं नास्ति, ह्रदे वह्निर्नास्ति, जातौ सत्ता नास्ती'त्यादिप्रयोगाः अप्युपपादनीयाः। न च समवायसम्बन्धेन जातिवृत्तेरप्रसिद्ध्या समवायसम्बन्धावच्छिन्नजातिनिष्ठाधिकरणतानिरूपकवृत्तिविद्यमानकालसम्बन्धाश्रयत्वाप्रसिद्धेः, कथं तदभावस्य सत्तायां बोध इति वाच्यम्। जातावपि साक्षात्स्वरूपसम्बन्धेन वृत्तेः प्रसिद्धत्वात्, सत्तायामपि निरुक्तसामान्याभावोपपत्तेः। 'जातौ समवायेन सत्ता नास्ती'ति प्रयोगस्तु निरुक्ताश्रयत्वस्यैव व्यधिकरणसम्बन्धावच्छिन्नाभावमादायोपपादनीयः। समवायेनेत्यस्य चाख्यातार्थे अभावे स्वावच्छिन्नत्वसम्बन्धेनान्वय इति, न काप्यनुपपत्तिः।**

---

वायौ रूपं नास्तीत्यत्र बोधप्रकारः — सप्तम्यन्तार्थस्य वायुनिष्ठाधिकरणत्वस्य स्वनिरूपकवृत्तित्वसंबन्धेन आख्यातार्थे वर्तमानकालसंबन्धाश्रयत्वेऽन्वयः। तस्य नञर्थेऽभावे प्रतियोगितासंबन्धेनाऽन्वयः। रूपस्याधेयतासंबन्धेन अभावेऽन्वयः। तथा च वायुनिष्ठाधिकरणतानिरूपकवृत्ति यत् वर्तमानकालसंबन्धाश्रयत्वं तदभावः रूपवृत्तिः इति बोधः। स्पर्शरूपकर्तृद्वारा अधिकरणत्वस्य आख्यातार्थेऽन्वयोऽस्ति। स्पर्शस्य तु न स्पर्शत्वेन भानम्, अपि तु वायुनिष्ठाधिकरणतानिरूपकत्वेन भानम्।

एवं ह्रदे वह्निर्नास्ति इत्यत्र ह्रदनिष्ठाधिकरणतानिरूपक(जल)वृत्तिवर्तमानकालसंबन्धाश्रयत्वाभावः वह्निवृत्तिः इति बोधः।

एवं जातौ सत्ता नास्ति इत्यतः जातिनिष्ठाधिकरणतानिरूपक(जातित्व)वृत्तिवर्तमानकालसंबन्धाश्रयत्वाभावः सत्तावृत्तिः इति बोधः।

न च समवायसंबन्धेन जातिवृत्तेरप्रसिद्ध्या समवायसंबन्धावच्छिन्ना जातिनिष्ठाधिकरणता अप्रसिद्धा। तथा च तद्घटितस्य समवायसंबन्धावच्छिन्नजातिनिष्ठाधिकरणतानिरूपकवृत्तिवर्तमानकालसंबन्धाश्रयत्वस्य अप्रसिद्ध्या कथं तदभावस्य सत्तायां बोधः इति वाच्यम्। जातौ साक्षात् स्वरूपसंबन्धेन वृत्तेः जातित्वादौ प्रसिद्धतया जातिनिष्ठाधिकरणतानिरूपक(जातित्व)वृत्तिवर्तमानकालसंबन्धाश्रयत्वस्याभावः सत्तावृत्तिः इति बोधे नानुपपत्तिः इति भावः।

समवायेन जातौ सत्ता नास्ति इति प्रयोग एव क्लेशः। समवायसंबन्धावच्छिन्नजातिनिष्ठाधिकरणतायाः अप्रसिद्धेः। स चैवं समर्थनीयः — निरुक्ताश्रयत्वस्यैव व्यधिकरणसंबन्धावच्छिन्नप्रतियोगिताकाभावमादाय।

एतदुक्तं भवति — जातिनिष्ठाधिकरणतानिरूपकवृत्तिवर्तमानकालसंबन्धाश्रयत्वनिष्ठा या समवायसंबन्धावच्छिन्नजातिनिष्ठाधिकरणतानिरूपकवृत्तिवर्तमानकालसंबन्धाश्रयत्वत्वावच्छिन्ना प्रतियोगिता तन्निरूपकमभावमादायेत्यर्थः। प्रतियोगितावच्छेदककोटिप्रविष्टायां जातिनिष्ठाधिकरणतायां व्यधिकरणसमवायसंबन्धस्य घटकत्वात् अभावे व्यधिकरणसंबन्धावच्छिन्नत्वोक्तिरिति। एवं च समवायेनेत्यस्य आख्यातार्थे अभावे स्वावच्छिन्नाधिकरणताघटितप्रतियोगिताकत्वसंबन्धेनान्वय इति न काचिदनुपपत्तिरिति।

## गृहे चैत्रो न पचति इत्यादौ वोधप्रकारः

**एवम् — गृहे चैत्रो न पचति इत्यादावपि पूर्ववदेव सर्वैः प्रकारैः बोधोपपादनं द्रष्टव्यम्। तत्र त्वयं विशेषः, चैत्रस्य गृहस्थत्वे पाकाश्रयत्वाभावमादाय, पाकाश्रयत्वे गृहस्थत्वाभावमादाय, उभयाभावे चोभयाभावमादाय विशिष्टाभावस्सम्पादनीयः। तत्तदभावबोध एव च तात्पर्यभेदेन फलम्।**

---

एवं गृहे चैत्रो न पचति इत्यत्र गृहाधिकरणकवृत्तिवर्तमानपाकाश्रयत्वाभावः चैत्रवृत्तिः इति बोधः।

अथ वा गृहाधिकरणकवृत्तिपाकाश्रयत्वं वर्तमानकालावच्छिन्नचैत्रनिष्ठाभावप्रतियोगि इति बोधः।

आद्यपक्षे चैत्रस्य गृहस्थत्वे पाकाश्रयत्वाभावमादाय पाकाश्रयत्वे गृहाधिकरणकत्वाभावमादाय उभयाभावे च उभयाभावमादाय विशिष्टाभावः संपादनीयः। तत्तदभावबोध एव तात्पर्यभेदेन फलम्।

एवम् — स्थाल्यां तण्डुलं न पचति चैत्रः इत्यत्रापि तण्डुलवृत्तित्वाभावे तण्डुलस्य, पाककर्मत्वाभावे पाकस्य चैत्रवृत्तित्वाभावेऽपि च तात्पर्यभेदो द्रष्टव्यः।

तात्पर्यग्राहकान्तराभावे तु स्थालीपदवैयर्थ्यभिया आद्याभाव एव, झटित्यर्थात् प्रतीतेः। अत एव — न जीवत्पितृकः कुर्यात् तिलैः कृष्णैश्च तर्पणमि [स्मृत्यर्थसारे] त्यादौ कृष्णत्वाभाव एव तात्पर्यम्, न तु तिलतर्पणाभावादाविति व्याचक्षते वृद्धाः। 'नान्तरिक्षे अग्निश्चेतव्यः' इत्यादौ तु सप्तम्यर्थस्य कर्तृकर्म-द्वारकत्वासम्भवेन प्रतियोग्यप्रसिद्ध्यापत्तेः, अगत्या नञ्-सप्तम्यन्ताभ्यामन्तरिक्ष-वृत्त्यभावलक्षणया तत्प्रतियोगित्वमाख्यातार्थेऽनूद्यत इति, तस्य नित्यानुवादता। तत्र सप्तम्यर्थस्य स्वातन्त्र्येण अन्वयाभावादेव न व्युत्पत्त्यन्तरकल्पना। अत एव अर्थवादवाक्यलक्ष्यप्राशस्त्यस्याप्यनयैव व्युत्पत्त्याख्यातार्थभावनान्वयः। 'अन्त-रिक्षे घटो न पचती'त्यादौ च सप्तम्यन्तनञ्-धातुभिरन्तरिक्षवृत्तित्वरूपव्यधि-करणधर्मावच्छिन्नप्रतियोगिताकपाकाभावो लक्ष्यते, आख्यातेन चाश्रयत्वम्। तथा चोक्तविधाभावाश्रयत्वं घटवृत्तीति शाब्दबोधः। अतोऽत्रापि न सप्तम्यर्थान्वयः इति, न कुत्रापि सप्तम्यर्थस्य कर्तृ कर्मान्यतरद्वारकत्वव्यभिचारः।

यत्र तु न सप्तम्यन्तपदसमभिव्याहारः 'चैत्रो न पचती'त्यादौ, तत्र नञर्थस्य चैत्रवृत्त्यभावस्य चैत्रवृत्तिकृतौ प्रतियोगितासम्बन्धेनाऽन्वयः। अथवा वर्तमान-पाकानुकूलकृत्यभावमाख्यातेन लक्षयित्वा, तस्मिन् चैत्रान्वयः इत्यादि बोध्यम्।

---

एवं स्थाल्यां तण्डुलं न पचति इत्यत्रापि स्थाल्यधिकरणकतण्डुलकर्मक-पाकाश्रयत्वाभावः चैत्रवृत्तिः इति बोधः। तत्र तण्डुलस्य स्थाल्यवृत्तित्वे तात्पर्यं चेत् स्थाल्यधिकरणकत्वाभवप्रयुक्तः विशिष्टाभावः। तण्डुलस्य पाककर्मत्वाभावे

तात्पर्यं चेत् तण्डुलकर्मकत्वाभावप्रयुक्तः विशिष्टाभावः पाकस्य चैत्रवृत्तित्वाभावे तात्पर्यं चेत् पाकाश्रयत्वाभावप्रयुक्तः विशिष्टाभावः इति ऊहनीयम्।

तात्पर्यग्राहकप्रमाणाभावे च उक्तस्थले स्थालीपदवैयर्थ्यभिया पूर्वोक्तेष्वभावेषु आद्याभाव एव — तण्डुलस्य स्थालीवृत्तित्वाभाव एव झटिति अर्थात् प्रतीयते।

अत एव 'न जीवत्पितृकः कुर्यात् तिलैः कृष्णैश्च तर्पणम्' (स्मृत्यर्थसारे) इत्यत्र जीवत्पितृकः कृष्णत्वविशिष्टतिलकरणकतर्पणं न कुर्यात् इति वाक्यार्थबोधानन्तरं तात्पर्यवशात् तिले कृष्णत्वाभाव एव प्रतीयते, न तु तिलकरणकतर्पणाभाव इति व्याचक्षते वृद्धाः।

नान्तरिक्षे अग्निश्चेतव्यः इत्यत्र अन्तरिक्षाधिकरणाग्नेरप्रसिद्ध्या सप्तम्यर्थस्य अधिकरणत्वस्य कर्तृकर्मद्वारा क्रियान्वयो न संभवति। अतस्तत्र नञ्सप्तम्यन्ताभ्याम् अन्तरिक्षवृत्त्यभावलक्षणया तत्प्रतियोगित्वमाख्यातार्थेऽनूद्यत इति तस्य नित्यानुवादता। अग्निकर्मकचयनभावना अन्तरिक्षवृत्त्यभावप्रतियोगिनी इति शाब्दबोधः। तत्र सप्तम्यर्थस्य स्वनिरूपकाभावप्रतियोगित्वरूपपरंपरासंबन्धेन भावनायामन्वयः, न तु साक्षात् इति नास्ति व्युत्पत्त्यन्तरकल्पनेति भावः।

अत एव नञ्-सप्तम्यन्तरूपपदद्वयलक्षितस्याप्यर्थस्य आख्यातार्थेऽन्वयस्वीकारादेव अर्थवादवाक्यलक्ष्यस्य प्राशस्त्यस्यापि आख्यातार्थभावनायामन्वय उपपद्यते।

अन्तरिक्षे घटो न पचति इत्यादौ सप्तम्यन्तनञ्धातुभिः अन्तरिक्षवृत्तित्वरूपव्यधिकरणधर्मावच्छिन्नपाकनिष्ठप्रतियोगितानिरूपकोऽभावः लक्ष्यते लक्षणया प्रतिपाद्यते। आख्यातेन आश्रयत्वं लक्ष्यते। तत्र पूर्वोक्ताभावस्य निरूपितत्वसंबन्धेनान्वयः। घटस्य च तत्र आधेयतासंबन्धेनान्वयः। तथा च अन्तरिक्ष-

वृत्तित्वरूपव्यधिकरणधर्मावच्छिन्नपाकनिष्ठप्रतियोगिताकाभावनिरूपिताश्रयत्वं घटवृत्ति इति शाब्दबोधः। अतोऽत्रापि सप्तम्यर्थस्य न भावनायामन्वयः। अपि तु पूर्वोक्तलक्ष्यार्थस्य। अतोऽत्र कर्तृकर्मद्वारकत्वस्य व्यभिचार इति शङ्कायाः नावकाशः। सप्तम्यर्थस्य भावनायामन्वयो यत्र तत्रैव कर्तृकर्मद्वारा अन्वय इति नियमादिति भावः।

## चैत्रो न पचेदित्यत्र बोधप्रकारः

**एवम् — लिङादिसमभिव्याहारेऽपि 'चैत्रो न पचेद् (कलञ्जं भक्षयेत्)' इत्यादौ यत्र चैत्रवृत्तिकृतिप्रसिद्धिः, तत्र तस्यां न कलञ्जं भक्षयेदि'तिवदेव विध्यर्थस्य स्वप्रयोज्याभावप्रतियोगित्वसंसर्गेणैव, नञर्थस्यापि चैत्रवृत्त्यभावस्य प्रतियोगितासंसर्गेणाऽन्वयः। अप्रसिद्धौ त्वाख्यातेन पाकानुकूलकृत्यभावं लक्षयित्वा, तस्मिन् विध्यर्थस्य प्रयोज्यत्वेन, चैत्रस्य चाधेयत्वेनाऽन्वय इति सर्वमनवद्यम्।**

---

यत्र तु न सप्तम्यन्तपदसमभिव्याहारः चैत्रो न पचति इत्यादौ, तत्र लक्षणया नञः चैत्रवृत्त्यभावः अर्थः। चैत्रपदार्थस्य पाकानुकूलकृतौ आधेयतासंबन्धेनान्वयः। नञर्थस्याभावस्यापि प्रतियोगितासंबन्धेन कृतावन्वयः। चैत्रवृत्तिकृतिः चैत्रवृत्त्यभावप्रतियोगिनी इति बोधः। अत्र अभावः वर्तमानकालावच्छिन्नो ग्राह्यः। चैत्रवृत्तिकृतिः चैत्रवृत्तिवर्तमानकालावच्छिन्नाभावप्रतियोगिनी इति बोधः। चैत्रवृत्तिः कृतिः अतीतकृतिः। तत्र वर्तमानकालावच्छिन्नाभावप्रतियोगित्वमस्तीति न वाक्यार्थबाधः।

अथवा आख्यातस्य लक्षणया वर्तमानपाकानुकूलकृत्यभावोऽर्थः। तत्र चैत्रस्य आधेयतया अन्वयः। तथा च वर्तमानपाकानुकूलकृत्यभावः चैत्रवृत्तिः इति बोधः।

एवं लिङादिसमभिव्याहारेऽपि "चैत्रो न पचेत्" इत्यदौ, यत्र चैत्रवृत्तिकृतिः प्रसिद्धा तत्र तस्यां कृतौ "न कलञ्जं भक्षयेत्" इत्यत्रेव विध्यर्थस्य प्रवर्तनस्य स्वप्रयोज्याभावप्रतियोगित्वसंबन्धेन अन्वयः। नञः लक्षणया चैत्रवृत्त्यभावोऽर्थः। तस्य प्रतियोगितासंबन्धेन कृतावन्वयः। तथा च चैत्रवृत्तिकृतिः प्रवर्तनाप्रयोज्याभावप्रतियोगिनी चैत्रवृत्त्यभावप्रतियोगिनी चेति शाब्दबोधः।

चैत्रवृत्तिकृतेः अप्रसिद्धौ तु आख्यातेन पाकानुकूलकृत्यभावं लक्षयित्वा तस्मिन् विध्यर्थस्य प्रयोज्यत्वेन चैत्रस्य चाधेयत्वेनान्वयः। पाकानुकूलकृत्यभावः प्रवर्तनाप्रयोज्यः चैत्रवृत्तिश्चेति बोधः।

## अधिकरणत्वत्रैविध्यम्

**तच्चाधिकरणत्वं त्रिविधम् — औपश्लेषिकम्, वैषयिकम्, अभिव्यापकं चेति। कटे आस्ते, घटे ज्ञानमस्ति, मोक्षे इच्छाऽस्ति, सर्वस्मिन्नात्मास्ति, तिलेषु तैलमस्ति। उपश्लेषः – सावच्छिन्नवृत्तित्वम्। वैषयिकम् – विषयतासम्बन्धावच्छिन्नम्। अभिव्यापकम् – अवच्छेदकावच्छेदेन वृत्तिमत्। 'सप्तम्यधिकरणे चे'ति 'चकारात् दूरान्तिकार्थेभ्योऽपि सप्तमी। वनस्य दूरे, अन्तिके वा ग्रामः। दूरे-दूरत्वावच्छिन्नप्रदेशे। प्रतियोगित्वं षष्ठ्यर्थः। यद्यप्यत्राधिकरणत्वादेव सप्तमी प्राप्यते। तथापि द्वितीयादिविभक्तित्रयेण विशेषविहितेन बाधप्रसक्तौ प्रतिप्रसवार्थश्चकारः।**

---

अथ अधिकरणत्वस्य त्रैविध्यं सोदाहरणमुच्यते। अधिकरणत्वं त्रिविधम् — औपश्लेषिकम्, वैषयिकम्, अभिव्यापकं चेति। उपश्लेषः सावच्छिन्नवृत्तिकत्वम्।

आधारीययत्किंचिदवयवव्याप्तिरूपम्। यथा "चैत्रः कटे आस्ते"। कटे किंचिदवच्छेदेन उपविशति इत्यर्थः।

वैषयिकम् — विषयतासंबन्धावच्छिन्नमधिकरणत्वम्। यथा "घटे ज्ञानमस्ति" घटः ज्ञानस्य विषयतासंबन्धेनाधिकरणं भवति।

अभिव्यापकम् — अवच्छेदकावच्छेदेन वृत्तिमत्। यथा सर्वस्मिन् आत्मा अस्ति। सर्वावच्छेदेन वृत्तीत्यर्थः। त्रिष्वपि उदाहरणेषु सप्तम्यर्थस्याधिकरणत्वस्य कर्तृकर्मान्यतरद्वारा भावनायामन्वय इत्येतत् न विस्मरणीयम्।

कटे चैत्रः आस्ते — संयोगेन कटाधिकरणकचैत्रवृत्तिः उपवेशभावना इति बोधः।

घटे ज्ञानमस्ति विषयतासंबन्धावच्छिन्नघटनिष्ठाधिकरणतानिरूपकज्ञाननिष्ठं सत्ताश्रयत्वम् इति बोधः।

सर्वस्मिन्नात्मास्ति — सर्वत्वव्यापकाधिकरणतानिरूपकात्मनिष्ठं सत्ताश्रयत्वमिति बोधः।

"सप्तम्यधिकरणे च" (पा.सू 2.3.36) इति चकारात् दूरान्तिकार्थेभ्योऽपि सप्तमी। वनस्य दूरे अन्तिके वा ग्रामः। दूरे दूरत्वावच्छिन्नप्रदेशे। प्रतियोगित्वं षष्ठ्यर्थः। वनप्रतियोगिकदूरत्वावच्छिन्नप्रदेशवृत्तिः ग्रामः, वनप्रतियोगिकान्तिकत्वावच्छिन्नप्रदेशवृत्तिः ग्रामः इति बोधः। यद्यप्यत्रोदाहरणे दूरान्तिकप्रदेशयोः ग्रामं प्रति अधिकरणत्वात्, "सप्तम्यधिकरणे च" इत्यत एव सप्तमी भविष्यति, अतः सूत्रे चकारोऽनावश्यकः इति शङ्का भवति, तथाऽपि "दूरान्तिकार्थेभ्यो द्वितीया च" (पा.सू 2.3.35) इति सूत्रविहितद्वितीयापञ्चमीतृतीयाविभक्तिभिः सह चतस्रोऽत्र विभक्तयो भवन्तीति ज्ञापनाय "सप्तम्यधिकरणे च" (पा.सू 2.3.36)

इति सूत्रे चकार इति भावः। दूरान्तिकार्थेभ्यः इति सूत्रे चकारस्तु पञ्चमीतृतीययोः समुच्चायकः इत्यवधेयम्। तथा च "सप्तम्यधिकरणे च" (पा.सू 2.3.36) इति सूत्रात् पूर्वेण "दूरान्तिकार्थेभ्यो द्वितीया च" (पा.सू 2.3.35) इति सूत्रेण विशेषविहितेन द्वितीयादिना "अधिकरणे" सामान्यविहितसप्तम्याः बाधप्रसक्तौ प्रतिप्रसवार्थश्चकारः इति भावः। तथा च वनस्य दूरं दूरात् दूरेण दूरे वा ग्रामः इति उदाहरणं भवति। सूक्ष्मार्थदर्शी तत्रभवान् खण्डदेवः।

## क्तस्येन्विषयस्योपसंख्यानम्

**एवम् — क्तस्येन्विषयस्य कर्मण्युपसंख्यानम् इति वार्तिकात् इन् — इन्नन्त-शब्दो विषयो — वर्तनभूमिर्यस्य क्तान्तस्य यदुपरीन्शब्द इत्यर्थः। तादृशक्त-प्रत्ययस्य वस्तुतो यत्कर्म, तस्मिन् सप्तमी। अधीती व्याकरणे। अधीतमनेनेति विग्रहः। 'इष्टादिभ्यश्चेति कर्तरि इनिप्रत्ययस्य विधानात्। एतस्य च तद्धितत्वेन कृतपूर्वी कटमितिवत् द्वितीयायां प्राप्तायाम्, कर्मणि सप्तमीविधिः तद्बाधेन, शाब्दबोधश्च तद्वदेव। कर्म चात्र मुख्यमेव, न तु मासादिः, तेन मासमधीती व्याकरणे'इत्यत्र काले द्वितीयैव।**

---

**एवं क्तस्येन्विषयस्येत्यादि।** "क्तस्येन्विषयस्य कर्मण्युपसंख्यानम्" (वा. 1485) इति वार्तिकात् इन् — इन्नन्तशब्दः विषयः वर्तनभूमिः यस्य क्तान्तस्य, यदुपरि इन् प्रत्ययः इत्यर्थः, तादृशक्तप्रत्ययस्य वस्तुतो यत् कर्म तस्मिन् सप्तमी, तद्वाचकपदात् सप्तमी इति वार्तिकार्थः।

अधीती व्याकरणे इति उदाहरणम्। अधीतमनेनेति विग्रहः। "इष्टादिभ्यश्च" (पा.सू 5.2.88) इति सूत्रेण अधिपूर्वक इङ्धातोः कर्तरि इनिप्रत्यये अधीती इति

भवति। अस्य इनिप्रत्ययस्य तद्धितप्रत्ययत्वेन "कृतपूर्वी कटम्" इत्यत्रेव व्याकरणशब्दात् कर्मणि द्वितीयायां प्राप्तायां तद्बाधेन सप्तमी विधीयते। व्याकरणकर्मकाध्ययनभावना चैत्रनिष्ठेति शाब्दबोधः। कर्म चात्र मुख्यकर्मैव विवक्षितम्, न तु गौणकर्म। तेन "मासमधीती व्याकरणे" इत्यत्र कालवाचकात् मासशब्दात् "कालाध्वनोरत्यन्तसंयोगे" (पा.सू 2.3.5) इति सूत्रात् द्वितीयैव, न तु सप्तमी इति भावः।

**एवम् — 'साध्वसाधुप्रयोगे च' इति वार्तिकात् 'साधुः कृष्णः मातरि भवति, असाधुर्मातुले' इत्यत्र सप्तमी। अत्र वैषयिकत्वादिनाधिकरणसप्तम्यैव सिद्धौ, पुनर्वचनं षष्ठीनिषेधार्थम्। न च 'साधुनिपुणाभ्यामर्चायाम् सप्तम्यप्रतेः' (पा.सू 2.3.43) इति वक्ष्यमाणसूत्रेणैव साधुशब्दयोगे सप्तमीसिद्धेरेतद्वार्त्तिके साधुशब्द-ग्रहणवैयर्थ्यम्। अनर्चायां प्रतिना योगेऽपि साधुशब्दयोगे सप्तमीत्येवं सार्थक्यात्। न चैवं 'साधुर्भृत्यो राज्ञः' इति षष्ठीप्रयोगानापत्तिः। तत्र राज्ञो भृत्यद्वारकान्व-याङ्गीकारेण साधुत्वद्वारकान्वयानङ्गीकारात्। न चैवमप्यर्चानर्चादिसाधारण्येन साधुशब्दयोगे सप्तमीविधौ वक्ष्यमाणसूत्रेऽर्चाग्रहणवैयर्थ्यम्, निपुणपदप्रयोगे-ऽर्चायामेव सप्तमीत्येवं सार्थक्यात्। न चैवमेतद्वार्तिकेनैव साधुशब्दयोगे सप्तमी-सिद्धेः, वक्ष्यमाणसूत्रे साधुशब्दग्रहणवैयर्थ्यम्, उत्तरभाविवार्तिकेन पूर्वभाविसूत्रे वैयर्थ्यशङ्कायाः अनुक्तिसहत्वात्।**

---

"साध्वसाधुप्रयोगे च" (वा. 1486) इति वार्तिकात् "साधुः कृष्णः मातरि भवति", "असाधुर्मातुले" इत्यत्र सप्तमी। इह वैषयिकत्वादिना अधिकरणसप्तम्यैव सिद्धौ पुनर्वचनं षष्ठीनिषेधार्थम्।

न च "साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः" (पा.सू 2.3.43) इति वक्ष्यमाणसूत्रेणैव साधुशब्दयोगे सप्तमीसिद्धेः एतद्वार्तिके साधुशब्दग्रहणं व्यर्थमिति वाच्यम्। अनर्चायां प्रतिना योगे च साधुशब्दप्रयोगे सप्तमीत्येवं सार्थक्यात्, यथा साधुः भृत्यो राजनि। इह तत्त्वकथने तात्पर्यम्।

न चैवं साधुर्भृत्यो राज्ञः इत्येवं षष्ठीप्रयोगानुपपत्तिरिति वाच्यम्। तत्र राज्ञो भृत्यः साधुर्भवति इत्यन्वयात् राज्ञः भृत्यद्वारको भावनान्वयः, न तु साधुद्वारक इति स्वीकारात्।

न चैवमपि अर्चानर्चादिसाधारण्येन साधुशब्दप्रयोगे सप्तमीविधौ वक्ष्यमाणसूत्रे अर्चाग्रहणं व्यर्थमिति वाच्यम्। निपुणपदप्रयोगे अर्चायामेव सप्तमीत्येवं सार्थक्यात्।

न चैवमेतद्वार्तिकेनैव साधुशब्दयोगे सप्तमीसिद्धेः वक्ष्यमाणसूत्रे साधुशब्दग्रहणवैयर्थ्यमिति वाच्यम्। उत्तरभाविवार्तिकेन पूर्वभाविसूत्रे वैयर्थ्यशङ्कायाः अनुचितत्वात्।

## निमित्तात्कर्मयोगे

एवम् — 'निमित्तात्कर्मयोगे' (वा. 1490) इति वार्तिकात्

चर्मणि द्विपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम्।
केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः॥ इत्यादौ सप्तमी।

'अत्र निमित्तं फलत्वादिना क्रियाप्रयोजकम्। अत एव प्रयोज्यत्वं सप्तम्यर्थः। साक्षात्सम्बन्धेन क्रियान्वयी। तस्य च कर्मकारकयोगः संयोगसमवायादिर्वास्तव एव सप्तमीप्रयोजकः, न तु शाब्दबोधे ज्ञातः। अत एव तदभावे 'वेतनेन धान्यं

**लुनाति' इत्यादौ हेतावित्यनेन तृतीयैव। तृतीयापवादत्वेनैव चायं सप्तमीविधिः, तादर्थ्यचतुर्थ्यपवादत्वेन वा, तदा 'वेतनाय धान्यम् लुनाति' इत्यपि प्रयोगः। अत्र त्रिषूदाहरणेषु समवायाख्यः कर्मकारकसम्बन्धः, अवयवावयविभावात्। चतुर्थे तु संयोगः, सीम्नो ज्ञानार्थं पुष्कलकः – शंकुः, हतः – निखात इति तदर्थात्।**

---

"निमित्तात् कर्मयोगे" (वा. 1490) इति वार्तिकम्। कर्मयोगे निमित्तवाचकात् शब्दात् सप्तमी वाच्येत्यर्थः। निमित्तशब्देन हेतुभूतं फलमुच्यते। कर्मयोगो नाम कर्मणा साकं संयोगसमवायाख्यः संबन्धः।

चर्मणि द्वीपिनं हन्ति दन्तयोः हन्ति कुञ्जरम्।
केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः।।

चर्मार्थं व्याघ्रं हन्ति। अत्र कर्मणा व्याघ्रेण निमित्तस्य चर्मणः समवायः संबन्धः। दन्तार्थं कुञ्जरं गजं हन्ति। अत्रापि कुञ्जरेण कर्मणा दन्तयोः समवायः संबन्धः। केशार्थं चमरीनामकं मृगविशेषं हन्ति। अण्डकोशार्थं पुष्कलकं गन्धमृगं हन्ति। अत्रापि समवायः संबन्धः। अत्र सर्वत्र हेतौ तृतीया प्राप्ता। तदपवादेन सप्तमी विधीयते। कर्मयोगे किम्। वेतनेन धान्यं लुनाति। अत्र वेतनस्य धान्येन साकं संयोगः समवायो वा नास्ति। अतो न सप्तमी।

अत्र सर्वत्र फलं सप्तम्यर्थः। तस्य जनकतासंबन्धेन क्रियायामन्वयः। चर्माभिन्नफलजनकं व्याघ्रकर्मकहननम् इति रीत्या बोधः। कर्मयोगस्तु स्वरूप-सन्नेव शाब्दबोधप्रयोजकः। अतो न सप्तम्यर्थः। शाब्दबोधे च स न भासते। चर्मणः फलत्वं च हननक्रियायाः तल्लाभादिविषयकेच्छाधीनत्वात् इति। व्याकरणग्रन्थरीत्या इदं व्याख्यानम्।

अथ भाट्टरहस्यरीत्या विव्रियते — निमित्तात् कर्मयोगे इति वार्तिकात् "चर्मणि द्वीपिनं हन्ति" इत्यादौ सप्तमी। अत्र निमित्तं फलत्वादिना क्रियाप्रयोजकम्। अत एव प्रयोज्यत्वं सप्तम्यर्थः। साक्षात्संबन्धेन क्रियान्वयी। तस्य च कर्मकारकयोगः संयोगसमवायादिः वास्तव एव सप्तमीप्रयोजकः, न तु शाब्दबोधे भासते। अत एव संयोगसमवायाद्यभावे वेतनेन धान्यं लुनाति इत्यादौ "हेतौ" इत्यनेन तृतीयैव। तृतीयापवादत्वेन चैवायं सप्तमीविधिः। तादर्थ्यचतुर्थ्यपवादत्वेन वा। तदा "वेतनाय धान्यं लुनाति" इत्यपि प्रयोगः। अत्र त्रिषूदाहरणेषु समवायाख्यः कर्मकारकेण संबन्धः निमित्तस्य। अवयवावयविभावात्। चतुर्थे तु संयोगः।

तथा हि — "सीम्नि पुष्कलको हतः" सीमा अण्डकोशः "सीमा घट्टस्थितिक्षेत्रेष्वण्डकोशेषु च स्त्रियाम्" इति मेदिनीकोशः। पुष्कलको गन्धमृगः। "अथ पुष्कलको गन्धमृगे क्षेपणकीलयोः" इति मेदिनी। इति वैयाकरणैः व्याख्यातम्.

खण्डदेवस्तु काशिकाव्याख्यानानुसारेण सीमा — ग्रामादिमर्यादा। तस्याः ज्ञानार्थं पुष्कलकः शङ्कुः हतः निखातः इति व्याचष्ट। अत्र पुष्कलकेन कर्मणा सीम्नः संयोगः संबन्धः।

## यस्य च भावेन भावलक्षणम्

**एवम् — यस्य च भावेन भावलक्षणम् (पा.सू 2.3.37) इति सूत्रात् यत्सम्बन्धिन्या निर्ज्ञातकालया यया क्रिययानिर्ज्ञातकालायाः क्रियायाः कालपरिच्छेदाख्यं लक्षणं क्रियते, तस्याः क्रियायाः कर्मणो वा स्वक्रियाद्वारकेतरक्रियालक्षकत्वे विवक्षिते, तद्बोधकात् सप्तमी स्यादित्यर्थकात्, 'ब्राह्मणेष्वधीयानेषु गतः, गोषु दुह्यमानासु गतः इत्यादौ सप्तमी। अत्र कर्तृत्व — कर्मत्वान्यतरसम्बन्धेन**

स्वसम्बन्धिक्रियाकालकत्वं सप्तम्यर्थः, तस्य च साक्षात्सम्बन्धेनेतरक्रियायामन्वयः, पूर्वक्रियायाश्च कर्तृ-कर्मविशेषणत्वेऽपि सप्तमीलक्ष्यसम्बन्धिसंसर्गघटकत्वमपि नानुपपन्नम्। एवञ्च यत्र 'इको यणचि' (पा.सू 6.1.77), इत्यादौ क्रिया नोपात्ता, तत्र सतीति सत्तारूपक्रियाध्याहारो बोध्यः। यत्र तु सम्बन्धिनो लक्षकत्वं न विवक्षितम्, तत्र गावो दुह्यन्ते, चैत्रो गतः, इति वाक्यद्वयप्रयोगः। अत एव तत्र पूर्वक्रियाया उत्तरक्रियोपलक्षकत्वबोधः कविकाव्यादिवन्मानस एव। अत एव समानार्थकत्वाभावात् न सप्तमीविधिस्तस्य बाधकः, अपि त्वपूर्वविधिः, कथञ्चित् षष्ठीबाधको वेति ध्येयम्।

---

अथ "यस्य च भावेन भावलक्षणम्" (पा.सू 2.3.27) इति सूत्रव्याख्यानम्। यस्य क्रियया क्रियान्तरं लक्ष्यते ततः सप्तमी स्यत्। "गोषु दुह्यमानासु गतः" इति उदाहरणम्। देवदत्तः कदा गतः इति प्रश्ने उत्तरमिदम्। अत्र लक्षकत्वसंबन्धे सप्तमी। लक्षकत्वं ज्ञापकत्वम्। शेषषष्ठ्यपवादोऽयम्। वर्तमानदोहनविशिष्टाभिः गोभिः ज्ञाप्यगमनवान् इत्यर्थः। अत्र दोहनक्रियायाः साक्षात् ज्ञापकता। गवां तु तदाश्रयतया। ततश्च गोदोहनदशायां गतः इत्युत्तरं पर्यवस्यति।

अथ भाट्टरहस्ये — "यस्य च भावेन भवलक्षणम्" (पा.सू 2.3.27) इति सूत्रस्य यत्संबन्धिन्या निर्ज्ञातकालया यया क्रियया अनिर्ज्ञातकालायाः क्रियायाः कालपरिच्छेदाख्यं लक्षणं क्रियते तस्याः क्रियायाः कर्तुः कर्मणो वा स्वक्रिया-द्वारकेतरक्रियालक्षकत्वे विवक्षिते तद्बोधकात् सप्तमी स्यात् इत्यर्थकात् ब्राह्मणेष्व-धीयमानेषु गतः, गोषु दुह्यमानासु गतः इत्यादौ सप्तमी।

अत्र कर्तृत्वकर्मत्वान्यतरसंबन्धेन स्वसंबन्धिनी या क्रिया तत्कालकत्वं सप्तम्यर्थः। तस्य च साक्षात्संबन्धेन आश्रयतासंबन्धेन इतरक्रियायां गमनक्रियायामन्वयः। गोकर्मकदोहनकालकं चैत्रकर्तृकं गमनमिति बोधः।

"ब्राह्मणेष्वधीयमानेषु गतः" इत्यत्र ब्राह्मणकर्तृकाध्ययनकालकं चैत्रकर्तृकं गमनमिति बोधः। यद्यपि अत्र पूर्वक्रिया दोहनक्रिया अध्ययनक्रिया च कर्मभूतगवि कर्तृभूतब्राह्मणे च यथाक्रमं विशेषणभूता, तथापि तयोः क्रिययोः सप्तम्याः यः लक्ष्यार्थः स्वसंबन्धिक्रियाकालकत्वं तद्घटकत्वमपि नानुपपन्नम्। स्वसंबन्धिक्रियाकालकत्वम् — स्वं गौः तत्संबन्धिनी तत्कर्मिका क्रिया तत्कालकत्वम्। तस्य एतादृशकालकत्वस्य, साक्षात्संबन्धेन–आश्रयत्वसंबन्धेन इतरक्रियायां गमनक्रियायामन्वयः। अत्र दुह्यमानपदम् अधीयमानपदं च दोहनाध्ययनयोः संसर्गघटकत्वतात्पर्यग्राहकमित्याशयः इति मन्ये।

एवं च यत्र "इको यणचि" (पा.सू 6.1.77) इत्यादौ क्रिया नोपात्ता तत्र "सति" इति सत्ताक्रिया अध्याहार्या। अच्सत्तया यण्सत्ता ज्ञाप्या।

एतदुक्तं भवति — "ब्राह्मणेष्वधीयमानेषु गतः" इत्यादौ अध्ययनादिक्रियायाः उपात्तत्वात् तत्र प्रकृतसूत्रप्रवृत्तावपि "इको यणचि" (पा.सू 6.1.77) इत्यादौ तादृशक्रियायाः अनुपात्तत्वात् कथमनेन सप्तमी। न हि तत्राधिकरणत्वसप्तमी युक्ता। कटे चैत्रः शेते इत्यादाविव चैत्रादेः, इकः अधिकरणत्वाभावात्, इकः अचश्च पौर्वापर्यस्यैव संमतत्वात् अत्रापि लक्षकतायाः सप्तम्यर्थतां विना गत्यभावात् इत्यत आह — एवं चेति। एवं च अचि सति यण् स्यात् इति सूत्रार्थः। अच्सत्तालक्ष्यत्वं यण्भवनस्य पर्यवस्यति।

भावलक्षणमित्यस्य प्रयोजनमाह — **यत्र त्विति।** संबन्धिनः क्रियावतो गवादेः लक्षकत्वं न विवक्षितं, तत्र गावो दुह्यन्ते, चैत्रो गतः इति वाक्यद्वयमेव। अत एव तत्र पूर्वक्रियायाः उत्तरक्रियालक्षकत्वबोधः कविकाव्यादिवत् मानस एव। अत एव समानार्थकत्वाभावात् न सप्तमीविधिः तस्य वाक्यद्वयस्य बाधकः। अपि तु अपूर्वविधिः। नियमविधित्वस्वीकारे तु प्रथमा न स्यात्। यदि विभक्त्यन्तरस्य बाधक इति वक्तव्यम्, तदा षष्ठ्याः बाधकः स्यात्, न प्रथमाया इति भावः।

## वार्तिकान्तरस्य वैयर्थ्योपपादनम्

**यत्तु "क्रियार्हाणां क्रियाकर्तृत्वादौ विवक्षिते, क्रियानर्हाणाञ्च तदभावे विवक्षिते सप्तमी, तथा क्रियार्हाणां तदभावे, क्रियानर्हाणां च तस्मिन् विवक्षिते इत्येवं वार्तिकम् — सत्सु तरत्सु, पूज्यमानेषु वा असन्त आसते, न पूज्यन्ते वा, असत्सु तिष्ठत्सु, अपूज्यमानेषु वा सन्तस्तरन्ति, पूज्यन्ते वा, असत्सु तरत्सु, पूज्यमानेषु वा सन्तस्तिष्ठन्ति न पूज्यन्ते वा इत्यत्र सप्तमीविधायकम्, तत् 'यस्य च भावेन भावलक्षणमि'त्यनेनैव सिद्धेऽनारम्भणीयमिति केचित्।**

---

**यत्तु इत्यादि।** अत्र सूत्रे भाष्ये "कारकार्हाणां च कारकत्वे", "अकारकार्हाणां चाकारकत्वे" इति वार्तिकद्वयं पठितम्। तत्र खण्डदेवेन कारकार्हाणाम् इत्यस्य स्थाने क्रियार्हाणाम् इति, अकारकार्हाणामित्यस्य स्थाने क्रियानर्हाणामिति च पठ्यते। क्रियार्हाणां क्रियां प्रति योग्यानां क्रियाकर्तृत्वे विवक्षिते, क्रियानर्हाणां च तदभावे विवक्षिते — क्रियाकर्तृत्वाभावे विवक्षिते सप्तमी इत्यर्थः। यथा "सत्सु तरस्तु पूज्यमानेषु असन्त आसते न पूज्यन्ते वा। अत्र क्रियार्हाणां सतां तरणक्रियाकर्तृत्वं पूजाक्रियाकर्तृत्वं च विवक्षितम्। अतोऽत्र सप्तमी।

असत्सु तिष्ठत्सु अपूज्यमानेषु वा सन्तस्तरन्ति पूज्यन्ते वा। अत्र क्रियानर्हाणां तदभावे विवक्षिते सप्तमी।

सत्सु तिष्ठत्सु अपूज्यमानेषु वा असन्तस्तरन्ति पूज्यन्ते वा। अत्र क्रियार्हाणां तदभावे विवक्षिते सप्तमी।

असत्सु तरत्सु पूज्यमानेषु वा सन्तास्तिष्ठन्ति न पूज्यन्ते वा। अत्र क्रियानर्हाणां क्रियाकर्तृत्वे विवक्षिते सप्तमी।

अत्र केचिदाहुः — वार्तिकमिदं नारम्भणीयम्। एतेषां प्रयोगाणां "यस्य च भावेन भावलक्षणम्" (पा.सू 2.3.37) इति सूत्रेणैव सिद्धत्वात्। तथा हि — सत्सु तरत्सु पूज्यमानेषु वा असन्तस्तिष्ठन्ति न पूज्यन्ते वा इत्यत्र सतां क्रियार्हाणां तरणक्रियया असतां तरणाभावादयो लक्ष्यन्ते इति सूत्रेणैव सिद्धे वार्तिकारम्भस्यानावश्यकत्वादिति भावः।

## उक्तवार्तिकस्य विषये कैय्यटाद्युक्तसमाधानस्य निरासेन स्वमतेन सार्थक्योपपादनम्

**कैय्यटादयस्तु — लक्ष्यलक्षणभावाविवक्षायां सप्तमीविधानार्थमित्याहुः। तन्न। लक्ष्यलक्षणभावातिरिक्तसम्बन्धस्याऽस्माद् वाक्यादभानेन तस्मिन्नर्थे सप्तमीविधानवैयर्थ्यापत्तेः। अतोऽर्हत्वाद्यवच्छिन्नकर्तृत्वकर्मत्वान्यतरसम्बन्धेन स्वसम्बन्धिक्रियाकालिकत्वस्य सप्तम्यर्थत्वद्योतनायाऽनुशासनान्तरम्। तथा हि — अत्र प्रथमवाक्यद्वये औचित्यं व्यङ्ग्यम्, अन्त्यद्वये चाऽनौचित्यम्। तदुपपादकत्वं निरुक्तसप्तम्यर्थस्य, तद्विशेषणीभूतार्हत्वाद्युपपादनार्थञ्च। तिष्ठत्स्वासते इत्येताभ्यां तरणाभावो लक्ष्यते, सदसत्पदाभ्याञ्च वाच्यव्यङ्ग्यविधया क्रियार्हत्वानर्हत्वे**

**व्यज्येते। अतश्चैतादृशलक्ष्यलक्षणभावस्य 'गोषु दुह्यमानासु गतः' इत्यादि-व्यावृत्तस्याऽत्र विशिष्याऽनुभूयमानस्याऽपह्नोतुमशक्यत्वात् पृथगनुशासनम्।**

---

कैयटादयस्तु — उक्तोदाहरणेषु लक्ष्यलक्षणभावविवक्षायां सप्तमीविधानार्थं तद्वार्तिकमित्याहुः।

तन्न। लक्ष्यलक्षणभावातिरिक्तस्य संबन्धस्य तस्मात् वाक्यात् अभानेन तस्मिन्नर्थे सप्तमीविधानस्य वैयर्थ्यापत्तेः।

अथ खण्डदेवस्य स्वमतम् — अर्हत्वाद्यवच्छिन्नकर्तृत्वकर्मत्वान्यतरसंबन्धेन स्वसंबन्धिक्रियाकालिकत्वस्य सप्तम्यर्थत्वद्योतनायानुशासनान्तररूपं वार्तिकम्। अत्र प्रथमवाक्यद्वये औचित्यं व्यङ्ग्यम्। अन्त्यवाक्यद्वये च अनौचित्यं व्यङ्ग्यम्।

अयमाशयः — सत्पुरुषाणां तरणकर्तृत्वं पूज्यमानानां तत्कर्मत्वमुचितम्। तद्विपरीतानां तदभावः तरणकर्तृत्वाभावः पूजकर्मत्वाभावश्च उचित एवेति नात्र किमपि आश्चर्यमिति भावः। उक्तार्थस्य वाच्यवृत्त्या अलाभात् व्यङ्ग्यमित्युक्तम्।

एवम् अयोग्यानां क्रियायां कर्तृत्वकर्मत्वे, योग्यानां तदभावश्चानुचित इति। निरुक्तसप्तम्यर्थः औचित्यानौचित्योपपादकः तद्विशेषणीभूतार्हत्वानर्हत्वोपपादकश्च। तिष्ठत्सु आसते इत्येताभ्यां तरणाभावो लक्ष्यते। सदसत्पदाभ्यां च वाच्यव्यङ्ग्यविधया क्रियार्हत्वानर्हत्वे व्यज्येते। अतश्च एतादृशलक्ष्यलक्षणभावस्य "गोषु दुह्यमानासु गतः" इत्यादिव्यावृत्तस्यात्र विशिष्य अनुभूयमानस्य अपह्नोतुमशक्यत्वात् पृथक् वार्तिकरूपमनुशासनम् इति खण्डदेवभट्टाचार्याणामाशयः। अयं निरूपणप्रकारः ग्रन्थान्तरेषु अदृश्यमानः अपूर्वः।

शाब्दबोधप्रकारः — सत्सु तरत्सु पूज्यमानेषु वा असन्त आसते न पूज्यन्ते वा इत्यत्र सप्तम्याः अर्हत्वावच्छिन्नकर्तृकत्वसंबन्धेन स्वसंबन्धिक्रियाकालिकत्वमर्थः। तस्य आसनक्रियायामन्वयः। स्वं — प्रकृतिभूतसत्पदार्थः। तरत्सत्पुरुषनिष्ठार्हत्वावच्छिन्नकर्तृतानिरूपकतरणक्रियाकालिकी असत्कर्तृकासनभावना, पूज्यमानपुरुषनिष्ठार्हत्वावच्छिन्नकर्मतानिरूपकपूजाकालिकः असत्कर्मकपूजाभावः इति। एवमुदाहरणान्तरेष्वप्यूहनीयम्।

## षष्ठी चानादरे

**एवम् — 'षष्ठी चानादरे' (पा.सू 2.3.38) इति सूत्रादनादरविशिष्टलक्ष्यलक्षणभावविवक्षायां षष्ठीसप्तम्यौ विकल्पेन। रुदति, रुदतो वा प्राव्राजीत्। रुदन्तं पुत्रमनादृत्येत्यर्थः।**

---

एवं 'षष्ठी चानादरे' (पा.सू 2.3.38) इति सूत्रात् अनादरविशिष्टलक्ष्यलक्षणभाव(ज्ञाप्यज्ञापकभाव)विवक्षायां षष्ठीसप्तम्यौ विकल्पेन स्याताम्। 'रुदति रुदतो वा प्राव्राजीत्'। रुदन्तं पुत्रमनादृत्येत्यर्थः। प्राव्राजीत् — संन्यस्तवान्। रुदत्पुत्रकर्मकानादरकालीनं संन्यसनमिति बोधः।

## स्वामीश्वरेत्यादिसूत्रम्

**एवम् — 'स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च' (पा.सू 2.3.39) इति सूत्रादेभिस्सप्तभिर्योगे षष्ठी-सप्तम्यौ स्तः। 'गोषु गवां वा स्वामी'। निरूपकत्वं विभक्त्यर्थः, तस्य च स्वाम्यादिद्वारकोऽस्तिक्रियान्वयः। समानार्थकस्वाम्यादित्रयग्रहणं पर्यायान्तरनिवृत्त्यर्थम्,। 'विरूपाणामपि समानार्थानामि'ति वार्तिकात्।**

**वक्रदण्डावितिवत्। पदत्रयैकशेषस्तु शब्दस्वरूपपरत्वात् नाशंक्यः। गवां, गोषु वा प्रसूतः। गा अनुभवितु जात इत्यर्थः इति हरदत्तः।**

---

स्वामीश्वराधिपतीत्यादिसूत्रव्याख्यानम् – स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च (पा.सू 2.3.39) इति सूत्रस्य स्वामी ईश्वरः अधिपतिः दायादः साक्षी प्रतिभूः प्रसूतः एतैः सप्तभिः योगे षष्ठीसप्तम्यौ भवतः इत्यर्थः। गवां गोषु वा स्वामी। गवां गोषु वा प्रसूतः। गा एवानुभवितुं जातः इत्यर्थः। गवां गोषु वा ईश्वरः। गवां गोषु वा दायादः। पुत्रादिभिः ग्रहीतुं योग्यः पित्राद्यर्जितधनांशो दायः। तमादत्ते इति दायादः। "आतश्चोपसर्गो" (पा.सू 3.1.136) इति अङ्विधौ उपसर्गग्रहणे सत्यपि अत एव निपातनात् कः। गोसंबन्धिदायाद इत्यर्थः। गवां च दायेऽन्वयः। नित्यसाकाङ्क्षत्वात् वृत्तिः। गवात्मकस्य अंशस्य आदाता इति फलितोऽर्थः। "यस्मादधिकम्" (पा.सू 2.3.9) इति सूत्रभाष्ये तु दायादशब्दः स्वामिपर्याय इति स्थितम्। इति बालमनोरमा।

गवां गोषु वा स्वामी अस्ति। स्वत्वंनिरूपकत्वं षष्ठीसप्तम्योः अर्थः। तस्य स्वाश्रयस्वामित्ववत्कर्तृकत्वंसबन्धेन अस्तिक्रियायामन्वयः। गोनिष्ठस्वत्वनिरूपकत्वाश्रयस्वामित्वत्वकर्तृकं सत्ताश्रयत्वमिति बोधः। सूत्रे समानार्थकस्वाम्यादित्रयग्रहणं पर्यायान्तराणां राजादिशब्दानां निवृत्त्यर्थम्। तेन ग्रामस्य राजा इत्यादौ सप्तमी विकल्पेन न भवति। "विरूपाणामपि समानार्थकानाम्" इति वार्तिकात् (वक्रदण्डश्च कुटिलदण्डश्च वक्रदण्डौ) इति वक्रदण्डादिवत् स्वामीश्वराधिपतिरूपपदत्रयैकशेषस्तु प्रकृते शब्दस्वरूपपरत्वात् नाशङ्कनीयः। गवां गोषु वा प्रसूतः। गाः अनुभवितुं जातः इति हरदत्तः।

## आयुक्तकुशलाभ्यामिति सूत्रम्

एवम् — 'आयुक्तकुशलाभ्याञ्चासेवायाम्' (पा.सू 2.3.40) इति सूत्रात् गोषु, गवां वा आयुक्तः, कुशलो वा इत्येवं षष्ठी-सप्तम्यौ। आयुक्तः — व्यापारितः। विषयसप्तम्यां पक्षे षष्ठी विधीयते। आसेवा तदेकपरत्वम्। तदभावे तु आयुक्तो गौश्शकटेन, ईषद्युक्त इत्यर्थः।

---

आयुक्तकुशलाभ्यां चासेवायाम् (पा.सू 2.3.40)। आसेवा — तदेकपरत्वम्। तदेकपरत्वे विवक्षिते आयुक्त, कुशल एताभ्यां योगे सप्तमी भवति, पक्षे षष्ठी। गोषु गवां वा आयुक्तः कुशलो वा। आयुक्तः — व्यापारितः। तदेकपरतया व्यापारित इति भावः। तदेकपरत्वाभावे तु आयुक्तो गौः शकटेन। आङ् ईषदर्थे। ईषद्युक्तः इत्यर्थः। सहार्थे तृतीया।

## यतश्च निर्धारणम्

एवम् — 'यतश्च निर्धारणम्' (पा.सू 2.1.41) इति सूत्राज्जाति-गुण-क्रिया-संज्ञाभिर्यतस्समुदायादेकदेशस्य पृथक्करणात्मकं निर्धारणं क्रियते, तद्वाचकात् षष्ठी-सप्तम्यौ स्तः। नृणाम्, नृषु वा ब्राह्मणः श्रेष्ठः, गवाम्, गोषु वा कृष्णा बहुक्षीरा, गच्छताम्, गच्छत्सु वा धावन् शीघ्रगामी, छात्राणाम्, छात्रेषु वा मैत्रः पटुरि'त्यादौ। अत्र विभक्त्यर्थ उक्तविधनिर्धारणम्। तत्र च निरूपकतया प्रकृत्यर्थान्वयः। तस्य च विषयीभूतब्राह्मणादिवृत्तित्वसंसर्गेण क्रियान्वयः। इदञ्च पदोपात्तस्य निर्धारणप्रतियोगितावच्छेदकस्य मनुष्यत्वगोत्वादेर्निर्धारणविषयीभूत-ब्राह्मणादौ सत्त्व एव विकल्पाभिधानं बोध्यम्। यदा तु तस्य तत्राऽसत्त्वम्, तदा निर्धारणप्रतियोगिवाचकात् पञ्चम्येव।

---

"यतश्च निर्धारणम्" (पा.सू 2.3.41) इति सूत्रव्याख्यानम्। यतश्च निर्धारणम् इति सूत्रात् इत्यादि। निर्धारणं नाम जातिगुणक्रियासंज्ञाभिः यस्मात् समुदायात् एकदेशस्य पृथक्करणात्मकं निर्धारणं क्रियते तादृशसमुदायवाचकात् षष्ठीसप्तम्यौ भवतः। यथा "नृणां नृषु वा ब्राह्मणः श्रेष्ठः", "गवां गोषु वा कृष्णा बहुक्षीरा", "गच्छतां गच्छत्सु वा धावन् शीघ्रगामी", "छात्राणां छात्रेषु वा मैत्रः पटुः" इति जात्यादीनां क्रमेण उदाहरणानि। अत्र षष्ठ्याः सप्तम्याश्च निर्धारणमर्थः। तत्र प्रकृत्यर्थस्य निरूपितत्वसंबन्धेनान्वयः। निर्धारणस्य च स्वविषयीभूतब्राह्मणादि-वृत्तित्वसंबन्धेन क्रियायामन्वयः। तथा च क्रमशः —

1. नृ(मनुष्य)निरूपितनिर्धारणविषयीभूतब्राह्मणवृत्ति, श्रेष्ठत्ववद्वृत्ति सत्ता-श्रयत्वम्,

2. गोनिरूपितनिर्धारणविषयीभूतकृष्णगोवृत्ति, बहुक्षीरत्ववद्वृत्ति सत्ताश्रयत्वम्,

3. गच्छन्निरूपितनिर्धारणविषयीभूतधावद्वृत्ति, शीघ्रगामित्ववद्वृत्ति सत्ता-श्रयत्वम्,

4. छात्रनिरूपितनिर्धारणविषयीभूतमैत्रवृत्तिपटुत्ववद्वृत्ति सत्ताश्रयत्वम् इति शाब्दबोधः।

अत्र यतो निर्धारणं यस्य भवति, तयोः विभक्तिप्रकृत्यर्थतावच्छेदकजातिमत्वं यदि स्यात् तदैवेदं विभक्तिविधानं भवति। यथा नृणां नृषु वा ब्राह्मणः श्रेष्ठः इत्यत्र षष्ठीसप्तम्योः प्रकृतिः नृशब्दः, प्रकृत्यर्थतावच्छेदकं नृत्वं — मनुष्यत्वम्, ब्राह्मणे मनुष्येषु च वर्तते। यदा तु निर्धारणविषये सा जातिः नास्ति तदा निर्धारण-प्रतियोगिवाचकात् पञ्चम्येव। यथा — पशुभ्यो ब्राह्मणः श्रेष्ठः इत्यत्र प्रकृत्यर्थ-

तावच्छेदकं पशुत्वं ब्राह्मणे नास्तीति तत्र निर्धारणनिरूपकवाचकात् पशुशब्दात् पञ्चम्येव भवति, न तु षष्ठीसप्तम्यौ। अधिकविचारः मदीयशाब्दबोधमीमांसायाम्।

**पञ्चमी विभक्ते** (पा.सू 2.3.41)

**'पञ्चमी विभक्ते' (पा.सू. 2.3.41) इति सूत्रात् 'माथुराः काशीस्थेभ्यः आढ्यतराः' इत्यादौ पञ्चमी।**

**साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः** (पा.सू 2.3.43)

**एवम् — 'साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः' (पा.सू. 2.3.43) इति सूत्रात् मातरि साधुर्निपुणो वा इत्यत्र सप्तमी। अर्चाभावे निपुणो राज्ञो भृत्य इति षष्ठी। प्रतिग्रहणमुपलक्षणम्, साधुः, निपुणो वा मातरं प्रति, परि, अनु वा पूर्वमेव च व्याख्यातप्रायमिदं सूत्रम्।**

---

"पञ्चमी विभक्ते" (पा.सू 2.3.42) इति सूत्रस्यायमर्थः — विभागो विभक्तम्। निर्धार्यमाणस्य यत्र भेद एव तत्र पञ्चमी स्यात्। "माथुराः पाटलिपुत्रकेभ्यः आढ्यतराः"। "यतश्च निर्धारणम्" (पा.सू. 2.3.41) इत्यनुवर्तते। निर्धारणावधिभूतानां मनुष्यादीनां निर्धार्यमाणानां द्विजादीनां च सामान्यात्मना अभेदः विशेषात्मना भेदश्च स्थितः। एवं च निर्धारणे सर्वत्र कथंचित् भेदस्य सत्त्वात् विभक्त इत्यनेन भेद एवार्थो विवक्षितः। ततश्च यत्र निर्धारणावधेः निर्धार्यमाणस्य च भेद एव, न तु केनापि उपात्तरूपेणाभेदः तत्रैवास्य प्रवृत्तिः। अत्र अवधिव्यावृत्तधर्मवत्त्वमेव बोध्यते, न तु समुदायात् एकदेशस्येत्यंशो विवक्षितः।

माथुराः पाटलिपुत्रेभ्य आढ्यतराः इत्यत्र अवधित्वं पञ्चम्यर्थः। मथुरादेशीयाः पाटलिपुत्रकदेशीयापेक्षया अतिशयेन आढ्याः इत्यर्थः। अत्र मथुरादेशीयत्व-

पाटलिपुत्रकदेशीयत्वयोः गोत्वाश्वत्ववत् विरोधात् कथंचिदपि नाभेद इति निर्धारणावधेः पञ्चमी। पाटलिपुत्रावधिकनिर्धारणविषयीभूता माथुराः आढ्यतरा इति बोधः। तदाह — "एवं पञ्चमी विभक्ते इति सूत्रात् 'माथुराः काशीस्थेभ्यः आढ्यतराः' इत्यत्र पञ्चमीति"।

साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः (पा.सू. 2.3.43)। आभ्यां योगे सप्तमी स्यात् अर्चायाम्, न तु प्रतेः योगे। मातरि साधुर्निपुणो वा। साधुः — कुशलः। शुश्रूषायामिति शेषः। अर्चायां किम्। निपुणो राज्ञो भृत्यः। इह तत्त्वकथने तात्पर्यम्। साधुशब्दप्रयोगे तु अर्चां विनापि सप्तमी भवत्येव। "साध्वसाधुप्रयोगे च" इत्युक्तेः। प्रतिग्रहणमुपलक्षणम् — प्रति परि अनु एषां योगे सप्तमी न स्यात् इति अप्रतेः इत्यनेन विवक्षितम्। साधुः निपुणो वा मातरं प्रति परि अनु वा।

## प्रसितोत्सुकाभ्यां तृतीया च (पा.सू.2.3.44)

**एवम् — 'प्रसितोत्सुकाभ्यां तृतीया च' (पा.सू.2.3.44) इति सूत्रात् आभ्याम् योगे तृतीया स्यात् चात् सप्तमी वेत्यर्थकात् प्रसितः, उत्सुको वा हरिणा, हरौ वेत्यत्र विकल्पेन सप्तमी। प्रसितः — आसक्तः। न तु प्रकर्षेण शुक्लः। विषयत्वम् विभक्तयर्थः, तृतीयायाः पाक्षिकत्वार्थं वचनम्।**

---

एवं "प्रसितोत्सुकाभ्यां तृतीया च" (पा.सू. 2.3.44) इति सूत्रात् प्रसित उत्सुक इत्याभ्यां योगे तृतीया स्यात्, चकारात् सप्तमी च इत्यर्थकात्, "प्रसित उत्सुको वा हरिणा हरौ वा" इत्यत्र विकल्पेन सप्तमी। प्रसितः — आसक्तः। न तु प्रकर्षेण शुक्लः। विषयत्वं विभक्त्यर्थः। हरिविषयकासक्तिमान् इत्यर्थः। इदं

सूत्रं "सप्तम्यधिकरणे च" (पा.सू. 2.3.36) इत्यनेन वैषयिकसप्तमीमात्रप्राप्तौ तृतीयाया विकल्पेन विधानार्थम्।

## नक्षत्रे च लुपि (पा.सू 2.3.45)

**एम् — नक्षत्रे च लुपि (पा.सू 2.3.45) इति सूत्रान्नक्षत्रवाचिप्रकृतेर्नक्षत्रेण युक्तः काल इत्यनेनाणप्रत्ययस्य 'लुबविशेषे' (पा.सू 4.2.4), इति लुपि कृते, नक्षत्रयुक्त-कालप्रातिपदिकादधिकरणे तृतीया — सप्तम्यौ स्त इत्यर्थकात् 'मूलेन, मूले वा देवीमावाहयेदि'त्यादौ। कालिकाधिकरणत्वं विभक्त्यर्थः। अणप्रत्ययाकरणेन शुद्ध-नक्षत्रपरत्वे 'पुष्ये शनिरि'त्यादौ सप्तम्येव, न तृतीया। कालपरत्वेऽपि अधिकरण-त्वाविवक्षायामद्य पुष्यः' इत्यादौ प्रथमापि।**

---

एवं "नक्षत्रे च लुपि" (पा.सू 2.3.45) इति सूत्रात् नक्षत्रवाचिप्रकृतेः "नक्षत्रेण युक्तः कालः" (पा.सू. 4.2.3) इति सूत्रेण अण्प्रत्यये तस्य "लुबविशेषे" (पा.सू. 4.2.4) इति सूत्रेण लुपि कृते नक्षत्रयुक्तकालार्थकप्रातिपदिकात् अधिकरणे तृतीयासप्तम्यौ स्तः इत्यर्थकात् "मूलेन मूले वा देवीमावाहयेत" इत्यादौ तृतीया-सप्तम्यौ भवतः। कालिकाधिकरणत्वं विभक्त्यर्थः। अण्प्रत्ययप्रकृत्या शुद्धनक्षत्र-परत्वे पुष्ये शनिः इत्यादौ सप्तम्येव न तृतीया। कालपरत्वेऽपि अधिकरणत्व-विवक्षायाम् "अद्य पुष्यः" इत्यादौ प्रथमापि।

## सप्तमीपञ्चम्यौ कारकमध्ये (पा.सू 2.3.7)

**एवम् — 'सप्तमीपञ्चम्यौ कारकमध्ये' (पा.सू 2.3.7) इति सूत्रात् सजातीययोः, विजातीययोर्वा कारकयोर्मध्ये यौ कालाध्वानौ, तत्र सप्तमी-पञ्चम्यौ स्तः, इत्यर्थ-कात्, 'अद्य भुक्त्वा अयं द्व्यहे, द्व्यहाद्वा भोक्ता। इहस्थोऽयं क्रोशे, क्रोशाद्वा लक्ष्यं**

**विध्येदि'त्यादौ विकल्पेन सप्तमी। अत्र यद्यपि भोजनद्वयेऽप्येकः एव पुरुषः कर्तृकारकम्, तथाप्यद्यतनकालीनभोजनक्रियानिरूपितकर्तृत्वात् द्वयहकालीन-भोजनक्रियानिरूपितकर्तृत्वस्य भेदात् सजातीयकारकद्वयमध्यत्वम्। द्वितीयोदा-हरणे तु अयमिति कर्ता लक्ष्यमिति कर्म, इहेत्यधिकरणमिति विजातीयमध्यत्वम्। सर्वत्राधिकरणत्वं विभक्त्यर्थः, अपादानत्वाद्यसंभवात्। पक्षे पञ्चमीप्राप्त्यर्थो विधिः।**

---

एवं "सप्तमीपञ्चम्यौ कारकमध्ये" (पा.सू 2.3.7) इति सूत्रस्य सजातीययोः विजातीययोर्वा कारकयोः मध्ये यौ कालाध्वानौ तत्र सप्तमीपञ्चम्यौ स्याताम् इत्यर्थः। तत्र कालस्य उदाहरणम् "अद्य भुक्त्वा अयं द्व्यहे द्व्यहाद्वा भोक्ता" इति। अध्वनः उदाहरणम् "इहस्थोऽयं क्रोशे क्रोशाद्वा लक्ष्यं विध्येत्" इति। तत्र प्रथमे कालोदाहरणे भोजनद्वयस्यापि एक एव कर्ता। तत्र कर्तृकारकद्वयं नास्ति। तथा च कारकद्वयमध्यस्थत्वाभावात् द्व्यहरूपकालस्य कथं तत्र सप्तमीपञ्चम्यौ भवतः इति शङ्का। तत्र समाधानम् — यद्यपि भोजनद्वयस्यापि एक एव पुरुषः कर्तृकारकम्। तथापि अद्यतनकालीनभोजनक्रियानिरूपितकर्तृत्वापेक्षया द्व्यहकालीनभोजन-क्रियानिरूपितकर्तृत्वस्य भेदात् सजातीयकारकद्वयमध्यस्थत्वं द्व्यहकालस्येति ततः सप्तमीपञ्चम्यौ भवतः। अर्थात् अद्यतनकालीनभोजनक्रियातः द्व्यहानन्तर-कालीनभोजनक्रिया अन्येत्येवं क्रियाभेदात् कर्तृकारकभेदमारोप्यायं प्रयोगः।

द्वितीयोदाहरणे — "इहस्थोऽयं क्रोशे क्रोशाद्वा लक्ष्यं विध्येत्" इत्यत्र अध्वनः क्रोशस्य कारकद्वयमध्यस्थत्वम्। तत्र अयमिति कर्ता, लक्ष्यं कर्म, इहेति अधिकरणम् इति विजातीयकारकमध्यस्थत्वं क्रोशस्येति ततः सप्तमीपञ्चम्यौ इति भावः। सप्तम्यधिकरणे च इत्यनेनैव सिद्धे पञ्चमीप्राप्त्यर्थम् इदं सूत्रम्।

तथा च अद्यपदार्थस्य एतद्दिवसाधिकरणकत्वस्य भोजनक्रियायामन्वयः। तदन्वितत्त्वान्तप्रतिपाद्यभोजनक्रियायाः स्वोत्तरकालवृत्तित्वस्वसमानकर्तृकत्वो-भयसंबन्धेन भोजने प्रकृतविभक्त्यर्थस्यापि तद्वारा प्रधानक्रियायामन्वयः। तथा च एतद्दिवसाधिकरणकभोजनोत्तरकालिकतथाविधभोजनसमानकर्तृकैतद्दिवसानन्त-रद्यहानन्तरकालवृत्ति यत् भोजनं तदाश्रयवृत्ति सत्ताश्रयत्वम् इति बोधः पर्यवस्यति।

## अधिकशब्दयोगे पञ्चमी

**एवम् — अधिकशब्देनापि योगे 'लोके, लोकाद्वाधिको हरिरित्यादौ पञ्चमी-सप्तम्यौ ज्ञेये। 'तदस्मिन्नधिकम्, यस्मादधिकमि'ति च सूत्रीयद्विविधनिर्देशात्। निरूपितत्वं विभक्त्यर्थः स्वसम्बन्ध्याधिक्याश्रयवृत्तित्वसंसर्गेण क्रियान्वयी। उपपदं तात्पर्यग्राहकम्।**

---

एवम् अधिकशब्दयोगेऽपि सप्तमीपञ्चम्यौ सूत्रकारस्य पाणिनेः 'तस्मिन्नधिकम्' (पा.सू 5.2.45) 'यस्मादधिकम्' इति विभक्तिद्वयप्रयोगात् ज्ञायते। ततश्च लोके लोकाद्वा अधिको हरिः इति उदाहरणम्। सप्तम्याः पञ्चम्याश्च निरूपितत्वमर्थः। तस्य स्वाश्रयाधिक्याश्रयवृत्तिसंबन्धेन अध्याहृतास्त्यादिक्रियायामन्वयः। लोक-निरूपिताधिक्याश्रयहरिनिष्ठं सत्ताश्रयत्वमिति बोधः। अधिकपदं संबन्धतात्पर्य-ग्राहकम्।

## यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी (पा.सू 2.3.9)

**एवम् — 'यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी' (पा.सू 2.3.9) इति सूत्रादाधिक्यार्थककर्मप्रवचनीययुक्ते सप्तमी स्यादित्यर्थकात् उपपरार्धे हरेर्गुणा**

**इत्यादौ सप्तमी। प्रतियोगित्वं सप्तम्यर्थः स्वसम्बन्ध्याधिक्याश्रयगुणवृत्तित्वेन क्रियान्वयी। उपपदं तात्पर्यग्राहकम्।**

---

एवं "यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी" (पा.सू 2.3.9) इति सूत्रात् आधिक्यार्थककर्मप्रवचनीययुक्ते सप्तमी स्यात् इत्यर्थकात् उप परार्धे गुणाः इत्यत्र सप्तमी। परार्धादधिकाः हरेर्गुणाः इत्यर्थः। प्रतियोगित्वं सप्तम्यर्थः। तस्य स्वसंबन्ध्याधिक्याश्रयगुणवृत्तित्वसंबन्धेन अस्तिक्रियायामन्वयः। उपपदं तात्पर्यग्राहकम्। परार्धसंख्याप्रतियोगिकाधिकसंख्याश्रयहरिगुणवृत्तित्वसंबन्धेन अध्याहृतास्त्यर्थे सत्ताश्रयत्वेऽन्वयः।

अत्राहुः सूर्यनारायणशास्त्रिणः — "कर्मप्रवचनीययुक्ते द्वितीया" (पा.सू 2.3.8) इति सूत्रात् कर्मप्रवचनीययुक्ते इत्यनुवर्तते। कर्मप्रवचनीयसंज्ञकशब्दयोगे यस्मात् पदार्थात् अधिकम् आधिक्यं प्रतिपाद्यते ततः सप्तमी स्यात् इत्यर्थकं यस्मादधिकम् इति सूत्रैकदेशं व्याचष्टे — आधिक्यार्थकेति। सूत्रे अधिकशब्दः आधिक्यार्थक इति भावः।

"उपोऽधिके च" (पा.सू 1.4.8) इत्यनेन आधिक्ये न्यूनत्वे च उपेत्यस्य कर्मप्रवचनीयसंज्ञा विहिता। तत्र न्यूनत्वे उपहरि सुराः इति द्वितीया, द्वितीया-प्रकरणे उदाहृता। ततः "अधिकत्वे सप्तमी वक्ष्यते" इति तत्रैव ग्रन्थकृता प्रतिज्ञातम्। तामुक्तिं स्मारयन् आधिक्ये सप्तमीमुदाहरति — उप परार्धे हरेर्गुणाः इति। परार्धात् अधिका इत्यर्थः। क्रियान्वयीति। परार्धप्रतियोगिकाधिक्य-विशिष्टवृत्ति सत्ताश्रयत्वमिति बोधः।

## अधिरीश्वरे (पा.सू 1.4.97)

एवम् — 'अधिरीश्वरे' (पा.सू 1.4.97) इति सूत्रादैश्वर्ये अधिः कर्मप्रवचनीयसंज्ञः, तद्युक्ते ऐश्वर्यप्रतियोगिनि, तदनुयोगिनि च 'अधिरामे भूः' अधिभुवि रामः' इत्यादौ पर्यायेण सप्तमी। अत्र क्रमेणानुयोगित्वम्, प्रतियोगित्वञ्च सप्तम्यर्थः। स्वसम्बन्ध्यैश्वर्यसम्बन्धीतरवृत्तित्वमाख्यातार्थसंसर्गः, अधिस्तात्पर्यग्राहकः। रामप्रतियोगिकस्वत्वाश्रयो भूवृत्तिस्वत्वप्रतियोगी रामः इति च फलितोऽर्थः। तत्सिद्धं सप्तम्यर्थः शक्यः, लाक्षणिको वा सर्वोऽपि भावनान्वयी-इति। तदेवं लिङ्गसंख्याव्यतिरिक्तसुबर्थमात्रस्य सिद्धो भावनान्वयः।

नवीनानां नानामननविशदानामयमहो
सुयुक्तीनां पुञ्जैरिह विरचितः कोऽपि जगति।
महानर्कस्तर्कप्रथिततमसज्ञाततमसाम्
सुधाकृन्मीमांसामतकुमुदपूरस्य जयतु॥
यद्वद्धनानां पटलो विशालो विलोक्यतेऽल्पे किल दर्पणेऽपि।
तद्वन्मदीयेऽपि निबन्धनेऽस्मिन्नुद्वीक्ष्यतां भाट्टरहस्यसारः॥

इति श्रीमदाचार्यखण्डदेवविरचिते भाट्टतन्त्ररहस्ये
प्रथमः परिच्छेदः समाप्तः।
संपूर्णमिदं भाट्टतन्त्ररहस्यम्

---

इत्थं "यस्मादधिकम्" इति सूत्रभागं व्याख्याय "यस्य चेश्वरवचनम्" इति सूत्रीयद्वितीयभागं व्याख्यातुं तदुपयोगितया अधि इत्यस्य कर्मप्रवचनीयसंज्ञाविधायकं सूत्रं व्याचष्टे — एवमधिरीश्वरे इति। सूत्रे ईश्वरशब्दः भावप्रधान इत्याह — ऐश्वर्ये इति। एतदवष्टम्भेन सूत्रीय द्वितीयभागं व्याचष्टे तद्युक्ते इति।

कर्मप्रवचनीयसंज्ञकाधियोगे इत्यर्थः। अयमर्थः — सूत्रे यस्येत्यनेन स्वामिनः ग्रहणम्। ईश्वर इत्युच्यते येन तत् ईश्वरवचनम् ऐश्वर्यम्। यद्वा ईश्वरशब्दो भावप्रधानः। तथा च यस्य स्वामिनः ऐश्वर्यमुच्यते ततः स्वामिवाचकात् सप्तमी। यद्वा यस्येत्यनेन स्वं भूम्यादिकमुच्यते। तथा च यस्य स्वस्य ईश्वरः स्वामी उच्यते ततः स्ववाचकात् सप्तमी स्यात् इति द्वितीयः अर्थः। तथा च स्ववाचकात् भूम्यादेः सप्तमी भवति। एवं च यस्य चेश्वरवचनमित्यस्य व्याख्याभेदेन स्वामिवाचकात् स्ववाचकाच्च पर्यायेण सप्तमी। सा च विशेषणे। विशेष्ये तु प्रथमा राज्ञः पुरुष इत्यादाविव। तदेतत् मनसि निधायाह — ऐश्वर्यप्रतियोगिनि तदनुयोगिनि च पर्यायेण सप्तमी इति। अत्र उभयोर्मध्ये स्वसंबन्धीति। आद्ये स्वं अनुयोगित्वम्। तत्संबन्धि यत् ऐश्वर्यम् तत्संबन्धि यत् इतरत् भूम्यादिकं तद्वृत्तित्वं आख्यातार्थसंबन्धः आख्यातार्थेन साकं सप्तम्यर्थस्य संबन्धः।

द्वितीये स्वं प्रतियोगित्वं तत्संबन्धीत्यादि पूर्ववत्। एवं सुबर्थस्यापि लिङ्गसंख्याभिन्नस्य तस्यामेव अन्वयः इति पूर्वम् उपक्रान्तमर्थं सप्रमाणं प्रतिपाद्य प्रकरणार्थमुपसंहरति — **तदेवं लिङ्गसंख्याव्यतिरिक्तेति।**

अथ स्वग्रन्थस्य महिमानं कीर्तयन् श्लोकाभ्यां ग्रन्थं समापयति — नवीनानामिति। नवीनानाम् इतरैरचुम्बितानां, नानामननविशदानां अनेकविधैश्चिन्तनैः स्पष्टतया प्रतिभातानां सुयुक्तीनां समीचीनानां दोषरहितानां युक्तीनाम् पुञ्जैः समूहैः इह जगति विद्वल्लोके कोऽपि इतरविलक्षणः प्रणीतः अयं महान् महत्त्वपूर्णः उत्कृष्टः अर्कः सूर्यतुल्यः ग्रन्थः अज्ञानतिमिरनिवर्तकः तर्कप्रथिततमसंजाततमसाम् — प्रथिततमाः अत्यन्तं प्रसिद्धाः ये कणादगौतमादिप्रदर्शिताः तर्काः तैः अभ्यस्तैः संजाततमसां — उत्पन्नाज्ञानान्धकाराणां विदुषां अज्ञाननिवर्तकः अयं सूर्यतुल्यः ग्रन्थः। न केवलमयं ग्रन्थः तार्किकमत-

निराकरणमात्रविश्रान्तः अपि तु सुधाकृन्मीमांसामतकुमुदपूरस्य न्यायसुधाकार-निष्कृष्टमीमांसामतरूपस्य कुमुदसमुदायस्य सुधाकृत् चन्द्रः। सुधाकृत् इति पृथक्पदं चेत् मीमांसामतरूपकुमुदस्य विकासकृत् चन्द्ररूपोऽयं ग्रन्थ इत्यर्थः। सुधाकृत् इति पदमावर्त्य व्याख्येयम्।

यद्वदिति। मेघानां समूहोऽतिविस्तृतोऽपि यथा स्वल्पपरिमाणेऽपि दर्पणे विलोक्यते तथैवात्र परिमितेऽपि ग्रन्थे भाट्टरहस्यस्य सारः विलोक्यताम् इत्यर्थः।

इति सारप्रकाशिकायां सप्तमीविभक्त्यर्थविचारः

इति महामहोपाध्यायेन शास्त्रकल्पद्रुमेण विश्वभारतीत्यादिनानापुरस्कारभाजा
राष्ट्रपतिसंमानितेन एन. एस्. रामानुजताताचार्येण विरचितं
सारप्रकाशिकाख्यं भाट्टरहस्यव्याख्यानं सम्पूर्णम्।

बहूनां शास्त्राणां चिरपरिचयादाहितधिया
मयेदं व्याख्यानं कृतमवदधानेन मनसा।
इदं दृष्ट्वा ख्याताः यदि बुधवराश्छात्रसहिताः
भृशं संतुष्येयुः भवति सफलेयं मम कृतिः॥

शुभमस्तु

# पाणिनिसूत्रसूची

## वार्तिकानि

# कारिकासूची

अपाये यदुदासीनं चलं वा यदि वाचलम्।
ध्रुवमेवातदावेशात्तदपादानमुच्यते।। १ (पृ. 482)

उभावप्यध्रुवौ मेषौ यद्यप्युभयकर्मजे।
विभागे प्रविभक्ते तु क्रिये तत्र विवक्षिते।। २ (पृ. 482)

कर्तृकर्मव्यवहितामसाक्षात् धारयत् क्रियाम्।
उपकुर्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम्।। ३ (पृ. 605)

कारकैर्व्यपदिष्टे च श्रूयमाणक्रिये पुनः।
प्रोक्ता प्रतिपदं षष्ठी समासस्य निवृत्तये।। ४ (पृ. 529)

कृताकृतविभागेन कर्तृरूपव्यवस्थया।
यत्न एव कृतिः पूर्वा परस्मिन् सैव भावना।। ५ (पृ. 211)

क्रियायाः परिनिष्पत्तिः यद्व्यापारादनन्तरम्।
विवक्ष्यते यदा यत्र करणं तत् तदा स्मृतम्।। ६ (पृ. 402)

चर्मणि द्वीपिनं हन्ति दन्तयोः हन्ति कुञ्जरम्।
केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः।। ७ (पृ. 621)

तद्धितेन चतुर्थ्या वा मन्त्रवर्णेन वा पुनः।
देवताया विधिस्तत्र दुर्बलं तु परं परम्।। ८ (पृ. 424)

दर्दुःखस्य मातृग्भ्यो धार्यैरामोदमुत्तमम्।
लिम्पैरिव तनोर्वातैश्चेतयः स्यात् ज्वलो न कः।। ९ (पृ. 565)

धात्वर्थव्यतिरिक्ता सा प्रयत्नाख्यार्थभावना।।
यजत्यादिपराख्यातवाच्यैवेति समञ्जसम्।। १० (पृ. 211)

न चौलूक्यैः प्रयत्नस्य गुणत्वपरिभाषणात्।
न करोत्यर्थता शङ्क्या सिद्धरूपा प्रयोगतः।। ११ (पृ. 211)

न ममेति स्वस्वताया निवृत्तिमपि कीर्तयेत्।
दानहोमादिकं कुर्यादेवं श्रद्धासमन्वितः॥ १२ (पृ. 421)

नामगोत्रे समुच्चार्य सम्यक् श्रद्धान्वितो वदेत्।
सङ्कीर्त्य देशकालादि तुभ्यं सम्प्रददे ॥ १३ (पृ. 421)

निर्दिष्टविषयं किंचित् उपात्तविषयं तथा।
अपेक्षितक्रियं चेति त्रिधापादानत्वमिष्यते।। १४ (पृ. 484)

निष्ठायां कर्मविषया षष्ठी च प्रतिषिध्यते।
शेषलक्षणया षष्ठ्या समासस्तत्र नेष्यते।। १५ (पृ. 529)

पततो ध्रुव एवाश्वो यस्मादश्वात् पतत्यसौ।
तस्याप्यश्वस्य पतने कुड्यादि ध्रुवमुच्यते।। १६ (पृ. 482)

प्रयत्नव्यतिरिक्तार्थीभावना तु न शक्यते।
वाक्कुमाख्यातवाच्येह प्रस्तुतेत्युपरम्यते।। १७ (पृ. 211)

बुद्धीच्छाद्वेषयत्नानां शब्दज्ञैः कर्मतेष्यते।
आचार्यैश्च प्रयत्नस्य व्यापारत्वाभिधानतः।। १८ (पृ. 211)

मेषान्तरक्रियापेक्षमवधित्वं पृथक् पृथक्।
मेषयोः स्वक्रियापेक्षं कर्तृत्वं च पृथक् पृथक्।। १९ (पृ. 482)

वस्तुतस्तदनिर्देश्यं न हि वस्तु व्यवस्थितम्।
स्थाल्या पच्यत इत्येषा व्यवस्था दृश्यते यतः।। २० (पृ. 403)

विग्रहो हविरादानं युगपत् कर्मसंनिधिः।
प्रीतिः फलप्रदानं च देवतानां न विद्यते।। २१ (पृ. 423)

विना वातं विना वृष्टिं विद्युत्प्रपतनं विना।
विना हस्तिकृतान् दोषान् केनेमौ पातितौ द्रुमौ।। २२ (पृ. 519)

वोढ्रश्वादिगतं यत्नं रथादावुपचर्य वा।
तिङ्वाच्यो हि करोत्यर्थः तदन्यानुपलम्भनात्।। २३ (पृ. 211)

सुपां कर्मादयोऽप्यर्थाः संख्याश्चैव तथा तिङाम्।
प्रसिद्धो नियमस्तत्र नियमः प्रकृतेषु वा ॥ २४ (पृ. 328)

44a

# उदाहृतग्रन्थानां सूची

**अमरकोषः** —— अमरसिंहविरचितः, भानुजिदीक्षितकृतसुधाव्याख्यासहितः चौखम्बा संस्कृतप्रतिष्ठान, दिल्ली, 1997. (निर्णयसागरमुद्रितपुस्तकस्य मुद्रण-प्रतिकृतिः)

**काव्यप्रकाशः** —— मम्मटप्रणीतः, गोकुलनाथोपाध्यायकृतविवरणसहितः, संपा. बद्रीनाथः झा, वाराणसेयसंस्कृतविश्वविद्यालयः, वाराणसी, 1961.

**गूढार्थतत्त्वालोकः** —— द्र. व्युत्पत्तिवादः 1.

**तत्त्वचिन्तामणिः** —— श्रीमद्गङ्गेशोपाध्यायविरचितः, प्रत्यक्षखण्डः मथुरानाथकृतरहस्यजयदेवकृतालोकटीकासहितः (प्रथमभागः); अनुमित्यादिबाधान्तम् अनुमानखण्डः, मथुरानाथकृतरहस्यनामकटीकासहितः (द्वितीयो भागः प्रथम परिच्छेदः); शब्दखण्डमारभ्य उच्छन्नप्रच्छन्नवादपर्यन्तम्, मथुरानाथकृत-रहस्यजयदेवमिश्रकृताऽऽलोकटीकासहितः (चतुर्थो भागः प्रथमपरिच्छेदः); विधिवादादिप्रमाणचतुष्टयप्रामाण्यवादान्तं शब्दखण्डः, मथुरानाथकृतरहस्य-जयदेवमिश्रकृताऽऽलोकटीकाभ्यां रघुनाथशिरोमणिकृतेन आख्यातवादेन नञ्वादेन च सहितः (चतुर्थो भागः द्वितीयः परिच्छेदः), परिशोधकः संपादकश्च कामाख्यानाथः, चौखम्बासंस्कृतप्रतिष्ठान, दिल्ली, 1990. (एशियाटिक्सोसायटी-संस्करणस्य 1884-1901 वर्षीयस्य मुद्रणप्रतिकृतिः)

**दर्पणः** —— द्र. वैयाकरणभूषणसारः.

**नागेशः** —— द्र. वैयाकरणसिद्धान्तमञ्जूषा.

**निरुक्तम्** —— यास्काचार्यप्रणीतम्, निघण्टुपाठसमुपेतम्, दुर्गाचार्यकृत-ऋज्वर्थाख्यवृत्त्या समेतम्, टिप्पण्यादिकर्ता महादेव हरि भडकमकरः, संपा. गोविन्दात्मजरामकृष्णः, प्रथमो भागः, (Bombay Sanskrit and Prakrit Series No. 73) भण्डार्कर्प्राच्यविद्यासंशोधनालयः, पुणे, पुनर्मुद्रणम् 1985. (प्रथमसंस्करणम् 1918).

**न्यायकुसुमाञ्जलिः** —— उदयनाचार्यकृतः, उत्तमूर् टि. वीरराघवाचार्येण विरचिताभ्यां कुसुमावलिविस्तरसमाख्यविशदव्याख्यानविशेषविषयटिप्पणाभ्यां समुल्लासितः, पुनर्मुद्रणम् (केन्द्रीयसंस्कृतविद्यापीठग्रन्थमाला, सं. 31) तिरुपतिः, 1980. (प्रथमप्रकाशनम् तिरुपतिः 1941).

**न्यायदर्शनम्** —— गोतमकृतम्,

1. (प्रथमो भागः) वात्स्यायनकृतभाष्य-उद्योतकरकृतवार्त्तिक-वाचस्पतिमिश्रकृत-टीका-उदयनकृतपरिशुद्धिसहितम् (प्रथमाध्यायः), संपा. अनन्तलालठकुक्कुरः, मिथिलाविद्यापीठम् (Mithila Institute Series, Ancient Text No 20), दर्भाङ्गा, 1967.

2. विश्वनाथीयवृत्ति-वात्स्यायनभाष्यसहितम्, न्यायसूचीनिबन्धोपेतम्, संपा. एल्. एस्. द्रविड, टि. एस्. भण्डारी, वि. पी. द्विवेदी, (काशीसंस्कृतसिरीस् सं. 43), वाराणसी 1920.

**पदवाक्यरत्नाकरः** —— गोकुलनाथोपाध्यायकृतः, जदुनाथमिश्रकृतगूढार्थ-दीपिकाव्याख्यासहितः, संपा. नन्दिनाथमिश्रः, (सरस्वतीभवनग्रन्थमाला सं. 88) सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः, वाराणसी, 1960.

**पाणिनिसूत्राणि** —— द्र. सिद्धान्तकौमुदी.

**प्रदीपः** —— (महाभाष्यप्रदीपः) द्र. महाभाष्यम्.

**प्रौढमनोरमा** —— भट्टोजिदीक्षितप्रणीता, (अव्ययीभावान्ता) हरिदीक्षितविरचितलघुशब्दरत्नव्याख्यया, भैरवमिश्रविरचिताब्दरत्नप्रकाशिका(भैरवी)व्याख्यया च समलङ्कृता। सभापतिशर्मोपाध्यायनिर्मितरत्नप्रभानामकटिप्पण्या च विल□ सिता, चौखाम्बा संस्कृत सीरज आफीस्, बनारस, 1983.

**भट्टिकाव्यम्** —— (भट्टिकविप्रणीतम्) अन्वितार्थप्रकाशिकाभिधया टीकया विभूषितम्। चौखाम्बा संस्कृतसंस्थानम्, वाराणसी। 1989-91.

**भाट्टकौस्तुभः** —— द्र. मीमांसाकौस्तुभः.

**भूषणसारः** —— द्र.वैयाकरणभूषणसारः.

**महाभाष्यम्** —— पतञ्जलिकृतम्, कैयटप्रणीतभाष्यप्रदीपनागेशकृतोद्योतसहितम्, संपा. भार्गवशास्त्री, (व्रजजीवनप्राच्यभारतीग्रन्थमाला सं. 23) (षड्भागेषु) चौखम्बासंस्कृतप्रतिष्ठान, देहली, 1991. (निर्णयसागरप्रेस् संस्करणस्यमुद्रणप्रतिकृतिः).

**मीमांसाकौस्तुभः** —— श्रीखण्डदेवविरचितः, संपा. अ. चिन्नस्वामिशास्त्रिपट्टाभिरामशर्माणौ, (चौखम्बासंस्कृतग्रन्थमाला सं. 58) वाराणसी, 1924-1933.

**मीमांसादर्शनम्** —— जैमिनिकृतम्,

1. श्रीवैद्यनाथशास्त्रिकृतप्रभाव्याख्या-कुमारिलकृततन्त्रवार्त्तिक-टुप्टीका-समेत-शाबरभाष्योपेतम्, संपा. सुब्बाशास्त्री, (आनन्दाश्रमसंस्कृतसिरीस् सं. 97) (पञ्चभागेषु) पुणे, 1929-1934.

2. श्रीमद्गोविन्दमुनिकृतभाष्यविवरण-कुमारिलकृततन्त्रवार्त्तिकभट्टसोमेश्वरकृत-न्यायसुधोपेतशाबरभाष्योपेतम्, संपा. महाप्रभुलालगोस्वामी, तारा प्रिण्टिङ्ग वर्क्स, (भागचतुष्टयम्) वाराणसी, 1984.

**मीमांसावार्त्तिकम्** —— द्र. मीमांसादर्शनम्, श्लोकवार्त्तिकम्.

**वाक्यपदीयम्** —— भर्तृहरिकृतम्, रघुनाथशर्मकृताम्बाकर्त्रीव्याख्यासमेतम्, पदकाण्डे वृत्तिसमुद्देशे जातिद्रव्यसंबन्धसमुद्देशेषु च रघुनाथशर्मकृताम्बाकर्त्री-हेलराजकृतप्रकाशसमेतम्, ब्रह्मकाण्डे हरिवृषभकृतस्वोपज्ञव्याख्या-रघुनाथशर्म-कृताम्बाकर्त्रीभ्यां सहितम्). (सरस्वतीभवनग्रन्थमाला सं. 91) संपूर्णानन्द-विश्वविद्यालयः, वाराणासी, 1963, 68, 74.

**वार्त्तिकम्** —— (व्याकरणवार्त्तिकम्) द्र. सिद्धान्तकौमुदी, महाभाष्यम्.

**विधिविवेकः** —— मण्डनमिश्रकृतः, वाचस्पतिमिश्रकृतन्यायकणिकाव्याख्या-सहितः, संपा. महाप्रभुलालगोस्वामी, (प्राच्यभारतीग्रन्थमाला सं. 8) रत्नापब्लि-केशन्स, वाराणसी, 1978.

**विवरणम्** —— द्र. काव्यप्रकाशः

**वैयाकरणभूषणम्** —— द्र. बृहद्वैयाकरणभूषणम्.

**वैयाकरणभूषणसारः** —— कौण्डभट्टविरचितः, बालकृष्णपञ्चौलीकृतप्रभा-श्रीहरिवल्लभशास्त्रिकृतदर्पणाख्यव्याख्याद्वयोपेतः, संपा. श्रीबालकृष्णपञ्चौली, (काशीसंस्कृतग्रन्थमाला 188) वारणासी, 1969. (द्वितीयसंस्करणम्).

**वैशेषिकदर्शनम्** —— कणादमुनिप्रणीतम्, उत्तमूर्वीरराघवाचार्यविरचितरसाय-नाख्यव्याख्योपेतम्, प्रकाशकाः वि. एस्. वेंकटराघवाचार्य इत्यादयः, मद्रास, 1958.

**व्युत्पत्तिवादः** —— गदाधरभट्टाचार्यकृतः,

1. धर्मदत्तझाविरचितगूढार्थतत्त्वालोकसहितः, संपा. कीर्त्यानन्दझा, चौखम्बा अमरभारती प्रकाशन, वाराणसी, 1976. (1911 वर्षीयस्य निर्णयसागर-संस्करणस्य मुद्रणप्रतिकृतिः).

2. लक्ष्मीनाथशर्मविरचितप्रकाशव्याख्यासहितः, चौखम्बासंस्कृतसंस्थानम्, वाराणसी, संवत् 1988.

**शक्तिवादः** —— गदाधरभट्टाचार्यकृतः, हरिनाथटीकोपेतः, संपा. दामोदरशास्त्रि-गोस्वामी, (चौखम्बासंस्कृतसिरीस् सं. 77) वाराणसी, 1929.

**शब्दाक्तिप्रकाशिका** —— जगदीशतर्कालंकारविरचिता, कृष्णकान्तविद्या-वागीशकृतकृष्णकान्ती-रामभद्रसिद्धान्तवागीशकृतप्रबोधिनीव्याख्यासहिता, संपा. ढुण्ढिराजशास्त्री, (काशीसंस्कृतसिरीस् सं. 119) वाराणसी, 2002. (तृतीय-मुद्रणम्).

**शाबरभाष्यम्** —— (प्रथमाध्याये प्रथमपादः) द्र. मीमांसादर्शनम् 1.

**शाब्दतरङ्गिणी** —— वे. सुब्रह्मण्यशास्त्रिविरचिता, संस्कृत एजुकेशन् सौसैटि, मद्रास्, 1969.

**शास्त्रदीपिका** —— पार्थसारथिमिश्रप्रणीता, सोमनाथप्रणीतमयूखमालिका-व्याख्यासहिता, (प्रत्यधिकरणविभक्तजैमिनीयन्यायमालायुता च), तत्र च प्रथमस्तर्कपादः श्रीमद्रामकृष्णप्रणीतयुक्तिस्नेहप्रपूरणीसिद्धान्तचन्द्रिकाव्याख्या-युक्तः स्वोपज्ञसिद्धान्तचन्द्रिकागूढार्थविवरणसहितश्च, सम्पादकः श्रीधर्मदत्तझा (बच्चाझा), कृष्णदास अकादमी, वारणासी, 1988. (1915 वर्षीयस्य निर्णय-सागरसंस्करणस्य मुद्रणप्रतिकृतिः).

**श्लोकवार्तिकम्** —— कुमारिलभट्टविरचितम, पार्थसारथिमिश्रविरचि
न्यायरत्नाकरव्याख्यया सनाथम् , संपा. परिष्कारकश्च स्वामी द्वारिकादासशा
(प्राच्यभारतीग्रन्थमाला सं. 10) , तारा पब्लिकेशन्स् , वारणासी, 1978.

**सिद्धान्तकौमुदी** —— भट्टोजिदीक्षितविरचिता, ज्ञानेन्द्रसरस्वतीकृततत्त्वबो
टीकाजयकृष्णविरचितसुबोधिनीभ्यां सूत्रपाठादिना च समेता, संपा. वासुदे
पणशीकरः, मेहरचन्द लछमनदास, नवदेहली, पुनर्मुद्रणम् 1985.

## IN THE SAME SERIES
## *DANS LA MÊME COLLECTION*

*Bhaṭṭoji Dīkṣita on the Gajasūtra.* S.L.P. Anjaneya Sarma, François Grimal with the collaboration of Luther Obrock, 2013, iii, 136 p., ISBN : 978-81-8470-196-8. (RSAS n° 1. Vyākhyānamālā n° 1).

*Le vagabond et son ombre. G. Nagarajan. Romans et récits tamouls.* Présentés et traduits par François Gros avec le concours d'Élisabeth Séthupathy; English Introduction by Kannan M., 2013, 267 p. ISBN: 978-81-8470-197-5. (RSAS n° 2).

*Vâdivâçal: des taureaux et des hommes en pays tamoul.* Récit traduit du tamoul et présenté par François Gros, 2014, viii, 113 p. ISBN: 978-81-8470-202-6. (RSAS n° 3).

To order, contact: / *Pour commander, s'adresser à :*

Institut Français de Pondichéry
(attn. Library and Publication Division)
P. B. 33, 11, St. Louis Street,
Pondicherry-605001, INDIA

Ph: +91-413-2231660
Fax: +91-413-2231605

E-mail: library@ifpindia.org
Web: www.ifpindia.org

# The Bhāṭṭatantrarahasya of Khaṇḍadeva

The *Bhāṭṭatantrarahasya* of Khaṇḍadeva (17th c.) belongs to the Bhāṭṭa school of Mīmāṃsā. It deals mainly with the meaning of roots and suffixes, and their role in conveying the meaning of the sentence. Though this is a topic of grammar, it is widely discussed in Nyāya and Mīmāṃsā works as well. The *Bhāṭṭatantrarahasya* is divided into two parts. The first part begins with the definition of *dharma*, the main concept of Mīmāṃsā, and then deals at length with the meaning of injunctional suffix (*liṅ*), refuting the views of logicians and establishing *bhāvanā* (creative energy) as the main meaning of the sentence. In the second part, the author discusses the meaning of nominal suffixes (*sup*), quoting relevant rules from Pāṇinian grammar. Though Khaṇḍadeva's interpretation of Pāṇinian rules deviates from the grammatical tradition in some cases, he tries to prove that there is no violation of grammar by the Mīmāṃsakas.

Given the complexity of the *Bhāṭṭatantrarahasya*, Prof. Ramanuja Tatacharya presents it here with his own commentary, the *Sāraprakāśikā*. Also included are an index of the Pāṇinian rules, an index of the *kārikā*s (citations) and a bibliography.



*Le* Bhāṭṭatantrarahasya *de Khaṇḍadeva (XVIIe s.) appartient à l'école Bhāṭṭa de la Mīmāṃsā. Il porte principalement sur la signification des racines et des suffixes et leur rôle dans la transmission du sens de la phrase. Bien que ce sujet relève de la grammaire, il est abondamment discuté dans les oeuvres de Nyāya et de Mīmāṃsā également. Le* Bhāṭṭatantrarahasya *est divisé en deux parties: La première partie commence par définir le* dharma, *le concept principal de la Mīmāṃsā, puis étudie en détail le sens du suffixe d'optatif* liṅ, *qui exprime notamment l'injonction, réfutant le point de vue des logiciens et établissant la* bhāvanā *(l'efficience) comme la signification principale de la phrase. Dans la deuxième partie, l'auteur discute de la signification des suffixes nominaux* (sup) *tout en citant les règles pertinentes de la grammaire de Pāṇini. Bien que l'interprétation donnée par Khaṇḍadeva des règles de Pāṇini s'écarte, dans certains cas, de la tradition grammaticale, l'auteur tente de démontrer que les Mīmāmsakā ne désobéissent en aucun cas aux règles grammaticales.*

*Compte-tenu de la complexité du* Bhāṭṭatantrarahasya, *le Professeur Ramanuja Tatacharya le présente ici avec son propre commentaire, la* Sāraprakaśikā. *Sont inclus également un index des règles de Pāṇini, un index des* kārikās *(vers mnémoniques) et une bibliographie.*

ISBN 978-81-8470-204-0

